THE

# KASHI SANSKRIT SERIES

( HARIDAS SANSKRIT GRANTHAMALA )

**131.**

( Nyāya Section No. 19 )

सामान्यनिरुक्ति प्रकरणम्

THE

# SĀMĀNYANIRUKTI

OF

*M. M. S'rī Gadādhara Bhaṭṭāchārya*

EDITED WITH THE GANGĀ COMMENTARY & NOTES



By

*Nyāyāchārya Pandit S'rī S'ivadatta Mis'ra*

PROFESSOR, GOVERNMENT SANSKRIT COLLEGE, BENARES.

PUBLISHED BY

JAY KRISHNA DAS HARI DAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

Benares City.

1938



हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशी-संस्कृत-सीरिज़पुस्तकमालायाः
१३१
न्यायविभागे (१९) एकोनविंशति पुष्पम् ।

श्रीगदाधरभट्टाचार्यविरचितम्

# सामान्यनिरुक्तिप्रकरणम्

काशीस्थराजकीयसंस्कृतपाठशालायां न्यायशास्त्रप्रधानाध्यापकेन म. म.
पं० श्रीप्रभुदत्तशास्त्रितनुजेन न्यायाचार्य पं० श्रीशिवदत्तमिश्र-
गौडेन विरचितया "गङ्गा" व्याख्यया संवलितम् ।
तत्कृतटिप्पण्यादिभिर्विभूषितं तेनैव संशोधितं च ।




प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९३५

श्रीः

# भूमिका

जनकः प्रभुदत्तः श्रीनान्ही देवी च मत्प्रसूः ।
न्यायाचार्यौ गुरुर्वामाचरणः शरणं मम ॥

अथेदं प्रकाश्यते मुद्रापयित्वा गादाधरीसामान्यनिरुक्तिप्रकरणम् । प्रकरणेऽस्मिन् हेत्वाभाससामान्यलक्षणत्रयम् । हेत्वाभासशब्दश्च हेतोराभासा हेत्वाभासा इति षष्ठीतत्पुरुषसमासाश्रयणेन हेतुनिष्ठदोषाभिधायी, हेतुवदाभासन्ते इत्युपमितसमासाश्रयणेन दुष्टहेतुपरः । हेतुर्हि द्विविधः, सद्धेतुरसद्धेतुश्च । तत्र व्याप्तिपक्षधर्मताविशिष्ट आद्यः । व्याप्तिपक्षधर्मत्वाभाववान् द्वितीयः । स एव दुष्टो हेतुरित्युच्यते । दुष्टहेतुश्च सव्यभिचार-विरुद्ध-सत्प्रतिपक्षाऽसिद्धबाधितभेदेन पञ्चविधः । दुष्टत्वं च दोषवत्वम् । हेतुनिष्ठदोषाश्च व्यभिचार-विरोध-सत्प्रतिपक्षाऽ-सिद्धि-बाधाः । सत्प्रतिपक्षशब्दश्च संश्चासौ प्रतिपक्षश्चेति व्युत्पत्त्या हेतुदोषपरः । सन्प्रतिपक्षो यस्मिन्निति व्युत्पत्त्या दुष्टहेतुपरः । अयं हेतुः सत्प्रतिपक्षितशब्देनाऽपि व्यवह्रियते ।

तत्राऽवान्तरजिज्ञासां प्रति सामान्यधर्मज्ञानस्य कारणतया हेत्वाभास ( दोष ) सामान्यलक्षणं कृतं मूलकारैः । तच्चाऽनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वम् । तदर्थश्च "दोषज्ञानस्य प्रतिबन्धकत्वमते" अनुमितौ प्रतिबन्धकं यद् यथार्थज्ञा(१)नं तद्विषयत्वम् । अनुमितिपदेन च पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेति समूहालंबनरूपाऽनुमितिर्ग्राह्या । बाधसत्प्रतिपक्षसंग्रहाय साध्यवानिति । व्यभिचारिसंग्रहाय साध्यव्याप्यहेतुमानिति । एवं च ह्रदो वन्हिमानित्यत्र वह्न्यभाववद्ह्रदे लक्षणसमन्वयः । तथा हि अनुमितिः ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेति समूहालम्बनरूपा तत्प्रतिबन्धकं यद् वन्ह्यभाववान् ह्रद इति यथार्थज्ञानं तद्विषयत्वस्य वन्ह्यभाववद्ह्रदे सत्वात् ।

तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि अथ च प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं पर्यवसितम् ।

प्रतिबन्धकत्वं च कारणीभूताऽभावप्रतियोगित्वम् । प्रतिबन्धकाऽभावस्य कार्यं प्रति कारणतया कारणीभूतो यो बाधादिनिश्चयाऽभावस्तत्प्रतियोगित्वं बाधादिनिश्चयस्याऽस्त्येव । प्रतिबन्धकाश्च व्यभिचारादिनिश्चयाः । तद्विषयो दोषः । स च साध्याभाववद्वृत्तिहेत्वादिरूपः । हेतौ दोषवत्वं च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसंबन्धेन बोध्यम् । स्वं-दोषः ।

प्रतिबध्यप्रतिबन्धकभावश्च यथा-तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम् । अत्र प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाऽजन्यत्वं दोषविशेषाजन्यत्वं च निवेशनीयम् । प्रतिबध्यतावच्छेदकन्तु "संशयनिश्चयसाधारण"तद्वत्ताबुद्धित्वम् । एवं प्रतिबन्धकतावच्छेदककोटौ अनाहार्याऽप्रामाण्यज्ञाना-

---

( १ ) अनुमितिप्रतिबन्धक-यथार्थज्ञानयोः कर्मधारय इति भावः ।

नास्कन्दितनिश्चयत्वं निवेश्य(१)म् । तथा च लौकिकसन्निकर्षाऽजन्यदोषविशेषाजन्यतद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिबुद्धिं प्रति तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्ता- "अनाहार्याऽप्रामाण्यज्ञानानास्कन्दित" निश्चयः, तादृशाभावव्याप्यवत्तानिश्चयश्च प्रतिबन्धक इति फलितम् । प्रतिबध्यताप्रतिबन्धकतावच्छेदकसंबन्धश्च समवायः ।

अत्रेदमवधातव्यम् । अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमिति लक्षणे पर्वतो वह्निमान्धूमादित्यत्र वन्ह्यभावेऽतिव्याप्तिः, पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्यनुमितिप्रतिबन्धक"पर्वतो वन्ह्यभाववानिति" बाधभ्रमविषयत्वस्य तत्र सत्वादतो यथार्थपदम् । तथा च पर्वतो वन्ह्यभाववानिति ज्ञानस्य यथार्थत्वाभावान्न तत्रातिव्याप्तिः । एवमपि ह्रदो वह्निमानित्यत्र वन्ह्यभावेऽतिव्याप्तितादवस्थ्यम् , ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्यनुमितिप्रतिबन्धक "ह्रदो वन्ह्यभाववानिति" यथार्थज्ञानविषयत्वस्य तत्र सत्वात्, यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तद्रूपवत्वमिति विवक्षणे व्यर्थमेव यथार्थपदमित्याशयेन यथार्थपदाऽघटितद्वितीयलक्षणमाचरितं मूलकारैः ।

केचित्तु यथा दोषज्ञानं प्रतिबन्धकं तथा ज्ञायमानदोषाणामपि प्रतिबन्धकत्वम् । प्रतिबध्यप्रतिबन्धकभावश्च तत्पुरुषीयतद्वत्ताबुद्धिं प्रति तत्पुरुषीयतदभाववत्तानिश्चयविशिष्टस्य प्रतिबन्धकत्वम् । वैशिष्ट्यनियामकसंबन्धश्च स्वीयनिरूप्यनिरूपकभावापन्नविषयतारूपः । प्रतिबध्यतावच्छेदकसंबन्धश्च विशेष्यता । प्रतिबन्धकतावच्छेदकसंबन्धश्च तादात्म्यम् । एवं च प्रथमलक्षणमपि ज्ञायमानदोषप्रतिबन्धकतामताभिप्रायेण दुष्टस्यैव न तु दोषस्य । तत्राऽनुमितिप्रतिबन्धकस्य यथार्थज्ञानमिति षष्ठीतत्पुरुषः, षष्ठ्यर्थः प्रकारकत्वम् । तथा चाऽनुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वं लक्षणार्थः । प्रकारता च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धावच्छिन्ना ग्राह्या । एवं च यथार्थपदाऽदाने तादृशसम्बन्धेन दोषप्रकारकभ्रममादाय प्रकृतहेतुभिन्ने "रासभादौ" दुष्टत्वव्यवहारापत्तिवारणाय यथार्थपदोपादानम् ।

ज्ञायमानदोषाणां प्रतिबन्धकतामतेऽपि ज्ञानीय"निरूप्यनिरूपकभावापन्न"विषयतावत्वेन स्वीयतादृशविषयतासंबन्धेन ज्ञानविशिष्टत्वेन वा दोषाणां प्रतिबन्धकतया एकदेशेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वं लक्षणार्थो बोध्यः ।

इदमत्रापि बोध्यम् । प्रतिबन्धकतावच्छेदकमित्यत्राऽवच्छेदकत्वं स्वरूपसम्बन्धविशेषः, नत्वऽनतिरिक्तवृत्तित्वरूपम्, नातो द्वितीयलक्षणाऽभेदः, न वा सामान्यपदवैयर्थ्यम् । एवं समानाकारकज्ञानीयविषयतयोर्भेदोऽङ्गीक्रियते, तेन पाषाणमयत्वत्पर्वते नातिव्याप्तिः, द्वितीयलक्षणे च तयोर्भेदमनङ्गीकृत्याऽतिव्याप्तिर्दृश्येति प्राहुरित्यन्यत्र विस्तरः ।

---

(१) कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणायाऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वमपि निवेश्यम् । निरवच्छिन्नत्वस्वरूपेण प्रतिबन्धकत्वमते तु तन्न निवेश्यमित्यन्यत्र विस्तरः ।

दोषाश्च व्यभिचार-विरोध-सत्प्रतिपक्षाऽ-सिद्धि-बाधभेदेन पञ्चविधाः इत्युक्तम् । व्यभिचारत्वं च साधारणत्व-असाधारणत्व-अनुपसंहारित्वान्यतमत्वम् । साध्यसन्देह-जनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारताश्रयत्वमिति वा(१)वत् । व्यभिचारस्त्रि-विधः-साधारणत्व-असाधारणत्व-अनुपसंहारित्वभेदात् ।

तत्र साधारणत्वं साध्याभाववद्वृत्तिहेतुः । तन्निश्चयः "साध्याभाववद्वृत्तिर्हेतुरि-त्याकारकः" साध्याभाववद्वृत्तित्वरूपव्याप्तिज्ञानविरोधी । "विषयो निर्विभक्तिको भवति, ज्ञानं च सविभक्तिकमिति विशेषः" । यथा धूमवान् वह्नेरित्यत्र धूमाभाववद्वृत्तिर्वह्निरिति निश्चयो धूमाभावदद्वृत्तिर्वह्निरिति व्याप्तिज्ञानविरोधी । तथा च वह्नित्वावच्छिन्नविशेष्य-तानिरूपितस्वरूपसंबन्धावच्छिन्नधूमाभाववद्वृत्तित्वत्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति वह्नित्वावच्छिन्नविशेष्यतानिरूपितस्वरूपसंबन्धावच्छिन्नधूमाभाववद्वृत्तित्वत्वावच्छिन्न-प्रकारताशालिनिश्चयः प्रतिबन्धकः । एवं साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगिताव-च्छेदकत्वमपि साधारण्यं बोध्यम् । तथा च धूमत्वं वह्निमन्निष्ठाभावप्रतियोगितावच्छेदक-मिति व्यभिचारनिश्चयो धूमत्वं वह्निमन्निष्ठाभावप्रतियोगिताऽनवच्छेदकमिति "सिद्धान्त-व्याप्तिघटक"व्यापकताबुद्धौ विरोधीति ।

तथा च प्रकृतसाध्ये साध्यतावच्छेदकप्रकारकग्रहत्वाऽव्यापिका प्रकृतहेतौ प्रकृतहे-तुतावच्छेदकप्रकारकग्रहत्वाऽव्यापिका "निरूप्यनिरूपकभावापन्न"अन्वयव्याप्तिविषयता-शालिग्रहत्वव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानि-रूपकतावच्छेदकधर्मवत्त्वं तल्लक्षणम् ।

एवं च पर्वते वह्निना धूमसाधने वह्निर्दुष्ट इत्यत्र प्रतिबन्धकयथार्थज्ञानविषयो दुष्धा-त्वर्थः । आश्रयत्वं क्तप्रत्ययार्थः । साधनपदार्थोऽनुमितिः । साधनपदार्थाऽनुमितौ पर्वतप-क्षकत्वस्य वह्निहेतुकत्वस्य धूमविधेयकत्वस्य चाऽन्वयः । अनुमितेश्च दुष्धात्वर्थघटकप्रति-बन्धकतायामन्वयः । तथा च पर्वतपक्षकवह्निहेतुकधूमसाध्यकानुमितिप्रतिबन्धकज्ञानविष-यवदभिन्नो वह्निरिति बोधः ।

ज्ञायमानदोषप्रतिबन्धकतावादिमते प्रतिबन्धकप्रकारकप्रमाविशेष्यत्वं दुष्धात्वर्थः । अन्यत्सर्वं पूर्ववत् । तथा च पर्वतपक्षकधूमसाध्यकवह्निहेतुकानुमितिप्रतिबन्धकप्रकारक-प्रमाविशेष्यताश्रयाभिन्नो वह्निरिति बोधः । विषयवत्ता प्रतिबन्धकनिष्ठप्रकारता च स्वज्ञा-नविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति ध्येयम् ।

असाधारण्यं च साध्यव्यापकीभूताभावप्रतियोगिहेतुः । यथा ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलमासाधारण्यम् , असाधारण्यनिश्चयश्चा-ऽनुमितौ विरोधी प्रतिबन्धकता च निश्चयविशिष्टनिश्चयत्वेन । तथा च जलवान् ह्रद इति निश्चयविशिष्टवह्निव्यापकीभूताभावप्रतियोगि जलमिति निश्चयो विरोधी । दो-

(१) एवं सधर्मितावच्छेदकहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसा-मान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धक-तादृशधर्मवत्त्वमपि बोध्यम् ।

षता च वह्निव्यापकीभूताभावप्रतियोगिजलस्यैवेति(१) बोध्यम् ।

अनुपसंहारित्वं चात्यन्ताभावाऽप्रतियोगिसाध्यकत्वम् , तथा च साध्यमत्यन्ताभावाऽप्रतियोगीति निश्चयो व्यतिरेकव्याप्तिज्ञाने प्रतिबन्धकः ।

विरोधश्च हेतौ साध्याऽसामानाधिकरण्यम् । यथाऽयं गौरश्वत्वादित्यादौ गोत्वाऽसमानाधिकरण्यमश्वत्वम् । अयं हेतुः साध्यसामानाधिकरण्याभाववानिति निश्चयो "व्याप्तिघटक"साध्यसामानाधिकरण्यज्ञाने विरोधी ।

सत्प्रतिपक्षश्च साध्याभावव्याप्यहेतुमत्पक्षरूपः । प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नाऽनुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयिता तद्रूपवत्वमिति यावत् । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वाद् घटवत् । अत्र नित्यत्वव्याप्यश्रावणत्ववच्छब्दरूपः, एवमनित्यत्वव्याप्यकार्यत्ववच्छब्दरूपश्च सत्प्रतिपक्षः । तन्निश्चयः "विरोधिपरामर्शरूपः" प्रकृतसाध्यानुमितिविरोधी ।

अत्रेदं बोध्यम् । सत्प्रतिपक्षो द्विविधः, साध्याभावाभाववद्वृत्तिमत्पक्षरूपः, प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपश्च । प्रथमनिश्चयप्रतिबन्धकता ज्ञानवैशिष्ट्यानवच्छिन्ना । द्वितीयनिश्चयप्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नेति विशेषः ।

आश्रयाऽसिद्ध्याद्यन्यतमत्वमसिद्धिसामान्यलक्षणम् । आश्रयाऽसिद्धिस्तु पक्षतावच्छेदकाभाववत्पक्षः । यथा काञ्चनमयपर्वतो वह्निमानित्यत्र काञ्चनमयत्वाभाववत्पर्वतरूपाऽऽश्रयासिद्धिः । तन्निश्चयः "काञ्चनमयत्वाभाववान्पर्वत इत्याकारकः" कांचनमयपर्वत इति पक्षज्ञाने विरोधी । तथा च पक्षघटिततया अनुमितौ परामर्शे च प्रतिबन्धक इति ध्येयम् ।

अत्रेदमवधातव्यम् । न केवलं पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धिः, किन्तु पक्षे पक्षतावच्छेदकाभावव्याप्यः, पक्षे पक्षतावच्छेदकवदन्योन्याभावः, पक्षे तादृशाऽन्योन्याभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावः, पक्षतावच्छेदके तादृशान्योन्याभावव्याप्यः, पक्षतावच्छेदकाभाववान् पक्षः, तद्व्याप्यवान्पक्षः, पक्षतावच्छेदकतावच्छेदकाभाववत्पक्षतावच्छेदकम् , तद्व्याप्यवत्पक्षतावच्छेदकम् , पक्षतावच्छेदकतावच्छेदकवदन्योन्याभाववत्पक्षतावच्छेदकम् , तद्व्याप्यवत्पक्षतावच्छेदकमित्यादिरप्याश्रयासिद्धिः ।

समानप्रकारकज्ञानस्य प्रतिबन्धकत्ववादिनां नव्यानां नये तु पक्षतावच्छेदकाभाववा-

---

(१) एतन्मते यद्रूपावच्छिन्नविषयिताव्यापकः प्रकृताऽनुमित्यप्रतिबन्धकत्व—असाधारण्याऽविषयकत्वोभयाभावस्तद्रूपवत्वमिति दोषसामान्यलक्षणं बोध्यम् । तेन वह्निव्यापकीभूताऽभावप्रतियोगिजलत्वावच्छिन्नविषयितायाः अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वविरहेऽपि न क्षतिः ।

न्पक्षः, तद्व्याप्यवान्पक्षः, पक्षतावच्छेदकवदन्योन्याभाववान्पक्षः, तद्व्याप्यवान्पक्ष इत्यादिरेवाऽऽश्रयाऽसिद्धिः, न तु पक्षे पक्षतावच्छेदकाऽभावः, तद्व्याप्यादिरपि तद्ज्ञानस्याऽनुमिति—तत्कारणपरामर्शाऽप्रतिबन्धकतया तत्र हेत्वाभासत्वस्यैवाऽभावात्, वक्ष्यमाणाऽनुगताऽऽश्रयासिद्धिलक्षणस्य तत्राऽसत्वाच्च। अत आश्रयासिद्धेरनुगतलक्षणं वाच्यम्।

तच्च यद्रूपावच्छिन्नविषयित्वं पक्षतावच्छेदकप्रकारकपक्षविशेष्यकग्रहप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वमिति ध्येयम्।

**स्वरूपाऽसिद्धिः**—पक्षे हेत्वभावः—हेत्वभाववत्पक्षो वा। ह्रदो द्रव्यं धूमादित्यत्र धूमाभाववद्ह्रदः स्वरूपाऽसिद्धिः। तन्निश्चयश्च परामर्शविरोधी।

**भागासिद्धिस्तु** एतस्या एव भेदः। सा च पक्षतावच्छेदकसामानाधिकरण्येन हेतोरभावः। यथा शब्दोऽनित्यः संयोगजत्वादित्यत्र शब्दजशब्दे हेतोरभावः। स्वरूपासिद्धिस्तु पक्षतावच्छेदकावच्छेदेन हेतोरभाव इति विशेषः।

यद्रूपावच्छिन्नविषयित्वं प्रकृतपक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वोऽव्यापकप्रकृतहेतौ प्रकृतहेतुतावच्छेदकप्रकारकग्रहत्वाऽव्यापकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तद्रूपवत्वं स्वरूपासिद्धिलक्षणम्। तेन हेतुतावच्छेदकावच्छिन्नहेत्वभाववत्पक्षः तादृशसाधनाभावव्याप्यवत्पक्षः, तादृशसाधनवदन्योन्याभाववान्पक्षः, तादृशान्योन्याभावव्याप्यवान्पक्षः, पक्षे तादृशसाधनाभावः, पक्षे तादृशसाधनाभावव्याप्यः, पक्षे तादृशसाधनवदन्योन्याभावः, पक्षे तादृशसाधनवदन्योन्याभावव्याप्य इति क्रमेण स्वरूपाऽसिद्धेरष्टविधत्वेऽपि न क्षतिः। "नव्यमते तु हेतुतावच्छेदकावच्छिन्नहेत्वभाववत्पक्ष इत्यादिरूपा चतुर्विधैव स्वरूपासिद्धिः।

**व्याप्यत्वाऽसिद्धिस्तु** तदुभयभिन्नाऽसिद्धिः। सा च त्रिविधा—साध्याऽप्रसिद्धिः साधनाऽप्रसिद्धिः व्याप्तिविरहरूपा च।

तत्र **साध्याऽप्रसिद्धिः** साध्ये साध्यतावच्छेदकाभावः। यथा पर्वतः कांचनमयवह्निमान् धूमादित्यत्र कांचनमयत्वाभाववान्वन्हिरिति निश्चयस्य कांचनमयवन्हिरिति साध्यज्ञाने विरोधितया साध्यघटितत्वेनाऽनुमितौ व्याप्तिज्ञाने परामर्शे च विरोधित्वम्। लक्षणन्तु यद्रूपावच्छिन्नविषयित्वं साध्यविशेष्यकसाध्यतावच्छेदकप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तद्रूपवत्वम्। तथा साध्यतावच्छेदकाभाववत्साध्यम्, तादृशाभाववत्साध्यम्, साध्यतावच्छेदकवदन्योन्याभाववत्साध्यम्, तादृशाऽन्योन्याभावव्याप्यवत्साध्यम्, साध्यतावच्छेदकतावच्छेदकाभाववत्साध्यतावच्छेदकम्, तादृशाभावव्याप्यवत्साध्यतावच्छेदकम्, साध्यतावच्छेदकवदन्योन्याभाववत्साध्यतावच्छेदकम्, तादृशान्योन्याभावव्याप्यवत्साध्यतावच्छेदकमित्यादि। भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकत्वमते साध्ये साध्यतावच्छेदकाभावः, साध्ये तादृशाभावव्याप्यः, साध्ये साध्यतावच्छेदकवदन्योन्याभावः, साध्ये तादृशान्योन्याभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकाभावः, साध्यतावच्छेदके तादृशाभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकवदन्योन्याभावः, साध्यतावच्छेदके तादृशान्योन्याभावव्याप्यः इत्यादिकं बोध्यम्।

साधनाऽप्रसिद्धिस्तु हेतौ हेतुतावच्छेदकाऽभावः। यथा पर्वतो वन्हिमान् कांचनमयधूमादित्यत्र कांचनमयत्वाभाववान् धूम इति निश्चयः काञ्चनमयधूम इति हेतुज्ञाने विरोधितया हेतुघटितत्वेन व्याप्तिज्ञाने परामर्शे च विरोधी। लक्षणन्तु यद्रूपावच्छिन्नविषयित्वं प्रकृतहेतुतावच्छेदकप्रकारकहेतुविशेष्यकग्रहप्रतिबन्धकतावच्छेदकं तद्रूपवत्वम्। तच्च रूपं साधनतावच्छेदकाभाववत्साधनत्वादिकम्॥

व्याप्तिविरहरूपा च साध्याऽप्रसिद्धि–साधनाऽप्रसिद्धि–स्वरूपाऽसिद्धि–आश्रयाऽसिद्धिभिन्नाऽसिद्धिः। यथा साध्याऽव्यभिचरितसम्बन्धित्वरूपाऽन्वयव्याप्त्यभाववत्साधनम्, तादृशव्याप्त्यभावव्याप्यवत्साधनम्, तादृशव्याप्तिमदन्योन्याभावव्याप्यवत्साधनम्, तादृशव्याप्तिमत्साधनाभाववत्पक्षः, तादृशव्याप्तिमत्साधनाभावव्याप्यवत्पक्षः, तादृशव्याप्तिमत्साधनवदन्योन्याभाववत्पक्षः, तादृशव्याप्तिमत्साधनवदन्योन्याभावव्याप्यवत्पक्षः, साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत्साधनाभाववत्पक्षादि, साध्याभाववदवृत्तिसाधनाभाववत्पक्षादि, साध्यसमानाधिकरणसाधनाभाववत्पक्षादि, भिन्नप्रकारकज्ञानस्य प्रतिबन्धकत्वे साधने तादृशाऽन्वयव्याप्त्यभावादिरपि बोध्यः।

व्याप्तिविरहस्याऽसंकीर्णोदाहरणन्तु व्यर्थविशेषणादौ। तथा च हेतुतावच्छेदकस्य व्याप्त्यनवच्छेदकत्वं व्याप्यत्वाऽसिद्धिः। यथा पर्वतो वन्हिमान् नीलधूमादित्यादौ नीलधूमत्वस्य गुरुतया व्याप्यतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकत्वाभावेन व्याप्तौ तदवच्छिन्नत्वाभावेन हेतौ व्याप्त्यनवच्छेदकनीलधूमत्वावच्छेदेन व्याप्त्यभावस्याप्यावश्यकत्वादिति भावः।

न च नीलधूमे निरुक्तव्याप्यत्वाऽसिद्धिसत्वेऽपि तद्ज्ञानस्य व्याप्तिज्ञानाऽविरोधित्वेन हेत्वाभासत्वं न सम्भवतीति वाच्यम्। प्राचीनमते नीलधूमत्वावच्छेदेन व्याप्तिप्रकारकज्ञानस्यैवाऽनुमितिकारणतया तद्ज्ञानं प्रति नीलधूमत्वावच्छेदेन व्याप्त्यभाववत्ताज्ञानरूपव्याप्यत्वाऽसिद्धिनिश्चयस्य ग्राह्याऽभावाऽवगाहितया प्रतिबन्धकत्वेन तस्य हेत्वाभासत्वसम्भवात्।

दीधितिकृतस्तु नीलधूमत्वस्य लघुधूमत्वघटितत्वेन गुरुतया व्याप्यतानिरूपितस्वरूपसंबन्धरूपाऽवच्छेदकत्वाऽसंभवेऽपि अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वस्य तत्र सत्त्वात्, "साध्यसामानाधिकरण्यावच्छेदकमि"त्यत्राऽवच्छेदकत्वमनतिरिक्तवृत्तित्वमेव वाच्यम्, अन्यथा इयं पृथिवी घ्राणग्राह्यगुणादित्यादौ गन्धत्वसमनियतस्य घ्राणग्राह्यगुणत्वस्य गुरुतया स्वरूपसंबन्धरूपाऽवच्छेदकत्वाभावेन तत्रापि व्याप्यत्वाऽसिद्ध्यापत्तेः। न च घ्राणग्राह्यगुणत्वस्य गन्धत्वसमनियतत्वेऽपि नीलधूमत्वादिवत् लघुधर्मघटितत्वाभावात् तस्य तादृशावच्छेदकत्वे बाधकाऽभाव इति वाच्यम्। अवच्छेदकत्वस्य स्वरूपसम्बन्धरूपत्वकल्पनागौरवस्य लघुधर्मघटितत्वे तदघटितत्वे वा तुल्यतया तदघटितत्वस्य तादृशावच्छेदकत्वानियामकत्वात्। एवं च नीलधूमत्वस्याऽनतिरिक्तवृत्तित्वरूपव्याप्यतावच्छेदकत्वसत्वेन तदवच्छेदेन व्याप्त्यभावरूपव्याप्यत्वाऽसिद्धेः सुतरामभावेन नीलधूमादिहेतोर्न दोषवत्वम्।

अस्तु वा नीलधूमत्वादेः स्वरूपसम्बन्धरूपाऽवच्छेदकत्वाभावात्तदवच्छेदेन व्याप्तिविरहरूपा व्याप्यत्वाऽसिद्धिर्न तु हेत्वाभासत्वम्, हेतुतावच्छेदकांशे व्याप्यतावच्छेदकतान·

वगाहिनोऽपि व्याप्तिप्रकारकपक्षधर्मतावगाहिज्ञानस्याऽनुमितिहेतुत्वोपगमेन "नीलधूमत्वावच्छेदेन व्याप्तिविरहनिश्चयस्य" अनुमितितत्कारणीभूतव्याप्तिज्ञानाविरोधित्वात्। तथा च नीलधूमत्वे स्वरूपसम्बन्धरूपाऽवच्छेदकत्वाभावग्रहस्य ग्राह्याभावानवगाहितयाऽविरोधितया व्यर्थविशेषणस्थले न "व्याप्यत्वाऽसिद्धिः" हेत्वाभासः, पुरुषस्त्वधिकेन निगृह्यते इत्याहुः।

व्याप्यत्वस्याऽसिद्धिर्यस्मादिति व्युत्पत्त्या व्याप्यत्वासिद्धिपदमुपाधिपरम्, उपाधेश्च व्यभिचारोन्नायकतया दूषकत्वमित्यन्यत्र विस्तरः।

बाधस्तु पक्षे साध्याभावः, साध्याभाववत्पक्षो वा। यथा ह्रदो वह्निमानित्यत्र वह्न्यभाववान्, ह्रदे वह्न्यभावो वा बाधः। ह्रदो वह्न्यभाववान्, ह्रदे वह्न्यभाव इति निश्चयो वा ह्रदो वह्निमानित्यनुमितौ विरोधी।

असंकीर्णबाधोदाहरणन्तु उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यत्र मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्र च क्रमेण गन्धाभाववदुत्पत्तिकालावच्छिन्नघटरूपः, कपिसंयोगाभाववन्मूलावच्छिन्नवृक्षरूपश्च बाधो बोध्य इति।

अत्र सामानाधिकरण्येनाऽनुमितिं प्रति अवच्छेदावच्छेदेन बाधनिश्चयः प्रतिबन्धकः। अवच्छेदावच्छेदेनाऽनुमितौ तु अवच्छेदावच्छेदेन सामानाधिकरण्येन च बाधनिश्चयः प्रतिबन्धकः।

लक्षणन्तु यद्रूपावच्छिन्नविषयित्वं विशेष्यनुमितिजनकतानवच्छेदकत्वे सति प्रकृतपक्षविशेष्यकपक्षतावच्छेदकप्रकारकग्रहत्वाऽव्यापिका प्रकृतसाध्यविशेष्यकसाध्यतावच्छेदकप्रकारकग्रहत्वाऽव्यापिका प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वम्। तेन साध्याभाववत्पक्ष–साध्यवदन्यपक्ष–पक्षाऽवृत्तिसाध्य–साध्यवन्निष्ठपक्षाऽन्यत्व–साध्यनिष्ठपक्षनिष्ठाभावप्रतियोगित्वादेर्बाधत्वेऽपि न क्षतिः।

बाधितानुमानं दशविधम्, धर्मिग्राहकमानबाधितं त्रयम्, साध्यप्रतियोगिग्राहकमानबाधितं त्रयम्, साध्यग्राहकमानजातीयमानबाधितमेकम्, हेतुग्राहकमानबाधितं त्रयम्।

यथा घटो विभुः सत्वादित्यनुमानं धर्मिणो "घटस्य" ग्राहकमानेन प्रत्यक्षेण बाधितम्। एवं परमाणवः सावयवाः मूर्तत्वादित्यनुमानं धर्मी पक्षः "परमाणु"स्तद्ग्राहकमानेनाऽनुमानेन बाधितम्। एवं मेरुः पाषाणमयः पर्वतत्वादित्यनुमानं सुवर्णमयत्वबोधकेनाऽऽगमेन बाधितम्। साध्यप्रतियोगिग्राहकमानबाधितं–यथा–वह्निरनुष्णः कृतकत्वादित्यनुमानं साध्यीभूताऽनुष्णत्वप्रतियोगिग्राहकप्रत्यक्षेण बाधितम्। शब्दोऽश्रावणो गुणत्वादित्यनुमानं साध्यप्रतियोगिग्राहकानुमानेन, गवयत्वं गवयपदाऽप्रवृत्तिनिमित्तं जातित्वादित्यत्र साध्यप्रतियोगिग्राहकोपमानेन बाधितम्। साध्यग्राहकमानजातीयमानबाधितं यथा–नरशिरःकपालं शुचि प्राण्यङ्गत्वात् शंखवदित्यनुमानं दृष्टान्ते शंखे शुचितारूपसाध्यग्राहकं यद्वाक्यमागमत्वरूपेण तत्सजातीयेन "मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम्। नारं स्पृष्ट्वा तु सस्नेहं सचैलो जलमाविशेदि"त्यागमेन बाधितम्। हेतुग्राहकमानबाधितं

यथा जलाऽनिलौ उष्णौ पृथिवीसमवेतस्पर्शविरुद्धस्पर्शवत्वादित्यनुमानं हेतुग्राहकप्रत्यक्षेण बाधितम् । मनो विभु ज्ञानसमवाय्याधारत्वादित्यनुमानं मनसि ज्ञानसमवायिसंयोगाधारत्वरूपग्राहकाऽनुमानेन, राजसूयं ब्राह्मणकर्त्तव्यं स्वर्गसाधनत्वादित्यनुमानं राजसूयस्य क्षत्रियकर्त्तव्यताबोधकहेतुग्राहकानुमानेन बाधितमिति ।

वैशेषिकमते असिद्ध-विरुद्ध-सव्यभिचाररूपास्त्रय एव हेत्वाभासाः । अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चाऽनपदेश इति सूत्रम् । अप्रसिद्धः—असिद्ध इत्यर्थः । अनपदेशः—दुष्टो हेतुरित्यर्थः । असन्—विरुद्ध इत्यर्थः । सन्दिग्धः—सव्यभिचार इत्यर्थः । बाधितसत्प्रतिपक्षयोर्विरुद्धसन्दिग्धयोरन्तर्भावः ।

चकारेण बाधितसत्प्रतिपक्षयोरपि संग्रहः । "विरुद्धाऽसिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीदि"त्यत्राप्युपलक्षणं ज्ञेयमिति वृत्तिकारः ।

भाष्यकारस्तु अनध्यवसितनामकहेत्वाभासं स्वीकृत्य चातुर्विध्यं प्राह । अनध्यवसितश्चाऽसाधारणः ।

मीमांसकमतेऽपि उक्तसूत्रोक्तास्त्रय एव हेत्वाभासाः । "असिद्धिः अनैकान्तिकत्वं-बाधकत्वं चेति त्रयो हेतुदोषाः" इति शास्त्रदीपिका । तत्र बाधकत्वं—विरोधो बाधश्च । अनैकान्तिकत्वं—व्यभिचारः सत्प्रतिपक्षश्चेति सङ्क्षेपः ।

अत्युत्तमोऽयं ग्रन्थः, एतच्छास्त्रप्रविविक्षूणां महान्तमुपकारमावहति, परन्त्वतिगम्भीरत्वात्, एतदाशयाऽऽविष्कारिणीं "गंगा"व्याख्यामहमारचितवान् ।

व्याख्यया चाऽनया छात्रोपकारमेव विशेषतः समीहमानेन मया सरलैरेव वाक्यैरियं सङ्ग्रथिता । बहुत्र ग्रन्थसन्दर्भो विवृतः स्वीयैर्वाक्यैः ।

एवं गुरुवरैः स्वर्गीय म०म०श्रीवामाचरणभट्टाचार्यपादैर्यदुपदिष्टं, यच्चाधिगतमितस्ततो ग्रन्थान्तरेभ्यः, तद्यथोचितमत्र व्याख्यायां निवेशितम् ।

एवं कृतेऽपि परिश्रमे पुरुषमात्रसाधारणा भ्रमप्रमादादिदोषा अत्राप्यवश्यं भवेयुरेव, तथापि येऽत्र गुणलवास्ते गुरूणां, ये च दोषास्ते मदीया इति गुणैकपक्षपातिनो विपश्चितः क्षाम्यन्तु ममापराधं, निवेदयन्तु च मह्यमत्रत्यान् दोषविशेषान् येनाऽहमुद्यतः स्यां द्वितीयावृत्तौ तन्निराकरणायेति भूयोभूयः प्रार्थये पण्डितप्रवरान् ।

येषामसीमकृपया सांसारिकप्रपञ्चानवरुद्धस्तेषाम्पितृकल्पानां ज्येष्ठसोदराणां श्रीविद्याधरशास्त्रिणां किञ्चिदुपकर्त्तुमक्षमोऽहं केवलं हृदयाम्बुजमेव तेषां पादाम्बुजेषु सप्रश्रयमुपहरामि ।

अतिकठोरग्रीष्मकाले काश्यामवस्थाय ग्रन्थमिमं परिसमापयितुमक्षमाय हरिद्वारं गतवते मह्यं तत्राऽपेक्षितमखिलमपि सौकर्यमव्याजं सम्पादितवद्भ्यः श्रीमद्भ्यो माननीयराजाबलदेवदासबिरलामहोदयेभ्यः कृतज्ञतां प्रकटयामि ।

स चाऽयं ग्रन्थः श्रेष्ठिकुलभूषणेन हरिदासगुप्तात्मजजयकृष्णदासगुप्तमहोदयेन छात्रोपकाराय स्वायत्तीकृत्य प्रकाशितः ।

| | | |
|---|---|---|
| गणेशचतुर्थी<br>सं० १९९६ भाद्रपद,<br>विद्याभवन | } | विदुषामनुविधेयः<br>श्रीशिवदत्तमिश्रः । |

॥ श्रीः ॥

# अथ

# गादाधरीसामान्यनिरुक्तिप्रकरणम् ।

## अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥
जननीजनकौ नत्वा ध्यायं ध्यायं गुरोः पदम् ।
गदाधरवचोव्याख्या शिवदत्तेन वर्ण्यते ॥ २ ॥
गदाधरपदद्वन्द्वनिर्गलन्ती सदक्षरा ।
भावाविष्कृतिरम्येयं गङ्गाऽस्तु विदुषां मुदे ॥ ३ ॥

अथशब्दस्याऽऽनन्तर्यमर्थः, तच्च ध्वंसाधिकरणकालवृत्तित्वम्, तस्य धात्वर्थे निरूपणेऽन्वयः। यदि आनन्तर्यं ध्वंस एव, तदा समानकालीनत्वं संसर्गः। ध्वंसे चाऽवयवान्तग्रन्थात्मकसद्धेतुनिरूपणस्य "आनन्तर्याबाधितया ऽर्थतो लभ्यस्य" अनुयोगितयाऽन्वयः। अथशब्दस्यैव वा सद्धेतुनिरूपणानन्तर्यमर्थः, पञ्चम्यर्थो ज्ञानजन्यजिज्ञासाधीनत्वम्, तस्याऽपि धात्वर्थेऽन्वयः। निपूर्वकरूपधात्वर्थो शिष्यसमवेतज्ञानानुकूलो व्यापारः, स च शब्दरूपः(१)। आख्यातार्थो विषयत्वं "विशेष्यतारूपम्" तस्य च हेत्वाभासपदार्थेऽन्वयः। वर्तमानसामीप्ये लट्, तथा च वर्तमानकालोत्तरवृत्तित्वस्य(२) मयेत्यध्याहार्यतृतीयार्थकृतावन्वयः

(१) अस्य निरूपितत्वसम्बन्धेन आख्यातार्थविषयतायामन्वयः। न च व्यापारस्य निर्विषयकत्वात्तस्य विषयतायामन्वयाऽसम्भव इति वाच्यम्। याचितमणिमण्डनन्यायेन निरूपणघटकज्ञानीयविषयतामादाय व्यापारविषयत्वोपपत्तेरिति ध्येयम्। नव्यमते फलावच्छिन्नव्यापारो धात्वर्थः। फलं कर्माख्यातार्थः। तथाचाख्यातार्थो ज्ञानं, तत्र जन्यतासम्बन्धेन धात्वर्थव्यापारान्वयः। तस्य विषयतासम्बन्धेन हेत्वाभासपदार्थेऽन्वयः, तथा च तादृशव्यापारजन्यप्रतिपत्तिविषयीभूता हेत्वाभासा इति बोधे न काप्यनुपपत्तिरिति। एतन्मते फलस्य द्विधा प्रवेशे गौरवाद् व्यापारमात्रं धात्वर्थ इति सम्यक्। धातोर्व्यापारे फले च खण्डशक्तिरिति वैयाकरणाः। अत्र च वर्तमानसामीप्ये लटो विधानादस्य वाक्यस्याव्यवहितोत्तरकालकर्तव्यत्वप्रकारकबोधानुकूलव्यापारात्मकतया प्रतिज्ञात्वमुपपन्नमेवेति ध्येयम्।

(२) नन्वत्राऽऽख्यातार्थस्य वर्तमानकालोत्तरकालवृत्तित्वस्य तृतीयार्थकृतावन्वयो न सम्भवति प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वनियमात्। नचाऽऽख्यातार्थस्य वर्तमानकालोत्तरकालवृत्तित्वस्य धात्वर्थे व्यापार एवाऽन्वयोऽस्त्विति वाच्यम्। यत्र पाकजनकचरमकृतेर्नाशदशायां चरमव्यापारो वर्तते तत्र तादृशक्षणे पचतीति प्रयोगापत्तेः। तण्डुलकर्मकविक्लित्यनुकूलवर्तमानकालीनव्यापारस्य प्रसिद्धतया तादृशव्यापारानुकूलकृतिमानिति शाब्दबोधसम्भवात्, अस्मन्मते च वर्तमानकालीनतादृशकृतेरप्रसिद्धतया ऽऽपत्तिविरहात्। न च व्यापारविशेष्यकवर्तमानकालवृत्तित्वप्रकारकशाब्दबोधं प्रति पचतीत्यादि ज्ञानस्य न कारणत्वम्, अपि तु तादृशकृतिविशेष्यकशाब्दबोधं प्रत्येवेति तादृशशाब्दबोधाऽऽपादकविरहेण नापत्तिरिति वाच्यम्। अथेत्यादिनिरूप्यन्ते इति मूलग्रन्थस्य दीधितिकृता प्रतिज्ञापरतया व्याख्याततया तदसङ्गतेः। प्रतिज्ञा च स्वाव्य-

**एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति ।**

---

स्वरूपसम्बन्धेन, तादृशकृतिजन्यतासम्बन्धेन व्यापारेऽन्वयः, एवं च मत्समवेतवर्तमानकालोत्तरकालवृत्तिकृतिजन्यसद्धेतुनिरूपणोत्तरकालीनतत्त्वनिर्णयविजयप्रयोजकत्वज्ञानजन्यजिज्ञासाधीननिरूपणविषयीभूता हेत्वाभासा इति बोधः ।

**एतावता प्रबन्धेनेति ।** अवयवान्तग्रन्थेनेत्यर्थः । तृतीयाद्वयमभेदार्थकम्, प्रथमस्य तृतीयान्तार्थस्य प्रबन्धे, द्वितीयस्य निरूप्येत्यत्रत्यधात्वर्थनिरूपणेऽन्वयः(१) । **सपरिकरं**—व्याप्तिपक्षधर्मताविशिष्टम्, सद्धेतुमिति यावत् । द्वितीयार्थोऽभेदः, तस्य हेतावन्वयः(२) । हेतुमित्यत्र द्वितीयार्थो विषयित्वम्, तस्य निरूप्येत्यत्रत्यधात्वर्थनिरूपणघटकज्ञानेऽन्वयः । निरूपणं च शिष्यसमवेतज्ञानानुकूलो व्यापारः, आनन्तर्यं ल्यबर्थः, तच्च ध्वंसाधिकरणकालवृत्तित्वम्, तस्याऽग्रिमनिरूपणेऽन्वयः । तस्य प्रसङ्गः तत्प्रसङ्गः, तस्मात् । तत्पदं सपरिकरहेतुपरम्, निरूपितत्वं षष्ठ्यर्थः "सम्बन्धो वा", प्रसङ्गो नाम सङ्गतिः । पञ्चम्यर्थो ज्ञानजन्यजिज्ञासाधीनत्वम् । तस्य निरूपणेऽन्वयः । **तत्कार्येति** । अत्रापि तत्पदं पूर्ववद् । सपरिकरहेतुप्रयोज्यकार्येत्यर्थः । एककार्यकारित्वं नाम सङ्गतिः । प्रकृते एककार्यं-तत्त्वनिर्णयो विजयश्च, तत्प्रयोजकत्वं सद्धेतौ हेत्वाभासे चेत्यर्थः । पञ्चम्यर्थः पूर्ववद् । **तदाभासेति** । तत्पदं हेतुमात्रपरम्, हेत्वाभासेत्यर्थः । निरूपणमित्यत्र धात्वर्थः पूर्ववद् । द्वितीयार्थो विषयित्वम् । तस्य धात्वर्थप्रातज्ञायामन्वयः । प्रतिज्ञा चाऽव्यवहितोत्तरकालकर्तव्यत्वप्रकारकज्ञानानुकूलो व्यापारः । वर्तमानत्वं कृतिश्चाऽऽख्यातार्थः । तथा चाऽवयवान्तग्रन्थाभिन्नव्याप्तिपक्षधर्मताविशिष्टहेतुविषयकज्ञानानुकूलव्यापारोत्तरकालीन—व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपितप्रसङ्गसङ्गतिज्ञानजन्यजिज्ञासाधीन-तत्त्वनिर्णयादिरूपसपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वज्ञानजन्यजिज्ञासाधीन—हेत्वाभासविषयकशिष्यप्रतिपत्त्यनुकूल 'अनुमितिकारणीभूतेत्यादिशब्दात्मक" व्यावहितोत्तरकालीन"कृतिजन्यत्व" कर्तव्यत्वप्रकारकव्यापारविशेष्यकबोधानुकूलो व्यापारः, तत्र स्वोत्तरकालीनकृतौ वर्तमानकालोत्तरकालवृत्तित्वस्याऽन्वयानुपपत्तिरिति चेन्न । कृतावेव वर्तमानकालोत्तरकालवृत्तित्वस्याऽन्वयस्वीकारात् । न चैवमुक्तव्युत्पत्तिविरोध इति वाच्यम् । अनन्यगतिकतया तादृशव्युत्पत्तिसङ्कोचस्याऽऽवश्यकत्वात्, अन्यथा तस्मात्पचतीति प्रयोगो न स्यात् । पञ्चम्यर्थस्य ज्ञानज्ञाप्यत्वस्य तिङर्थकृतावन्वयात् । एतेन तिङर्थस्य सुबर्थेन समं नान्वय इत्यपि निरस्तम् । तथा चाऽत्रापि आख्यातार्थस्य तृतीयार्थकृतावन्वयो युज्यते एवेति ध्येयम् ।

---

(१) ननु प्रबन्धस्याऽभेदेन निरूपणक्रियायामन्वये कथं न द्वितीया ? क्रियाविशेषणानां कर्मत्वमित्यनुशासनादिति चेन्न । अजहल्लिङ्गस्य क्रियाविशेषणत्वे तद्वाचकपदात्तृतीयैव, जहल्लिङ्गस्य क्रियाविशेषणत्वे तद्वाचकपदाद्द्वितीया तत्रैवोक्तानुशासनप्रवृत्तेः, अन्यथा अनुमितिं जानातीति प्रयोगापत्तेः । वस्तुतो यत्राभेदसम्बन्धेन धात्वर्थेऽन्वयस्तत्रैव द्वितीया यत्राऽभेदस्यापि धात्वर्थे प्रकारतया भानं तत्र तृतीयाऽपीति कलापे उक्तम् । इयांस्तु विशेषः । क्रियाविशेषणस्य द्वितीयान्तस्य तृतीयान्तस्य वा सर्वत्रैवाऽभेदो विभक्तेरर्थः । द्वितीयार्थाऽभेदस्य संसर्गविधया तृतीयार्थस्य च प्रकारविधया भानमिति ।

(२) सपरिकरहेतुमित्यनुक्त्वा सपरिकरमिति व्यासलिखनं तदाभासनिरूपणमित्यत्र तच्छब्देन केवलहेतोः परामर्शसूचनाय अन्यथा तच्छब्दस्य समस्तैकदेशपरामर्शकत्वापत्तेः ।

**हेत्वाभासनिरूपणे प्रसङ्गस्याऽपि सङ्गतित्वं सम्भवति, व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्मताविरोधितद्विरहवतो दुष्टहेतोः स्मरणाद्, अतस्तदप्रदर्शकमूलस्य न्यूनतां परिजिहीर्षुः प्रसङ्गस्याऽपि तन्निरूपणप्रयोजकत्वमाह**—एतावतेति ।

---

परं विशेष्यकस्वोत्तरकालवृत्तिकृतिजन्यत्वप्रकारकबोधानुकूलशब्दाद्यात्मकव्यापारानुकूलकृतिमान् मणिकार इति बोधः ।

**तत्त्वनिर्णयविजयप्रयोजकत्वादि**तिमूलवाक्यात् तत्त्वनिर्णयविजयप्रयोजकत्वज्ञानजन्यजिज्ञासाधीनत्वं यथा हेत्वाभासनिरूपणे बोध्यते तथा तुल्यवित्तिवेद्यतया तत्त्वनिर्णयविजयप्रयोजकत्वात्मकैककार्यकारित्वे हेत्वाभासनिरूपणप्रयोजकजिज्ञासाजनकज्ञानविषयत्वं बोध्यते, एवं च मूलवाक्यादेककार्यकारित्वसङ्गतिप्रदर्शनेऽपि प्रसङ्गसङ्गतिः कथं न प्रदर्शितेत्याशङ्कायामाह **हेत्वाभासनिरूपणे इति** । निरूपितत्वं सप्तम्यर्थः(१), तस्य **सङ्गतित्वे**ऽन्वयः । नच प्रसङ्गस्य सङ्गतित्वनिश्चयात्सम्भवतीत्यसङ्गतमिति वाच्यम् । सङ्गतित्वमित्यस्य प्रयोजकत्वमित्यर्थः । तथाच हेत्वाभासनिरूपणनिरूपितप्रयोजकत्वं प्रसङ्गस्यापीत्यर्थकरणेनाऽदोषात् । तत्र हेतुमाह **व्याप्तीत्यादिना** । **व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति**—सद्धेतुनिरूपणे सति । स्मृतनिष्ठस्मरणप्रयोजकसम्बन्धः प्रसङ्गः । स च स्ववृत्तिव्याप्तिपक्षधर्मत्वाभावरूपः, स्वं—सद्धेतुः । तथाच सद्धेतुज्ञानस्य स्ववृत्तिव्याप्तिपक्षधर्मत्वाभावरूपसम्बन्धपुरस्कारेणाऽसद्धेतुस्मारकतया सद्धेतुनिरूपणानन्तरमसद्धेतोः स्मृतत्वमुपपद्यते । न च व्याप्तिपक्षधर्मताविरहवतो दुष्टहेतोः स्मरणादित्येव कथं नोक्तं किं विरोधिपदेनेति वाच्यम् । विरोधिपदं स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकव्याप्तिपक्षधर्मतासामान्याभावलाभार्थम्, अन्यथा कालिकादिना व्याप्यवृत्तिरूपेण वा व्याप्तिपक्षधर्मत्वाभावमादाय सद्धेतोरपि सङ्गतिमत्त्वापत्तेः । तथा च "हेत्वाभासनिरूपणप्रयोजकतावच्छेदकीभूत"सङ्गतित्वं प्रसङ्गवृत्ति व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणध्वंसकालीनव्याप्तिपक्षधर्मतावद्धेतुविशिष्टदुष्टहेतुस्मरणादिति फलितम् । हेतुवै० स्ववृत्तिव्याप्तिपक्षधर्मत्वाभाववत्त्वसम्बन्धेन । हेतुतावच्छेदकसम्बन्धश्च सामानाधिकरण्यम् । सामानाधिकरण्यघटकस्वाधिकरणत्वं स्वविषयतावच्छेदकत्वसम्बन्धेन । सङ्गतित्वताहशस्मरणयोः सामानाधिकरण्यं च व्याप्तिपक्षधर्मत्वाभावे इति ।

**तदप्रदर्शकमूलस्य**—सङ्गत्य(२)प्रदर्शकमूलस्य । **न्यूनता** च तदकथनज्ञानजन्यतदज्ञानवत्पुरुषोच्चरितत्वम् । **परिहार**श्चाऽज्ञानाभावसम्पादकव्यापारः । मूलोक्ताऽथशब्दस्य

---

(१) केचित्तु सप्तम्यर्थः प्रयोजकत्वम्, अन्वयश्चाऽस्य सङ्गतित्वैकदेशजिज्ञासायां, तथा च हेत्वाभासनिरूपणप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतित्वं प्रसङ्गनिरूपिताऽऽधेयतावदित्यर्थः । आधेयत्वं धर्मवपदार्थः, निरूपितत्वं षष्ठ्यर्थः, हेत्वाभासत्वं प्रसङ्गपदार्थः । अथ सप्तम्यन्तार्थहेत्वाभासनिरूपणप्रयोजकत्वस्य सङ्गतित्वैकदेशेऽनन्तराभिधानप्रयोजकजिज्ञासायामन्वये "अनन्तराभिधानप्रयोजक" इत्यनेन हेत्वाभासनिरूपणप्रयोजकत्वस्य द्विधा भानप्रसङ्ग इति चेन्न । विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमितिनियमेनाऽदोषादित्याहुः ।

(२) ननु सङ्गतित्वमनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम्, प्रसङ्गश्च स्मृतिविषयतावच्छेदकत्वे सति द्वेषविषयतान( )वच्छेदको यो धर्मः, एककार्यकारित्वं चाऽत्र सद्धेतुप्रयोज्यकार्यप्रयोजकत्वम्,

**परिकरो व्याप्तिपक्षधर्मते ।**

**निरूप्येत्यन्तमुक्तक्रमेण दुष्टहेतोः स्मृतत्वस्य प्रसङ्गनिर्वाहकस्य लाभाय ।** तत्प्रसङ्गादिति । **सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतेरित्यर्थः ।**

---

निरूप्येत्यन्तमर्थमभिधाय मूलवाक्यनिष्ठन्यूनता परिहृता शिरोमणिना । अत एव वक्ष्यति निरूप्येत्यन्तमित्यादिना ।

**व्याप्तिपक्षधर्मते इति ।** 'यद् यन्निरूपणानन्तरं निरूपणीयं तद् तन्निरूपितसङ्गतिमदि'ति नियमात्, निरूपणीयतावच्छेदकावच्छेदेन सङ्गतिमत्त्वमावश्यकम्, एवं चाऽत्र परिकरपदेन व्याप्तिमात्रोपादाने ह्रदो वह्निमान् धूमादित्यादिबाधितहेतौ निरूपणीयतावच्छेदकाक्रान्ततया "तद्विरहवतो दुष्टहेतोः स्मरणादि"त्यत्र तत्पदेन व्याप्तिमात्रपरामर्शात् तत्पदोपस्थाप्यस्ववृत्तिव्याप्त्यभावरूपसङ्गतिविरहेण व्यभिचारः स्यात् । परिकरपदेन पक्षधर्मतामात्रोपादाने ह्रदो वह्निमान् जलादित्यादौ स्ववृत्तिपक्षधर्मत्वाभावविरहेण व्यभिचारो दुर्वारः, अतो व्याप्तिपक्षधर्मतयोरुभयोरुपादानम्(१) ।

ननु सपरिकरहेतुप्रसङ्गादित्येवास्तु किं निरूप्येत्यन्तेनेत्यत आह–**निरूप्येत्यन्तमिति । उक्तक्रमेण**–व्याप्तिपक्षधर्मतानिरूपणे सतीत्याद्युक्तक्रमेण(२) । न च प्रसङ्गपदेनैव स्मृतत्वलाभसम्भवान्निरूप्येत्यन्तं व्यर्थमेवेति वाच्यम् । निरूप्येत्यन्तेन सद्धेतुनिरूपणस्य सिद्धत्वोक्त्याऽवसरलाभात् । अवसरस्तु विषयसिद्ध्या प्रतिबन्धकीभूतजिज्ञासानिवृत्तौ अनन्तरमवश्यवक्तव्यत्वम्(३) । **दुष्टहेतोरिति ।** निष्ठत्वं षष्ठ्यर्थः, तस्य स्मृतत्वेऽन्वयः ।

---

एवं च जिज्ञासापदेन हेत्वाभासाः के इति जिज्ञासाग्रहणे तज्जनकज्ञानविषयत्वं हेत्वाभासत्वे गतं न तु एककार्यकारित्वेऽपि, सद्धेतुप्रयोज्यकार्यं प्रयोजकं किमिति जिज्ञासाग्रहणे तज्जनकज्ञानविषयत्वं एककार्यकारित्वे गतं न तु हेत्वाभासत्वे इति कथमुभयोः सङ्गतिसामान्यलक्षणाक्रान्तत्वमिति चेन्न । अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धः सङ्गतिः । स च सम्बन्धः स्ववृत्तिव्याप्तिपक्षधर्मत्वाभावरूपः । स एव प्रकृते प्रसङ्गपदार्थः, एककार्यकारित्वरूपश्च । एवं प्रसङ्गत्वमुपोद्घातादिषट्काभिन्नत्वे सति सङ्गतित्वम्, न तु पूर्वोक्तं स्मृतिविषयतावच्छेदकत्वघटितं सम्बन्धे तदभावादिति ध्येयम् ।

(१) ननूभयोपादानेऽपि उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्याद्यसङ्कीर्णबाधे पृथिवीत्वे व्याप्तिपक्षधर्मत्वोभयोः सत्त्वेन स्ववृत्तिव्याप्तिपक्षधर्मत्वाभावरूपसम्बन्धस्याऽसत्त्वात्तादृशहेतौ सङ्गतिमत्त्वानुपपत्त्या व्यभिचारो दुर्वार एव, अतो यो यन्निरूपितसङ्गतिमान् स तन्निरूपणाऽव्यवहितोत्तरनिरूपणाविषय इत्येव नियमः स्वीकार्यः, एवं च निरूपणीयतावच्छेदकावच्छेदेन सङ्गतिमत्त्वस्याऽनपेक्षिततया परिकरपदेन व्याप्तिपक्षधर्मत्वयोरुभयोरुपादानं व्यर्थमिति चेन्न । गदाधरभट्टाचार्यैरसङ्कीर्णबाधो नाभ्युपगम्यते किन्तु यद्देशकालावच्छेदेन साधनं तद्देशकालावच्छेदेन साध्यमिति व्याप्तेः कारणत्वस्य सत्प्रतिपक्षग्रन्थे उक्ततया तादृशव्याप्त्यभावरूपसङ्गतिसत्त्वेन व्यभिचाराऽभावात् । जगदीशेन तु परिकरः–सहकारी, स च व्याप्तिपक्षधर्मत्वादिरित्युक्तम् । आदिपदेनाऽबाधितत्वसङ्ग्रहः । तथा च स्ववृत्तिऽबाधितत्वाभावरूपसङ्गतिमत्त्वान्नाऽसङ्ग्रह इति ।

केचित्तु परिकरपदस्य व्याप्तिपक्षधर्मत्वोभयत्वावच्छिन्ने शक्तिः, प्रत्येकस्मिन् लक्षणा । एवं च शक्त्या निर्वाहसम्भवे लक्षणाऽऽदरो न युक्तः । तर्कालङ्कारमतेऽनन्यगतिकतया लक्षणाऽऽदरो युक्त इति वदन्ति ।

(२) सद्धेतुनिरूपणानन्तरं शिष्याणां स्ववृत्तिव्याप्तिपक्षधर्मत्वाभाववन्तो हेत्वाभासा इति ज्ञानं जायते अनन्तरं तेषामेव हेत्वाभासा इति स्मरणम्, तत्प्रकारो हेत्वाभासत्वं प्रसङ्गपदार्थः ।

(३) एतेन यत्किञ्चिदेकसङ्गत्यपेक्षायां प्रसङ्गपूरणं व्यर्थम्, यावत्तदपेक्षायामवसरानुक्तेर्न्यूनतेत्यपास्तम् ।

**तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः। अन्वयश्चास्य निरूपणमित्यनेन।**

तत्त्वनिर्णयविजयप्रयोजकत्वादिति **मूलं यद्यपि हेत्वाभासनिष्ठतत्त्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरम्,**

---

(१)**प्रसङ्गनिर्वाहकस्य**—प्रसङ्गसङ्गतिप्रयोजकस्य। **तज्ज्ञानेति**। सङ्गतिज्ञानेत्यर्थः। **अस्य**—पञ्चम्यर्थस्य।

ननु दीधितिकृता सङ्गतिसामान्याऽप्रदर्शनकृतन्यूनतावारणं तत्प्रसङ्गादित्यंशपूरणेन तत्कार्यकारित्वादित्यंशपूरणेन च द्वेधा कृतम्, तच्चाऽयुक्तम्, सङ्गतिप्रदर्शनस्य शिष्यप्रवृत्तिफलकत्वेन तस्य यथाश्रुतमूललभ्याऽऽवश्यकेष्टसाधनत्वप्रदर्शनेनैव लाभसम्भवादित्याशङ्कते **यद्यपीति**। यद्यपि तत्त्वनिर्णयविजयप्रयोजकत्वादिति मूलं शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरमिति योजना। **शिष्यप्रवृत्त्युपयोगीति**। शिष्यप्रवृत्त्युद्देश्येत्यर्थः, अस्य प्रयोजनपदार्थेऽन्वयः। निरूपणं च प्रकृते हेत्वाभासज्ञानानुकूलो व्यापारः, तद्घटकं यज्ज्ञानं हेत्वाभासज्ञानं तस्येति यावत्। तत्त्वनिर्णयो विजयश्च प्रयोजनम्। तथा च तादृशमूलं "तत्त्वनिर्णयविजयात्मक"प्रयोजनबोधेच्छयोच्चरितमित्यर्थः। तत्र हेतुमाह—**हेत्वाभासनिष्ठेत्यादि**। हेत्वाभासनिष्ठं यत्तत्त्वनिर्णयादिजनक"हेत्वाभास"ज्ञानविषयत्वं तदर्थकत्वा(२)दित्यर्थः। एवं च हेत्वाभासविषयकज्ञाने तत्त्वनिर्णयादिजनकत्वज्ञानात्तादृशज्ञानस्येष्टसाधनतारूपत्वेन तत्त्वनिर्णयो विजयश्च मे भवत्विति फलेच्छासहिततादृशेष्टसाधनताज्ञानाच्छिष्याणां प्रवृत्तिरिति भावः।

मूलादिष्टसाधनताज्ञानेऽपि सङ्गस्यप्रदर्शनेऽसङ्गतत्वज्ञानेनोन्मत्तप्रलपितत्वशङ्कया तादृशज्ञानेऽप्रामाण्यनिश्चयोदयेन प्रदर्शितमपीष्टसाधनत्वं प्रवृत्त्यनुपयोग्येव स्यादिति प्रवृत्त्युपयोगीष्टसाधनताज्ञानेऽप्रामाण्यनिश्चयसम्पादकाऽसङ्गतत्वज्ञानविघटकतया सङ्गतिप्रदर्शनमावश्यकमित्यभिप्रायेण समाधत्ते **तथापीति। तन्मात्रपरत्वे**—हेत्वाभासज्ञाने इष्टसाधनत्वमात्र-

---

(१) ननु सर्वमिदं तदा सङ्गच्छेत यदि व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणानन्तरं तन्निरूपितसङ्गतिमान् कः इति शिष्यजिज्ञासा, सैव नानुभवसिद्धेति चेन्न। एकनिरूपणानन्तरं गुरुणा इतः परं किं वक्तव्यम्, गुरोः स्मृतिविषय कः इत्याकारिकायाः जिज्ञासायाः सर्वानुभवसिद्धतया उपोद्घातादिपञ्चकाभिन्नत्वे सति स्मृतिविषयत्वस्यैव प्रसङ्गरूपत्वेन तादृशजिज्ञासानिर्वाहात्।

(२) ननु मूलवाक्याद् हेत्वाभासनिष्ठतत्त्वनिर्णयादिजनकज्ञानविषयतायाः कथं लाभ इति चेदित्थम्। तादृशमूले प्रयोजकत्वपदं जनकज्ञानविषयतापरम्, पञ्चम्यर्थः प्रयोज्यत्वम्। हेत्वाभासानामिति पूरणीयम्। तदर्थस्य हेत्वाभासनिष्ठत्वस्य तादृशजनकज्ञानविषयतायामन्वयः। तादृशविषयत्वस्य पञ्चम्यर्थेऽन्वयः, तस्य च धात्वर्थे निरूपणे, तस्याऽऽख्यातार्थविषयत्वे, तस्य च हेत्वाभासपदार्थे, तथा च हेत्वाभासनिष्ठा या तत्त्वनिर्णयादिजनकज्ञानविषयता तत्प्रयोज्यनिरूपणाविषयीभूता हेत्वाभासा इति विशिष्टार्थलाभे हेत्वाभासनिष्ठतादृशविषयतालाभः। हेत्वाभासानामिति पूरणाऽभावेऽपि तत्त्वनिर्णयादिजनकज्ञानविषयता हेत्वाभासनिष्ठा हेत्वाभासनिरूपणप्रयोजकत्वात्, यद्यन्निरूपणप्रयोजकं तत्तन्निष्ठमिति व्याप्त्या तादृशार्थलाभो बोध्यः

तथापि तन्मात्रपरत्वे सङ्गत्यप्रदर्शनेन न्यूनता स्यादिति तस्यैककार्यकारित्वरूपसङ्गतिप्रदर्शनपरत्वमपि सम्भवतीति स्फुटीकर्त्तुमाह-तत्वनिर्णयादीति । आदिपदाद् विजयपरिग्रहः । तत्कार्यकारित्वात्-सपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वात्, प्रयोजकत्वं च जनकतावच्छेदकादिसाधारणमिति स्वविषयकज्ञानकार्यं प्रति स्वस्य तथात्वमक्षतमेव ।

तत्वनिर्णयः प्रमितकोटिनिश्चयः । तत्र व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव तद्विपरीतकोटिसाधकस्य हेत्वाभासत्वज्ञानमप्युपयुज्यते, प्रतिबन्धकीभूतविपरीतकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकत्वादित्युभयोस्तत्वनिर्णयप्रयोजकत्वम् ।

---

प्रदर्शनपरत्वे । मात्रपदेन सङ्गतिप्रदर्शनव्यवच्छेदः । न्यूनता-अप्रवर्तकता, तस्य-मूलस्य, एककार्येति । तत्वनिर्णयादिरूपेति शेषः । तथा च मूलस्य फलप्रदर्शनपरत्ववत्सङ्गतिप्रदर्शनपरत्वमप्यावश्यकमित्येतल्लाभार्थं दीधितिकृता तत्कार्यैकारित्वादिति पूरणसम्बलितं तद्विवृतमित्यभिप्रायः । ननु तत्कार्यकारित्वादिति ग्रन्थोऽसङ्गतः, प्रमितकोटिनिश्चयात्मकस्य तत्वनिर्णयस्य सद्धेतुकार्यत्वादित्यत आह-सपरिकरेति । ननु तत्वनिर्णयादिप्रयोजकत्वस्य सद्धेतुज्ञाने इव हेत्वाभासज्ञाने एव सत्वेन तस्य हेत्वाभासनिष्ठत्वविरहादत आह---प्रयोजकत्वं चेति । जनकतावच्छेदकादीति । आदिना जनकपरिग्रहः । उभयसाधारणप्रयोजकत्वं च कारणतावच्छेदकावृत्तिअन्यथासिद्धिचतुष्टयशून्यत्वे सति कार्यनियतपूर्ववर्त्तित्वम् । स्वविषयकेति । हेत्वाभासविषयकेत्यर्थः । कार्यं-तत्वनिर्णयादि । स्वस्य-हेत्वाभासस्य । तथात्वं---प्रयोजकत्वम् । अक्षतमेवेति । हेत्वाभासस्य तज्ज्ञाननिष्ठजनकतायां विषयितासम्बन्धेनाऽवच्छेदकत्वादिति भावः ।

प्रमितकोटिनिश्चय इति । साध्यवत्पक्षविषयतानिरूपितसाध्यविषयताशालिनिश्चय इत्यर्थः । तत्र-तादृशविषयताशालिनिश्चये, व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव-परामर्श इवेत्यर्थः । तथा च प्रमितकोटिनिश्चयः—प्रमात्मकपर्वतधर्मिकवह्न्यनुमितिः, तत्र साध्यवति पक्षे साध्यव्याप्यवत्तानिश्चयो गुणविधया कारणम्, साध्यवति पक्षे परामर्शश्च सद्धेतुविषयक एव भवतीति हृदयम् । तद्विपरीतेति । साध्याभावरूपेत्यर्थः । हेत्वाभासत्वज्ञानमपि—दोषज्ञानमपि । उपयुज्यते इति । पर्वतो वह्निमान् धूमात्, पर्वतो वह्न्यभाववान् जलादिति वादिप्रतिवादिनोर्विवादे वह्न्यभावव्याप्यजलवान् पर्वत इति परामर्शः, ततः सन्निकर्षविशेषेण जलं पर्वतावृत्तीत्यसिद्धत्वग्रहेण जले पर्वताऽवृत्तित्वज्ञाने जाते तत्कालीनतदनुव्यवसायेन "जलाभाववति जलं परामृशामीत्याकारकेण" जलाभाववद्विशेष्यकत्वे सति जलप्रकारकत्वरूपमप्रामाण्यं विषयीक्रियते इति दोषज्ञानस्य विरोधिकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकत्वम् । तथा चाऽप्रामाण्यग्रहाभावविशिष्टविरोधिपरामर्शस्यैव प्रतिबन्धकतया तदभावरूपकारणसम्पादनेन दोषज्ञानस्योपयोगित्वम्, एतदेवाऽऽह—प्रतिबन्धकीभूतेति ।

**अथवा तत्त्वनिर्णयः साध्यवत्ताज्ञाने प्रमात्वनिश्चयः । तत्राऽनुमापकहेतोर्व्याप्त्यादिविशिष्टरूपसद्धेतुत्वज्ञानमिव विपरीतकोटिसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते, प्रकृतसाध्यग्रहाऽप्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वग्रहविघटकत्वात् ।**

---

अयमाशयः । पर्वतो वह्निमानित्यनुमितौ वह्निव्याप्यधूमवत्तापरामर्शः कारणम् , परामर्शे व्याप्तिपक्षधर्मताविशिष्टहेतुविषयकत्वेन मानसं प्रमात्वज्ञानम् , ततश्चेदं साध्यवत्ताज्ञानं प्रमा स्वविषयसाध्यनिरूपितव्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्यज्ञानत्वादिति रीत्या सद्धेतुत्वज्ञानस्य प्रमात्वानुमितावुपयोगः । एवं वह्न्यभावव्याप्यजलवान् पर्वत इदं ज्ञानं अप्रमा स्वविषयसाध्यव्याप्तिपक्षधर्मत्वाभावविशिष्टहेतुविषयकत्वे सति स्वीयसाध्यविषयतानिरूपितव्याप्तिविषयत्वादिनिरूपितप्रकृतहेतुविषयकत्वादिति रीत्याऽप्रामाण्यग्राहकत्वं बोध्यम् इति ।

"तत्त्वं ब्रह्मणि याथार्थ्ये" इति कोशात्तत्त्वशब्दस्य प्रमात्वशक्ततया प्रमितकोटिनिश्चये लक्षणापतिरत आह **अथवेति । साध्यवत्ताज्ञाने प्रमात्वनिश्चय इति ।** साध्यवत्ताज्ञानधर्मिकसाध्यवन्निष्ठविशेष्यतानिरूपितसाध्यनिष्ठप्रकारताकत्वप्रकारकनिश्चय इत्यर्थः । तत्र—तादृशप्रमात्वनिश्चये, **अनुमापकहेतोः**—धूमादिहेतोः, **सद्धेतुत्वज्ञानमिव**—धूमादौ व्याप्तिपक्षधर्मत्वावगाहि "वह्निव्याप्यधूमवान् पर्वतइति" ज्ञानमिव, तथा च साध्यव्याप्यवति साध्यावगाहित्वेन लिङ्गेन साध्यवति साध्यावगाहित्वमनुमीयते, व्याप्यवति व्यापकप्रकारकत्वे व्यापकवति व्यापकप्रकारकत्वनियमात् (१) । तथा च पर्वतो वह्निमानित्यनुमितिः प्रमा(२) प्रमापरामर्शजन्यत्वादित्यनुमानेनानुमितौ प्रमात्वनिश्चयः, परामर्शे प्रमात्वनिश्चयश्च सद्धेतुत्वज्ञानान्मानस एव । **विपरीतकोटिसाधकेति ।** वह्न्यभावसाधकेत्यर्थः । **हेतोः**—जलादि-

---

(१) यद्यपि धूमवति वह्निप्रकारकत्वं यत्र तत्र वह्निमति वह्निप्रकारकत्वनियमोऽवश्यमङ्गीकार्यः, वह्निप्रकारकज्ञानविशेष्ये धूमवति वह्निमत्त्वानुपगमे धूमस्य वह्निव्याप्यताभङ्गापत्तेः, एवं च सद्धेतुत्वज्ञानापेक्षा नास्ति, तथापि अप्रयोजकत्वशङ्कानिरासाय सद्धेतुत्वज्ञानानुसरणम् । वस्तुतस्तु सल्लिङ्गकपरामर्शजन्याऽनुमितिः प्रमैवेति प्राचीनसिद्धान्तः । एवं च यत्रादौ सद्धेतुत्वज्ञानं चेत्, तदुत्तरं सल्लिङ्गकपरामर्शजन्यत्वज्ञानं तदुत्तरं तादृशानुमितौ प्रमात्वज्ञानं जायते इति साध्यवत्ताज्ञाने प्रमात्वनिश्चयप्रयोजकं यत्सल्लिङ्गकपरामर्शजन्यत्वज्ञानं तत्प्रयोजकं व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिति सद्धेतुत्वज्ञानस्य प्रमात्वनिश्चयप्रयोजकत्वं बोध्यम् ।

(२) साध्यांशे प्रमात्वं चात्र वह्निमति पर्वते वह्निप्रकारकत्वरूपं विशिष्यैव निर्वाच्यम् । एतेन प्रमात्वं यदि तद्वति तत्प्रकारकत्वं [ अर्थात् विशेष्यताविशिष्टप्रकारताकत्वं, वै० स्वनिरूपितत्वस्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावत्त्वोभयसम्बन्धेन, निरूपकतावत्ता च प्रसिद्धचतुष्टयसम्बन्धेन ] इत्युच्यते तदा अर्थान्तरम् , किञ्चिदंशे प्रमात्वस्य भ्रमानुमितावपि सत्त्वात् । यदि भ्रमसामान्यभिन्नत्वं तदा तु व्यभिचारः, प्रमापरामर्शजन्यत्वस्य पर्वतो वह्निमान्ह्रदश्च तथेति समूहालम्बनानुमितावपि सत्त्वात्, तथाहि यत्र भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानं ततो वह्निव्याप्यधूमवान्पर्वत इति परामर्शः, ततो वह्निव्याप्यधूमवान्ह्रद इति परामर्शः, ततः समूहालम्बनानुमितिः, तादृशानुमितौ उभयपरामर्शजन्यत्वस्यैव सत्त्वादित्यादिदोषाणामनवकाशः । परामर्शे प्रमात्वं च भ्रमसामान्यभिन्नत्वरूपं निवेश्यमिति ध्येयम् ।

**विजयप्रयोजकत्वं च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा, व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्न्यायप्रयोगद्वारा बोध्यम् ।**

---

हेतोः, **दुष्टत्वज्ञानमपि**–जलादेः पर्वताऽवृत्तित्वरूपस्वरूपाऽसिद्धिज्ञानमपि, **उपयुज्यते**, तत्रेत्यादिः । उपयोगमाह **प्रकृतसाध्यग्रहे**–पर्वतो वह्निमानिति ग्रहे, योऽप्रामाण्यग्रहः—प्रमात्वाभावग्रहः, तद्ग्राहको यः **"विपरीतकोटिसाधक"जलादि"हेतौ अदुष्टत्वग्रहः, तद्विघटकत्वात्** दुष्टत्वज्ञानस्योपयोगितेति यावत् । तथा च यत्र वह्निव्याप्यधूमवान्पर्वत इति परामर्शाद् वह्न्यनुमितिः, ततो वह्न्यभावव्याप्यजलवान् पर्वत इति परामर्शाद्वह्न्यभावानुमितिः, तत्र जलहेतावदुष्टत्वग्रहे सति वह्न्यभावानुमितौ सल्लिङ्गकपरामर्शजन्यत्वज्ञानं, तदधीनस्तत्र प्रमात्वनिश्चयः, तदधीनं पूर्वोत्पन्नानुमितावप्रामाण्यज्ञानं ततस्तत्र प्रमात्वाभावनिश्चय इति ।

एवं च पर्वतो वह्निमानित्यनुमितिः भ्रमः "वह्न्यभाववति वह्निप्रकारिका" वह्न्यभावव्याप्यजलवान्पर्वत इति परामर्शीयनिरूप्यनिरूपकभावापन्नविषयताघटितधर्मावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादित्यनुमानेन इदं ज्ञानमप्रमा स्वविरोध्यनुमितिजनकहेत्वदुष्टत्वग्रहकालीनत्वादित्यनुमानेन वाऽप्रामाण्यग्रहे तदुपयोगिनो विपरीतहेत्वदुष्टत्वग्रहस्य प्रतिबन्धको दुष्टत्वग्रहः । स्वरूपासिद्धत्वरूपदुष्टत्वग्रहे तु वह्न्यभावानुमितौ न सल्लिङ्गकपरामर्शजन्यत्वज्ञानं तद्विरहे च न वह्न्यभावानुमितौ प्रमात्वनिश्चयः, प्रमात्वनिश्चयविरहे सति पूर्वोत्पन्नवह्न्यनुमितौ अप्रमात्वज्ञानानुत्पत्तिः, तथा च न प्रमात्वाभावनिश्चयः, ततश्च प्रमात्वाभावनिश्चयरूपप्रतिबन्धकानिवृत्त्या तादृशवह्न्यनुमितौ प्रमात्वनिश्चयो जायते, तथा च प्रमात्वाभावनिश्चयाभावरूपप्रतिबन्धकाभावसम्पादनद्वारा साध्यवत्ताज्ञाने प्रमात्वनिर्णयसम्पादकत्वं हेत्वाभासत्वज्ञानस्येति । **अत्रेदं बोध्यम्** । विपरीतकोटिसाधकहेतावदुष्टत्वग्रहे जाते अदुष्टविषयकपरामर्शजन्यत्वेन हेतुना विपरीतकोटौ प्रमात्वनिश्चयो जायते, ततश्च प्रमात्मकज्ञानीयप्रकारतानिरूपितविशेष्यतासमानाधिकरणविशेष्यतानिरूपितप्रकृतसाध्यप्रकारताकत्वेन हेतुना साध्यवत्ताज्ञाने तद्वति तत्प्रकारकत्वाभावरूपप्रामाण्याभावप्रकारको ग्रहो भवेत्, तत्र दुष्टत्वग्रहे जाते तु विपरीतकोटिज्ञानधर्मिकप्रमात्वविधेयकानुमितिसम्पादको यस्तादृशपरामर्शजन्यत्वरूपो हेतुः स एव न सम्भवति, अतो विपरीतकोटौ प्रमात्वनिश्चयो न जायते, ततश्च प्रकृतसाध्यवत्ताज्ञाने प्रमात्वाभावग्रहो नैव जायते, तत्साधकस्य "प्रमात्मकज्ञानीयप्रकारते"त्याद्युक्तहेतोरसत्त्वात्, किन्तु प्रकृतानुमापकहेतोर्व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानादुक्तरीत्या साध्यवत्ताज्ञाने प्रमात्वनिश्चयो जायते इत्यनयैव रीत्या सर्वेषां दुष्टत्वग्रहाणामुपयोगिता बोध्या ।

**विजयप्रयोजकत्वञ्चेति** । विजयश्च पराहङ्कारखण्डनम् । अहङ्कारश्चाऽहमुत्कृष्ट इति संस्कारः, तत्खण्डनं तन्नाशानुकूलो व्यापारः ।

यद्वाऽयमुत्कृष्ट इति मध्यस्थज्ञानानुकूलो व्यापारो विजयः । सुखविशेष इत्येके । तत्त्वनिर्णयपदोपादानेनैव एककार्यानुकूलत्वरूपसङ्गतेर्लाभसम्भवे विजयपर्यन्तानुसरणं वादजल्पयो

देन प्रयोजनप्रदर्शनार्थम् । गुरुशिष्ययोः कथा वादः । विजिगीषुद्वयस्य कथा जल्पः । स्वज्ञानाधीनेति । हेत्वाभासज्ञानाधीनेत्यर्थः । स्वज्ञानाधीनेति । व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानाधीनेत्यर्थः ।

तत्र—निरूपणे, सप्तम्यर्थो विषयत्वं हेत्वाभासत्वान्वयि, तथाच निरूपणविषयीभूतं हेत्वाभासत्वं चेत्यर्थः । अनुमितीति । अनुमितौ कारणीभूतो योऽभावस्तस्य प्रतियोगि यद् यथार्थज्ञानं तद्विषयत्वमित्यर्थः । धूमाभाववद्वृत्तिवह्निरूपव्यभिचारे लक्षणसमन्वयः, तथाहि—पर्वतो धूमवान् वह्नेरित्यनुमितौ कारणीभूतो योऽभावः "धूमाभाववद्वृत्तिर्वह्नि"रित्याकारकव्यभिचारनिश्चयाभावः, तस्य प्रतियोगि यद् यथार्थज्ञानं धूमाभाववद्वृत्तिर्वह्निरितिनिश्चयस्तद्विषयत्वस्य तत्र सत्त्वात् । एवं ह्रदो वह्निमानित्यनुमितिकरणीभूतो यो वह्न्यभाववान् ह्रद इति निश्चयाऽभावस्तत्प्रतियोगियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्ह्रदरूपबाधे सत्त्वाल्लक्षणसमन्वयः ।

न चाऽनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमित्येवास्तु किं कारणीभूताभावप्रतियोगित्वनिवेशेनेति वाच्यम् । प्रतिबन्धकत्वं हि द्विविधम्—कारणीभूताऽभावप्रतियोगित्वं, प्रयोजकीभूताभावप्रतियोगित्वं च । अत्र तु कारणीभूताभावप्रतियोगित्वमेव निविष्टमिति सूचनाय तदुपादानात्, अन्यथा वह्निव्याप्यधूमवान् ह्रद इति परामर्शेऽतिव्याप्तेः, तादृशपरामर्शधर्मिकाऽप्रामाण्यनिश्चयाऽभावस्यापि ह्रदो वह्निमानित्यनुमितौ प्रयोजकत्वात्, तत्प्रतियोगियथार्थज्ञानविषयत्वस्य तत्र सत्त्वात् ।

ननु अनुमितिकारणाभावप्रतियोगियथार्थज्ञानविषयत्वमित्येवोच्यतां किं भूतपदेनेति चेन्न।

अनुमितिकारणस्याऽभाव इति षष्ठीतत्पुरुष(१)भ्रमनिरासाय तदुपादानात् । तथाचाऽनुमितिकारणपरामर्शस्याऽभावप्रतियोगिपरामर्शविषये वह्निव्याप्यधूमवत्पर्वते नातिव्याप्तिः । तेनाऽनुमितिकारणीभूतश्चासौ अभावश्चेति कर्मधारय(२)लाभ इति ध्येयम् ।

नन्वेवमपि अनुमितिकारणीभूतो यस्तत्प्रतियोगियथार्थज्ञानविषयत्वमित्येवोच्यतां किमभावपदोपादानेनेति चेन्न ।

पर्वतो वह्निमानित्यत्र घटवद्भूतलेऽतिव्याप्तिः, स्वावच्छिन्नभिन्नभेदस्य स्वस्वरूपतया परामर्शावच्छिन्नभिन्नभेदस्य परामर्शरूपतया पर्वतो वह्निमानित्यनुमितिकारणीभूतो यः परामर्शः तत्प्रतियोगि यत्स्वावच्छिन्नभिन्नं "घटवद्भूतलमि"ति ज्ञानं तद्विषयत्वस्य तत्र सत्त्वात्। नाचाऽभावपदोपादानेऽपि तद्दोषतादवस्थ्यम्, परामर्शस्य स्वाभावाभावरूपत्वेनाऽभावरूपत्वादिति वाच्यम् । अभावपदस्य भावप्रधाननिर्देशतया अनुमितिनिष्ठकार्य(३)तानिरूपितकारणता-

---

(१) षष्ठीतत्पुरुषत्वं च समासत्वे सति नामविशिष्टनामत्वम्, वै० स्वप्रयोज्याऽभेदसम्बन्धावच्छिन्नस्वार्थविशिष्टषष्ठ्यर्थावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्व, स्वाव्यवहितोत्तरत्व—स्वाव्यवहितपूर्वत्वाऽन्यतर, एतदुभयसम्बन्धेन ।

(२) कर्मधारयत्वं च पूर्वोक्तमेव । वै० स्वप्रयोज्याऽभेदसम्बन्धावच्छिन्न"किञ्चिद्विशिष्टसुबर्थाऽनवच्छिन्न"प्रकारतानिरूपितविशेष्यताप्रयोजकत्व- स्वाव्यवहितोत्तरत्वोभयसं० ।

(३) अत्र कार्यतापदानुपादाने अनुमितिनिष्ठो यस्तन्निरूपितकारणतेत्याद्युपादाने पर्वतो वह्निमानित्यत्र वह्निमत्पर्वतेऽतिव्याप्तिः, विषयतासम्बन्धेन अनुमित्यभावविषयकप्रत्यक्षं प्रति अनुमित्यभावस्य तादात्म्येन हेतुतया अनुमितिनिष्ठा या प्रतियोगित्वसम्बन्धावच्छिन्ना "कारणता"वच्छेदकता तन्निरूपिता या अनुमित्य-

(१)वच्छेदकं यदभावत्वरूपानुयोगित्वं तन्निरूपितप्रतियोगिताश्रययथार्थज्ञानविषयत्वस्य विवक्षणीयत्वात्। तथाच नोक्ताऽतिव्याप्तिः, परामर्शस्य परामर्शावच्छिन्नभिन्नभेदत्वेन परामर्शाभावाभावत्वेन वा न कारणत्वम्, अपितु परामर्शत्वेनैव, परामर्शत्वं तु नानुयोगितारूपमिति अनुमितिकारणतावच्छेदकीभूतानुयोगिताविरहादिति(२) ।

नच तथापि ज्ञानपदं किमर्थमिति वाच्यम् । पर्वतो वह्निमानित्यत्र कामिनीज्ञानेऽतिव्याप्तेः, कामिनीजिज्ञासायाः कामिनीज्ञानान्यज्ञाने प्रतिबन्धकतया कामिनीजिज्ञासाऽभावस्य च कामिनीज्ञानान्यज्ञाने कारणतया अनुमितिकारणीभूतो यः कामिनीजिज्ञासाऽभावः तत्प्रतियोगिनी या यथार्था कामिनीजिज्ञासा तद्विषयत्वस्य तत्र सत्त्वात्। नच पर्वतो वह्निमानियं कामिनीति समूहालम्बनानुमितावपि निरुक्तानुमितिसत्त्वेन तत्र च निरुक्तेच्छाप्रतिबध्यताया असत्त्वान्नातिव्याप्तिरिति वाच्यम् । यादृशस्थलविशेषे कामिनीविषयिणी पक्षे साध्यानुमितिः कस्यापि न जाता तत्रातिव्याप्तेर्दुर्वारत्वात् ।

ननु तथापि पर्वतो वह्निमानित्यत्र साध्यवत्पक्षेऽतिव्याप्तिः अनुमितिकारणीभूतो यः सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तत्प्रतियोगियथार्थज्ञानविषयत्वस्य साध्यवत्पक्षे सत्त्वादिति चेन्न । अभावपदस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावातिरिक्ताभावपरत्वात् । वस्तुतस्तु तद्विधेयकानुमिताविव सिद्धेः प्रतिबन्धकत्वेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वस्य वह्निमत्पर्वतो घटवानित्यनुमितावपि सत्त्वेन तत्र निरुक्तसिद्धिप्रतिबन्धकताविरहेणाऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः सिद्धावसत्त्वात्, बाधादिनिश्चयस्तु तत्प्रकारताशालिबुद्धिं प्रतिबध्नातीति दिक् ।

---

भावनिष्ठा कारणता तदाश्रयो योऽनुमित्यभावः तत्प्रतियोगि यदनुमित्यात्मकं यथार्थज्ञानं तद्विषयत्वस्य तत्र सत्त्वात्।

(१) एवं कारणतापदानुपादाने अनुमितिनिष्ठकार्यतानिरूपितकार्यत्वाभावत्वावच्छिन्ना या प्रतियोगिता तदाश्रयकार्यत्वाभावप्रतियोगियथार्थज्ञानविषयत्वस्य वह्निमत्पर्वते सत्त्वादतिव्याप्तिरतस्तदुपादानम् । कार्यत्वं च कार्यस्वरूपमिति ध्येयम् ।

(२) केचित्तु अभावपदानुपादाने अयमात्मा आत्मत्वप्रकारकज्ञानप्रतियोगिकसमवायादित्यत्र ज्ञायमानलिङ्गस्य कारणत्वमते आत्मत्वेऽतिव्याप्तिः । न चाऽनुमितिकारणीभूतो यस्तन्निरूपितयत्किंचित्सम्बन्धावच्छिन्नप्रतियोगिताश्रययथार्थज्ञानविषयत्वं निवेश्यम्, समवायनिरूपितसांसर्गिकप्रतियोगितायां सम्बन्धावच्छिन्नत्वविरहेणाऽतिव्याप्त्यभावात्, एतेन निरूपितत्वस्य प्रतियोगिस्वरूपतयाऽनुमितिकारणीभूतो यः परामर्शः तत्प्रतियोगित्वस्य व्याप्तिज्ञाने सत्त्वेन व्याप्त्यादावतिव्याप्तिः, कार्यतानिरूपितत्वस्य कारणतायां सत्त्ववत्, कार्यनिरूपितत्वस्य कारणे सुलभत्वादिति निरस्तम्, निरूपितत्वस्य प्रतियोगिरूपत्वे तस्य सम्बन्धानवच्छिन्नत्वादिति वाच्यम् । सांसर्गिकप्रतियोगितायां सम्बन्धावच्छिन्नत्वविरहेऽपि तत्सम्बन्धावच्छिन्नाधेयतायाः तत्संसर्गीयप्रतियोगितारूपत्वेन सांसर्गिकप्रतियोगितायां सम्बन्धावच्छिन्नत्वस्य सुलभत्वात् । न च ज्ञायमानलिंगस्य कारणत्वस्वीकारेऽभावपदोपादानेऽपि आत्मत्वप्रकारकज्ञानाभावहेतुके आत्मत्वेऽतिव्याप्तिर्दुर्वारैवेति तत्पक्षो न युक्त इति वाच्यम् । तावतापि अनुमितिकारणीभूतो यो बाधनिश्चयाभावस्तस्य घटानुयोगिकस्वरूपेण स्वावच्छिन्नभेदस्वरूपतया घटवद्भूतलेऽतिव्याप्तिरतोऽभावपदं प्रागुक्तार्थकम् । वस्तुतस्तु अनुमितिनिष्ठकार्यतानिरूपितकारणताश्रयपरामर्शप्रतियोगिव्याप्तिज्ञानविषये वह्निव्याप्यधूमेऽतिव्याप्तिः, व्याप्तिज्ञानस्य कारणत्वमते तस्य परामर्शसम्बन्धने तथात्वात्, परामर्शसम्बन्धप्रतियोगित्वमित्याहुः ।

**मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहालम्बनज्ञानविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया बा-**

---

यज्ज्ञानव्यक्तिः पर्वतो वह्निमानित्यनुमित्यव्यवहितपूर्वक्षणे न जाता तादृशज्ञानव्यक्त्यभावस्य तादृशानुमितिकारणत्वनिरासाय लक्षणघटकानुमितिकारणत्वमन्यथासिद्धिशून्यत्वघटितं निर्वचनीयम्, तच्चाऽन्यथासिद्धिशून्यत्वे सति अनुमितिसमानाधिकरणाऽभावाऽप्रतियोगित्वम्, नतु प्रतियोगिताऽनवच्छेदकधर्मवत्त्वम्, तेन प्रमेयत्वसत्त्वादिकमादाय न दोषः। प्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशाच्च विशिष्टाभावोभयाभावादिकमादाय दोष इति ध्येयम्।

अनुमितिकारणीभूताभावेत्यादिलक्षणत्रयं दोषस्यैव न तु दुष्टहेतोरिति व्यवस्थापयितुमुपक्रमते **मूलोक्तलक्षणानामिति । दुष्टहेतुलक्षणत्वे इति ।** दुष्टहेतुनिरूपणस्यैव प्रतिज्ञातत्वेन तल्लक्षणस्यैवाऽऽकाङ्क्षितत्वात्। सर्वत्र वह्न्यभाववान् ह्रदो धूमश्चेति हेतुदोषोभयविषयकसमूहालम्बनज्ञानमादाय तद्विषयत्वस्य धूमे सत्त्वाल्लक्षणसमन्वयो बोध्यः। परन्तु तुल्ययुक्त्याऽनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्य वन्ह्यभाववद्ह्रदादिरूपदोषेऽपि सत्त्वादतिव्याप्ति(१)रित्याह-**दोषेष्वतिव्याप्तिरिति** । बाधितहेतावव्याप्तिमप्याह **यथार्थज्ञाननिष्ठेति । अयं भावः**—अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमिति यथाश्रुतलक्षणस्य वन्ह्यभाववान् ह्रदो घटश्चेति समूहालम्बनज्ञानमादाय घटेऽतिव्याप्तिः, ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्य घटे सत्त्वादतो यथार्थज्ञाननिष्ठा याऽनुमितिप्रतिबन्धकता तन्निरूपितावच्छेदकतावद्विषयताश्रयत्वं विवक्षणीयम्, तथाच नोदासीने घटादावतिव्याप्तिः(२), उदासीनघटादिविषयतायाः प्रतिबन्धकतानवच्छेदकत्वात्। एवं च तुल्ययुक्त्योक्तसमूहालम्बनज्ञानीयधूमविषयताया अप्यनवच्छेदकत्वादव्याप्तिर्बाधितहेताविति(३) **समूहालम्बनज्ञानेति** । वन्ह्यभाववान् ह्रदो घटश्चेति समूहालम्बनज्ञानेत्यर्थः। **उदासीनपदार्थवारणा-नेति** ।

---

(१) यद्यपि ह्रदपक्षकवह्निसाध्यकस्थले वन्ह्यभाववद्ह्रदस्यापि दुष्टहेतुत्वान्नातिव्याप्तिः, तथापि पर्वतपक्षकवह्निसाध्यकस्थले धूमस्याऽपि द्रव्यत्वादिना दुष्टत्वात् तद्धर्मावच्छिन्नहेतुकप्रकृतानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं तेन रूपेण दुष्टत्वं वाच्यम्, एवं च वन्ह्यभाववद्ह्रदादेर्न धूमत्वादिना दुष्टत्वमित्यतिव्याप्तिरित्यर्थः, परन्तु स्वहेतुकानुमितिप्रतिबन्धकयथार्थज्ञानविषयो यत्त्वमित्युक्तौ अतिव्याप्तेरभावादिति विभावनीयम्।

(२) अथेदृशविवक्षायामपि उदासीनेऽतिव्याप्तिर्दुर्वारैव वन्ह्यभावजलोभयवान् ह्रद इति ज्ञानीयोभयत्वावच्छिन्नायाः उभयनिष्ठायाः प्रकारतायाः प्रतिबन्धकतावच्छेदकतया प्रकारतायाः ऐक्येन जलस्यापि प्रतिबन्धकतावच्छेदकीभूतप्रकारताश्रयत्वादिति चेन्न। तादृशप्रतिबन्धकतानवच्छेदकीयभूतयत्किंचिदवच्छिन्नविषयताशून्ययथार्थज्ञानीयविषयताश्रयत्वस्य विवक्षितत्वात्।

(३) ननु दोषैकदेशे एवमप्यतिव्याप्तिरेव। नचाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वं निवेश्यते, विशेषणान्तर्भावेण पर्याप्तविषयताया एव तथाविधावच्छेदकत्वान्न दोषः, पर्वतो निर्वह्निरिति भ्रममादाय दोषवारणाय यथार्थपदमिति वाच्यम्। प्रतिबन्धकताऽनतिरिक्तवृत्तिविषयतापर्याप्त्यधिकरणाऽप्रसिद्धेर्यथार्थपदवैयर्थ्या-

धादिज्ञानप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात्तत्र-

---

येति । घटादावतिव्याप्तिवारणायेत्यर्थः । बाधादीति । आदिनाऽऽश्रयासिद्धिसंग्रहः । ह्रदो वह्निमान् ह्रदाद्, घटत्वमनित्यं घटत्वादित्यादौ हेतुविषयतायाः "निरूपकतासम्बन्धेन" अवच्छेदकत्वादुक्तं प्रायश इति । नन्वस्य दुष्टहेतुलक्षणत्वे ह्रदो वह्निमान् धूमादित्यादौ हेतुविषयताया बाधादिज्ञानप्रतिबन्धकतायामनवच्छेदकत्वेऽपि अनुमितिपदस्याऽग्रे समूहालम्बनपरत्वस्य विवक्षणीयतया स्वरूपासिद्धिज्ञानप्रतिबन्धकतामादाय, ह्रदो वह्निमान् द्रव्यत्वादित्यादौ च व्यभिचारज्ञानप्रतिबन्धकतामादाय तत्तत्प्रतिबन्धकतायां हेतुविषयताया अवच्छेदकतया तादृशप्रतिबन्धकतावच्छेदकविषयताश्रयत्वस्य बाधितहेतौ "धूमे" सत्त्वाल्लक्षणसमन्वये कुत्राऽव्याप्तिरिति चेन्न । उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्याद्यसङ्कीर्णबाधस्थले हेतुविषयतायाः कथमप्यनुमितिप्रतिबन्धकतायामवच्छेदकत्वाऽसम्भवेन तादृशबाधितहेतावेवाऽव्याप्तिदाने तात्पर्यात्(१) । नचैवं क्वचिदपि असङ्कीर्णबाधस्थले हेतुविषयताया अनवच्छेदकत्वेन प्रायश इत्यसङ्गतमिति वाच्यम् । उत्पत्तिकालावच्छिन्नो घटो गन्धवान् घटत्वादित्यादौ हेतुविषयतायास्तादृशप्रतिबन्धकतावच्छेदकत्वेन तत्सङ्गतेः । एवं च प्रायश इत्यस्याऽनवच्छेदकत्वादित्यत्रैवाऽन्वयो न तु अव्याप्तिरित्यत्र प्रायशोऽव्याप्तेरभावादिति ध्येयम् ।

---

पातादिति चेन्न । "अथ विशिष्टदोषघटकसाध्यादेरपि प्रत्येकं दोषत्वापत्तेः" इत्यादिना एतद्दोषस्य वक्ष्यमाणत्वात् ।

(१) नचोत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ गन्धाभाववान् उत्पत्तिकालावच्छिन्नो घट इत्याकारकबाधनिश्चयवद् गन्धाभावव्याप्यवानुत्पत्तिकालावच्छिन्नो घट इति सत्प्रतिपक्षनिश्चयस्याऽपि सम्भवेन तद्घटकहेतुविषयतायाः प्रतिबन्धकतावच्छेदकत्वसम्भवान्न तत्राप्यव्याप्तिरिति वाच्यम् । तत्र साध्याभाववदवृत्तित्वरूपाया व्याप्तेः प्रवेशे प्रतिबन्धकतावच्छेदककोटौ हेतुतावच्छेदकावच्छिन्नविषयताया अप्रवेशेन हेतुविषयताया अनवच्छेदकत्वात् । न च पृथिवीत्वव्यापकगन्धाभावसमानाधिकरणपृथिवीत्ववदुत्पत्तिकालावच्छिन्नघटस्याऽपि सत्प्रतिपक्षतया तन्निश्चयीयप्रतिबन्धकतायां हेतुविषयताया अवच्छेदकत्वेनाऽव्याप्तिविरहादिति वाच्यम् । देशकालोद्देश्यतावच्छेदककस्थले स्वरूपसम्बन्धरूपोद्देश्यतावच्छेदकावच्छेद्यत्वं विधेयसंसर्गे भासते इति नियमेन पृथिवीत्वप्रतियोगिकसमवायस्य व्याप्यवृत्तितया तत्रोत्पत्तिकालावच्छेद्यत्वभाने भ्रमत्वापत्त्या तस्याऽपि दोषत्वासम्भवादिति ।

यत्तु पर्वतो वह्निमानित्यत्र "अवच्छेदावच्छेदेन वह्नेः साध्यतास्थले" सामानाधिकरण्येन वह्न्यभाववत्पर्वतमात्रस्यैव दोषतया तन्निश्चयीयप्रतिबन्धकतायां हेतुविषयताया अनवच्छेदकत्वादव्याप्तिः साधु संगच्छते इति, तन्न । अवच्छेदावच्छेदेनाऽनुमितौ अवच्छेदावच्छेदेन परामर्शस्यैव हेतुतया उक्तस्थले सामानाधिकरण्येन हेत्वभाववत्पक्षस्याऽपि दोषतया तद्घटकहेतुविषयतामादाय लक्षणसमन्वयादिति ।

अनुमितिपदस्य समूहालम्बनपरत्वस्येदानीं शिरोमणिनाऽनभिधानाद्यथाश्रुतार्थाश्रयणेन ह्रदो वह्निमानित्यादिबाधिते एवाऽव्याप्तिरभिप्रेता, असिद्धिव्यभिचारज्ञानयोः परामर्शमात्रविरोधिनोरनुमित्यविरोधित्वादिति केचित्समाधीयते ।

नव्यास्तु ह्रदो वह्निमान् धूमादित्यत्रैवाऽव्याप्तिः, धूमाभाववान् ह्रद इति निश्चयस्य धूमविषयतामनन्तर्भाव्य लाघवादवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नधूमत्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्धकतया, हेतुविषयताया अनुमि-

**त्यहेतावव्याप्तिश्च, यद्विषयकत्वेनेत्यादिलक्षणे च तृतीयाया अवच्छेदकत्वा-**

---

वस्तुतोऽव्याप्तिरित्यस्य बाधेन दुष्ट इति व्यवहारानुपपत्तिरेवार्थः। अत्र बाधेनेति तृतीयार्थो विषयित्वावच्छिन्नत्वम्,(१) तस्य च दुष्धात्वर्थघटकप्रतिबन्धकत्वेऽन्वयः। दुष्धात्वर्थश्चाऽनुमितिप्रतिबन्धकतावच्छेदकविषयतारूपः। एवं च तृतीयार्थबाधविषयित्वावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वस्य धूमे बाधादिति संक्षेपः।

**तृतीयाया अवच्छेदकत्वार्थकतयेति।** यद्विषयकत्वेन ज्ञानस्याऽनुमितिविरोधित्वं तत्त्वमिति द्वितीयलक्षणे च अवच्छेदकत्वं तृतीयार्थो यद्विषयकत्वेऽन्वेति, तृतीयार्थे चाऽनुमितिविरोधित्वस्यान्वयः। यद्विषयकत्वमनुमितिप्रतिबन्धकतावच्छेदकं तत्त्वमित्यर्थक-

---

तिप्रतिबन्धकतानवच्छेदकतया स्वरूपासिद्धिनिश्चयप्रतिबन्धकतामादायापि लक्षणसमन्वयविरहात्। नचैवं धूमवानितिबुद्धिं प्रति अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन धूमत्वविशिष्टाभाववान् ह्रद इति निश्चयस्याऽपि प्रतिबन्धकत्वापत्तिरिति वाच्यम्। निरवच्छिन्नधूमत्वनिष्ठप्रकारतानिरूपितेत्यादिक्रमेणैव प्रतिबन्धकतायाः वक्तव्यत्वात्। न च, समवायाऽन्यसम्बन्धेनाऽपि उल्लिख्यमानजातेः स्वरूपतो भानाङ्गीकारादुक्तदोषतादवस्थ्यम्, अन्यथा अयं गौरितिज्ञानोत्तरं गोत्वेनेमं जानामीत्यनुव्यवसायो न स्यात्। विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणतया तत्राऽनुव्यवसायीयप्रकारतायां "गोत्वस्योल्लिख्यमानतया" गोत्वत्वेनैव भानात्, निरवच्छिन्नत्वाऽसम्भवेन गोत्वत्वस्य चाऽऽयं गौरित्यादिज्ञाने भानविरहाद् अनुव्यवसायानुपपत्तिः, एवं च धूमत्वविशिष्टाभाववानिति ज्ञानेऽपि धूमत्वप्रकारताया अपि निरवच्छिन्नतया प्रतिबन्धकत्वापत्तिरिति वाच्यम्। अवच्छेदकत्वावच्छिन्नधूमत्वनिष्ठाऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतेत्यादिक्रमेण प्रतिबन्धकत्वस्य वक्तव्यत्वात्, अभावे धूमस्य स्वातन्त्र्येण भाने एव पारतन्त्र्येण धूमत्वस्य भानं सम्भवतीति पारतन्त्रीयधूमत्वप्रकारतायाः स्वातन्त्रीयधूमप्रकारतावच्छेदकताया अवच्छेद्यावच्छेदकभाव इति परामर्शग्रन्थे उक्तम्, धूमत्वस्य स्वातन्त्र्येण भाने धूमत्वेऽवच्छेदकत्वविरहेण तादृशप्रकारताया अवच्छेदकत्वानवच्छिन्नत्वादेव न धूमत्वविशिष्टाभाववानिति ज्ञानस्य प्रतिबन्धकत्वापत्तिरिति प्राहुः।

अन्ये तु वन्ह्यभाववद्ह्रदैकदेशे वन्ह्यभावेऽतिव्याप्तिः, यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वस्य सत्त्वादतः प्रतिबन्धकतावच्छेदकीभूतमुख्यविशेष्यताश्रयत्वस्य निवेश्यतया स्वरूपासिद्धिनिश्चयप्रतिबन्धकतावच्छेदकमुख्यविशेष्यताश्रयत्वस्य धूमादौ विरहेण "हेतुविषयताया अनवच्छेदकत्वादि"ति ग्रन्थसङ्गतिः। न च मुख्यविशेष्यताश्रयत्वस्य निवेशेऽपि वन्ह्यभाववद्ह्रदस्य ह्रदानतिरेकाद् ह्रदेऽतिव्याप्तिरिति वाच्यम्। तद्दोषस्य ग्रन्थकृता स्वयं वक्ष्यमाणत्वात्। न च ह्रदे वन्ह्यभावः, वन्हिः ह्रदनिष्ठाभावप्रतियोगीतिनिश्चयनिष्ठानुमितिप्रतिबन्धकतावच्छेदकमुख्यविशेष्यताश्रयत्वस्य वन्ह्यभावे वन्हौ च सत्त्वादतिव्याप्तितादवस्थ्यमिति वाच्यम्। असमानप्रकारकनिश्चयस्याऽप्रतिबन्धकत्वमते एव लक्षणकरणात्। न च व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकताया हेतुविषयतायां सत्त्वेन तद्ग्रन्थाऽसङ्गतिस्तदवस्थैवेति वाच्यम्। प्रसिद्धस्थले ह्रदो वह्निमान् धूमादित्यत्र व्यभिचाराऽप्रसिद्ध्या तद्धेतुविषयताया अनवच्छेदकत्वात्तत्रत्यहेतावव्याप्तिरिति प्राहुः।

केचित्तु हेतुनिष्ठसाध्याभाववद्वृत्तित्वस्यैव व्यभिचारतया प्रतिबन्धकतावच्छेदकमुख्यविशेष्यताश्रयत्वस्य हेतौ विरहेण न यथाश्रुतग्रन्थाऽसङ्गतिरिति वदन्ति।

परे तु बाधादिज्ञानप्रतिबन्धकतायामित्यादिपदात् महानसत्ववत्पर्वतो वह्निमान् धूमादित्यादौ असङ्कीर्णाऽऽश्रयाऽसिद्धावव्याप्तिः, तन्निश्चयीयप्रतिबन्धकतायां हेतुविषयताया अनवच्छेदकत्वादित्यपि वदन्ति।

(१) ननु धान्येन धनवानित्यादावविवाऽभेदः, दुष्धात्वर्थे तदन्वयाऽसंभवात्। नापि एकज्ञानविषयत्वरूपं वैशिष्ट्यं हेत्वन्वयि तृतीयार्थः, घटेन दुष्ट इति व्यवहारापत्तेः।

यथाश्रुतमिदं हेतुदोषाणां लक्षणम् ,

तद्वत्त्वं च दुष्टहेतुनाम् , तदभिप्रायेणैव उपध्येयसङ्करेऽपीत्यादिवक्ष्यति ।

---

र्थकतया सुतरां तथेत्यत आह—यथाश्रुतमिति । इदम्—एतल्लक्षणत्रयम् ।

ननु हेतुवदाभासन्ते इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वाद्दुष्टहेतुनिरूपणस्यैव प्रतिज्ञातत्वात्तल्लक्षणमेवाऽऽकांक्षितम् , अतस्तदनुक्तौ मूलस्य न्यूनता, अन्यविधव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि ते चे त्यादिना दुष्टहेतूनामेव विभजनाद्दुष्टहेतुनिरूपणस्याऽप्रतिज्ञातत्वे तदसङ्गतेः, एवं दुष्टहेतुनिरूपणस्याऽप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवतारात् उपध्येयसङ्करेऽपीत्यादिग्रन्थस्य उपाध्यसङ्करेण विभागोपपादनपरस्याऽसङ्गतिरित्यत आह—तद्वत्त्वं चेति । तादृशदोषवत्त्वं चेत्यर्थः । दुष्टहेतूनां लक्षणमित्यनुषज्यते । स्फुटमिति शेषः। तथा च दुष्टहेतुनिरूपणस्य प्रकृतत्वेऽपि

---

तयेत्यर्थः । **सुतरां तथेति** । सुतरामव्याप्तिरित्यर्थः, धूमविषयतायाः प्रतिबन्धकतानवच्छेदकत्वादिति भावः । नच ह्रदत्वपुरस्कारेण घटावगाहिवन्ह्यभाववान् ह्रद इति ज्ञानीयप्रतिबन्धकतावच्छेदकीभूतघटविषयतामादाय घटादावतिव्याप्तिरिति वाच्यम् । यद्रूपावाच्छिन्नविषयत्वमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वनिवेशेनाऽदोषात् । एतादृशार्थलाभायैव सुतरां पदमिति ध्येयम् । **यथाश्रुतमिति** । दीधितौ इदंशब्दस्यैकवचनान्तत्वेन एकलक्षणपरामर्शकत्वे उत्तरयोर्दुष्टलक्षणत्वापत्त्या तद्दोषतादवस्थ्यमत आह—**एतल्लक्षणत्रयमिति** । वक्ष्यमाणरीत्या प्रथमस्य दुष्टहेतुलक्षणत्वसंभवादुक्तम्—**यथाश्रुतमिति** । मान्यास्तु अनुमितिप्रतिबन्धकयथार्थज्ञानविषयो यत्रेति व्युत्पत्त्या दुष्टहेतुलक्षणत्वमस्य सम्भवतीत्यत उक्तम् यथाश्रुतमितीति प्राहुः । यथाश्रुतत्वं च निरूढलक्षणेतरलक्षणाग्रहाजन्यशक्तिभ्रमाजन्यतत्तदर्थविषयकशाब्दबोधेच्छयोच्चरितत्वम् । **आकांक्षितम्**—जिज्ञासितम्, **अतः**—आकांक्षितत्वात् , **तदनुक्तौ**—दुष्टहेतुलक्षणानुक्तौ, **अन्यविधव्युत्पत्त्या**—हेतोराभासा इति व्युत्पत्त्या, **तदसङ्गतेः**—दुष्टहेतुविभागाऽसङ्गतेः । यस्य प्रतिज्ञा तस्य निरूपणम्, तस्यैव विभाग इति न्यायात् । ते चेत्यादिमूले सव्यभिचारादिपदस्य भावप्रधाननिर्देशेन दोषविभाजकत्वं सम्भवतीत्यत आह—**एवमिति** । **अप्रकृतत्वे**—प्रतिज्ञाविषयत्वाभावे । **विभागानर्हतयेति** । लक्षणादिना दोषप्रतिपादनस्यैव प्रतिज्ञातत्वादिति भावः । **तेषां**—दुष्टहेतूनां, **संकरेण**—ऐक्येन । **अनवतारादिति** । ते चेत्यादिग्रन्थस्य दोषविभागपरत्वे विरुद्धस्य व्यभिचार्याद्यनतिरिक्तत्वेन **हेतूनां** पञ्चत्वकथनाऽसंगतिरित्याशंकाया अनवतारादित्यर्थः । **उपाध्यसङ्करेणेति** । व्यभिचारविरोधादिरूपदोषाणां भिन्नत्वेनेत्यर्थः । एवं च दोषात्मकोपाधिभेदाद्धेतूनां भेद इत्यर्थकस्योपाधेरसङ्करादिति समाधानग्रन्थस्याऽप्यसङ्गतिरिति भावः। **स्फुटमिति**। स्फुटत्वं च तद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वम् ।

दोषलक्षणे कृते तद्घटकस्वरूपदुष्टहेतुलक्षणस्य स्फुटतया लाभेन दोषलक्षणाभिधानस्य तत्र तात्पर्यान्नोक्तानुपपत्तिरिति भावः। तदभिप्रायेणैवेति। दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः।

**अनुमितिपदस्याऽनुमितिसामान्यपरत्वेऽसम्भवात्, यत्किञ्चिदनुमितिपरत्वेऽतिप्रसङ्गात्, प्रकृतपक्षसाध्यहेतुकाऽनुमितिपरत्वमावश्यकम्,**

---

**नोक्तानुपपत्तिरिति**। दोषलक्षणस्यापि दुष्टज्ञानानुकूलव्यापाररूपदुष्टनिरूपणतया नाऽप्रतिज्ञातत्वमिति भावः। **दुष्टहेतुलक्षणाऽभिप्रायेणैवेति**। उपधेयसङ्करेऽपीति शङ्कासङ्गतिरिति तात्पर्यम्।

**अनुमितिपदस्येति**। अनुमितिकारणीभूताभावेत्यादिलक्षणघटकानुमितिपदस्येत्यर्थः। **अनुमितिसामान्यपरत्वे**—अनुमितित्वव्यापकत्वार्थकत्वे। **असम्भवादिति**। सामान्यपदस्य उद्देश्यतावच्छेदकव्यापकत्वार्थकतया। अनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमित्यर्थो लभ्यते, तथाचाऽसम्भवः, अनुमितित्वव्यापकप्रतिबध्यताया अप्रसिद्धत्वादिति भावः। **यत्किञ्चिदनुमितिपरत्वे इति**। प्रकृतपक्षसाध्यानवगाह्यनुमितित्वाश्रयपरत्वे इत्यर्थः। **अतिप्रसङ्गादिति**। ह्रदो वह्निमानित्यनुमितिनिष्ठानुमितित्वसमानाधिकरणप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि यद् यथार्थज्ञानं ह्रदो वह्न्यभाववानित्याकारकं तद्विषयीभूतवह्न्यभाववद्ह्रदादेः पर्वतो वह्निमान् धूमादित्यादौ दोषताप्रसङ्गादित्यर्थः। कुत्रचित्पुस्तके अनुमितिपदस्याऽनुमितिसामान्यपरत्वेऽतिप्रसङ्गादित्येव पाठः। तत्र सामान्यपदं न व्यापकत्वार्थकम्, अपि तु पक्षसाध्यानवगाह्यनुमितिपरमिति ध्येयम्।

**प्रकृतपक्षसाध्यहेतुकेति**। पर्वतो वह्निमानित्यनुमितौ वह्न्यभाववद्ह्रदेऽतिव्याप्तिवारणाय प्रकृतपक्षकेति। तत्रैव घटाभाववत्पर्वतेऽतिव्याप्तिवारणाय प्रकृतसाध्यकेति। नन्वत्र प्रकृतहेतुकत्वनिवेशो व्यर्थः, प्रकृतपक्षसाध्यकानुमितिप्रतिबन्धकेत्यादिलक्षणस्यैव सम्यक्त्वादिति चेन्न। प्रकृतहेतुकत्वं हि प्रकृतहेतुप्रकारकत्वम्, तच्च धूमवान् ह्रदो वह्निमानित्यनुमिताववाऽऽहित, एवं च स्वरूपाऽसिद्धिसङ्ग्रहायैव तदुपादानम्, धूमाभाववान् ह्रद इति निश्चयस्य प्रकृतपक्षसाध्यकानुमित्यप्रतिबन्धकत्वात्। व्यभिचारादावव्याप्तिरित्यत्राऽऽदिपदेन विरोधस्यैवोपादानादिति। वस्तुतस्तु प्राचीनमते तद्धेतुकानुमितौ तद्धेतुधर्मिकव्यभिचारज्ञानाभावस्य कारणत्वम्, एवं च प्रकृतपक्षसाध्यकानुमितिप्रतिबन्धकज्ञानविषयत्वाभावाद् व्यभिचारेऽव्याप्तिरतः प्रकृतहेतुकत्वनिवेशः, तन्निवेशे च प्रकृतहेतुकानुमितिप्रतिबन्धकत्वस्य व्यभिचारनिश्चये सत्त्वान्नाव्याप्तिः। नव्यमते च ग्राह्याभावानवगाहितया व्यभिचारनिश्चयस्याऽप्रतिबन्धकतया तादृशकार्यकारणभावे मानाभावात्तन्मताभिप्रायेण, तथाच व्यभिचारादावव्याप्तिरित्युक्तं गदाधरेण।

नव्यास्तु प्रकृतहेतुकत्वं न प्रकृतहेतुप्रकारकत्वम्, "लक्षणयाऽनुमितिजनकज्ञानमात्रपरत्वे च बाधादावव्याप्तिः, बाधादिज्ञानस्य परामर्शाऽप्रतिबन्धकत्वा"दिति परामर्शस्याऽप्रतिबध्यत्वं वदता ग्रन्थकारेण पूर्वकल्पे स्वरूपासिद्ध्यसङ्ग्रहस्याऽप्यभिप्रेतत्वात्, किन्तु प्रकृतहेतुकपरामर्शाऽव्यवहितोत्तरत्वं तत्।

नन्वेवं कथं स्वरूपासिद्धिसङ्ग्रहः, प्रकृतहेतुकपरामर्शाव्यवहितोत्तरत्वं हि ह्रदो वह्निमानि-त्यनुमितावेवाऽस्ति तत्र च स्वरूपासिद्धिनिश्चयप्रतिबध्यता नास्ति आचार्यव्यतिरिक्तमते प-क्षांशे हेत्वनवगाहित्वादिति प्रकृतहेतुकत्वनिवेशो व्यर्थ इति चेन्न । पर्वतो वह्निमान् महानसी-यवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमादित्यत्र महानसीयवह्नीतरवह्न्यभाववत्पर्वतरूपबाधेऽव्या-प्तिः, प्रकृतपक्षसाध्यकानुमितित्वस्य पर्वतो महानसीयवह्निमान् वह्निमान्पर्वत इत्यनुमितिद्वये सत्त्वादनुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्धेरतस्तन्निवेशः, तन्निवेशे च वह्निव्याप्यमहानसी-यवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमवान्पर्वत इति परामर्शस्येतरविशेषबाधानिश्चयरूपतया त-दव्यवहितोत्तरजायमानाऽनुमितिः पर्वतो महानसीयवह्निमानित्येव, महानसीयवह्नीतरबाधस-त्त्वात्, तस्याश्च बाधनिश्चयप्रतिबध्यत्वात्तत्सङ्ग्रहः ।

न च साध्यतावच्छेदकस्येतरवारकन्यूनवारकपर्याप्तिनिवेशस्यावश्यकतया तादृशसाध्य-तावच्छेदकगतरूपवृत्तिविधेयताशालित्वस्य महानसीयवह्निमानित्यनुमितौ विरहात्, वह्निमा-नित्यनुमितौ च तत्सत्त्वेऽपि तत्र तादृशपरामर्शोत्तरत्वविरहात्, एवं च तादृशानुमित्यप्र-सिद्ध्याऽव्याप्तितादवस्थ्यमिति वाच्यम् । यद्धर्मावच्छिन्नव्याप्यवत्ताज्ञानोत्तरमनुमितिः तद्धर्म एव विधेयतावच्छेदकत्वम्, इतरबाधसहकारादपरधर्मे प्रकारतावच्छेदकत्वमेव न तु विधेय-तावच्छेदकत्वमिति मते महानसीयवह्निमानित्यनुमितौ वह्नित्वमात्रस्यैव विधेयतावच्छेदकतया साध्यतावच्छेदकगतरूपवृत्तिविधेयताशालितादृशानुमितित्वव्यापकप्रतिबध्यतामादाय लक्षण-समन्वयात् ।

ननु महानसीयवह्न्यभाववत्पर्वतस्य बाधत्वे साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्यनुमि-तित्वव्यापकप्रतिबध्यतेत्यादि सिद्धान्तकल्पेऽपि निरुक्तानुमितित्वव्यापप्रतिबध्यत्वाऽप्रसिद्ध्या तद्दोषतादवस्थ्यमतस्तस्याऽलक्ष्यत्वमेव स्वीकरणीयमिति चेन्न । बाधनिश्चयस्य कार्यकालविषया प्रतिबन्धकतया तादृशसमूहालम्बनानुमितौ महानसीयवह्नीतरवह्निबाधनिश्चयसत्त्वेन तादृशा-नुमितौ शुद्धवह्नित्वावच्छिन्नप्रकारताभाने तस्याऽऽहार्यत्वापत्तेः । एवमितरबाधनिश्चयाभावस्य कार्यसहभावेनाऽपि कारणतया तत्क्षणे महानसीयवह्निमानित्यनुमितिरिति नानुपपत्तिः ।

न च तथापि यत्र वह्निव्याप्यमहानसीयवह्निभिन्नवह्न्यभाववत्पर्वतकालीनधूमवान् पर्वत इति परामर्शः ततः तत्पूर्वं वा महानसीयवह्न्यभाववान्पर्वत इति बाधनिश्चयः तदुत्तरं वह्नि-मानित्येवानुमितिर्जायते, तथाच तादृशपरामर्शोत्तरानुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्या पुन-रव्याप्तितादवस्थ्यमिति वाच्यम् । पर्वतपक्षकवह्निसाध्यकमहानसीयवह्निमन्महानसीयवह्नीतर-वह्न्यभाववत्पर्वतकालीनधूमहेतुकस्थले तद्धेतुकपरामर्शोत्तरं महानसीयवह्न्यभाववान् पर्वत इति बाधनिश्चय एव न सम्भवति, तादृशबाधनिश्चयं प्रति तद्धेतुकपरामर्शस्यैव प्रतिबन्धकत-या तद्धेतुकपरामर्शोत्तरं महानसीयवह्निमानित्यनुमितिरेव जायते तादृशानुमितिप्रतिबध्यत्वमा-दायोक्तबाधेऽव्याप्तिवारणाय प्रकृतहेतुकत्वनिवेशव्यावृत्तिसम्भवात् ।

न च वह्निव्याप्यमहानसीयवह्निमन्महानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमवान्पर्वत इति परामर्शोत्तरं लौकिकसन्निकर्षजन्यं दोषविशेषजन्यं वा महानसीयवह्न्यभाववान् पर्वत इति बाधनिश्चयः, "लौकिकसन्निकर्षजन्यस्य-दोषविशेषजन्यस्य वा ज्ञानस्याऽप्रतिबध्यत्वात्"

तदुत्तरं वह्निमानित्येवानुमितिर्जायते, तथाच निरुक्तपरामर्शोत्तरजायमानाऽनुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यमतोऽलक्ष्यत्वमेव तस्य(१) स्वीकरणीयमिति प्रकृतहेतुकत्वनिवेशो व्यर्थ इति वाच्यम् । ज्ञानं विषयितासम्बन्धेन वह्निमद् वह्न्यभाववद्धूमवत्कालीनमहानसीयवह्नीतरवह्न्यभाववत्तज्ज्ञानकालीनधूमादित्यत्र महानसीयवह्न्यभाववद्ज्ञानरूपबाधेऽव्याप्तिवारणाय प्रकृतहेतुकत्वनिवेशस्याऽऽवश्यकत्वात्, अन्यथा ज्ञानं वह्निमदित्याकारकानुमितेरपि प्रकृतपक्षसाध्यकानुमितितया तत्र बाधनिश्चयप्रतिबध्यत्वाभावात्, प्रकृतहेतुकत्वनिवेशे तु वह्निव्याप्यतादृशधूमवज्ज्ञानमिति परामर्शोत्तरं ज्ञानं वह्निमदित्यनुमितिर्न जायते तादृशपरामर्शस्य "धूमवान् वह्न्यभाववानित्याकारक"धूमावच्छेदेन वह्न्यभावावगाहिनिश्चयविशिष्ट"महानसीयवह्नीतरवह्न्यभाववत्तज्ज्ञानकालीनधूमवद्ज्ञानमित्याकारकप्रकृतपक्षे धूमविशेषावगाहि"निश्चयरूपतया ज्ञानं वह्निमदित्यनुमितिप्रतिबन्धकत्वात्, किन्तु महानसीयवह्निप्रकारकानुमितिरेव जायते तत्र च बाधनिश्चयप्रतिबध्यतासत्त्वात्तत्सङ्ग्रहः । न च विषयितासम्बन्धेन वह्नेः साध्यत्वानुसरणं किमर्थमिति वाच्यम् । संयोगेन वह्नेः साध्यत्वे धूमावच्छेदेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावावगाहिनिश्चयविशिष्टपक्षे तादृशधूमावगाहिपरामर्शकाले संयोगादिसम्बन्धेन वह्निसामान्यानुमितेरिव वह्निविशेषानुमितेरप्यसम्भवात्, विषयितया साध्यत्वे तु तादृशपरामर्शस्य विषयितया वह्निसामान्यानुमितिं प्रत्येव प्रतिबन्धकतया महानसीयवह्न्यनुमितेः सम्भवादिति ध्येयम् ।

न च यत्रोक्तपरामर्शकाले धूमवति वह्न्यभावोऽव्याप्यवृत्तिरित्याकारकाऽव्याप्यवृत्तित्वज्ञानं ततो ज्ञानं महानसीयवह्न्यभाववदिति बाधनिश्चयः तदुत्तरं वह्निमानित्यनुमितिर्जायते, तथाहि—तादृशानुमितिं प्रति वह्निव्याप्यवह्न्यभाववद्धूमवत्कालीनमहानसीयवह्नीतरवह्न्यभाववत्तज्ज्ञानकालीनधूमवद्ज्ञानमितिपरामर्शस्य धूमवान् वह्न्यभाववान् तादृशधूमवच्च ज्ञानमित्येतादृशनिश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वेऽपि प्रतिबन्धकतायां व्यापकांशेऽव्याप्यवृत्तित्वज्ञानस्योत्तेजकतया तत्सत्त्वेन चोक्तनिश्चयस्याऽप्रतिबन्धकत्वात् । एवं च तादृशपरामर्शोत्तरं जायमाना या पर्वतो वह्निमानित्यनुमितिः तादृशानुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्या तादृशस्थले तादृशबाधस्याऽप्यलक्ष्यत्वमेव स्वीकरणीयमिति प्रकृतहेतुकत्वनिवेशो व्यर्थ इति वाच्यम् । यस्य तादृशस्थले तादृशहेतुमति साध्याभावेऽव्याप्यवृत्तित्वज्ञानं नास्ति महानसीयवह्न्यभाववज्ज्ञानमिति बाधनिश्चयश्च नास्ति तस्य तदा निरुक्तपरामर्शोत्तरं जायमाना ज्ञानं महानसीयवह्निमदित्येवाऽनुमितिस्तादृशानुमितित्वव्यापकप्रतिबध्यतामादाय महानसीयवह्न्यभाववज्ज्ञानरूपोक्तबाधे लक्षणसमन्वयार्थं प्रकृतहेतुकत्वनिवेशस्याऽऽवश्यकत्वादिति ।

यद्वा यन्मते निरवच्छिन्नस्वरूपेण तदभाववत्तानिश्चयस्य तद्वत्ताबुद्धिं प्रति प्रतिबन्धकत्वम्,

---

(१) तस्य महानसीयवह्न्यभाववत्पर्वतरूपबाधस्य । न च बाधस्यालक्ष्यत्वे तादृशहेतोर्दुष्टत्वानुपपत्तिरिति वाच्यम् । पर्वतत्वावच्छेदेन निरुक्तवह्न्यभावस्य हेतुतावच्छेदककोटौ प्रविष्टतया साधनाप्रसिद्धिमादाय दुष्टत्वव्यवहारोपपत्तेः । पर्वतत्वसामानाधिकरण्येन तस्य तथात्वे तु सामान्यरूपेण तद्धर्मिणि तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति प्राचीनमतानुरोधेन सामानाधिकरण्येनाऽपि निरुक्तवह्निमत्पर्वतस्य साधनाऽप्रसिद्धित्वमिति ध्येयम् ।

तन्मते नाऽव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वम्, तथाच निरवच्छिन्नत्वरूपेण व्यावर्तकधर्मदर्शन विधया वह्न्यनुमितिं प्रति तादृशपरामर्शस्य प्रतिबन्धकत्वाच्च तदुत्तरं वह्न्यनुमितिः तत्र धूमवति वह्न्यभावोऽव्याप्यवृत्तिरिति अव्याप्यवृत्तित्वज्ञानमेव न भवति, तद्धर्मिकाऽव्याप्यवृत्तित्वज्ञानं प्रति तद्धर्मिकव्याप्यवृत्तित्वज्ञानस्यैव तत्प्रतियोगिकसम्बन्धांशे निरवच्छिन्नत्वज्ञानस्याऽपि प्रतिबन्धकत्वात् । एतेन लौकिकसन्निकर्षजन्याऽव्याप्यवृत्तित्वज्ञानस्याऽप्रतिबध्यत्वात्तत्सत्वे बाधकाभावइत्यपि परास्तम् । तन्मतेऽव्याप्यवृत्तित्वज्ञानसत्वेऽपि निरवच्छिन्नत्वरूपेण तद्भाववत्तानिश्चयस्य प्रतिबन्धकत्वात् ।

न चाऽव्याप्यवृत्तित्वज्ञानस्याऽसम्भवेऽपि धूमवान् वह्न्यभाववानितिज्ञानमप्रमेत्यप्रामाण्यज्ञानसम्भवाद् वह्न्यनुमितौ बाधकाभावात्पूर्वोक्तदोषतादवस्थ्यमिति वाच्यम् । तादृशाऽप्रामाण्यज्ञानस्य परामर्शांशेऽप्युत्तेजकतया तादृशाऽप्रामाण्यज्ञानसत्वेऽनुमितेरेवाऽसम्भवात्, अप्रामाण्यज्ञानाभावविशिष्टपरामर्शस्यैव कारणत्वादिति ।

नचैवमीदृशप्रकृतहेतुकत्वनिवेशे तत्पक्षकत्वतत्साध्यकत्वयोर्वैयर्थ्यम्, ह्रदो वन्हिमान् पर्वतो घटवानित्यनुमित्योः प्रकृतहेतुकपरामर्शजन्यत्वविरहेण प्रकृतहेतुकानुमित्यनन्तर्गततया वह्न्यभाववद्ह्रदे घटाभाववत्पर्वते चाऽतिव्याप्तिविरहादिति वाच्यम् । पर्वतो वन्हिमान् धूमादित्यादौ पर्वते महानसीयवह्नीतरवह्न्यभावविषयकबाधज्ञानकाले अनुमितेर्महानसीयवन्हिविषयकत्वे लाघवमिति लाघवज्ञानकाले वा वन्हिव्याप्यधूमवत्तापरामर्शात् पर्वतो महानसीय वन्हिमानित्यनुमितिर्जायते, तथाच तादृशानुमितेरपि तद्धेतुकत्वेन तादृशानुमितिप्रतिबन्धकज्ञानविषयमहानसीयवह्न्यभाववत्पर्वतेऽतिव्याप्तिवारणाय प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वनिवेशसार्थक्यात् । नहि तादृशानुमितेस्तादृशलाघवादिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताशालितया न निरुक्तहेतुकत्वमिति वक्तुं शक्यम्, लाघवज्ञानादिविशिष्टपरामर्शकारणतायां लाघवज्ञानादेरवच्छेदकत्वात्, एवं तत्रैव सुन्दरपर्वतविषयकत्वे लाघवमिति लाघवज्ञानसहकारेण जायमानतद्धेतुकत्वाक्रान्तसुन्दरपर्वतो वह्निमानित्यनुमितिप्रतिबन्धकज्ञानविषयवह्न्यभाववत्सुन्दरपर्वतेऽतिव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकपर्याप्तावच्छेदकताकोद्देश्यताकत्वरूपतत्पक्षकत्वनिवेशोऽप्यावश्यक इति प्राहुः ।

परे तु प्रकृतहेतुकत्वाऽनिवेशे "लक्षणया तादृशानुमितिकारणज्ञानमात्रपरत्वे च बाधादावव्याप्तिः" इत्यग्रिमग्रन्थस्याऽसङ्गतिः स्यात्, तत्राऽसम्भवदानस्यैवोचितत्वात्, तादृशानुमितीत्यत्र तत्पदस्य पूर्वपरामर्शकतया प्रकृतपक्षसाध्यकानुमितिपरतया तादृशानुमितिकारणत्वस्य नानाहेतुकपरामर्शे सत्वेन तादृशानुमितिकारणत्वव्यापकव्यभिचारनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्याऽप्रसिद्धत्वात्, यत्किञ्चिदनुमितिकारणपरत्वेऽसम्भववारणेऽपि अतिव्याप्तिदानस्यैवौचित्यात्, बाधादावव्याप्तिरित्युत्तरग्रन्थविरोधापत्तितादवस्थ्यात्, अतः प्रकृतहेतुकत्वानिवेशः । न चाऽग्रे प्रकृतहेतुकतादृशानुमितिकारणज्ञानमात्रपरत्वे इति कथनेनाऽप्युपपत्तौ परकल्पाभिप्रायेण पूर्वं तन्निवेशो नोचित इति वाच्यम् । हेतौ प्रकृतत्वस्य पक्षादौ च प्रकृतत्वस्य द्विधानिवेशे गौरवात्, मन्मते चैकेन प्रकृतत्वनिवेशेन निर्वाहात्, द्वन्द्वात्पर इत्यादि न्यायादिति प्राहुः ।

तत्राऽनुमितिपदं अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनाऽनुमिति-तत्कारणज्ञानपरम् ।

---

तथाच व्यभिचारादावव्याप्तिः, वह्निर्धूमव्यभिचारीतिज्ञानाभावस्य पर्वतो धूमवानित्यनुमित्यजनकत्वात्, लक्षणया तस्य तादृशानुमितिजनकज्ञानमात्रपरत्वे च बाधादावव्याप्तिः, बाधादिज्ञानस्य परामर्शाऽप्रतिबन्धकत्वादतोऽनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे तत्रेति । तादृशलक्षणवाक्ये इत्यर्थः । लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेति । अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति,

---

आवश्यकमिति । तथाच तत्पक्षसाध्यहेतुकानुमितिप्रतिबन्धकज्ञानाविषयत्वस्य तत्पक्षसाध्यहेतुकानुमितौ दोष इत्यवश्यं वक्तव्यमिति भावः । तथाच—आवश्यकत्वे च । अव्याप्तिहेतुमाह वह्निर्धूमव्यभिचारीतिज्ञानाभावस्येति । धूमाभाववद्वृत्तिर्वह्निरित्याकारकव्यभिचारनिश्चयाभावस्येत्यर्थः । अनुमितौ कारणीभूतो योऽभावः, इत्यनेन व्यभिचारनिश्चयाभावो गृहीतुं नैव शक्यते व्यभिचारनिश्चयस्य व्याप्तिज्ञानं प्रति प्रतिबन्धकतया तदभावस्य तत्रैव कारणत्वेनाऽनुमितिं प्रत्यजनकत्वादित्यर्थः । तथाच व्याप्तिज्ञानप्रतिबन्धकव्यभिचारादावव्याप्तिरिति भावः । लक्षणया—जहत्स्वार्थलक्षणया । तस्य—अनुमितिपदस्य । तादृशानुमितीति । प्रकृतपक्षसाध्यहेतुकानुमितीत्यर्थः । मात्रपदेनाऽनुमितिव्यवच्छेदः । तथाचाऽनुमितिजनकप्रतिबन्धकयथार्थज्ञानाविषयत्वे पर्यवसिते व्यभिचारादौ नाऽव्याप्तिः अनुमितिजनकीभूतव्याप्तिज्ञानप्रतिबन्धकयथार्थज्ञानविषयत्वस्य व्यभिचारादौ सत्वात्, तत्राप्याह बाधादावव्याप्तिरिति । तत्र हेतुमाह—बाधादिज्ञानस्येति । आदिना सत्प्रतिपक्षसङ्ग्रहः । परामर्शाऽप्रतिबन्धकत्वादिति । अनुमितिजनकाऽप्रतिबन्धकत्वादित्यर्थः । अतः—बाधादेरसङ्ग्रहभयेनेत्यर्थः । अनुमितिपदं—लक्षणघटकानुमितिपदमित्यर्थः । तदुभयपरतया—अनुमितितज्जनकैतदुभयपरतयेत्यर्थः । व्याचष्टे—कथयतीत्यर्थः । तादृशलक्षणवाक्ये घटकत्वं सप्तम्यर्थः । तादृशलक्षणबोधकवाक्यघटकानुमितिपदं अनुमितितत्कारणज्ञानपरमित्यर्थः । लक्षणघटकतावच्छेदकं—लक्षणे निविष्टमित्यर्थः । उभयसाधारणं—अनुमितितत्कारणसाधारणम् । अत्र अनुमितिनिष्ठकार्यतानिरूपकत्वम्, तादृशकार्यतासम्बन्धित्वं च द्वयमनुगमकरूपम् । तत्राद्ये—अनुमितिनिष्ठकार्यतानिरूपकग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणम् । अनुमितिः—ह्रदो वह्निमानित्याकारिका, तन्निष्ठा या वह्निव्याप्यधूमवान् ह्रद इति परामर्शनिरूपिता कार्यता तादृशकार्यतानिरूपकत्वं अनुमितौ परामर्शे चाऽस्तीति तादृशकार्यतानिरूपको ग्रहः अनुमित्यात्मकः परामर्शात्मकश्च, तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानाविषयत्वं बाधे व्यभिचारे चास्तीति सर्वत्र लक्षणसमन्वयो बोध्यः । स्वयमेव—दीधितिकृदेव । अतः—

अतो न वक्ष्यमाणाऽतिप्रसङ्गः ।

निरूपकत्वं चाऽत्र यदि प्रतियोगित्वं, तदा कार्यस्य कार्यताप्रतियोगित्वाभावादनुमित्यसंग्रहः, अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाय ।

---

तादृशानुमितिपरत्वात् । न वक्ष्यमाणाऽतिप्रसङ्ग इति । अनुमितिपदस्याऽनुमितिसामान्यपरत्वेऽसम्भवः, अनुमितित्वव्यापककार्यत्वाप्रसिद्धेः । यत्किञ्चिदनुमितिपरत्वेऽतिप्रसङ्गः । प्रकृतपक्षतावच्छेदकाद्यनिवेशे वक्ष्यमाणरीत्या काञ्चनमयत्वाभाववत्पर्वतादावतिप्रसङ्गो बोध्यः ।

अनुगमकरूपान्तरेऽवतरणिकामाह निरूपकत्वं चेति । अत्र—लक्षणे । अनुमितिनिष्ठकार्यतायाः परामर्शनिरूपितत्वया तादृशकार्यतानिरूपकत्वं परामर्श एव न त्वनुमितौ, तथाच बाधादौ "अनुमितिप्रतिबन्धके" अव्याप्तिमाह तदेति । कार्यस्य—अनुमितेः । एवं निरूपकत्वं यद्यनुयोगित्वरूपं तदा परामर्शाऽसंग्रहेण व्यभिचारादावव्याप्तिर्बोध्या । अतः—अनुमित्यसंग्रहात्, सम्बन्धिपदं—निरूपकत्वस्य लाभायेत्यन्वयः, सम्बन्धिद्वयसाधारणस्य—परामर्शानुमितिसाधारणस्येत्यर्थः । तत्साक्षात्कारेति । अत्र तत्पदं प्रकृतपक्षसाध्यहेतुकानुमितिनिष्ठकार्यतापरम्, तादृशकार्यतासाक्षात्कारेत्यर्थः । कार्यतासाक्षात्कारं प्रति अनुमितिसाक्षात्कारः परामर्शसाक्षात्कारश्च कारणम्(१) । किंचित्प्रतियोगिककिंचिदनुयोगिकसम्बन्धसाक्षात्कारं प्रति प्रतियोग्यनुयोगिनोः साक्षात्कारस्य कारणत्वमिति सर्ववादिसिद्धम्, संयोगादिवत् कार्यताया अपि सम्बन्धत्वात्, तस्याः प्रतियोगी परामर्शः, अनुयोगी अनुमितिः, परामर्शः कार्यतासम्बन्धेनाऽनुमितौ वर्त्तते इति हृदयम् ।

तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमिति पर्यवसितम् । प्रकृत(ह्रद)पक्षक

---

(१) ननु परामर्शानुमितिसाक्षात्कारयोः कार्यतासाक्षात्कारजनकत्वं कथं सम्भवेत्, क्रमेण जायमानपरामर्शानुमित्योरेकदा क्रमेण वा साक्षात्काराऽसम्भवात्· अनुमितिद्वितीयक्षणे परामर्शरूपविषयस्यैवाऽसत्त्वात्, अनुमित्युपरागेण कार्यतासाक्षात्कारसमये अनुमितेरपि नाशादिति चेन्न । घटादिरूपविषयस्य कार्यकालवृत्तितया कारणत्वनियमेऽपि ज्ञानस्थले नायं नियमः, तस्य तु स्वप्रत्यक्षे पूर्वकालवृत्तितयैव कारणतास्वीकारात्तथैवाऽनुभवात् । "सम्बद्धं वर्त्तमानं च गृह्यते चक्षुरादिना" इत्यस्य स्वसाक्षात्काराऽव्यवहितपूर्वक्षणे सम्बद्धमित्यर्थ इति न विरोधः । तथाच परामर्शतृतीयक्षणे एकदैवाऽनुमितिपरामर्शयोः साक्षात्कारस्ततोऽनुमितौ कार्यतासाक्षात्कार इति ।

केचित्तु अपेक्षाबुद्ध्यात्मकयोः परामर्शानुमित्योः साक्षात्कारसम्भवान्नाऽप्रसिद्धिः । न च ज्ञानादीनां क्षणिकत्ववारणाय योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविशेषगुणनाश्यत्वनियमादपेक्षाबुद्धितृतीयक्षणे एव विशेषगुणोत्पत्तिः स्वीकार्या, एवं चोक्तानुपपत्तिर्दुर्वारैवेति वाच्यम् । अनुभवानुरोधेन ज्ञानादीनां तत्तत्क्षण एव नाशक इति स्वीकृत्याऽपेक्षाबुद्धिद्वितीयक्षणे विशेषगुणोत्पत्तेरभ्युपगमादिति वदन्ति ।

वस्तुतस्तु परामर्शात्मकाऽनुमितिद्वितीयक्षणेऽपि तत्साक्षात्कारसम्भवात्तत एव कार्यतासाक्षात्कार इति न कोऽपि दोष इति ध्येयम् ।

प्रकृत(वह्नि)साध्यकप्रकृत(धूम)हेतुकानुमितिः ह्रदो वह्निमानित्याकारिका तन्निष्ठा या कार्यता-वह्निव्याप्यधूमवान् ह्रद इति परामर्शनिरूपिता कार्यता तादृशकार्यतासाक्षात्कारः ह्रदो वह्निमानित्यनुमितिः वह्निव्याप्यधूमवान् ह्रदः इति परामर्शकार्येत्याकारकः, तत्साक्षात्कारजनको यः साक्षात्कारः—ह्रदो वह्निमानित्यनुमितिमानहमित्यनुमितिसाक्षात्कारः, वह्निव्याप्यधूमवान् ह्रद इति परामर्शवानहमिति परामर्शसाक्षात्कारः, तदीयविषयता अनुमितौ, परामर्शे च तादृशविषयता-श्रयः अनुमित्यात्मको ग्रहः—परामर्शात्मको ग्रहश्च तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य बाधव्यभिचारादौ सर्वत्र सत्त्वाल्लक्षणसमन्वयः ।

अत्राऽनुमितिनिष्ठकार्यतानिवेशे पर्वतो वन्हिमानित्यत्र पर्वतो वन्हिमान् ह्रदश्च तथेति समूहालम्बनानुमितिनिष्ठह्रदपक्षकवन्हिसाध्यकानुमितित्वावच्छिन्नकार्यतामादाय वह्न्यभाववद्ह्रदेतिव्याप्तिः, तादृशाऽनुमितित्वव्यापककार्यताप्रवेशे नानाविधव्याप्यवत्ताहिपरामर्शजन्यानुमितिनिष्ठैककार्यताविरहादसम्भवः, अतः प्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नकार्यता निवेश्या, तथाच प्रकृतपक्षकत्व—प्रकृतसाध्यकत्व—प्रकृतहेतुकत्व—अनुमितित्वैतद्धर्मचतुष्टयावच्छिन्नकार्यतासाक्षात्कारेत्यादिलक्षणम् ।

अत्र प्रकृतपक्षकत्वाऽनिवेशे पर्वतो वन्हिमानित्यत्र वन्ह्यभाववद्ह्रदेऽतिव्याप्तिर्बोध्या । एवं प्रकृतसाध्यकत्वाऽनिवेशे तत्रैव घटाभाववत्पर्वतेऽतिव्याप्तिः । न च प्रकृतहेतुकत्वनिवेशो व्यर्थ इति वाच्यम् । पर्वतो वन्हिमान् धूमादित्यादौ वन्ह्यभाववद्वृत्तिघटे घटाभाववत्पर्वते चाऽतिव्याप्तिः प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वावच्छिन्ना या "वन्हिव्याप्यघटवान्पर्वत इत्याकारकपरामर्शोत्तरजायमान"पर्वतो वन्हिमानित्यनुमितिनिष्ठा कार्यता तत्साक्षात्कारजनकसाक्षात्कारविषयताश्रय"वन्हिव्याप्यघटवान्पर्वत इत्येतादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि यद् यथार्थज्ञानं" वन्ह्यभाववद्वृत्तिर्घटः इत्याकारकं—घटाभाववान्—पर्वत इत्याकारकं च—तद्विषयत्वस्य तत्र सत्त्वात्, तन्निवेशे तु न दोषः, धूमलिङ्गकानुमितिप्रयोजकत्वं धूमपरामर्शस्यैव न तु घटपरामर्शस्येति, उक्तपरामर्शस्य धूमलिङ्गकानुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयत्वाभावादिति (१) ध्येयम् ।

---

(१) नचैवमपि उक्ताऽतिव्याप्तिस्तदवस्थैव, वह्निव्याप्यधूमवान्पर्वतो वह्निव्याप्यद्रव्यवांश्चेति समूहालम्बनपरामर्शोत्तरानुमितिं प्रति विनिगमनाविरहाद् वह्निव्याप्यद्रव्यवत्तापरामर्शस्यापि कारणतया तत्र पर्वतो वह्निमानित्यनुमितिनिष्ठा या कार्यता सा वह्निव्याप्यधूमवान्पर्वत इति परामर्शनिरूपिता वह्निव्याप्यद्रव्यवान्पर्वत इति परामर्शनिरूपिता चोभयलिङ्गकानुमितित्वावच्छिन्नैवेति तादृशकार्यतासाक्षात्कारजनकसाक्षात्कारविषयो द्रव्यलिङ्गकपरामर्शोऽपि तत्प्रतिबन्धकयथार्थज्ञानविषयत्वस्य वह्न्यभाववद्वृत्तिद्रव्ये सत्त्वादिति वाच्यम् । प्रकृतहेतुकत्वावच्छिन्नत्वस्याऽनुमितिनिष्ठकार्यतायां निवेशनीयत्वात् । तच्च प्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकीभूता या निश्चयनिष्ठाऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपकत्वम् । एवं च तादृशनिरूपकीभूता या प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्ना कार्यता तत्साक्षात्कारजनकसाक्षात्कारविषयेत्यादिलक्षणं पर्यवसितम्, तथाच धूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकताकनिश्चयनिष्ठावच्छेदकतानिरूपकीभूता या कार्यता तस्याः धूमलिङ्गकपरामर्शनिरूपिततया द्रव्यलिङ्गकपरामर्शनिरूपितत्वाभावेन द्रव्यलिङ्गकपरामर्शस्योक्तकार्यतासाक्षात्कारजनकसाक्षात्कारविषयत्वान्न दोष इति ।

ननु परस्परपरामर्शजन्यानुमितौ व्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्याऽऽवश्यकत्वे प्रकृतपक्षसाध्यविषयकत्वस्याऽनुमितित्वस्य कार्यतावच्छेदककोटौ

---

नन्वेवमपि पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववद्धूमेऽतिव्याप्तिः, वह्निव्याप्यकाञ्चनमयधूमवान्पर्वत इति परामर्शनिरूपिता या पर्वतो वह्निमानित्यनुमितित्वावच्छिन्ना कार्यता तस्या अपि प्रकृतहेतुतावच्छेदकीभूतधूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपकावच्छेदकतानिरूपकत्वात्, तत्साक्षात्कारजनकसाक्षात्कारविषयतादृशपरामर्शप्रतिबन्धककाञ्चनमयत्वाभाववान्धूम इति प्रमाविषयत्वात्तस्य । न च प्रकृतहेतुतावच्छेदकपर्याप्तावच्छेदकतानिरूपकप्रकारतानिष्ठावच्छेदकतानिरूपकावच्छेदकताकत्वेन कार्यता निवेशनीया, काञ्चनमयधूमवान्पर्वत इति परामर्शोत्तरानुमितिनिष्ठकार्यता च काञ्चनमयत्वधूमत्वधर्मद्वयपर्याप्तावच्छेदकतानिरूपकप्रकारतानिष्ठावच्छेदकतानिरूपकावच्छेदकताका, न तु हेतुतावच्छेदकशुद्धधूमत्वपर्याप्तावच्छेदकतानिरूपकप्रकारतानिष्ठावच्छेदकतानिरूपकावच्छेदकताकेति नोक्तदोष इति वाच्यम् । असम्भवापत्तेः । सर्वत्राऽनुमितिनिष्ठकार्यतानिरूपितपरामर्शनिष्ठावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितावच्छेदकतायाः हेतुतावच्छेदके व्याप्तौ च पर्याप्तत्वात् । न च हेतुतावच्छेदकनिष्ठावच्छेदकताभिन्ना सती व्याप्तिनिष्ठावच्छेदकताभिन्ना(१) सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठावच्छेदकताकनिश्चयत्वावच्छिन्नावच्छेदकताकत्वं कार्यतायां निवेशनीयम्, वह्निव्याप्यकाञ्चनमयधूमवान्पर्वत इति परामर्शनिरूपितकार्यतानिरूपितावच्छेदकतानिरूपितावच्छेदकतायाः तादृशावच्छेदकताभिन्नेन प्रमेयत्वनिष्ठावच्छेदकत्वेन निरूपकतया नोक्तदोष इति वाच्यम् । "व्याप्तिनिष्ठावच्छेदकताभिन्ना सतीत्यत्र भेदप्रतियोगिभूतावच्छेदकत्वांशे निष्ठत्वसम्बन्धेन" नानाविधव्याप्तिषु एकविधव्याप्तिनिवेशोऽन्वयव्यतिरेकव्याप्त्यन्यतरनिवेशे च साधारणानुपसंहारित्वादावव्याप्तेः । सकलविधव्याप्तिनिष्ठावच्छेदकताभेदनिवेशे च वह्निमान् गगनादित्यादौ वह्न्यसमानाधिकरणवन्ह्यभावव्यापकीभूताभावप्रतियोगिगगनेऽतिव्याप्तिः, गगनव्यापकवह्निसमानाधिकरणवन्ह्यभावव्यापकीभूताभावप्रतियोगिगगनवानिति परामर्शस्य पर्वतो वह्निमानित्यनुमितिंप्रति कारणतया तादृशानुमितिनिष्ठकार्यत्वस्य तादृशपरामर्शनिरूपितस्य गगनत्वनिष्ठावच्छेदकताभिन्ना सती गगनान्वयव्यतिरेकव्याप्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रकारतानिष्ठावच्छेदकत्वानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकत्वात्, तादृशकार्यतासाक्षात्कारजनकसाक्षात्कारविषयपरामर्शनिष्ठवह्निसामानाधिकरण्यप्रकारकवन्ह्यभावव्यापकाभावप्रतियोगिगगनत्वावच्छिन्नविशेष्यकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिप्रमाविषयत्वात्तादृशगगनस्येति चेन्न ।

प्रकृतहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकत्वस्य कार्यतायां विवक्षणीयत्वात् । वृत्तित्वं च विशेष्यतायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाच काञ्चनमयधूमविषयकपरामर्शवह्न्यभावव्यापकीभूताभावप्रतियोगिगगनविषयकपरामर्शनिष्ठा या कार्यतावच्छेदकता तदवच्छेदकताश्रयीभूता या धूमगगनादिनिष्ठप्रकारता तदवच्छेदकव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यता च न हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतधूमत्वगगनत्वगतैकत्वनिष्ठेति नातिव्याप्तिः । न च तथापि एतादृशपरामर्शनिरूपितकार्यतायां गगनत्वं धर्मितावच्छेदकीकृत्य व्यतिरेकव्याप्तेस्तादृशपरामर्शांशे भानेन तादृशविशेष्यतामादाय दोष इति वाच्यम् । तादृशविशेष्यतायां प्रकारताविशिष्टान्यप्रकारतानिरूपितत्वस्य निवेशात् । वै० स्वनिरूपितधर्मितावच्छेदकत्वावच्छेद्यत्वसम्बन्धेन । एवं स्वावच्छिन्नकारणतानवच्छेदकविषयतावद्धर्मानवच्छिन्नत्वमपि प्रकारताविशिष्टान्यप्रकारतायां निवेशनीयम्, तेन नान्वयव्यतिरेकव्याप्त्युभयवद्गगनवानिति परामर्शकार्यतामादाय तादृशोभयाभाववद्गगनेऽतिव्याप्तिः । तदर्थश्च स्वनिरूपितत्वस्वावच्छिन्नकारणतानवच्छेदकप्रकारतानिरूपितत्वोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमिति दिक् ।

---

(१) अवच्छिन्नत्वसम्बन्धेन हेतुतावच्छेदकव्याप्त्योः "हेतुनिष्ठ"प्रकारत्वांशे भानम् ।

प्रवेशे प्रयोजनाभावेन तदवच्छिन्नकार्यताघटितलक्षणस्याऽसम्भवः । न च परामर्शाऽव्यवहितोत्तरत्वावच्छिन्नं प्रति समवायेन परामर्शस्य कारणत्वे परामर्शाव्यवहितोत्तरोत्पन्ने घटात्मगतद्वित्वे व्यभिचारः,तादृशद्वित्वस्य समवायेन घटेऽपि सत्त्वात्तत्र समवायेन परामर्शविरहादिति वाच्यम् । क्रियासंयोगकार्यकारणभावोक्तरीत्या(१)व्यभिचारस्य वारणात् । अथवोक्तव्यभिचारवारणाय ज्ञानत्वस्य अनुमितित्वस्य वा कार्यतावच्छेदककोटौ निवेशनीयतया पक्षसाध्यविषयितायाः कार्यतावच्छेदकत्वे मानाभावात् । न च पक्षधर्मिकसाध्यव्याप्यवत्तानिश्चयोत्तरानुमितिं प्रतिसाध्यव्याप्यवत्तानिश्चयत्वेन न हेतुत्वम्, तथासति साध्यव्याप्यंशे, साध्यव्याप्यहेत्वंशे वा ऽप्रामाण्यग्रहास्कन्दितपरामर्शादनुमित्यापत्तेः, किन्तु परामर्शाव्यवहितोत्तरानुमितौ अप्रामाण्यज्ञानानास्कंदितपरामर्शस्यैव कारणतया यत्र प्रथमं भाविज्ञानं धूमाभाववति धूमप्रकारकमित्यप्रामाण्यज्ञानं ततो वह्निव्याप्यधूमवान् घटव्याप्यपटवांश्चेति समूहालम्बनपरामर्शः, ततो घटानुमितिः ततो वन्ह्यनुमितिः, तत्र घटानुमितिक्षणे वन्ह्यनुमितिवारणाय निरुक्ताऽप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वस्यावश्यकतया घटानुमितौ व्यभिचारा(२)त्पक्षसाध्यविषयतायाः कार्यतावच्छेदककोटौ प्रवेश आवश्यक(३) इति वाच्यम् । अप्रामाण्यज्ञानधर्मिकाऽप्रामाण्यज्ञानसत्त्वेऽनुमितिर्भवति पुनस्तद्धर्मिकाऽप्रामाण्यज्ञानसत्त्वे नोत्पद्यते इत्यप्रामाण्यज्ञानानां तत्तद्व्यक्तित्वेनाऽभावः कारणतावच्छेदककोटौ निवेशनीयः । एवं चोक्तस्थलीयाऽप्रामाण्यज्ञानव्यक्तेरभावस्य कारणतावच्छेदकेऽनिवेशादेवोक्तव्यभिचारवारणात् । घटानुमितिक्षणे वह्न्यनुमित्यापत्तिदानं च न सम्भवति, वह्न्यनुमितित्वस्योक्तपरामर्शकार्यतावच्छेदकत्वविरहात्, उक्तपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नं तु जायते एवेति । न च तथापि यत्र प्रथमं घटाभाववद्भूतलमिति बाधनिश्चयः, ततो घटव्याप्यवद्भूतलमिति परामर्शः,ततोऽप्रामाण्यज्ञानास्कन्दितवह्निव्याप्यधूमवानिति परामर्शः, ततो घटवद्भूतलमित्यनुमितिः, ततोऽनुमितिवारणाय निरुक्ताऽप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वमावश्यकमिति घटानुमितौ पुनर्व्यभिचारोऽतः पक्षसाध्यविषयतायाः कार्यतावच्छेदककोटौ प्रवेश आवश्यक इति वाच्यम् । कार्यतावच्छेदककोटावपि अप्रामाण्यज्ञानाभावस्य निवेशनीयत्वात्, तथा च तत्तदप्रामाण्यज्ञानव्यक्त्यभावकूटविशिष्टपरामर्शाव्यवहितोत्तरानुमितिं प्रति तादृशविशिष्टपरामर्शस्य कारणत्वेनैव निर्वाहे पक्षसाध्यविषयतायाः कार्यतावच्छेदककोटौ निवेशोऽनावश्यक(४) इति चेन्न । अनन्ताऽप्रामाण्यज्ञानव्यक्तीनामभाव-

---

(१) तादृशरीतिश्च कार्यतावच्छेदकावच्छिन्नाः यावत्यो व्यक्तयस्तत्प्रत्येकाधिकरणयत्किञ्चिन्निष्ठाभावाऽप्रतियोगित्वरूपं कारणत्वम् ।

(२) व्यभिचारादिति । व्यतिरेकव्यभिचारादित्यर्थः । घटानुमितिक्षणे तत्पूर्वं वाऽप्रामाण्यज्ञानानास्कन्दितपरामर्शविरहादिति यावत् ।

(३) निवेशिते च तत्र पर्वतपक्षकवह्निसाध्यकानुमितिं प्रत्येवाऽप्रामाण्यज्ञानानास्कन्दितपरामर्शस्याऽपेक्षणीयतया घटानुमितौ व्यभिचारो न क्षतिकरः ।

(४) न च यत्र प्रथमं अपेक्षाबुद्ध्यात्मकवह्निव्याप्यधूमवत्तापरामर्शः ततो घटव्याप्यवत्तापरामर्शः पूर्वपरामर्शधर्मिकाऽप्रामाण्यज्ञानं च ततो घटानुमितिः तादृशानुमितेरप्रामाण्यज्ञानानास्कन्दितवह्निव्याप्यवत्तापरामर्शाव्यवहितोत्तरत्वेन व्यभिचार इति वाच्यम् । अप्रामाण्यज्ञानाभावविशिष्टपरामर्शाधिकरणयत्किंचित्क्षणप्रतियोगिध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वरूपाऽव्यवहितोत्तरत्वनिवेशेन वारणात् ।

समुदायस्य कार्यतावच्छेदककोटौ निवेशे महागौरव(१) मतो लाघवात्पक्षसाध्यविषयतायाः कार्यतावच्छेदककोटौ निवेश उचितः, तथाच नाऽसम्भव इति ध्येयम् ।

---

(१) इदमुपलक्षणम् । तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टपरामर्शाव्यवहितोत्तरत्वमपि दुर्वचम् । तथाहि—परामर्शाऽव्यवहितोत्तरत्वं परामर्शध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तत्तत्परामर्शोत्पत्त्यधिकरणक्षणध्वंसाधिकरणत्वम्, तच्च परामर्शद्वितीयतृतीयक्षणसाधारणम् । अनुगमस्तु—परामर्शविशिष्टो यः कालः तदुत्पत्तिकानुमितिकत्वं परामर्शजन्यतावच्छेदकम्, वै० स्वध्वंसाधिकरणक्षणध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वोत्पत्त्यधिकरणक्षणध्वंसाधिकरणत्वैतदुभयसम्बन्धेन, तथाच परामर्शद्वितीयतृतीयक्षणोत्पत्तिकानुमितीनां सङ्ग्रहः । अत्र तादृशाऽप्रामाण्यज्ञानाभावविशिष्टपरामर्शस्य तादृशोभयसम्बन्धेन कालविशेषणत्वे यत्रादौ वह्निव्याप्यधूमवान्पर्वत इति परामर्शः तदनन्तरं तस्मिन् ज्ञानेऽप्रामाण्यग्रहः इन्धनव्याप्यवत्तापरामर्शरूपः, ततोऽनुमितिरिन्धनवानित्याकारिका तत्र प्रथमपरामर्शोत्पत्तिक्षणावच्छेदेनाऽप्रामाण्यज्ञानाभावविशिष्टो यः प्रथमपरामर्शः तद्ध्वंसाधिकरणसमयध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन तादृशपरामर्शविशिष्टो यस्तादृशपरामर्शतृतीयक्षणः तदुत्पत्तिकतया "अनुमितेस्तादृशपरामर्शजन्यतावच्छेदकाक्रान्तया" अनुमितेः पूर्वं तादृशाऽप्रामाण्यज्ञानाभावविशिष्टवह्निव्याप्यवत्तापरामर्शाभावात्तत्पक्षकतत्साध्यकत्वानिवेशे व्यभिचारो दुर्वार एव ।

यदि च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणसमयध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपसम्बन्ध एवोभयसम्बन्धघटकः, तादृशसम्बन्धघटकस्वाधिकरणक्षणध्वंसाधिकरणे तत्तदप्रामाण्यज्ञानाभाववैशिष्ट्यं निवेशनीयम्, तथाच यत्रादौ धूमपरामर्शः तदुत्तरक्षणे तस्मिन् ज्ञानेऽप्रामाण्यग्रहः इन्धनव्याप्यवत्तापरामर्शरूपः तादृशस्थलीयधूमपरामर्शाधिकरणक्षणध्वंसाधिकरणद्वितीयक्षणस्य तादृशाऽप्रामाण्यज्ञानाभाववैशिष्ट्यविरहात्तादृशाऽप्रामाण्यज्ञानाभावविशिष्टो यः स्वाधिकरणसमयध्वंसाधिकरणक्षणः तद्ध्वंसाधिकरणसमयध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्य धूमपरामर्शसम्बन्धताविरहान्न तादृशानुमितिर्धूमपरामर्शजन्यतावच्छेदकाक्रान्ता इत्युच्यते, तदापि धूमपरामर्शजन्यतावच्छेदककोटौ तत्पक्षकत्वतत्साध्यकत्वनिवेशाऽपेक्षयाऽप्रामाण्यज्ञानाभावनिवेशे गौरवमेवेति।

इदमत्रावधेयम्—अप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शत्वेन कारणत्वे इदं ज्ञानं वह्निव्याप्यधूमाभाववति धूमप्रकारकम्, इदं ज्ञानं वह्निव्याप्तिविशिष्टाभाववति वह्निव्याप्तिविशिष्टप्रकारकम्, इदं ज्ञानं वह्निव्याप्यभाववति वह्निव्याप्तिप्रकारकमित्याद्यप्रामाण्यग्रहाभावानां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यप्रसङ्गः । अतोऽप्रामाण्यग्रहाविशिष्टान्यानुमितिं प्रति तादृशाऽप्रामाण्यग्रहाभावस्य पृथक् कारणताः तादृशाऽप्रामाण्यग्रहाभावसमसंख्याकाः, धूमपरामर्शोत्तरानुमितिं प्रति धूमपरामर्शत्वेनाऽपरा कारणता, धूमपरामर्शेन कार्ये जननीये तादृशाऽप्रामाण्यग्रहाभावादीनां सहकारिता कल्प्यते, तथाच यत्राप्रामाण्यग्रहास्कन्दितो धूमपरामर्शः तत्र तादृशाऽप्रामाण्यग्रहाभावरूपसहकारिकारणाभावान्न धूमलिङ्गकवह्न्यनुमितिप्रसक्तिः । एवं च धूमपरामर्शजन्यतावच्छेदककोटौ तत्पक्षकतत्साध्यकत्वाऽनिवेशेऽपि न प्रागुक्तेन्धनानुमितौ व्यभिचारः, तादृशानुमितेरप्रामाण्यग्रहविशिष्टान्यत्वाभावेन कार्यतावच्छेदकाक्रान्तत्वात् ।

न च यत्र वह्निव्याप्यधूमवत्तापरामर्शोऽप्रामाण्यग्रहास्कन्दितः तदुत्तरमप्रामाण्यज्ञानानास्कन्दितः स एव परामर्शः तदनन्तरं पर्वतो वह्निमानित्यनुमितिः, तत्र द्वितीयपरामर्शक्षणे वह्न्यनुमित्यनुत्पादार्थं पूर्वपरामर्शधर्मिकाऽप्रामाण्यज्ञानाभावस्य हेतुत्वमावश्यकम् । तथाच सति तादृशाऽप्रामाण्यग्रहाभावरूपसहकारिकारणाभावाद्यथा द्वितीयपरामर्शक्षणे नाऽनुमितिः तथा द्वितीयपरामर्शानन्तरमप्यनुमितिर्न स्यात् । अप्रामाण्यज्ञानाभावविशिष्टपरामर्शत्वेन हेतुत्वे तु विशेष्यत्वसामानाधिकरण्यैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽप्रामाण्यग्रहाभावविशिष्टद्वितीयपरामर्शसत्त्वान्न द्वितीयपरामर्शानन्तरमनुमित्यनुपपत्तिरिति वाच्यम् ।

तत्र द्वितीयपरामर्शाभावविशिष्टो योऽप्रामाण्यग्रहः तदभावस्य तादृशाऽप्रामाण्यग्रहविशिष्टान्यानुमितिं प्रति हेतुत्वान्न द्वितीयपरामर्शानन्तरमनुमित्यनुपपत्तिः, द्वितीयपरामर्शाभावविशिष्टो योऽप्रामाण्यग्रहस्तदभावस्य

अत्र कार्यतासाक्षात्कारकल्पे पर्वतो वह्निमानित्यत्र वन्ह्यभाववद्ह्रदेऽतिव्याप्तिः, पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिनिष्ठकार्यताविषयको यः साक्षात्कारः—"पर्वतो वह्निमानित्यनुमितिः परामर्शकार्या ह्रदो वह्निमानित्यनुमितिश्च परामर्शकार्येति समूहालम्बनरूपः" तज्जनकः पर्वतो वह्निमानित्यनुमितिसाक्षात्कार इव ह्रदो वह्निमानित्यनुमितिसाक्षात्कारोऽपि तदीयविषयताश्रय–ह्रदो वह्निमानितिग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्ह्रदे सत्त्वात्, एवं तादृशकार्यतासाक्षात्कारजनकीभूतसमूहालम्बनसाक्षात्कारीयविषयतामादायाऽपि तद्दोषतादवस्थ्यमतः तादृशकार्यताविषयकसाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकसाक्षात्कारीयविषयताश्रयग्रहनिष्ठप्रतिबध्यता निवेशनीया, तथाच नोक्तातिव्याप्तिः।

अथैवं प्रथमसाक्षात्कारपदं किमर्थं तादृशकार्यताविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशेनैवोपपत्तेरिति चेन्न।

पर्वतो वह्निमानित्यत्र घटाभाववद्भूतलेऽतिव्याप्तिः, पर्वतपक्षकवह्निसाध्यकधूमहेतुकाऽनुमितिनिष्ठकार्यताविषयकत्वावच्छिन्ना या जन्यता "पर्वतो वह्निमानित्यनुमितिः परामर्शकार्या घटवद्भूतलविषयकज्ञाना(१)दिति" कार्यताविषयकाऽनुमितिनिष्ठा जन्यता तन्निरूपितजनतावच्छेदिका या तादृशकार्यताव्याप्यघटवद्भूतलविषयकज्ञानवती अनुमितिरिति साक्षात्कारात्मकपरामर्शीयहेतुविषयता तदाश्रयहेतुभूतघटवद्भूतलमितिग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तत्र सत्त्वात्। साक्षात्कारत्वनिवेशे तु नोक्तातिव्याप्तिः, परामर्शजन्यतायाः कार्यताविषयकत्वावच्छिन्नत्वेऽपि अनुमितित्वावच्छिन्नत्वेन साक्षात्कारत्वानवच्छिन्नत्वादिति।

ननु द्वितीयसाक्षात्कारपदं किमर्थं, तादृशकार्यताविषयकसाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशेनैवोपपत्तेरिति चेन्न।

द्वितीयसाक्षात्कारत्वनिवेशेऽपि पर्वतो वह्निमानित्यत्र घटाभाववद्भूतलेऽतिव्याप्तिः, पर्वतो वह्निमानित्यनुमितित्वेन घटवद्भूतलावगाहिज्ञानसाक्षात्कारस्यापि तादृशकार्यतासाक्षात्कारजनकतया तदीयाऽनुमितित्वनिष्ठप्रकारतानिरूपितविशेष्यताया ऐक्यात्तदाश्रयो घटवद्भूतलमितिग्रहोऽपि तत्प्रतिबन्धकयथार्थज्ञानविषयत्वस्य तत्र सत्त्वात्। यद्धर्मावच्छिन्नविषयकसाक्षात्कारीयविषयता तादृशकार्यतासाक्षात्कारजनकतावच्छेदिका तद्धर्माश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे परामर्शघटकज्ञानत्वमादाय स एव दोषः। अतो यद्धर्मावच्छिन्नविषयताशालिसाक्षात्कारत्वव्यापिका तादृशकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकता तद्रूपाश्रयग्रहनिष्ठप्रतिबध्यतेत्यादिक्रमेण वक्तव्यम्, एवं च द्वितीयसाक्षात्कारत्वानिवेशेऽसम्भवः, तथाच सति यद्धर्मावच्छिन्नविषयताशालिग्रहत्वव्यापिकेत्यायर्थः स्यात्, एवं चाऽनुमितित्वावच्छिन्नविषय-

---

द्वितीयपरामर्शक्षणे सत्त्वात्, प्रथमपरामर्शक्षणे तु द्वितीयपरामर्शाभावविशिष्टाप्रामाण्यग्रहस्यैवोभयसम्बन्धेन सत्त्वान्न द्वितीयपरामर्शक्षणेऽनुमित्यापत्तिः।

अनुमितेः पौर्वापर्यवारणाय तत्तदनुमितिं प्रति तत्तत्परामर्शत्वेन हेतुताया आवश्यकत्वेन तत्स्थलीयप्रथमपरामर्शव्यक्तेरनुमितिहेतुत्वास्वीकारेणैव द्वितीयपरामर्शक्षणेऽनुमित्यापत्तिरिति केचित्।

(१) हेतुता चाऽत्र तादृशानुमित्यनुयोगिककालिकसम्बन्धेन।

ताशालिग्रहत्वस्याऽनुमितिविषयकानुमितिशाब्दादौ सत्त्वात्तत्र तादृशजनकताविरहादिति ।

अथ तत्कार्यतानिष्ठविषयताशालिसाक्षात्कारं प्रति तदाश्रयव्यक्तिनिष्ठविषयताशालिसाक्षात्कारः–तत्प्रतियोगिनिष्ठविषयताशालिसाक्षात्कारः कारणम्, तथाच प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यतानिष्ठाऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयत्वनिष्ठावच्छेदकतानिरूपक"साक्षात्कारनिष्ठ"जन्यतानिरूपित"साक्षात्कारनिष्ठ"जनकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपिताऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकतावद्ग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशे न कोपि दोषः, अनुमितिनिष्ठा या कार्यताविधेयकाऽनुमितित्वावच्छिन्नकार्यता तन्निरूपित "साध्य"विषयत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकावच्छिन्नत्वस्याऽवच्छेदकतया साध्यस्याऽऽधेयतासम्बन्धेन नाऽवच्छेदकत्वम्, भ्रमप्रमासाधारणसाध्यतावच्छेदकावच्छिन्नविषयताशाल्यनुमितित्वस्यैव परामर्शजन्यतावच्छेदकत्वात्, तथाच प्रथमसाक्षात्कारत्वाऽनिवेशेऽपि पर्वतो वह्निमानित्यादौ घटाभाववद्भूतले न प्रागुक्तरीत्यातिव्याप्तिः । एवं तादृशकार्यतासाक्षात्कारं प्रति अनुमितित्वेनाऽन्यावगाहिज्ञानस्य कारणत्वाभावेन द्वितीयसाक्षात्कारनिवेशस्याऽपि न सार्थक्यमिति चेत् ।

अत्राहुः—यादृशस्थले तद्व्यक्तित्वेन परामर्शव्यक्तेरनुमितिव्यक्तेश्च साक्षात्कारानन्तरमेव तद्व्यक्तित्वेन कार्यताव्यक्तेः साक्षात्कारो भवति "नान्यरूपेण" तादृशस्थले लाघवाद्विषयितासम्बन्धेन तद्व्यक्तिविशिष्टसाक्षात्कारं प्रति विषयितासम्बन्धेन तद्व्यक्तिविशिष्टसाक्षात्कारत्वेन कारणत्वं वक्तव्यम्, ईदृशकार्यकारणभावे च कार्यतानिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताकजन्यताया अनुमित्यादिनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताकजनकतायाश्चाऽप्रसिद्ध्या तादृशस्थलीयबाधाद्यनुग्रहभयेन न पूर्वोक्तनिवेशसम्भवः । न च संसर्गसाधारणमेवाऽवच्छेदकत्वं निवेशनीयम्, सर्वत्राऽनुमितिसाक्षात्कारस्य स्वनिष्ठकार्यतासाक्षात्कारं प्रति विषयितासम्बन्धेन स्वविशिष्टसाक्षात्कारत्वेन हेतुतेति न काप्यनुपपत्तिरिति वाच्यम् । उक्तरूपेणाऽनुमितिसाक्षात्कारस्य हेतुत्वे घटत्वेनाऽनुमित्यवगाहिनः साक्षात्कारस्याऽसंग्रहापत्तेः, विषयितासम्बन्धेनोक्तसाक्षात्कारस्याऽनुमितिविशिष्टत्वाभावात्, तद्धर्मावच्छिन्ननिरूपितस्यैव विषयित्वस्य "विषयितात्वेन" तद्धर्मावच्छिन्नसंसर्गतास्वीकारात् ।

"यद्धर्मावच्छिन्नविषयकसाक्षात्कारीयविषयता तादृशकार्यतासाक्षात्कारजनकतावच्छेदिका तद्धर्माश्रयग्रहनिष्ठप्रतिबध्यतेति फलितार्थे" अवच्छेदकत्वं च न स्वरूपसम्बन्धविशेषः, उक्तातिप्रसङ्गात्, किन्तु अनतिरिक्तवृत्तित्वम्, तच्च स्वव्यापकत्वरकत्वम्, अन्यथा यथाश्रुते ह्रदो वह्निमानित्यनुमितिकालीन–पर्वतो वह्निमानित्यनुमितिमानहं–इत्याकारकसाक्षात्कारीया या ह्रदो वह्निमानित्यनुमितिनिष्ठविषयताव्यक्तिः तस्याः पर्वतपक्षकवह्निसाध्यकानुमितित्वावच्छिन्नकार्यतासाक्षात्कारजनकताऽनतिरिक्तवृत्तित्वेन तदाश्रयोक्तानुमितिप्रतिबन्धकतामादाय पर्वते वह्निसाधने वह्न्यभाववद्ह्रदस्य दोषत्वं स्यात् । एवं च यद्धर्मावच्छिन्नविषयताशालिसाक्षात्कारत्वव्यापिका तादृशकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकता तद्रूपाश्रयग्रहनिष्ठप्रतिबध्यतेत्यादिलक्षणार्थलाभात्, द्वितीयसाक्षात्कारत्वाऽनिवेशेऽसम्भव इत्युक्तप्रायम् ।

केचित्तु तद्व्यक्तेः स्वरूपतो भानमते प्रथमसाक्षात्कारत्वाऽनिवेशे प्रागुक्तैवाऽतिव्याप्तिः,

स्वरूपतस्तद्व्यक्तिनिष्ठविधेयताकानुमितिनिष्ठजन्यतायां साध्यतावच्छेदकावच्छिन्नत्वेनाऽवच्छेदकत्वाऽसम्भवेन साध्यनिष्ठविधेयताकत्वेनैवाऽवच्छेदकत्वात् । द्वितीयसाक्षात्कारत्वनिवेशेऽपि तादृशकार्यतासाक्षात्कारत्वावच्छिन्नं प्रति तदाश्रयव्यक्तिसाक्षात्कारत्वेन कारणत्वेऽपि तादृशानुमितिव्यक्तेः घटवद्भूतलमिति ज्ञानस्य चाऽनुमितित्वेन यः साक्षात्कारस्तस्यापि हेतुतया तादृशसाक्षात्कारीयाऽनुमितित्वनिष्ठप्रकारतानिरूपितविशेष्यताया ऐक्येन तादृशजनकतावच्छेदकतादृशविशेष्यताश्रयघटवद्भूतलमिति ज्ञानमादाय पूर्वोक्तातिव्याप्तिवारणाय यद्विषयताशालिसाक्षात्कारत्वव्यापिका तादृशजनकतेति वक्तव्यम्, एवं साक्षात्कारत्वाऽनिवेशेऽसम्भवः, यद्विषयताशालित्वस्य "तद्विषयक"अनुमितिशाब्दादौ सत्वात्तत्र च जनकताविरहादित्याहुः ।

तन्न, तादृशकार्यताविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपिताऽऽधेयतासम्बन्धावच्छिन्नावच्छेदकताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे न पूर्वोक्तदोषावकाशः । तद्व्यक्तेः स्वरूपतो भानेऽपि परामर्शनिष्ठानुमितिकारणताबाः व्याप्त्यादिधर्मावच्छिन्नत्वेनैव "हेतुतावच्छेदकावच्छिन्नत्वेन वा" अवच्छेदकतया तादृशविषयतायां हेतोराधेयतासम्बन्धेनाऽवच्छेदकत्वाभावात्, अन्यथा हेतुतावच्छेदकरूपेणाऽन्यावगाहिपरामर्शस्याऽनुमितिजनकत्वानुपपत्तेः । तथाच तादृशानुमितिष्ठकार्यताविधेयकानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकतावच्छेदकता न हेतुभूतभूतलं घटवदित्याकारकज्ञाननिष्ठा, एवं तादृशानुमितिघटवद्भूतलमित्याकारकज्ञानयोर्योऽनुमितित्वेन साक्षात्कारस्तस्य कार्यताविषयकसाक्षात्कारं प्रति कारणत्वेऽपि तदीयविषयतायाः अनुमितिनिष्ठत्वेनैव जनकतावच्छेदकतया तत्र घटवद्भूतलमिति ज्ञानस्याऽऽधेयतासम्बन्धेनाऽनवच्छेदकतया च पूर्वोक्तदोषाभावात्, परन्तु साक्षात्कारत्वं विषयताविशेषो नातिरिक्त इति मताभिप्रायेण साक्षात्कारत्वनिवेशः ।

किञ्च व्याप्यधर्मपुरस्कारेण निवेशसम्भवे व्यापकधर्मपुरस्कारेण निवेशोऽनुमितिग्रन्थे भट्टाचार्येण नाङ्गीकृतः । यद्वाऽऽधेयतासम्बन्धावच्छिन्नावच्छेदकताश्रयग्रहनिष्ठप्रतिबध्यतालाभार्थमेव तन्निवेश इति दिक् ।

ननु तथापि साक्षात्कारद्वयमनिवेश्य तादृशकार्यताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानाविषयत्वमेव लक्षणमास्ताम्, ग्रहे कार्यतावै० स्वाश्रयत्व स्वनिरूपितकारणतावत्त्वोभयसम्बन्धेन । तथाच पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेति समूहालम्बनग्रहमादाय सर्वत्र लक्षणसमन्वय इति चेन्न ।

साधारण्यानुपसंहारित्वयोरव्याप्तेः, चालनीन्यायेन परस्परमन्वयपरामर्शाऽव्यवहितोत्तरतादृशानुमितित्वावच्छिन्नकार्यताविशिष्टाऽन्वयव्याप्तिविशिष्टहेतुमान्पक्षः साध्यवानितिग्रहेऽनुपसंहारित्वनिश्चयप्रातिबध्यत्वस्य, एवं व्यतिरेकपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नकार्यताविशिष्टव्यतिरेकव्याप्तिविशिष्टहेतुमान्पक्षः साध्यवानिति ग्रहे साधारण्यविषयकनिश्चयप्रतिबध्यत्वस्य विरहात् ।

न च कार्यतावैशिष्ट्यं ग्रहेऽनिवेश्य तादृशप्रतिबध्यतायामेव निवेश्यते, प्रतिबध्यतायां कार्यतावै० स्वविशिष्टग्रहत्वव्यापकत्वसम्बन्धेन, "स्वविशिष्टग्रहनिष्ठभेदप्रतियोगि-

तावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेति यावत्" स्वं० कार्यता । अहे कार्यतावै० पूर्वोक्तोभयसम्बन्धेन । तथाच प्रत्येकं यत्किञ्चित्कार्यतावैशिष्ट्यस्य तत्तत्प्रतिबध्यतायां सत्त्वान्न व्यापकताभङ्गः, स्वत्वस्याऽननुगततया स्वपदेन यत्किञ्चित्कार्यताया एव ग्रहणसम्भवात् । ईदृशपरम्परायाः संसर्गत्वास्वीकारे तादृशसम्बन्धस्य प्रकारमुद्रया निवेशो यथा—प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतपक्षसाध्यविषयकनुमितित्वघटितधर्मावच्छिन्नकार्यतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकतादृशोभयसम्बन्धावच्छिन्नकार्यताव्यक्तिनिष्ठावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगिताकाभाव(१)वत्प्रतिबध्यतानिरूपितेत्यादि ।

तादृशकार्यतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपककार्यताव्यक्तिनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकाश्रयत्व"कारणत्व"निष्ठावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकेत्यादिरीत्याऽवच्छेदकत्वनिष्ठप्रतियोगिताकाभाववत्प्रतिबध्यतात्वेन वा । कार्यताव्यक्तेः निरूपितत्वसम्बन्धेनाश्रयत्वे कारणत्वे च भानं द्वयोरेकमिति रीत्या । एवमाश्रयकारणत्वयोः स्वरूपेण ग्रहे भानम् एकत्र द्वयमिति रीत्या । तादृशैकैककार्यतां तत्तद्व्यक्तित्वेनोपादाय तद्व्यक्तिनिष्ठनिरूपकतानिरूपिताऽऽश्रयत्वकारणत्ववद्ग्रहवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभाव एव प्रतिबध्यतायां फलितम् ।

तत्प्रकारश्च तादृशकार्यतात्वसमानाधिकरणोभयावृत्ति(२)धर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकाधेयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकनिरूपकतानिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकाऽऽश्रयत्वनिष्ठावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकीभूतायाऽवच्छेदकतात्वावच्छिन्नप्रतियोगिता तन्निरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितग्रहनिष्ठावच्छेदकतानिरूपिताऽऽश्रयत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताधाऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपकनिरूपकत्वनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपककारणत्वनिष्ठावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्व

---

(१) अभावश्च तादृशैककार्यतां तत्तद्व्यक्तित्वेनोपादाय तद्व्यक्तिविशिष्टग्रहवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धः । अहे तद्व्यक्तिवै० पूर्वोक्तोभयसम्बन्धेन, कारणत्वस्य सम्बन्धत्वाऽस्वीकारे तादृशेत्यादिनाऽनुगमः ।

(२) उभयाऽवृत्तित्वं च न स्वप्रतियोगिवृत्तित्व–स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वरूपम्, तादृशसम्बन्धाऽस्वीकारात्, किन्तु एकत्ववदन्याऽवृत्तित्वं तत् । न च एकत्ववदन्यावृत्तित्वमप्रसिद्धम्, एकत्वस्य केवलान्वयित्वादिति वाच्यम् । एकत्वादिव्यक्तेः स्वरूपतो भानमवलम्ब्य यत्किञ्चिदेकत्वव्यक्तिमुपादाय तद्व्यक्तिनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकाऽधिकरणनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपिकाऽधिकरणनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकवृत्तित्वत्वावच्छिन्न"वृत्तितानिष्ठ"प्रतियोगिताकाभाववत्त्वस्यैव तदर्थत्वात् । अभावश्च यत्किञ्चिदेकत्वं तद्व्यक्तिपदेनोपादाय तद्व्यक्त्यधिकरणप्रतियोगिकभेदाधिकरणनिरूपितवृत्तित्वं नास्तीति प्रतीतिसाक्षिको बोध्यः

निष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतिवध्यतेत्यादि । एवं च न साधारण्याऽनुपसंहारित्वयोरव्याप्तिरिति वाच्यम् ।

तथापि धूमव्याप्यवान् धूमव्याप्यवह्निमान् धूमव्याप्याऽऽलोकवान् तादृशभस्मवानित्यादिनानाविधज्ञानानां धूमाभाववद्वृत्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिनिश्चयत्वेनैकरूपेणैव(१) कारणत्वे धूमाभाववद्वृत्तिर्वह्निरितिनिश्चयप्रतिबध्यतया धूमव्याप्यवह्निमान् तादृशाऽऽलोकवान् तादृशभस्मवानित्यादिसमूहालम्बनज्ञानेषु तादृशकार्यताविशिष्टेषु असत्वेन व्यभिचारेऽव्याप्त्यापत्तेरिति दिक् ।

चन्द्रनारायणभट्टाचार्यास्तु तादृशग्रहे मुख्यविशेष्यताविशिष्टमुख्यविशेष्यताशून्यत्वनिवेशेनैव समूहालम्बनानुमितिमादायाऽतिव्याप्तिवारणसम्भवे कल्पान्तरानुसरणं व्यर्थम्, वै० स्वसामानाधिकरण्य–स्वाभिन्नत्व–स्वावच्छिन्नत्वैतत्त्रितयसम्बन्धेन । नन्वत्र स्वसामानाधिकरण्यदलं व्यर्थमिति चेन्न । सर्वत्रासम्भवापत्तेर्ज्ञानान्तरीयमुख्यविशेष्यतामादायेति । न च स्वाभिन्नत्वदलं व्यर्थम् । वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयत्वानवच्छिन्नत्वस्य तादृशविषयतासामानाधिकरण्योभयसम्बन्धेन मुख्यविशेष्यताविशिष्टत्वसत्त्वान्मुख्यविशेष्यताविशिष्टमुख्यविशेष्यताशून्यत्वस्य तादृशज्ञाने विरहादसम्भवापत्तेः स्वाभिन्नत्वदलम् । वह्न्यभाववान् ह्रद इत्यत्र ह्रदत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायां स्वाभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन मुख्यविशेष्यताविशिष्टत्वसत्त्वान्मुख्यविशेष्यताविशिष्टमुख्यविशेष्यताशून्यत्वविरहादसंभवापत्तिरतः स्वानवच्छिन्नत्वदलम् । वस्तुतस्तु घटकालीनवन्हिमान् धूमादित्यत्र घटकालीनवन्ह्यभाववद्ह्रदेऽव्याप्तिरतः स्वानवच्छिन्नत्वमिति विभावनीयमिति प्राहुः ।

---

(१) अथ हेतुतावच्छेदकं विशिष्याऽनिवेश्य धूमाभाववद्वृत्तित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन हेतुतामतेऽपि हेतुतावच्छेदकविशेषघटितधूमाभाववद्विशेष्यतानिरूपितधूमप्रकारित्वप्रकारकनानाविधाऽप्रामाण्यग्रहाभावानां पृथक् २ निवेशानुरोधेन धूमत्वाऽऽलोकत्वादिभेदेन कारणताभेद आवश्यकः । तथाविधनिखिलपरामर्शानामेकरूपेण हेतुत्वे निखिलाऽप्रामाण्यग्रहाभावानामेकत्र निवेशप्रसङ्गात् । तथाच सति वन्हिव्याप्याऽऽलोकवान् पर्वत इदं ज्ञानं वन्हिव्याप्याऽऽलोकाभाववति आलोकप्रकारकमित्यप्रामाण्यग्रहकाले वन्हिव्याप्यधूमवान्पर्वत इति परामर्शादनुमित्यनुदयप्रसङ्गात् । अतस्तत्तद्ज्ञानधर्मिकाऽप्रामाण्यज्ञानानामननुगमान्नैकरूपावच्छिन्नत्वप्रयुक्तकारणताया ऐक्यम् । एतेन धूमव्याप्याभाववति व्याप्यप्रकारताकमित्याद्यप्रामाण्यज्ञानाभावकूटविशिष्टनिश्चयत्वेन परामर्शस्य कारणत्वमिति निरस्तम् । तथासति प्रथमतो भाविज्ञानं धूमव्याप्याऽऽलोकाभाववति आलोकप्रकारताकमित्यप्रामाण्यज्ञानसत्त्वे धूमव्याप्यवन्हिमानिति परामर्शानन्तरं धूमवानित्यनुमितिर्न स्यात्तत्र तादृशाऽप्रामाण्यज्ञानाभावकूटान्तर्गतनिरुक्ताऽप्रामाण्यज्ञानाभावस्याऽसत्त्वात्तस्याऽप्यालोकावगाहिपरामर्शनिष्ठैकरूपावच्छिन्नजनकतायामुत्तेजकत्वादिति चेन्न ।

निश्चयविशिष्टनिश्चयीयनिरुक्तरूपावच्छिन्नविषयतावत्त्वेन कारणत्वस्य निर्दुष्टत्वात् । निश्चये निश्चयवै० स्वतादात्म्य–स्वाभाववत्त्वोभयसम्बन्धेन । अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वीयप्रकारतावच्छेदकधर्मनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकविशेष्यत्वनिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिरूपिका या प्रकारित्वविशिष्टप्रकारिता तन्निरूपितविशेष्यत्वरूपः, तथाच यद्धर्मिकाऽप्रामाण्यज्ञानं भवितव्यं तद्ज्ञानीयप्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावाधिकरणनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारित्वनिष्ठप्रकारताया एव सम्बन्धघटकत्वात्सर्वं समञ्जसम् ।

ननु अनुमितिनिष्ठकार्यतासाक्षात्कारविषयतावत्त्वेनाऽनुमितितत्कारणपरामर्शयोः सङ्ग्रहसम्भवे किं जनकसाक्षात्कारनिवेशेन, "अनुमितिः परामर्शकार्या" इत्याकारककार्यतासाक्षात्कारविषयत्वस्याऽनुमितौ परामर्शे च सत्त्वादिति चेत् ।

सत्यम् । तथासति घटाभाववद्भूतलादिविषयकज्ञानसाध्यकाऽऽत्मत्वेहेतौ घटवद्भूतलादावतिव्याप्तिः स्यात् , घटाभाववद्भूतलादिज्ञानसाध्यकानुमितिः परामर्शकार्या इत्याकारकसाक्षात्कारीयविषयताश्रयघटाभाववद्भूतलमित्याकारकज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तत्र सत्त्वात् । न च तत्साक्षात्कारीयमुख्यविशेष्यतावत्त्वेनाऽनुगमान्न दोषः, तादृशविशेष्यतायाः घटाभाववद्भूतलविषयकज्ञानेऽसत्त्वादिति वाच्यम् । व्यभिचारादावव्याप्तेः तादृशविशेष्यताया अनुमितावेव सत्त्वेन परामर्शेऽसत्त्वादिति दिक् ।

अस्य कल्पस्यानुगमस्तु–प्रकृतानुमितित्वावच्छिन्नकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावृत्तिरूपाश्रयमहानिष्ठप्रतिबध्यतत्त्वादि । जनकतावृत्तित्वं च रूपे स्वावच्छिन्नविषताशालिसाक्षात्कारत्वव्यापकत्वसम्बन्धेनेति ।

प्रकारविधया अनुगमो यथा–प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावृत्यभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितसाक्षात्कारनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतावदवच्छेदकता तन्निरूपकधर्मि "अनुमिति"निष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकाऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमिति ।

ननु प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यतावच्छेदकाविषयत्वावच्छिन्नत्वमेव प्रतिबध्यतायां निवेश्यतां कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशस्याऽऽवश्यकतया अनुमितिविषयताया इव परामर्शविषयताया अपि कार्यतावच्छेदकत्वात् , एवं च कार्यतासाक्षात्कारजनकसाक्षात्कारविषयताशालिमहनिष्ठत्वेन प्रतिबध्यतानिवेशनं कल्पान्तरानुसरणं च व्यर्थमिति चेन्न ।

पर्वतो वह्निमान् धूमादित्यादौ घटाभाववत्पर्वतेऽतिव्याप्तेः, तत्र पर्वतो वह्निव्याप्यधूमघटवानित्येकत्र द्वयमितिरीत्या ज्ञानीया या घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यता तस्या अपि वह्निव्याप्यधूमप्रकारतानिरूपितविशेष्यत्वाभिन्नतया कार्यतावच्छेदकत्वेन तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिप्रमाविषयत्वस्य तत्र सत्त्वात् । न च तादृशकार्यतावच्छेदकप्रकारत्वावच्छिन्नत्वस्यैव प्रतिबध्यतायां निवेशान्नोक्तातिव्याप्तिः, वह्निव्याप्यधूमघटवानिति ज्ञाने प्रकारताद्वयोपगमेन घटप्रकारतायाः कार्यतानवच्छेदकत्वेन वह्निव्याप्यधूमप्रकारताया एव तादृशकार्यतावच्छेदकत्वेन तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य घटाभाववत्पर्वते विरहादिति वाच्यम् । एवमपि वह्निव्याप्यधूमवन्तौ पर्वतघटौ इति द्वयोरेकमिति रीत्या उभयविशेष्यतानिरूपितप्रतिबन्धकताशालिप्रमाविषयत्वस्य धूमाभाववद्घटे सत्त्वादतिव्याप्तेः । कार्यतानवच्छेदकाविषयत्वानवच्छिन्नत्वनिवेशे तादृशप्रतिबध्यतायाः ताद-

शकार्यतानवच्छेदकघटत्वावच्छिन्नप्रकारत्वावच्छिन्नत्वादेव तद्वारणेऽपि ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ह्रदेऽव्याप्तिः, तादृशबाधनिश्चयप्रतिबध्यतावच्छेदकत्वस्य महानसीयवह्नित्वावच्छिन्नप्रकारतायामपि सत्त्वात्, तादृशप्रकारतायाश्च कार्यतायामनवच्छेदकत्वात्। तादृशकार्यतानवच्छेदकविषयताशून्यज्ञानीयविषयत्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशे सर्वदोषवारणसम्भवेऽपि असम्भवापत्तेः। तादृशकार्यतानवच्छेदकनिरवच्छिन्नविशेष्यता(१)-शून्यत्वस्य क्वापि ज्ञानेऽसत्त्वात्।

न च तथापि कार्यतानवच्छेदकविषयताशून्यत्वमित्यनेन कार्यतावच्छेदकविषयताविशिष्टान्यविषयताशून्यत्वस्य ज्ञाने विवक्षणान्न दोषः। वै० स्वतादात्म्य(२)-स्वावच्छिन्नत्व(३)-स्वनिरूपितत्व(४)-स्वनिरूपिताऽवच्छेद्यत्व(५)-स्वावच्छेद्यनिरूपितत्व(६)—स्वावच्छेद्यनि-

---

(१) ह्रदो वह्निमानिति ज्ञाने विशेष्यताद्वयी वह्निनिष्ठप्रकारतानिरूपितविशेष्यता एका सा च ह्रदत्वावच्छिन्ना, ह्रदत्वनिष्ठप्रकारतानिरूपिता चाऽपरा सा च निरवच्छिन्ना। तत्राऽऽद्या कार्यतावच्छेदिका, द्वितीया च नेति विवेकः।

(२) ह्रदत्वावच्छिन्नविशेष्यतासङ्ग्रहाय स्वतादात्म्यनिवेशः। तदनिवेशे कार्यतावच्छेदकविषयतापदेन तस्याः "ह्रदत्वावच्छिन्नविशेष्यतायाः" धारणेऽपि तद्विशिष्टान्यत्वस्य तत्राऽक्षतत्वात्, तच्छून्यत्वस्य ह्रदो वह्निमानितिज्ञाने विरहादसम्भवापत्तेः, तन्निवेशे तु तस्याः तादात्म्येन स्वविशिष्टत्वान्नोक्तदोषः।

(३) स्वावच्छिन्नत्वनिवेशस्तु ह्रदनिष्ठनिरवच्छिन्नविशेष्यतायाः सङ्ग्रहाय, अन्यथा कार्यतावच्छेदकविषयतापदेन तस्याः धारणाऽसम्भवेन ह्रदत्वावच्छिन्नविशेष्यतायाः धारणसम्भवेऽपि तद्विशिष्टान्यत्वस्य ह्रदनिष्ठनिरवच्छिन्नविशेष्यतायां सत्त्वात् तच्छून्यत्वस्य ह्रदो वह्निमानिति ज्ञाने विरहेणाऽसम्भवतादवस्थ्यात्, अतस्तन्निवेशः। तथाच निरवच्छिन्न"ह्रदनिष्ठ"विशेष्यतायाः स्वावच्छिन्नत्वसम्बन्धेन कार्यतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यताविशिष्टत्वान्नोक्तदोषः, सावच्छिन्ननिरवच्छिन्नविशेष्यतयोरन्तराभासमानतयाऽवच्छेद्यावच्छेदकभावोपगमादिति।

(४) तृतीयसम्बन्धाऽनिवेशे धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिः, तथाहि—पर्वतो धूमवानित्यनुमितिं प्रति धूमाभाववदवृत्तिमान् धूमाभाववदवृत्तिआलोकवान् धूमाभाववदवृत्तिवह्निमानित्याद्याकारकनानाहेतुतावच्छेदकावगाहिहेतुतावच्छेदकानवगाहिनानाविधपरामर्शानां "हेतुतावच्छेदकाऽघटित"साध्याभाववदवृत्तित्वावच्छिन्नप्रकारताकपक्षविशेष्यकनिश्चयत्वेनैकरूपेणैव कारणतया अनुमितित्वावच्छिन्नं प्रति व्यापकसामानाधिकरण्यादिनानाविधव्याप्त्यवगाहिपरामर्शकारणतायां व्यभिचारवारणाय कार्यतावच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेशस्यावश्यकतया, अव्यवहितोत्तरत्वशरीरे पूर्वोक्तपरामर्शानां तु एकरूपेणैव निवेश आवश्यकः। तथाच "कार्यतावच्छेदककोटौ हेतुतावच्छेदकस्य वह्नित्वादेरनिवेशेन" निरवच्छिन्नवह्निनिष्ठविशेष्यतानिरूपित"हेतुतावच्छेदकीभूत"वह्नित्वनिष्ठप्रकारतायाः कार्यतावच्छेदकीभूतधूमाभाववदवृत्तित्वप्रकारतानिरूपित"वह्निनिष्ठ"विशेष्यताविशिष्टान्यत्वात् तच्छून्यत्वस्य धूमाभाववदवृत्तिमानिति ज्ञाने विरहात्। तन्निवेशे तु तादृशप्रकारतायाः "तादृशविशेष्यतानिरूपिततया" तादृशविशेष्यताविशिष्टत्वान्न दोषः।

(५) चतुर्थसम्बन्धनिवेशोऽपि तत्रैवाऽव्याप्तिवारणाय, अन्यथा हेतुतावच्छेदकीभूतवह्नित्वनिष्ठायाः साध्याभाववदवृत्तित्वरूपव्याप्तिप्रकारतानिरूपितधर्मितावच्छेदकतायाः तादृशानुमितिकार्यतानवच्छेदकतया कार्यतावच्छेदकविषयतापदेन तस्याः धारणाऽसम्भवेन व्याप्तिप्रकारतानिरूपित"वह्निनिष्ठ"विशेष्यताया धर्मव्यतया तद्विशिष्टान्यत्वस्य तादृशधर्मितावच्छेदकतायां सत्त्वेन तच्छून्यत्वस्य तादृशव्यभिचारज्ञानप्रतिबध्यज्ञानाऽवृत्तितयाऽव्याप्त्यापत्तेः। तन्निवेशे तु तादृशधर्मितावच्छेदकतायाः स्वनिरूपितावच्छेद्यत्वसम्बन्धेन कार्यतावच्छेदकीभूततादृशविशेष्यताविशिष्टत्वान्न दोषः। स्वपदग्राह्यतादृशविशेष्यतानिरूपिता या वह्नित्वनिष्ठा प्रकारता तदवच्छेद्यत्वं धर्मितावच्छेदकतायाम्, तादृशप्रकारताधर्मितावच्छेदकतयोरन्तराभासमानतयाऽवच्छेद्यावच्छेदकभावात्।

(६) पञ्चमसम्बन्धानिवेशे पर्वतो वह्न्यभाववानित्यत्र वह्निमत्पर्वतरूपबाधेऽव्याप्तिः, तथाहि वह्न्यभा-

विताऽवच्छेद्यत्वे(१)तदन्यतमसम्बन्धेन । ह्रदनिष्ठनिरवच्छिन्नविशेष्यतायाः कार्यतानवच्छेदकत्वेऽपि कार्यतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यताविशिष्टतया विशिष्टान्यविषयताशून्यत्वस्य ह्रदो वह्निमानितिज्ञाने सत्त्वादिति वाच्यम् ; पर्वतो धूमवान् गगनादित्यादौ आधेयत्वप्रतियोगित्वोभयाभाववद्गगनेऽतिव्याप्त्यापत्तेः । तादृशकार्यतानवच्छेदकविषयताशून्यत्वस्य गगनव्यापकधूमसामानाधिकरण्य "धूमाधिकरणनिरूपिताऽऽधेयत्व" धूमाभावव्यापकीभूताभावप्रतियोगित्ववद्गगनवान् पर्वत इत्याकारके व्याप्तिद्वयस्यैकत्र द्वयमिति रीत्याऽवगा-

वव्याप्यहेतुमत्तापरामर्शस्य लाघवादवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नविषयताशालित्वेनैव वह्न्यभावानुमितिं प्रति कारणत्वम्, एवं च वह्नित्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नविशेष्यत्वावच्छिन्न "वह्निनिष्ठ" प्रकारत्वस्य कार्यतानवच्छेदकतया तच्छून्यत्वस्य बाधप्रतिबध्यज्ञाने "पर्वतो वह्न्यभाववानित्याकारके" सत्त्वात् । तन्निवेशे तु वह्निनिष्ठतादृशप्रकारतायाः कार्यतावच्छेदकीभूत "अवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपित"-अभावनिष्ठविशेष्यताविशिष्टत्वान्न दोषः । अत्राऽभावे विशेष्यताद्वयी एका वह्नित्वनिष्ठप्रकारतानिरूपिता, वह्निनिष्ठप्रकारतानिरूपिता चाऽपरा, तयोश्चाऽवच्छेद्यावच्छेदकभावः । तत्राऽऽद्या कार्यतावच्छेदिका, तथाच स्वपदग्राह्यं तादृशसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वं, तदवच्छेद्या याऽपरा विशेष्यता तन्निरूपितत्वस्य वह्निनिष्ठतादृशप्रकारतायां सत्त्वात् ।

(१) चरमसम्बन्धनिवेशस्तु तत्रैवाऽव्याप्तिवारणाय, अन्यथा वह्नित्वनिरूपितनिरवच्छिन्न "वह्निनिष्ठ"-विशेष्यतायाः कार्यतानवच्छेदकतया तच्छून्यत्वस्योक्तबाधप्रतिबध्यज्ञानेऽसत्त्वात् । तन्निवेशे तु स्वपदग्राह्योक्तविशेष्यत्वावच्छेद्याऽपरविशेष्यतानिरूपितप्रकारताऽवच्छेद्यत्वस्य तादृशनिरवच्छिन्नवह्निनिष्ठविशेष्यतायां सत्त्वेनाऽस्यास्तादृशविशेष्यताविशिष्टत्वान्न दोष इति ।

नचैवमपि वह्निनिष्ठप्रकारतानिरूपिताऽभावनिष्ठविशेष्यतायाः कार्यताऽनवच्छेदकतया तच्छून्यत्वस्योक्तबाधप्रतिबध्यज्ञाने "पर्वतो वह्न्यभाववानित्याकारके विरहादुक्तदोषतादवस्थ्यमिति वाच्यम् । तत्र स्वावच्छिन्नत्वरूपद्वितीयसम्बन्धसत्त्वात, तथाहि—तादृशसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताऽभावनिष्ठविशेष्यतायाः कार्यतावच्छेदकतया तदवच्छिन्नत्वस्य तत्र सत्त्वात । अन्तराभासमानविषयतयोरभेदमते तु स्वावच्छिन्नत्वस्य स्वाऽभिन्नत्वमित्यर्थो बोध्यः । एवमुत्तरत्रापीति ध्येयम् ।

ननु स्वावच्छेद्यनिरूपितत्वस्वावच्छेद्यनिरूपितावच्छेद्यत्वान्यतरसम्बन्धेनैव तादृशविषयताविशिष्टयं निवेश्यतां किमुक्तान्यतमसम्बन्धनिवेशेन । प्रथमसम्बन्धनिवेशाद् ह्रदत्वादिनिष्ठनिरवच्छिन्नप्रकारतायाः, ह्रदत्वनिष्ठप्रकारतानिरूपित "ह्रदनिष्ठ" निरवच्छिन्नविशेष्यतायाश्च सङ्ग्रहः । स्वपदेन कार्यतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यतामुपादाय तदवच्छेद्या या "ह्रदत्वनिष्ठप्रकारतानिरूपितविशेष्यता तन्निरूपितत्वस्य तादृशप्रकारतायां सत्त्वात, एवं स्वपदेन ह्रदत्वनिष्ठावच्छेदकतामादाय तदवच्छेद्या या ह्रदत्वनिष्ठप्रकारता तन्निरूपितत्वस्य निरवच्छिन्नविशेष्यतायां सत्त्वात् । ह्रदत्वावच्छिन्नविशेष्यतासङ्ग्रहाय द्वितीसम्बन्धनिवेशः । तथाच स्वपदेन ह्रदत्वनिष्ठावच्छेदकतामादाय तदवच्छेद्यह्रदत्वनिष्ठप्रकारतानिरूपित "निरवच्छिन्न" विशेष्यत्वावच्छेद्यत्वस्य तत्र सत्त्वात् । एवमुक्तवह्नित्वनिष्ठप्रकारताया अपि सङ्ग्रहोऽपि अन्यतरघटकप्रथमसम्बन्धेनैव, तथाहि स्व० तादृशव्याप्तिप्रकारतानिरूपितवह्निविशेष्यता तदवच्छेद्या या "वह्नित्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यता तन्निरूपितत्वस्य तत्र सत्त्वात् । एवं द्वितीयसम्बन्धेन वह्नित्वनिष्ठधर्मितावच्छेदकतायाः सङ्ग्रहः । स्वपदेन तादृशवह्निविशेष्यतामादाय तदवच्छेद्यनिरवच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेद्यत्वस्य सत्त्वादिति चेन्न ।

स्वावच्छेद्यनिरूपितत्वादिशरीरे स्वावच्छेद्यस्य स्वावच्छेद्यत्वेन निवेशो न सम्भवति स्वावच्छेद्यत्वस्याननुगतत्वात्, किन्तु किञ्चित्सम्बन्धनिष्ठावच्छेदकतानिरूपकत्वावच्छेद्यत्वेनैव, तथाच कार्यतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यतावच्छेद्यायाः निरवच्छिन्नविशेष्यतायाः किञ्चित्सम्बन्धावच्छिन्नत्वाऽसम्भवेन ह्रदत्वावच्छिन्नविशेष्यतादिसङ्ग्राहकत्वतादात्म्यादिनिवेश आवश्यक इति विभावनीयम् ।

**अत्र पर्वतो वह्निमान् ह्रदश्च तथेत्यादिसमूहालम्बनानुमित्यादिविरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने दोषताप्रसङ्गः, प्रकृतानुमितिनिष्ठकार्यतासम्बन्धिग्रहत्वस्य कस्यापि**

---

हिपरामर्शे सत्त्वात्, "तादृशपरामर्शे तादृशानुमितिकारणतासत्त्वात्" तादृशपरामर्शप्रतिबन्धकज्ञानविषयत्वस्य तत्र सत्त्वात् ।

ननु तथापि यत्किञ्चित्कार्यतावच्छेदकविषयताविशिष्टान्यविषयताशून्यत्वस्य ज्ञाने विशेषणादेव तद्वारणम्, तथाहि—तादृशपरामर्शस्याऽपि प्रातिस्विकरूपेण एकामेकी व्याप्तिमादायैव कारणत्वात्, यत्किञ्चित्कार्यतावच्छेदकविषयतात्वेनाऽन्वयव्याप्तिघटिततादृशपक्षतावच्छेदकावच्छिन्नविशेष्यतामुपादाय तद्विशिष्टान्यत्वस्य व्यतिरेकव्याप्तिघटिततादृशपक्षतावच्छेदकावच्छिन्नविशेष्यतायां सत्त्वेन तच्छून्यत्वस्योक्तपरामर्शे विरहात् । न च यत्किञ्चित्त्वनिवेशेऽननुगमः, तत्पक्षकतत्साध्यकतद्धेतुकानुमितिनिष्ठकार्यताविशिष्टप्रतिबध्यतायाः विवक्षितत्वात्, वै० स्वावच्छेदकविषयताविशिष्टान्यविषयताशून्यज्ञानीयविषयत्वावच्छिन्नत्वसम्बन्धेन, सम्बन्धघटकविषयतावै० प्रागुक्तान्यतमसम्बन्धेनेति चेन्न ।

ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्वृत्तिधूम "वह्न्यभाववद्वृत्ति"आलोकोभयाभाववद्ध्रदेऽतिव्याप्तिः, एकत्र द्वयमिति रीत्या वह्न्यभाववद्वृत्तिधूमाऽऽलोकवानितिज्ञाने उभयसाधारणसाध्याभाववद्वृत्तित्वावच्छिन्नप्रकारताशालिनिश्चयाऽव्यवहितोत्तरत्वघटितधर्मावच्छिन्नयत्किञ्चित्कार्यतावच्छेदकविषयताशून्यत्वस्याऽक्षतत्वात् । एवमव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशनीयतया अप्रामाण्यज्ञानानामननुगतरूपेणोत्तेजकतामते(१) पक्षसाध्यविषयतायाः कार्यतावच्छेदककोटावनिवेशनीयतया तादृशकार्यत्वाप्रसिद्ध्याऽसम्भवापत्तेर्दुर्वारत्वात् गौरवाच्चेति दिक् ।

कार्यतासाक्षात्कारकल्पनापरित्यागे बीजमाह **अत्रेति** । कार्यतासाक्षात्कारकल्प इत्यर्थः । **दोषताप्रसङ्ग इति** । अतिव्याप्तिरित्यर्थः । तथाहि—पर्वतपक्षकवह्निसाध्यकधूमहेतुकाऽनुमितिः "पर्वतो वह्निमान् ह्रदश्च वह्निमानितिसमूहालम्बनानुमितिः" तन्निष्ठा या कार्यता वह्निव्याप्यधूमवान् पर्वतः इति परामर्शनिरूपिता वह्निव्याप्यधूमवान् ह्रद इति परामर्शनिरूपिता च कार्यता तादृशकार्यतासाक्षात्कारः—पर्वतो वह्निमानित्यनुमितिः वह्निव्याप्यधूमवान् पर्वत इति परामर्शकार्या एवं ह्रदो वह्निमानित्यनुमितिः वह्निव्याप्यधूमवान् ह्रद इति परामर्शकार्या इत्याकारकः—तज्जनको यः साक्षात्कारः अनुमितिद्वयसाक्षात्कारः परामर्शद्वयसाक्षात्कारश्च तादृशसाक्षात्कारीयविषयताश्रयो यो ग्रहः—पर्वतो वह्निमान्, वह्निव्याप्यधूमवान्, ह्रदो वह्निमान्, वह्निव्याप्यधूमवानिति ग्रहचतुष्टयं, तन्निष्ठ "वह्निमद्ध्रदत्वावच्छिन्नविषयकज्ञानत्वावच्छिन्न"प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य वह्न्यभाववद्-

---

(१) अप्रामाण्यज्ञानानामननुगतरूपेणोत्तेजकत्वे तत्तदप्रामाण्यज्ञानाभावनिवेशे गौरवमतोऽनुगतरूपेणैवाऽप्रामाण्यज्ञानाभावो निवेशनीयः, तत्प्रकारश्चाऽभावविशिष्टान्यत्वं परामर्शे निवेशनीयम्, वै० स्वाऽभाववत्त्व-स्वावच्छिन्नजनकतावच्छेदकविषयितावत्त्वोभयसम्बन्धेन । स्वाभाववत्ता च विशेष्यतासम्बन्धेनेति । अभावपदेन तत्तदप्रामाण्यज्ञानाभावो धर्त्तव्य इति ध्येयम् ।

साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारानुमितिपरं वा ।

---

प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशाऽसम्भवात् । तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे चाऽनुमित्यविरोधिनि व्यभिचारादौ परामर्शाविरोधिनि बाधादौ चाऽव्याप्तिः, उभयविरोधिपक्षाऽप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्त्वादतः कल्पान्तरमाह साध्यव्याप्येति ।

---

ह्रदे सत्त्वात् । ननु ग्रहनिष्ठत्वं प्रतिबध्यतायां न निवक्ष्यते अपि तु ग्रहत्वावच्छिन्नत्वमेव, तथाच नोक्ताऽतिव्याप्तिः उक्तबाधनिश्चयीयप्रतिबध्यतायां तादृशग्रहत्वावच्छिन्नत्वविरहात्, ग्रहत्वस्य प्रतिबध्यतातिरिक्तवृत्तित्वादिति चेत्तदाऽऽह प्रकृतानुमितिनिष्ठकार्यतासम्बन्धिग्रहत्वव्यापकेति । प्रकृतानुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयग्रहत्वव्यापकेत्यर्थः । कस्यापि—दोषज्ञानस्येत्यर्थः । प्रतिबध्यताऽनवच्छेदकतयेति । पक्षविशेष्यकसाध्यप्रकारकबुद्धित्वपक्षविशेष्यकसाध्यव्याप्यहेतुप्रकारकबुद्धित्वाद्यपेक्षया तादृशग्रहत्वस्य गुरुत्वादिति भावः । तदवच्छिन्नेति । ग्रहत्वावच्छिन्नेत्यर्थः । तथाचाऽतिव्याप्तिवारणेऽपि असम्भव इति भावः । तथाविधेति । तादृशकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयेत्यर्थः । अव्याप्तिरिति । तादृशग्रहत्वस्याऽनुमितौ परामर्शे च सत्त्वेन अनुमितौ व्यभिचारनिश्चयीयप्रतिबध्यतायाः परामर्शे च बाधनिश्चयीयप्रतिबध्यताया असत्त्वेन प्रतिबध्यतायास्तादृशग्रहत्वाऽव्यापकत्वादिति भावः । असम्भवो नास्तीत्याह उभयविरोधीति । अनुमितिपरामर्शोभयविरोधीत्यर्थः । पक्षाप्रसिद्ध्यादावेव— आश्रयासिद्ध्यादावेव । आदिना साध्याप्रसिद्धिपरिग्रहः । तादृशप्रतिबध्यतेति । तादृशग्रहत्वव्यापकप्रतिबध्यतेत्यर्थः । तथाच काञ्चनमयपर्वतो वह्निमानित्यादौ काञ्चनमयत्वाभाववान्पर्वत इत्याश्रयासिद्धिनिश्चयस्य काञ्चनमयपर्वतोद्देश्यकानुमितौ परामर्शे च विरोधितया प्रकृतानुमितिनिष्ठकार्यतानिरूपकसम्बन्धिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालितया तद्विषये काञ्चनमयत्वाभाववत्पर्वतादौ लक्षणसमन्वयादित्यर्थः । न च व्याप्तिज्ञानेऽपि तादृशकार्यतानिरूपकसम्बन्धिग्रहत्वस्य सत्त्वेन तत्र प्रतिबध्यताविरहात्कथं ग्रहत्वव्यापकत्वमिति वाच्यम् । एतन्मते व्याप्तिज्ञानादेरनुमित्यकारणत्वादिति ध्येयम् ।

अथात्र तादृशकार्यतासाक्षात्कारजनकसाक्षात्कारविषयतावन्मुख्यविशेष्यताद्वयशून्यग्रहनिष्ठप्रतिबध्यतेत्यादिरीत्या निवेशे एवोक्तसमूहालम्बनमादायोदासीनेऽतिव्याप्तिवारणसम्भवे कल्पान्तरानुसरणमनुचितम् । न च मुख्यविशेष्यताद्वयशून्यत्वस्य वह्निमद्ह्रदविषयकज्ञानादावप्यसत्त्वेन ह्रदपक्षकवह्निसाध्यकबाधाद्यसङ्ग्रहः, तत्रापि ह्रदत्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यतायाः "प्रकारत्वानवच्छिन्नत्वेन" मुख्यविशेष्यतात्वेन मुख्यविशेष्यताद्वयसत्त्वादिति वाच्यम् । मुख्यविशेष्यतेत्यनेनाऽवच्छेदकत्वानवच्छिन्नप्रकारतानिरूपितविशेष्यताया विवक्षणेनाऽदोषात्, ह्रदत्वनिष्ठप्रकारतायाः "धर्मिता" अवच्छेदकत्वावच्छिन्नत्वेनाऽवच्छेदकत्वानवच्छिन्नप्रकारतानिरूपितविशेष्यताद्वयशून्यत्वस्य ह्रदो वह्निमानितिज्ञानेऽक्षतत्वात् । न

**प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नत-**

---

न च वह्निव्याप्यधूमघटवानित्येकत्र द्वयमिति रीत्या ज्ञानमादाय घटाभाववत्पर्वतेऽतिव्याप्तिरिति वाच्यम् ।

प्रकारताविशिष्टविशेष्यताद्वयशून्यत्वस्य तदर्थत्वात् । वै० स्वनिरूपितत्वस्वाभिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन । स्वभिन्नप्रकारतायां अवच्छेदकत्वानवच्छिन्नत्वमपि विशेषणीयम् । प्रकारताविशिष्टान्यत्वं वा ग्रहे निवेशनीयम् । वै० स्वनिरूपितविशेष्यतावत्त्व—स्वाभिन्नावच्छेदकत्वानवच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वोभयसम्बन्धेन । न च वह्निव्याप्यधूमवत्पर्वतवान्देश इति ज्ञानमादाय तद्दोषतादवस्थ्यमिति वाच्यम् । साध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताभिन्ना सती साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताभिन्ना या विशेष्यता तच्छून्यत्वनिवेशेनाऽदोषादिति चेन्न ।

गौरवापत्तेः । एतेन प्रकृतानुमितित्वव्यापकप्रतिबध्यता—प्रकृतानुमितिकारणीभूतज्ञानत्वव्यापकप्रतिबध्यता—एतदन्यतरनिरूपितप्रतिबन्धकतानिवेशेनैव सामञ्जस्ये समूहालम्बनानुमितिपर्यन्तानुधावनं व्यर्थमिति निरस्तम् ।

अथ प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यताविशिष्टविषयित्वावच्छिन्नप्रतिबध्यतानिवेशेनैव सर्वदोषवारणसम्भवे साध्यव्याप्येत्यादिकल्पान्तरानुसरणं व्यर्थम् । विषयितायां कार्यतावै० स्वावच्छेदकत्व—स्वनिरूपितकारणतावच्छेदकत्वान्यतरसम्बन्धेन(१), स्वं—कार्यता धूमवान् वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयितायां पर्वतपक्षकधूमसाध्यकवह्निहेतुकानुमितित्वावच्छिन्नकार्यतावच्छेदकत्वविरहेऽपि तत्“कार्यता”निरूपितकारणतावच्छेदकत्वसत्त्वात्तादृशव्याप्तिविषयितामादाय लक्षणसमन्वयः । ह्रदो वह्निमान् धूमादित्यत्र वह्निमद्ह्रदत्वावच्छिन्नविषयितायां ह्रदपक्षकवह्निसाध्यकधूमहेतुकानुमितित्वावच्छिन्नकार्यतावच्छेदकत्वसत्त्वाद् वह्निमद्ह्रदत्वावच्छिन्नविषयितामादाय लक्षणसमन्वयः ।

न च काञ्चनमयह्रदो वह्निमानित्यादौ काञ्चनमयत्वाभाववद्ह्रदादावव्याप्तिः, काञ्चनमयत्वाभावप्रकारकनिश्चयप्रतिबध्यतावच्छेदकीभूतकाञ्चनमयत्वप्रकारतानिरूपितविशेष्यतायां कार्यतावैशिष्ट्यविरहात्, काञ्चनमयत्वह्रदत्वोभयधर्मावच्छिन्नविशेष्यताया एव तथात्वादिति वा-

---

(१) एतेनाऽन्वयव्याप्तिव्यतिरेकव्याप्त्योर्वैशिष्ट्य निवेशं कृत्वा तादृशव्याप्तिविषयकसमूहालम्बनानुमितेर्निवेशः करणीय एव, अन्यथा केवलान्वयव्याप्तेः केवलव्यतिरेकव्याप्तेर्वा निवेशे साधारण्यानुपसंहारित्वयोरव्याप्तेः । एवं च यत्रोभयव्याप्तिविषयकसमूहालम्बनानुमितिर्न जाता तत्र दोषेऽव्याप्तिः ।

एवं पक्षः साध्यवान् साध्यव्याप्यवानित्याकारानुमितिं प्रति पक्षः साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्चेति परामर्शस्य कारणतया तस्यैव साध्यव्याप्यवत्तानिश्चयत्वेन पक्षे साध्यव्याप्यानुमितिप्रतिबन्धकतया सिषाधयिषां विना कुत्रापि तादृशसमूहालम्बनानुमितेरनुत्पादात्तादृशस्थलविशेषे कस्यापि पुरुषस्य सिषाधयिषा न जाता तत्रत्यदोषेऽव्याप्तिरिति परास्तम् । पक्षविशेष्यक “साध्यव्याप्य” हेतुप्रकारकनिश्चयोत्तरं पक्षविशेष्यकसाध्यविधेयकानुमित्युत्पत्तेरावश्यकतया पक्षविशेष्यकसाध्यविधेयकत्वघटितधर्मावच्छिन्नकार्यतात्वेन कार्यतानां निवेशनीयतया यत्राऽसद्धेतुविशेषे तादृशानुमितेरप्रसिद्धिः तत्र कार्यतामादाय लक्षणसमन्वयासम्भवादिति ।

ध्यम् । यत्र काञ्चनमयह्रदस्य पक्षत्वं तत्र ह्रदत्वविशिष्टांशे काञ्चनमयत्वावगाहिपरामर्शात् काञ्चनमयत्वविशिष्टांशे ह्रदत्वावगाहि "एकत्र द्वयमिति रीत्या वा" अनुमितिवारणाय काञ्चनमयत्वप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्ना या तादृशधर्मद्वयावच्छिन्नविशेष्यता तच्छाल्यनुमितित्वं तादृशकार्यतावच्छेदकमवश्यं वाच्यम्, तथाच विशेष्यताया अपि कार्यतावच्छेदकतायाऽनुपपत्त्यभावात् ।

न च पर्वतो वन्हिमानित्यत्र वन्हिव्याप्यधूमवद्घटवान्पर्वत इति परामर्शे विरोधिज्ञानविषये घटाभाववत्पर्वतेऽतिव्याप्तिः, वन्हिव्याप्यधूमघटवानित्येकत्र द्वयमितिरीत्या ज्ञानीयघटप्रकारतानिरूपितविशेष्यतायाः "वन्हिव्याप्यधूमप्रकारतानिरूपितविशेष्यतात्वेन" स्वनिरूपितकारणतावच्छेदकत्वसम्बन्धेन कार्यताविशिष्टत्वात्, तादृशविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वात्तस्येति वाच्यम् । उक्तान्यतरसम्बन्धेन कार्यताविशिष्टान्याविषयत्वाऽनवच्छिन्नत्वस्य प्रतिबध्यताविशेषणेनैव वारणात् । "स्वावच्छेदकत्वस्वनिरूपितकारणतानवच्छेदकीभूतविषयताशून्यज्ञानीयत्वतदन्यतरसम्बन्धेन प्रतिबध्यतायामेव कार्यतावैशिष्ट्यस्य निवेशाद्वा" तादृशकार्यताविशिष्टान्या या घटप्रकारता तदवच्छिन्नत्वस्यैव 'घटाभाववान् पर्वत इति निश्चयीय'प्रतिबध्यतायां सत्त्वात् तदनवच्छिन्नप्रतिबध्यतापदेन तस्याः वारणाऽसम्भवादिति चेन्न ।

परस्परं व्यभिचारवारणाय स्वाव्यवहितोत्तरत्वघटितकार्यकारणभावस्यावश्यकतया पक्षसाध्यविषयतायाः "कार्यतावच्छेदककोटावनिवेशे(१)न" कार्यतानवच्छेदकतया निरुक्तान्य-

---

(१) ननु पक्षधर्मिकसाध्यव्याप्यवत्तानिश्चयोत्तरानुमितिं प्रति पक्षधर्मिकसाध्यव्याप्यवत्तानिश्चयत्वेन न हेतुत्वम्, तथासति "वन्हिव्याप्यधूमवान्पर्वतः इदं ज्ञानं वन्हिव्याप्तिप्रकारकम्, वन्हिव्याप्यधूमाभाववति वन्हिव्याप्यधूमप्रकारकमित्याकारकाऽप्रामाण्यज्ञानास्कन्दितपरामर्शादनुमित्यापत्तेः, किन्तु तादृशाऽप्रामाण्यग्रहाभावविशिष्टपक्षधर्मिकसाध्यव्याप्यहेतुमत्तानिश्चयत्वेनैव, तथा च यत्र वन्हिव्याप्यधूमवान्पर्वत इति समूहालम्बनपरामर्शो वन्हिव्याप्यांशेऽप्रामाण्यज्ञानास्कन्दितः तदुत्तरं जायमानायां पर्वतः इन्धनवानित्यनुमितौ, एवं वन्हिव्याप्यधूमवान् पर्वत इदं ज्ञानं तादृशधूमाभाववति पर्वते धूमप्रकारकं वन्हिव्याप्यधूमवच्च महानसमिति परामर्शोत्तरं जायमानायां महानसं वन्हिमदित्यनुमितौ च व्यभिचारवारणाय तत्पक्षकतत्साध्यकत्वं अप्रामाण्यज्ञानाभावविशिष्टपरामर्शजन्यतावच्छेदककोटौ निवेशनीयम्, तथाच तादृशानुमित्योः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताकत्वाभावान्न व्यभिचारः । एवं च पक्षविषयतानिरूपितसाध्यविषयतायां स्वावच्छेदकत्वसम्बन्धेन कार्यताविशिष्टत्वसत्त्वान्न बाधादावव्याप्तिः । न च तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टपरामर्शोत्तरानुमितिं प्रति तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टपरामर्शत्वेन हेतुत्वात्तोक्तस्थले व्यभिचार इति वाच्यम् । तत्पक्षकतत्साध्यकत्वनिवेशेनैवोक्तस्थले व्यभिचारवारणसम्भवे गुरुतरतत्तदप्रामाण्यज्ञानाभावकूटं कार्यतावच्छेदककोटौ निवेश्य वारणस्यानुचितत्वादिति चेन्न ।

यत्राऽप्रामाण्यज्ञानास्कन्दितधूमपरामर्शः ततो वन्हिव्याप्यालोकवान्पर्वत इति परामर्शः ततः पर्वतो वन्हिमानित्यनुमितिः तत्र व्यभिचारवारणाय तत्पक्षकतत्साध्यकत्वनिवेशेऽपि कार्यतावच्छेदककोटौ तत्तदप्रामाण्यज्ञानाभावकूटनिवेशस्यावश्यकतया गौरवस्य फलोन्मुखतयाऽदोषात् । तथाच तत्पक्षकतत्साध्यकत्वनिवेशे प्रयोजनाभाव इति ध्येयम् ।

चन्द्रनारायणभट्टाचार्यास्तु पर्वतो वन्हिमान् धूमादित्यादौ काञ्चनमयत्वावच्छेदेन वन्ह्यभाववद्वृत्तित्वदोषतापत्तिः । वन्हिव्याप्यकाञ्चनमयधूमवान् पर्वत इति ज्ञानस्यापि प्रकृतपक्षसाध्यकानुमितिजनकतया तादृशकार्यतानिरूपितकारणतावच्छेदकं [illegible]प्तित्वावच्छिन्नप्रकारतानिरूपितकाञ्चनमयत्वावच्छिन्नविषयित्वं

तरसम्बन्धेन कार्यताविशिष्टत्वाभावात्, पक्षसाध्यविषयतायाश्च प्रतिबध्यतावच्छेदकत्वस्याऽऽवश्यकत्वेन चाऽनुमितिविरोधिज्ञानविषयबाधाऽव्याप्तेः(१)।

एतेन परामर्शजन्यतावच्छेदककोटिप्रविष्टविषयत्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनैव सर्वदोषवारणसम्भव इत्युक्तिरपि निरस्ता। यत्पक्षकयत्साध्यकस्थले एकेनैव लिङ्गेनाऽनुमितिः, तत्र प्रयोजनाभावेन परामर्शाऽव्यवहितोत्तरत्वस्यापि कार्यतावच्छेदककोटावनिवेशेन व्यभिचारादावव्याप्तेश्च।

ननु प्रकृतानुमितितत्कारणान्यतरविरोधित्वमेव दोषलक्षणमस्तु इति चेन्न।

पर्वतो वह्निमान् धूमादित्यादौ समूहालम्बनानुमितिमादायोक्तातिव्याप्तितादवस्थ्यात्। तादृशाऽन्यतरत्वव्यापकप्रतिबध्यतानिवेशे तु पक्षाऽप्रसिद्ध्यादावुभयाविरोधिन्येव लक्षणसमन्वयादिति ध्येयम्।

ननु तादृशानुमितिनिष्ठकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतावच्छेदकविषयताविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वमित्युक्तावेव समूहालम्बनानुमितिमादायोदासीनेऽतिव्याप्तिवारणसम्भवे परकल्पानुसरणं व्यर्थम्, वै० स्वाश्रयग्रहत्वव्यापकत्वसम्बन्धेन। अनुमितिः परामर्शकार्येति साक्षात्कारविषयत्वस्याऽनुमितौ सत्त्वेन तद्ग्रहत्वव्यापकत्वस्य बाधनिश्चयप्रतिबध्यतायां सत्त्वेन बाधादौ लक्षणसमन्वयः। एवं तादृशविषयताश्रयत्वस्य परामर्शे सत्त्वेन व्यभिचारादौ लक्षणसमन्वयः, सम्बन्धघटकव्यापकत्वनिवेशाच्चोक्तसमूहालम्बनानुमितिमादायाऽतिव्याप्तिरिति चेन्न।

वन्हिव्याप्यधूमवद्वान् पर्वत इत्येकत्र द्वयमितिरीत्या "परामर्शकार्या तादृशाऽनुमितिरिति" साक्षात्कारस्यापि जन्यतया तथाविधविषयताश्रयग्रहमादायोदासीनेऽतिव्याप्त्यापत्तेरिति ध्येयम्।

यत्तु प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वावच्छिन्नकार्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतावद्विषयत्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनैवोक्तातिव्याप्तिवारणसम्भवे परकल्पानुसरणं निर्बीजम्। कार्यतासाक्षात्कारं प्रति अनुमितिसाक्षात्कारस्य

---

तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तत्र सत्त्वात्। एवं वन्हिव्याप्यधूमवत्पर्वतवान्देश इति ज्ञानीयतादृशजनकतावच्छेदकविषयतामादाय वन्हिव्याप्यधूमवत्पर्वताभाववद्देशेऽतिव्याप्तिश्चेत्यतः समूहालम्बनानुमितिपर्यन्तानुसरणम्। एतेनोक्तव्यभिचारवारणाय आलोकादिपरामर्शकालीनत्वं तत्तदप्रामाण्यज्ञानाभावकूटे "जनकतावच्छेदककोटौ" निवेशनीयम्, तावताऽपि तत्तत्परामर्शाकालीनधूमादिविषयकपरामर्शधर्मिकानन्ताऽप्रामाण्यज्ञानाभावादेरनिवेशेन लाघवादिति निरस्तमिति प्राहुः।

(१) धूमवान् वन्हेरित्यत्र धूमत्वनिष्ठवन्हिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारेऽव्याप्तिरपि बोध्या वन्हिव्यापकधूमसमानाधिकरणवन्हिमान्पर्वत इति ज्ञान वन्ह्यधिकरणत्वांशे भ्रमात्मकं न जातम्, तत्र वन्हिव्यापकत्वविषयतानिरूपितधूमविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितवन्हिविषयताशालिनिश्चयत्वेन तद्ज्ञानस्य हेतुत्वम्, न तु "व्यापकत्वविषयतायाः" वन्हिविषयतानिरूपिताधिकरणविषयतानिरूपितेत्यादिक्रमेण, तादृशपरामर्शीयविषयतायां स्वनिरूपितकारणतानवच्छेदकीभूतवन्ह्यधिकरणविषयतायाः अभाववद् यद् ज्ञानं तदीयत्वाभावेन निरुक्तान्यतरसम्बन्धेन कार्यताविशिष्टत्वाभावात्।

व्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः । एवं च समूहालम्बनानुमितेर्व्याप्त्यादिविषयकतया व्यभिचारादिज्ञानप्रतिबध्यत्वान्न व्यभिचाराद्यसङ्ग्रहः । दर्शितसमूहालम्बनानुमितिप्रतिबन्धकतामादायाऽतिप्रसङ्गवारणाय सामान्यपदम् । तथाच तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं पर्यवसितार्थः । एवं च साध्यतावच्छेदकावच्छिन्नादिप्रकारकानुमि-

तत्पक्षविषयतानिरूपितसाध्यविषयताकानुमितिविषयताशालिसाक्षात्कारत्वेन कारणतया तादृशसाक्षात्कारस्य विषयताविषयकत्वेन विषयतानिष्ठविषयताया अपि जनकतावच्छेदकतया तादृशजनकतावच्छेदकीभूतविषयतावद्विषयतावच्छिन्नत्वं बाधनिश्चयप्रतिबध्यतायामक्षतमेव । एवं तादृशकार्यतासाक्षात्कारं प्रति निरूप्यनिरूपकभावापन्नविषयताशालिपरामर्शनिष्ठविषयताशालिसाक्षात्कारत्वेन कारणतया उक्तरीत्या तादृशजनकतावच्छेदकीभूतविषयतावद्विषयत्वावच्छिन्नत्वस्य व्यभिचारनिश्चयप्रतिबध्यतायामक्षततया व्यभिचारादावपि लक्षणसमन्वयः । उक्तसमूहालम्बनानुमितिमादायाऽपि नातिप्रसङ्गः, उदासीनविषयतायाः तादृशजनकतावच्छेदकत्वाभावादिति । तन्न । तथाविधसाक्षात्कारत्वावच्छिन्नं प्रति अनुमित्यात्मकसम्बन्धिव्यक्तिसाक्षात्कारत्वेन परामर्शात्मकसम्बन्धिव्यक्तिसाक्षात्कारत्वेन च हेतुतया अनुमितिविषयतायाः परामर्शविषयतायाश्च जनकतावच्छेदकत्वाभावात्तादृशविषयतावद्विषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वाभावाद्बाधादावव्याप्तितादवस्थ्यात् ।

किञ्चाऽनुमित्यादिविषयतायाः तादृशसाक्षात्कारजनकतावच्छेदकविषयतावत्त्वेऽपि एकत्र द्वयमितिरीत्या प्रागुक्तज्ञानमादाय घटाभाववत्पर्वतेऽतिव्याप्तितादवस्थ्यात् । न च तथाविधसाक्षात्कारजनकतावच्छेदकाविषयत्वाभाववद्विषयताशून्यज्ञानीयप्रतिबध्यतानिवेशे न कोपि दोष इति वाच्यम् । एवमपि परामर्शादिविषयतात्वेन घटविषयत्वावगाहिनो निरुक्तसम्बन्धिद्वयसाक्षात्कारस्यापि तथाविधकार्यतासाक्षात्कारजनकतया घटादिविषयताया अपि तादृशजनकतावच्छेदकविषयतावत्त्वेन घटाभाववत्पर्वतादावतिव्याप्तेरिति ध्येयम् ।

**तद्व्याप्तिविशिष्टेति** । प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टेत्यर्थः । **एवं च**—अनुमितिपदस्याऽनुमितिपरामर्शोभयपरत्वे चेत्यर्थः । **समूहालम्बनानुमितेः**—ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेति समूहालम्बनानुमितेरित्यर्थः । सामान्यपदस्य फलमाह—**दर्शितसमूहालम्बनानुमितीति** । पर्वतो वह्निमान् ह्रदश्च तथेति समूहालम्बनानुमितीत्यर्थः । **तथाच**—सामान्यपदस्य व्यापकत्वार्थकत्वे च । **पर्यवसितार्थ इति** । प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि, अथ च प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि यथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति यावत् । **एवं च**—व्यापकत्वार्थकसामान्यपदनिवेशे च । **नातिप्रसङ्ग इति** । अनुमितित्वव्यापकप्रतिबध्यताविरहादिति भावः । तादृशानुमितित्वस्य पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितावपि सत्त्वेन तत्र प्रतिबध्यताविरहात् । अथ किं व्यापकत्वनिवेशेन, हेतुसाध्यभेदेन हे-

तिसामान्यान्तर्गतायां पर्वतो वन्हिमान् वन्हिव्याप्यधूमवांश्चेत्याद्यनुमितौ ह्रदो न वन्हिमानित्यादिनिश्चयस्याऽप्रतिबन्धकत्वान्नातिप्रसङ्गः ।

बाधसत्प्रतिपक्षस्वरूपासिद्धिआश्रयासिद्धिषु अव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः । द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ तथाविधबाधनिश्चयस्याऽप्रतिबन्धकत्वात्तद्दोषतादवस्थ्यमतः पक्षतावच्छेदकावच्छिन्नत्वोपादानम् ।

---

त्वाभासलक्षणभेदात् यां काञ्चिदितरपदार्थाऽविषयकनिरुक्तसमूहालम्बनानुमितिव्यक्तिमादाय तद्व्यक्तिनिष्ठप्रतिबध्यतेत्यादिविवक्षणेनैव निर्दोषत्वसम्भवादिति चेन्न ।

यत्र ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्यनुमितिर्नियमतो घटवद्भूतलविषयिकैव भवति तत्र तद्व्यक्तिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानाविषये घटाभाववद्भूतलेऽतिव्याप्त्यापत्तेः, व्यापकतानिवेशे च तादृशप्रतिबध्यता न तादृशानुमितित्वव्यापिकेति न दोष इति ध्येयम् ।

**अव्याप्तिवारणायेति** । तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वानुपादाने साध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतेत्यादेर्लक्षणत्वे वह्निप्रकारकानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमानित्याद्यनुमितौ वन्ह्यभाववान् ह्रद इति बाधनिश्चयस्याऽप्रतिबन्धकतया तदीयप्रतिबध्यतायाः वह्निसाध्यकानुमितित्वाऽव्यापकत्वाद् बाधेऽव्याप्तिः, तदुपादाने तु ह्रदपक्षकवह्निसाध्यकानुमितित्वव्यापकत्वस्य प्रतिबध्यतायां सत्त्वान्नाव्याप्तिः, एवमेव सत्प्रतिपक्षस्वरूपासिद्धिआश्रयासिद्धिषु बोध्यम् । **द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ**—द्रव्यं वह्निमदित्यनुमितौ । **तथाविधबाधनिश्चयस्य**—वन्ह्यभाववान् ह्रद इति बाधनिश्चयस्येत्यर्थः । **अप्रतिबन्धकत्वादिति** । ह्रदविशेष्यकवह्निप्रकारकानुमितिसामान्यान्तर्गतायां द्रव्यं वह्निमदित्याद्यनुमितौ अप्रतिबन्धकत्वादित्यर्थः । **तद्दोषतादवस्थ्यमिति** । बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिषु अव्याप्तितादवस्थ्यमित्यर्थः । **पक्षतावच्छेदकावच्छिन्नत्वोपादानमिति** । तदुपादाने तु द्रव्यविशेष्यकानुमितेर्ह्रदत्वावच्छिन्नपक्षकत्वविरहान्न साऽनुमितिसामान्यान्तर्गतेति नाव्याप्तिरिति ध्येयम् ।

ननु पक्षविशेष्यकत्वाऽनिवेशे वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, वह्निव्यापकीभूताभावप्रतियोगि जलमितिज्ञानस्य जलवान् ह्रद इति निश्चयविशिष्टनिश्चयत्वेन ह्रदो वह्निमानित्यनुमितिं प्रत्येव प्रतिबन्धकतया तत्प्रतिबध्यताया वह्निप्रकारकानुमितित्वाव्यापकत्वादिति सा कथमुपेक्षितेति चेन्न ।

प्रकृतानुमितित्वव्यापकत्वं प्रतिबध्यतायां न स्वरूपसम्बन्धेन असाधारण्याव्याप्तिप्रसङ्गात्, किन्तु स्वनिरूपकप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतात्वसम्बन्धेन, एवं च पक्षविशेष्यकत्वाऽनिवेशेऽपि असाधारण्ये नाव्याप्तिः, स्वं॰ प्रतिबध्यता तन्निरूपिता या प्रतिबन्धकता जलवान् ह्रदः इति निश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगि जलमित्याकारकाऽसाधारण्यविषयकनिश्चयनिष्ठा प्रतिबन्धकता तदवच्छेदकीभूता या वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयिता तदवच्छिन्ना या प्रतिबन्धकता [ सा

यथा जलवान् ह्रद इति निश्चयकालीनाऽसाधारण्यविषयकनिश्चयनिष्ठा तथा जलवान् घटः जलवान् पटः जलवान् पर्वतः इत्यादिनिश्चयकालीनाऽसाधारण्यविषयकनिश्चयनिष्ठाऽपि ] तन्निरूपितप्रतिबध्यतायाः पर्वतघटादिधर्मिकवन्ह्यनुमितिषु सर्वत्र सत्त्वेनाऽसाधारण्यविषय- निश्चयीयप्रतिबध्यतायाः वह्निप्रकारकाऽनुमितिसामान्यान्तर्गतत्वेन वह्निमान् घटो वह्निमा- नित्याद्यनुमितित्वव्यापकत्वात् वह्न्यभाववद्घटादिनिश्चयप्रतिबध्यतायाः घटो वह्निमा- नित्याद्यनुमितिमात्रवृत्तित्वेनाऽव्यापकत्वात् न सामान्याऽव्याप्तिसङ्गतिः(१) । न चैवं वह्निव्यापकीभूता-

---

(१) यद्यपि वन्ह्यभाववान् वन्ह्यभाववद्ह्रदवान् वन्ह्यभाववद् ह्रदवान् "ह्रदः "घटः पटः एव रीत्या बाधादावपि नाव्याप्तिः", तथाप्युक्तरीत्या जलवद्ह्रदादावतिव्याप्तिः स्यात्तदुद्धारणाय सम्बन्धघटकीभूततादृशवि- षयित्वावच्छिन्नप्रतिबन्धकतायां असाधारण्यविषयित्वानवच्छिन्नत्व ज्ञानवैशिष्ट्यावच्छिन्नत्वोभयाभाववत्त्वं निवेश्यमिति नासङ्गतिः ।

तथाच स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसि- द्धाभाववदवच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य संसर्गत्वमित्यर्थः । एवं च वन्हिव्यापकी- भूताभावनिरूपितत्वाभाववत्प्रतियोगिकमिति बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकी- भूता या वन्हिव्यापकीभूताभावनिरूपितप्रतियोगित्वमितिनिश्चयीया तादृशप्रतियोगित्वविषयता "विशेष्यता रूपा" तत्र वन्हिव्यापकीभूताभावप्रतियोगी धूम इतिनिश्चयीयधूमत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतात्मक- तादृशप्रतियोगित्वविषयतायां वर्त्तमाना या वन्हिमत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छे- दकता तद्भेदसत्त्वेन तादृशविषयतात्वव्यापकावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः पर्वतो वन्हि- मानित्याद्यनुमितावसत्त्वेनाऽतिव्याप्तिविरहात् । असाधारण्यनिश्चयप्रतिबन्धकतावच्छेदकविषयतासामान्यस्य घटपटादिपक्षकानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतया तत्संग्रहः ।

न च ह्रदो वन्हिमान् जलादित्यादौ जलाभाववान् वन्हिमान् ह्रदो वन्हिव्याप्यजलवानित्यनुमितेरपि ल- क्षणघटकतया तत्र चाऽसाधारण्यनिश्चयप्रतिबध्यत्वं नास्ति तत्र "पक्षतावच्छेदकावच्छिन्नत्वानिवेशे जल- भावावच्छिन्ने हेतुमत्ताज्ञानस्याऽकार्यतया तत्कालीनाऽसाधारण्यनिश्चयस्याऽप्रतिबन्धकतया कथमसाधा- रण्यसंग्रह इति वाच्यम् । पक्षतावच्छेदकावच्छिन्नत्वानिवेशे किञ्चिद्धर्मविशिष्टानुमितित्वव्यापकत्वस्य प्रति- बध्यतायां विवक्षणीयत्वात् । वै० स्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारकत्वस्वावच्छिन्नविशेष्यतानिरूपि- तसाध्यव्याप्यहेतुप्रकारकत्वोभयसम्बन्धेन । जलाभाववान् वन्हिमान् ह्रदो वन्हिव्याप्यजलवानित्यनुमितिर्न जलाभावरूपधर्मविशिष्टा न वा ह्रदत्वविशिष्टा भवति, "प्रथमे द्वितीयसम्बन्धाभावात्, द्वितीये प्रथमसम्बन्धा- भावात्, भवति च ह्रदो वन्हिमान् वन्हिव्याप्यजलवानित्यनुमितिः ह्रदत्वविशिष्टेति दोषानवकाशात् । अनु- मितित्वव्यापकता च स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभाववदवच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन । स्वं प्रतिबध्यता । एता- दृशपरम्परायाः सम्बन्धत्वाऽनङ्गीकारे तु यत्किञ्चित्प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितासामा- न्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावान्नेति प्रतीतिसिद्धो यः प्रकृतानुमितिनिष्ठो भेदः तन्निरूपिताऽ- धिकरणनिष्ठप्रतियोगितानिरूपितप्रतिबध्यतानिष्ठावच्छेदकतानिरूपितानिरूपितत्वसम्बन्धावच्छिन्नप्रतिबन्धक- त्वनिष्ठावच्छेदकतानिरूपितानिरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपिताऽभाव- निष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकता- निरूपितप्रतियोगित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितवृ- त्तित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठाऽवच्छेदकतानिष्ठावच्छेदकतानिरूपिताऽवच्छेदक- त्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतिबन्धकत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितनिरूपितत्व- निष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतिबध्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकता निरूपितानिष्ठत्वसम्बन्धा- वच्छिन्नावच्छेदकत्वाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थेत्यादि । अत्रेतरवारकपर्याप्तिः स्वयमूह्या ।

भावप्रतियोगित्वेऽतिव्याप्तिः, वह्निव्यापकीभूताभावनिरूपितत्वाभाववत्प्रतियोगित्वमित्याकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायाः स्वनिरूपितप्रतिबन्धकतावच्छेदक "घटो धूमवान् पटो धूमवानितिनिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगी धूम इति ज्ञानीय" वह्निव्यापकीभूताभावप्रतियोगित्वविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः पर्वतघटादिधर्मिकवन्ह्यनुमितिषु सर्वत्र सत्त्वेनोक्तसमूहालम्बनानुमितित्वव्यापकत्वादिति वाच्यम्। तादृशविषयितासामान्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्यैव विवक्षितत्वात्।

वस्तुतस्तु यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वअसाधारणधारण्यविषयिताशून्यत्वोभयाभावः तद्रूपवत्त्वं हेत्वाभासत्वमिति वक्ष्यति, तथाच नासाधारण्येऽव्याप्तिरिति ध्येयम्।

ननु तथापि वह्निव्याप्याभाववद्ह्रदरूपव्याप्यत्वाऽसिद्धावव्याप्तिसम्भवे तदनुक्तौ न्यूनताऽस्त्येवेति चेन्न।

असिद्धिपदेन व्याप्यत्वासिद्धेरपि परिग्रहात्।

मथुरानाथेन वह्निव्याप्याभाववद्ह्रदस्य व्याप्यत्वासिद्ध्यनात्मकत्वमुक्तम्, तथाच तस्याऽलक्ष्यत्वान्नोक्तमिति वा।

---

अपरे तु पक्षतावच्छेदकावच्छिन्नत्वानिवेशे यत्किञ्चिद्धर्मिविशिष्टानुमितित्वव्यापकत्वं प्रतिबन्धकतायामेव निवेश्यम्, तथाच तादृशप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणार्थः। अनुमितौ धर्म वै० स्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वस्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारताकत्वोभयसम्बन्धेन। व्यापकता च स्वावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन। एवं चाऽसाधारण्यविषयकयथार्थज्ञानीयप्रतिबन्धकतायां वह्निव्यापकीभूताभावप्रतियोगिजलं जलवांश्च ह्रदः, तादृशप्रतियोगिजलं जलवांश्च घट इत्यादिनानानिश्चयस्य प्रत्येकं ह्रदो वह्निमान्, घटो वह्निमानित्यादिबुद्धिं प्रति प्रतिबन्धकतया तत्र सकलप्रतिबन्धकतावच्छेदककुक्षौ वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयितायाः निविष्टत्वेन "समानप्रकारकज्ञानीयविषयितायाः ऐक्येन" असाधारण्ये लक्षणसमन्वयः, धर्मिविशिष्टानुमितित्वव्यापिका या "जलवान् ह्रदः घटः, पटः, इत्यादिनिश्चयकालीन" वह्निव्यापकीभूताभावप्रतियोगिजलमिति निश्चयनिष्ठा प्रतिबन्धकता, तस्यामनुमितित्वव्यापकत्वमपि, एवं प्रतिबन्धकता, स्वावच्छेदकीभूता या वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयिता तदवच्छिन्ना या "जलवान् घटः पटः ह्रदः इति निश्चयकालीन" वह्निव्यापकीभूताभावप्रतियोगिजलमितिनिश्चयीयप्रतिबन्धकता तन्निरूपितप्रतिबध्यतायाः सकलानुमितिषु सत्त्वात्।

न च तथापि वन्ह्यभाववद्ह्रदवानितिज्ञानसाधारणह्रदो वह्न्यभाववानितिज्ञानीया या प्रतिबन्धकता तदवच्छेदकवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वावच्छिन्ना या वह्न्यभाववद्ह्रदवान् वह्निसामान्याभाववान् वह्न्यभाववद्ह्रदवान् ह्रदः, घटः पट इत्यादिनानानिश्चयनिष्ठप्रतिबन्धकता तन्निरूपितप्रतिबध्यतायाः सकलानुमितिषु सत्त्वेन व्यापकत्वमक्षतमेवेति कुतो बाधेऽव्याप्तिरिति वाच्यम्। तुल्ययुक्त्या वह्न्यभाववद्घटादावतिव्याप्तिः, वह्न्यभाववद्घटवान् वह्निसामान्याभाववान् वह्न्यभाववद्घटवान् ह्रदः घटः पट इति नानानिश्चयनिष्ठप्रतिबन्धकता तन्निरूपितप्रतिबध्यत्वस्य तादृशानुमितिषु सत्त्वेन वह्न्यभाववान् घट इति निश्चयीयप्रतिबन्धकतायामपि व्यापकत्वसत्त्वात्, तद्दोषवारणाय स्वावच्छेदकविषयित्वावच्छिन्नत्वपदेन स्वावच्छेदकीभूतविषयिताशून्यज्ञानवृत्तिविषयितयावच्छिन्नत्वस्य विवक्षितत्वात्, एवं च वह्न्यभाववद्ह्रदवान् वह्न्यभाववान् इत्यादिनिश्चयीयप्रतिबन्धकतायास्तादृशत्वाभावाददोषः।

अथवा स्वावच्छेदकीभूतविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तित्वस्य प्रतिबन्धकतायां विवक्षणीयत्वान्न दोष इत्याहुः।

ननु तस्याऽलक्ष्यत्वे ह्रदो वह्निमान् धूमादित्यादौ व्याप्यत्वासिद्ध्यात्मकवह्निव्याप्याभाववद्ह्रदेऽतिव्याप्तिः, स्वमते वह्निव्याप्यधूमवान् ह्रदो वह्निमानित्यनुमितेरेव तथात्वात्, तत्प्रतिबध्यतानिरूपित "व्याप्याभाववान् ह्रदो वह्निव्याप्याभाववानिति निश्चयनिष्ठ" प्रतिबन्धकताया अपि तथात्वात् ।

अत्र गुरुचरणाः—साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्यनेन साध्यव्याप्यो हेतुः—हेतुमान्पक्षः साध्यवांश्चेति त्रिखण्डाकारानुमितेर्विलक्षणात् नातिव्याप्तिः । पक्षविषयतायाः तादृशधूमविषयतानिरूपितत्वाभावात्, आद्यादौ तु पक्षविषयतायाः साध्यविषयतानिरूपितत्वात् लक्षणसमन्वयः ।

तन्निवेशस्तु पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नजन्यताविशिष्टा या प्रतिबध्यतेत्यादि । वै० स्वविशिष्टग्रहत्वव्यापकत्वसम्बन्धेन, ग्रहे स्ववै० स्वावच्छेदकीभूतमुख्यविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकतास्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यताकत्व स्वावच्छेदकीभूतविशेष्यतावच्छेदकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व स्वावच्छेदकविशेष्यतावच्छेदकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुप्रकारताकत्वैतत्त्रितयसम्बन्धेनेति प्राहुः ।

ननु समूहालम्बनानुमितौ विशेष्यताद्वयी, एका साध्यप्रकारतानिरूपिता अपरा च साध्यव्याप्यहेतुप्रकारतानिरूपिता, तत्र प्रथमविशेष्यतायां पक्षतावच्छेदकावच्छिन्नत्वानुपादाने स्वरूपाऽसिद्ध्याश्रयासिद्ध्योरव्याप्तिदानं न सङ्गच्छते, द्वितीयदले पक्षतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात्, किन्तु बाधसत्प्रतिपक्षयोरव्याप्तिदानस्यैवोचितत्वादिति चेन्न ।

पक्षतावच्छेदकस्य सकृन्निवेशाभिप्रायेण तत्राऽव्याप्त्यभिधानात् ।

तन्निवेशप्रकारस्तु—पक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादि । अनुमितौ पक्षतावच्छेदकवै० स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व स्वावच्छिन्नविशेष्यतानिरूपितसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभयसम्बन्धेन । अत्र तत्तद्व्याप्तीनां विशिष्य निवेशः कार्यः, तथाहि—स्वावच्छिन्नविशेष्यतानिरूपितसाध्याभाववदवृत्तित्वविशिष्टहेतुप्रकारताकत्व—स्वावच्छिन्नविशेष्यतानिरूपितसाध्यवदन्यावृत्तित्वविशिष्टहेतुप्रकारताकत्व—स्वावच्छिन्नविशेष्यतानिरूपितसाध्याभावव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुप्रकारताकत्व—स्वावच्छिन्नविशेष्यतानिरूपितहेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुप्रकारताकत्वेत्यादिव्याप्तिसमसंख्याकतत्तत्सम्बन्धकूटेन । एवं च पक्षतावच्छेदकस्याऽनिवेशे यत्किञ्चिद्धर्मविशिष्टत्वमेव तादृशसम्बन्धकूटेन विवक्षणीयम्, तथाच स्वरूपासिद्ध्याश्रयाऽसिद्ध्योरपि अव्याप्तिः सम्भवत्येवेति ।

ननु यत्किञ्चिद्धर्मविशिष्टत्वं प्रतिबध्यतायामेव निवेश्यताम्, तावतैव ह्रदत्वादिधर्मविशिष्टत्वस्य प्रतिबध्यतायां सत्त्वान्नाव्याप्तिः । वै० स्वविशिष्टानुमितित्वव्यापकत्वसम्बन्धेन । सम्बन्धघटकस्ववैशिष्ट्यं चानुमितौ तादृशसम्बन्धकूटेनेति चेन्न ।

घटत्वादिरूपयत्किञ्चिद्धर्मविशिष्टत्वाद्ध्रदत्वाभाववद्घटादावतिव्याप्त्यापत्तेरिति ध्येयम् ।

न चोक्तपरम्परायाः संसर्गत्वे मानाभावेन पक्षतावच्छेदकस्य सन्निवेशाऽयोग इति वाच्यम् । प्रकारमुद्रया तन्निवेशसम्भवात् । तथथा पक्षतावच्छेदकस्याऽवच्छिन्नत्वसम्बन्धेन विशेष्यतासमूहेषु "बहुष्वेकमिति रीत्या"वगाही, पुनस्तद्विशेष्यतायाः साध्यप्रकारतायां साध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुप्रकारतायां च प्रत्येकमवगाही, पुनस्तत्तत्प्रकारतायाः "एकत्र बहूनि इति रीत्याऽनुमित्यवगाही अनुमितेश्च प्रतिबध्यतायां व्यापकतारूपाऽभावावगाही योऽभावः "पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वसाध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुप्रकारकत्ववदनुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धः" तदीयप्रतियोगितानिरूपितपरम्परीय(१)पक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती साध्यतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठा "निरूपकत्वसम्बन्धावच्छिन्ना"वच्छेदकताभिन्ना(२) सती, साध्यनिरूपिततत्त(३)-

---

(१) परम्परा च तादृशाभावीयाऽवच्छेदकतानिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽनुमितिनिष्ठावच्छेदकतानिरूपिता या साध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकता अथ च साध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकता तन्निरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नपक्षतावच्छेदकनिष्ठावच्छेदकतारूपा ।

(२) अवच्छेदकताभिन्नेत्यस्य याऽवच्छेदकतेत्यनेनाऽन्वयः। तदनिरूपकाऽनुमितिनिष्ठावच्छेदकतानिरूपिता या परम्परया पक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तद्भिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती "साध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतु"प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपक"साध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतु"प्रकारतानिष्ठावच्छेदकता तद्भिन्ना सतीत्येवंरूपेण निवेशो बोध्यः । परम्परा चाऽत्राऽनुमितिनिष्ठावच्छेदकतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितत्वरूपा ।

(३) साध्याभाववदवृत्तित्वादिरूपव्याप्तीनां निरूप्यनिरूपकभावापन्नविषयतावत्त्वेन निवेशो बोध्यः, तेन व्यभिचारिणि अखण्डव्याप्यप्रसिद्धावपि न क्षतिः । साध्याभाववदवृत्तित्वरूपव्याप्तेर्निवेशप्रकारश्च प्रतियोगितासम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्ना सती स्वरूपसम्बन्धावच्छिन्नाऽभावत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकाऽभावनिष्ठावच्छेदकताभिन्ना सती स्वरूपसम्बन्धावच्छिन्नाऽधिकरणत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकनिरूपितत्वसम्बन्धावच्छिन्नाऽधिकरणनिष्ठावच्छेदकताभिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगित्वसम्बन्धावच्छिन्नवृत्तित्वनिष्ठावच्छेदकताभिन्ना सती अभावत्वनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकाऽभावनिष्ठाऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती अवच्छिन्नत्वसम्बन्धावच्छिन्नहेतुतावच्छेदकनिष्ठावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठावच्छेदकताभिन्ना सतीत्यादि ।

तादृशप्रकारतानिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽनुमितिनिष्ठावच्छेदकता पुनः तन्निरूपिता या परम्परया पक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपकविशेष्यत्वनिष्ठावच्छेदकतानिरूपिका या साध्यनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाऽधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठप्रतियोगि-

व्याप्तिविशिष्टहेतुप्रकारतानिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकानुमितिनिष्ठावच्छेदकताभिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकवृत्तित्वनिष्ठावच्छेदकताभिन्ना सती भेदत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकभेदनिष्ठावच्छेदकताभिन्ना सती प्रतियोगितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगित्वनिष्ठावच्छेदकताभिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपक "अवच्छेदकत्वनिष्ठ" प्रतियोगितेत्यादिरीत्या इतरवारकपर्याप्तिं निवेशयन्, अथ च तादृशाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परी(१)यपक्षतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविशेष्यत्वनिष्ठावच्छेदकतानिरूपकसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपिका, अथ च साध्यनिरूपिततत्तद्व्याप्ति(२)विशिष्टहेतुप्रकारतानिष्ठावच्छेदकतानिरूपिका याऽनुमितिनिष्ठावच्छेदकता तन्निरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्ना या प्रतियोगिता" ईदृशरीत्या न्यूनवारकपर्याप्तिं निवेश्य तादृशप्रतियोगिताकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमिति समुदितलक्षणस्य प्रकारमुद्रया निवेश इति ध्येयम् ।

तथाच पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वसाध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुप्रकारताकत्ववदनुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽनुमितिनिष्ठावच्छेदकतानिरूपिता या साध्यनिरूपिततत्तद्व्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकता, अथ च साध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकता तन्निरूपितविशेष्यत्वनिष्ठावच्छेदक-

---

त्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकाऽवच्छिन्नत्वसम्बन्धावच्छिन्नाभावनिष्ठावच्छेदकतानिरूपकहेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठावच्छेदकता तन्निरूपिका याऽनुमितिनिष्ठावच्छेदकतेत्यादिरीत्या न्यूनवारकपर्याप्तिनिवेशः ।

( १ ) अवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽनुमितिनिष्ठावच्छेदकतानिरूपित ( हेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपित ) साध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितत्वरूपा परम्परा बोध्या ।

( २ ) तत्तद्व्याप्तिपदेन सर्वासां व्याप्तीनां ग्रहणम् । तन्निवेशप्रकारश्च—तादृशानुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयपक्षतावच्छेदकनिष्ठावच्छेदकतामागत्य पुनः इतरवारकपर्याप्तिं निवेशयन् अनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा पुनः पक्षतावच्छेदकनिष्ठावच्छेदकतापर्यन्तं प्रत्यागत्य ( प्रत्यागमनप्रकारस्तु पक्षः साध्यवानित्येवांशमादाय न तु पक्षः साध्यव्याप्यहेतुमानित्यंशमादाय, तथासति अनुमितिनिष्ठावच्छेदकतानिरूपितपरम्परीयावच्छेदकतायाः साध्यतावच्छेदके पर्यवसानात्पक्षतावच्छेदकनिष्ठावच्छेदकतायां गमनाऽसम्भवात् ) पुनः अनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा [ सर्वत्र गमनप्रकारस्तु पक्षः साध्यव्याप्यहेतुमानित्यंशमादाय तद्घटकतया प्रातिस्विकरूपेण सर्वासां निवेश इति संक्षेपः ।

तानिरूपिता याऽवच्छिन्नत्वसम्बन्धावच्छिन्नपक्षतावच्छेदकनिष्ठावच्छेदकता तद्भिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती साध्यतावच्छेदकनिष्ठावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽनुमितिनिष्ठावच्छेदकता ( इति रीत्याऽनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा ) तन्निरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्ना या पक्षतावच्छेदकनिष्ठावच्छेदकता [ इति रीत्या पक्षतावच्छेदकनिष्ठावच्छेदकतापर्यन्तं पुनरागत्य ] तद्भिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती साध्याभाववदवृत्तित्वरूप(१)व्याप्तिनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती हेतुतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽनुमितिनिष्ठावच्छेदकता [ इति रीत्याऽनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा ] तन्निरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्ना या पक्षतावच्छेदकनिष्ठावच्छेदकता [इति रीत्या पक्षतावच्छेदकनिष्ठावच्छेदकतापर्यन्तं पुनरागत्य ] तद्भिन्ना सती विशेष्यतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती साध्यवदन्यावृत्तित्वरूप(२) व्याप्तिनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती हेतुतावच्छेदकनिष्ठावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽनुमितिनिष्ठावच्छेदकता [ इति रीत्या अनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा पुनश्चोक्तरीत्या पक्षतावच्छेदकनिष्ठावच्छेदकतापर्यन्तमागत्य पुनश्चाऽनुमितिनिष्ठावच्छेदकतापर्यन्तगमने साध्याभावव्यापकीभूताभावप्रतियोगित्वरूप(३)व्यतिरेकव्याप्तिनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतां निवेश्याऽनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा पुनश्च पक्षतावच्छेदकनिष्ठावच्छेदकतापर्यन्तमागत्य अनुमितिनिष्ठावच्छेदकतापर्यन्तगमने हेतुव्या-

---

( १ ) अस्या व्याप्तेर्निवेशप्रकारो दर्शितः ।

( २ ) निवेशप्रकारस्तु अवच्छिन्नत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकसाध्यनिष्ठावच्छेदकतानिरूपकधर्मिनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकाऽधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सतीत्यादिरीत्या ।

( ३ ) प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकतानिरूपकाऽभावनिष्ठावच्छेदकतानिरूपकाऽधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाऽभावनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सतीत्यादि रीत्या निवेशः ।

**अवच्छेदकत्वं च तत्पर्याप्त्यधिकरणत्वम्, तेनाऽतेजस्वी पर्वतो वह्निमानित्यादौ विशिष्टपर्वतत्वादिमति वह्न्याद्यभावरूपबाधस्य, काञ्चनमयपर्वतो वह्निमानित्यादौ चाऽऽश्रयाऽसिद्धेः शुद्धपर्वतत्वावच्छिन्नपक्षकाऽनुमित्यविरोधित्वेऽपि नाऽसंग्रहः। एवमग्रेऽपि बोध्यम्।**

---

पक्षसाध्यसामानाधिकरण्यरूप(१)व्याप्तिनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतां निवेश्याऽनुमितिनिष्ठावच्छेदकतापर्यन्तं गत्वा तद्भिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकवृत्तित्वनिष्ठेत्याद्युक्तरीत्या लक्षणार्थोऽवसेयः। साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतेत्यादिरीत्या वा पक्षतावच्छेदकस्य सकृन्निवेशो बोध्यः, वै० स्वनिरूपकज्ञानीयस्वत्वनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेनेति।

**तत्पर्याप्त्यधिकरणत्वम्**—अवच्छेदकतापर्याप्त्यधिकरणत्वमित्यर्थः। तथाच पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या विशेष्यता इत्यर्थः। विशेष्यतायां रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। न्यूनवारकपर्याप्तिनिवेशफलमाह **तेनेति। अतेजस्वीति**(२) तेजःसामान्याभावविशिष्टेत्यर्थः। **विशिष्टपर्वतत्वादिमतीति**। अतेजस्वित्वविशिष्टपर्वते इत्यर्थः। **वह्न्याद्यभावरूपबाधस्येति**। वह्न्यभाववदतेजस्विपर्वतरूपबाधस्येत्यर्थः। स्वरूपाऽसिद्धेरप्युपलक्षकम्, व्यापकाभाववति व्याप्याभावाऽवश्यंभावात्, अस्य शुद्धपर्वतत्वावच्छिन्नपक्षकानुमित्यविरोधित्वेऽपीत्यनेनाऽन्वयः। तथाच न्यूनवारकपर्याप्त्यनिवेशे वह्न्यभाववानतेजस्वी पर्वत इति बाधनिश्चयस्य, काञ्चनमयत्वाभाववान्पर्वत इत्याश्रयासिद्धिनिश्चयस्य च पर्वतो वह्निमानित्यनुमित्यविरोधितया तत्प्रतिबध्यतायाः पर्वतपक्षकानुमितिसामान्यान्तर्गतपर्वतो वह्निमानित्यनुमितित्वाऽव्यापकत्वेऽपीत्यर्थः। **नाऽसङ्ग्रहः**—नाव्याप्तिः। न्यूनवारकपर्याप्तिनिवेशे तु शुद्धपर्वतत्वावच्छिन्नपक्षकानुमितेः प्रकृतपक्षकत्वाभावादिति भावः।

ननु अतेजस्वी पर्वतो वह्निमानित्यत्रैवाऽतेजस्वित्वाभाववत्पर्वतरूपाऽऽश्रयासिद्धावव्याप्तिसम्भवे दृष्टान्तरानुसरणं व्यर्थमिति चेन्न।

पर्वतत्वसामानाधिकरण्येन तेजःसामान्याभावस्य पक्षतावच्छेदकत्वे सामानाधिकरण्ये नाऽऽश्रयासिद्धेरदोषत्वात्, अवच्छेदावच्छेदेनाऽऽश्रयासिद्धिनिश्चयस्य तत्र प्रतिबन्धकत्वेऽपि

---

(१) अस्या निवेशस्तु- अवच्छिन्नत्वसम्बन्धावच्छिन्नहेतुतावच्छेदकनिष्ठावच्छेदकतानिरूपकहेतुनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकाऽभावनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकसाध्यतावच्छेदकनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकसाध्यनिष्ठावच्छेदकतानिरूपकाऽधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नेत्यादिरीत्या। सर्वत्रेतरवारकपर्याप्तिनिवेशः स्वयमूह्यः, विस्तरभिया विरम्यते।

(२) तेजस्विपर्वतस्य पक्षत्वे सामानाधिकरण्येन बाधस्य न दोषतासम्भवः। अवच्छेदावच्छेदेन बाधस्याप्रसिद्ध एवेति तन्नोक्तम्।

अवच्छेदावच्छेदेनाऽऽश्रयाऽसिद्ध्यप्रसिद्धिः स्यात्। पर्वतत्वावच्छेदेन तेजःसामान्याभावस्य पक्षतावच्छेदकत्वे तु तद्घटितबाधाऽप्रसिद्धिः स्यादित्यतः स्थलान्तरानुसरणम्। अत्र तु पर्वतत्वावच्छेदेनैव काञ्चनमयत्वस्य पक्षतावच्छेदकता, आश्रयाऽसिद्धिस्तु सामानाधिकरण्येनैवेति नाऽसङ्गतिः।

अथाऽतेजस्विपर्वतो वह्निमानित्यादौ वह्न्यभावव्याप्यवत्तादृशपर्वतरूपसत्प्रतिपक्षेऽव्याप्तिसम्भवे कथं बाधाश्रयासिद्ध्योरेवाऽव्याप्तिर्दत्ता, तत्प्रतिबध्यताया अपि अनुमितित्वाऽव्यापकत्वात्, एवं स्वरूपासिद्धावपीति चेत्।

अत्राहुः—आद्यन्तयोः कीर्तनेन मध्यपतितयोः सत्प्रतिपक्षस्वरूपाऽसिद्ध्योरपि सङ्ग्रहात्।

वस्तुतस्तु बाधपदं सत्प्रतिपक्षादेरप्युपलक्षकम्। न च काञ्चनमयपर्वतो वह्निमानित्यत्रापि दोषदानेन यावन्तो दोषाः सम्भवन्ति ते सर्वे एव समुद्भाव्या इति ज्ञायते, अन्यथा बाधेऽव्याप्तिदानेनैव गतार्थत्वाद् दोषद्वयोद्भावनस्योन्मत्तप्रलपितत्वापत्तेरिति वाच्यम्। विशेषणद्वयस्य सार्थक्याय स्थलद्वयानुधावनस्य कृतत्वात्। तथाहि अतेजस्विपर्वतो वह्निमानित्यत्राऽव्याप्तिदानेन पक्षतावच्छेदकस्य धर्मविधया न्यूनवारकपर्याप्तिनिवेशः सूचितः। काञ्चनमयपर्वतो वह्निमानित्यत्राऽव्याप्तिदानेन पक्षतावच्छेदकताघटकसंसर्गस्य न्यूनवारकपर्याप्तिनिवेशः सूचितः, तत्र पर्वतत्वव्यापककाञ्चनमयत्वप्रतियोगिकस्वरूपस्यैव पक्षतावच्छेदकताघटकसंसर्गता, तस्य न्यूनवारकपर्याप्त्यनिवेशे शुद्धस्वरूपेण काञ्चनमयत्ववत्पर्वतो वह्निमानित्यनुमितेरपि प्राप्ततया तस्याश्चाऽप्रतिबध्यत्वात्, सामानाधिकरण्येनैवाऽऽश्रयसिद्धिसम्भवात्। तथाच विशेषणद्वयस्य प्रयोजनप्रदर्शनार्थं स्थलद्वयमिति ध्येयम्(१)।

---

(१) केचित्तु सत्प्रतिपक्षत्वावच्छेदेनाव्याप्तेरभावात्तदुपेक्षा। अतेजस्विपर्वतनिष्ठतद्व्यक्तित्वव्यापकवन्ह्यभावसमानाधिकरणतद्व्यक्तित्ववत्पर्वतरूपसत्प्रतिपक्षे लक्षणगमनात्, तादृशसत्प्रतिपक्षीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यताया अतेजस्विपर्वतो वन्हिमान्, पर्वतो वन्हिमानितिज्ञानद्वयसाधारणतया तत्र पर्वतत्वस्येतरवारकपर्याप्त्यनिवेशेन तादृशानुमितित्वव्यापकत्वात्। न चाऽतेजस्विपर्वतो वन्हिमान्, पर्वतो वन्हिमानित्यादिसामानाधिकरण्येनाऽनुमितिं प्रति सामानाधिकरण्येन सत्प्रतिपक्षनिश्चयस्याऽप्रतिबन्धकत्वात्, अवच्छेदकावच्छेदेन सत्प्रतिपक्षस्य चाऽप्रसिद्ध्या क्वचिदपि सत्प्रतिपक्षे न लक्षणसमन्वय इति वाच्यम्। जलावच्छेदेन वन्ह्यभावनिश्चयोत्तरं ह्रदत्वसामानाधिकरण्येन जलस्य भानेऽपि ह्रदत्वसामानाधिकरण्येन वन्हिमत्त्वनिश्चयप्रतिबन्धकत्वस्य तर्कग्रन्थे मथुरानाथेनोक्ततया सामानाधिकरण्येन सत्प्रतिपक्षनिश्चयस्यापि तत्सम्भवात्। न च तादृशानुमितित्वस्य केवलमतेजस्वी वन्हिमानित्यनुमितावपि सत्त्वेन तादृशानुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्यैव तादृशसत्प्रतिपक्षेऽव्याप्तिसम्भव इति वाच्यम्। पक्षतावच्छेदकयत्किञ्चिद्धर्मविशिष्टप्रतिबध्यतेत्यादिक्रमेण निवेशे पर्वतत्वरूपयत्किञ्चिद्धर्ममादाय लक्षणसमन्वयसम्भवात्। वै० स्वविशिष्टानुमितित्वव्यापकत्वसम्बन्धेन, संसर्गघटकवै० प्रागुक्तसम्बन्धकूटेन।

न चाऽतेजस्वित्वावच्छेदेन वन्ह्यभाववदतेजस्वीत्यादिबाधेऽतेजस्वित्वरूपपक्षतावच्छेदकमादाय लक्षणसमन्वयाद् बाधत्वावच्छेदेनाऽव्याप्तिविरह इति वाच्यम्। पक्षतावच्छेदकविशिष्टानुमितित्वव्यापकत्वं प्रतिबध्यतायामनिवेश्य प्रतिबन्धकतायामेव निवेश्यते, व्यापकता च स्वावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन, तथाच सत्प्रतिपक्षनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया सत्प्रतिपक्षे लक्षणसमन्वयात्। तथाहि-स्वं प्रतिबन्धकता, तदवच्छेदकीभूता या तद्व्यक्तित्ववान् अतेजस्विपर्वतः, इति निश्चयकालीन "तद्व्यक्तित्वव्यापको वन्ह्यभाव" इत्याकारकनिश्चयीय" तद्व्यक्तित्वव्यापकवन्ह्यभाव-

पक्षतावच्छेदकस्येतरवारकपर्याप्त्यनिवेशे ह्रदो वह्निमानित्यनुमितेरिव जातिमान् वह्निमानित्यनुमितेरपि ह्रदपक्षकवह्निसाध्यकानुमित्यन्तर्गततया तादृशानुमितित्वव्यापकत्वस्य बाधप्रतिबध्यतायामसत्त्वात् वह्न्यभाववद्ह्रदात्मकबाधेऽव्याप्तिः स्यादतस्तदुपात्तम् ।

तथाच पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या विशेष्यता तन्निरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालीत्यर्थः । विशेष्यतायां रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

**एवमग्रेपीति** । पक्षतावच्छेदकतापर्याप्तिवत्साध्यतावच्छेदकहेतुतावच्छेदकत्वादीनामपि पर्याप्तिनिवेश्येत्यर्थः ।

अथ पर्याप्तिनिवेशेऽपि काञ्चनमयपर्वतो वह्निमानित्यादौ काञ्चनमयत्वाभाववत्पर्वतरूपाऽऽश्रयासिद्धावव्याप्तिस्तदवस्थैव, तादृशानुमितित्वस्य पर्वतकाञ्चनमयो वह्निमानित्यनुमितावपि सत्त्वात्, तथाहि—पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं स्वकाञ्चनमयत्वपर्वतत्वगतद्वित्वं तद्वृत्तित्वस्य पर्वतकाञ्चनमय इतिज्ञानीयविशेष्यतायामपि सत्त्वात्, द्वित्वस्याऽविशेषात्, तथाच तादृशानुमितित्वव्यापकत्वस्य प्रतिबध्यतायामसत्त्वात् । न च पक्षत्वं प्रकृतानुमितीयोद्देश्यत्वम्, तच्च प्रकृते काञ्चनमयत्वप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वावच्छिन्नं यत्काञ्चनमयत्वपर्वतत्वोभयधर्मावच्छिन्नं विशेष्यत्वं तद्रूपम्, पर्वतकांचनमयो वह्निमानित्यादौ तु पर्वतत्वप्रकारतानिरूपितकांचनमयत्वावच्छिन्नविशेष्यत्वावच्छिन्नं यत्पर्वतत्वकांचनमयत्वोभयधर्मावच्छिन्नविशेष्यत्वं तद्रूपमुद्देश्यत्वम्, तथाच कांचनमयपर्वतत्वावच्छिन्नोद्देश्यतावच्छेदकगतसमुदायत्वं कांचनमयत्वपर्वतत्वतादृशविशेष्यत्वगतसमुदायत्वमेव पर्वतकांचनमयत्वावच्छिन्नोद्देश्यतावच्छेदकगतसमुदायत्वस्य विभिन्नतया तादृशरूपवृत्तिविशेष्यतापदेन कांचनमयपर्वतो वह्निमानितिज्ञानीयविशेष्यताया एव धारणेन नोक्ताव्याप्तिरिति वाच्यम् । निरूप्यनिरूपकभावयोरिवाऽवच्छेद्यावच्छेदकभावयोरपि स्वरूपसम्बन्धरूपत्वात्, न तु तन्निष्ठावच्छेदकतानिरूपितत्वम्, तथाचोद्देश्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं द्वित्वमेव न तु समुदायत्वम्, तयोश्चाविशेषादिति चेन्न ।

धीभेदेन द्वित्वस्याऽपि भेदात् । धीभेदस्य विषयताभेदकत्वात् । कांचनमयपर्वतः

---

त्वाविषयता तदवच्छिन्ना या प्रतिबन्धकता "सा यथा तद्व्यक्तित्ववान् पर्वत इति निश्चयकालीनतद्व्यक्तित्वव्यापकवन्ह्यभाव इत्याकारक" निश्चयनिष्ठा तथा तद्व्यक्तित्ववान् अतेजस्वी, तद्व्यक्तित्ववान् घटः, तद्व्यक्तित्ववान् पटः, इति निश्चयनिष्ठापि" तन्निरूपितप्रतिबध्यतायाः सर्वत्र "घटपटादिधर्मिकसाध्यविधेयकानुमितिषु सत्त्वेन सत्प्रतिपक्षनिश्चयप्रतिबन्धकतायाः वन्हिप्रकारकानुमितिसामान्यान्तर्गतअतेजस्वी वन्हिमान् घटो वन्हिमानित्याद्यनुमितित्वव्यापकत्वात् । न च बाधनिश्चयस्यापि वन्ह्यभाववद्ह्रदवान् वन्ह्यभाववान् वन्ह्यभाववद्ह्रदवान् ह्रद इति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादायाव्याप्तिविरह इति वाच्यम् । उक्तरीत्या वन्ह्यभाववद्घटादावतिव्याप्तिवारणाय ज्ञानवैशिष्ट्यावच्छिन्नत्वविरोध्यनुमितिजनकताविशिष्टान्यत्वाऽसाधारण्यविषयित्वानवच्छिन्नत्वैतत्त्रितयाऽभावस्य प्रतिबन्धकतायां निवेशात्, जनकतावै० स्वानवच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेन, तथाच बाधेनाऽव्याप्तिविरहः । असाधारण्येऽप्युक्तरीत्या लक्षणसमन्वयसम्भवेन तस्याप्यनुल्लेखः । एवं हेत्वभाववत्पक्षस्य स्वरूपाऽसिद्धित्वे निरुक्तस्थले गगनादेर्हेतुत्वं अवृत्तिगगनादेरेव पक्षान्तर्भावेन स्वरूपासिद्धित्वसम्भवात्तत्र लक्षणगमनं निर्विवादमिति प्राहुरिति संक्षेपः ।

**साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वाऽनिवेशे परामर्शाविरोधितया बाधसत्प्रतिपक्षयोरव्याप्तिः, तत्र साध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेऽपि तद्दोषतादवस्थ्यम्, वह्नित्वावच्छिन्नाभावादिनिश्चयस्य धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद इत्याद्यनुमित्यप्रतिबन्धकत्वात्।**

---

पर्वतकाञ्चनमय इति ज्ञानयोर्वैलक्षण्यं च काञ्चनमयपर्वत इति ज्ञाने पर्वतत्वं धर्मितावच्छेदकीकृत्य काञ्चनमयत्वं भासते, एवं धर्मिपारतन्त्र्येण पर्वतत्वेऽपि सामानाधिकरण्यसम्बन्धेन काञ्चनमयत्वं भासते। पर्वतकाञ्चनमय इति ज्ञाने विपरीतमिति। अत एव सुन्दरपर्वतः पर्वतसुन्दर इति शाब्दधीः, अन्यथोद्देश्यतावच्छेदकगतरूपे विधेयतावच्छेदकगतरूपभेदस्य तन्त्रत्वेन तादृशशाब्दबोधो न स्यात् तादृशरूपयोरैक्यात्। अतएव च सुन्दरपर्वत इति ज्ञानोत्तरं पर्वतसुन्दरमहं जानामीति नानुव्यवसायः, द्वित्वस्यैक्ये तादृशानुव्यवसायाऽपत्तिः, विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य हेतुतया पर्वतसुन्दर इति ज्ञानस्यापि तादृशानुव्यवसायविषयत्वात्, सुन्दरपर्वत इति ज्ञानीयविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयित्वस्य संसर्गतया पर्वतसुन्दर इति ज्ञानस्यापि भवन्मते तादृशविषयितावत्त्वात् अतः तादृशद्वित्वं भिन्नमेवेति पक्षतावच्छेदकगतरूपवृत्तिर्न तादृशविशेष्यतेति न तामादाय दोषः।

पर्याप्त्यनवस्थादोषोद्भावने तु पक्षताविशिष्टा या विशेष्यता सैव पक्षतावच्छेदकावच्छिन्नविशेष्यता। वै० स्वनिरूपितावच्छेदकताविशिष्टान्याऽवच्छेदकत्वाऽनिरूपकत्वस्ववृत्तित्वोभयसम्बन्धेन। स्ववृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वसम्बन्धेन, उभयत्र वै० प्रसिद्धचतुष्टयसम्बन्धेनेति ध्येयम्।

**साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वानिवेशे इति।** पक्षः साध्यव्याप्यहेतुमानित्याकारकपरामर्शमात्रानिवेशे इति यावत्। **परामर्शाऽविरोधितयेति।** परामर्शप्रतिबन्धकयथार्थज्ञानाऽविषयत्वेनेत्यर्थः। **तत्र**—साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वे, घटकत्वं सप्तम्यर्थः **साध्यतावच्छेदकावच्छिन्नत्वेऽन्वेति। तद्दोषतादवस्थ्यम्**—बाधसत्प्रतिपक्षयोरव्याप्तितादवस्थ्यम्। **धूमजनकतेजस्वीति।** साध्ये धूमजनकत्वनिवेशनं साध्यमात्रनिष्ठप्रकारताभिप्रायेण। तथा च साध्यतावच्छेदकावच्छिन्नत्वानुपादाने वह्न्यभाववान् ह्रद इति बाधनिश्चयस्य आदिपदग्राह्यवह्न्यभावव्याप्यजलवान् ह्रद इति सत्प्रतिपक्षनिश्चयस्य च वह्निप्रकारकानुमितिसामान्यान्तर्गतायां ह्रदो धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद इत्याकारकसमूहालम्बनानुमितौ प्रतिबन्धकतया तत्प्रतिबध्यतायाः वह्निसाध्यकाऽनुमितित्वाव्यापकत्वेन बाधे सत्प्रतिपक्षे चाऽव्याप्तिः स्यादिति भावः, तदुपादाने तु वह्नित्वावच्छिन्नप्रकारताकत्वाभावाच्च साऽनुमितिः अनुमितिसामान्यान्तर्गतेति नाव्याप्तिः। अत्र वह्न्यभावः प्रतियोगितासम्बन्धेन महानसीयवह्निमानित्यत्र वह्न्यभावो वह्निमानित्यनुमितिमादाय महानसीयवह्न्यभाववद्वह्न्यभावरूपबाधे, एवं महानसीयवह्न्यभावः प्रतियोगितया वह्निमानित्यत्र महानसीयवह्न्यभावो वह्निमानित्यनुमितिमादाय वह्न्यभाववन्महानसीयवह्न्यभावात्मकबाधे चाऽव्याप्तिवारणाय न्यूनेतरवारकपर्याप्तौ निवेश्ये।

यत्तु साध्याऽप्रसिद्धयव्याप्तिवारणप्रयोजनकत्वं तदुपादानस्येति तु न सत्, वन्हिर्न काञ्चनमय इतिनिर्णयस्य शुद्धवन्हित्वादिना वन्ह्याद्यनुमित्य विरोधित्वेऽपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात् , तस्य काञ्चनमयवन्हिव्याप्यधूमवान्पर्वत इत्यनुमितिविरोधितया तत्र लक्ष-

---

यत्त्विति । साध्याऽप्रसिद्धयव्याप्तिवारणप्रयोजनकत्वमिति । कांचनमयत्वाभाववद्वह्निरूपसाध्याऽप्रसिद्धावव्याप्तिवारणप्रयोजनकत्वमित्यर्थः । तदुपादानस्येति । साध्यतावच्छेदकावच्छिन्नत्वोपादानस्येत्यर्थः । तथाच कांचनमयत्वाभाववान् वह्निरिति साध्याऽप्रसिद्धिनिश्चयस्य वह्निप्रकारकानुमितिसामान्यान्तर्गतपर्वतो वह्निमानित्यनुमित्यविरोधितया तत्प्रतिबध्यतायाः वह्निप्रकारकानुमितित्वाऽव्यापकत्वात्कांचनमयत्वाभाववद्वह्निरूपसाध्याप्रसिद्धावव्याप्तिवारणाय तदुपादानमिति भावः । साध्याप्रसिद्धिनिश्चयोऽनुमितौ परामर्शे च विरोधीति परामर्शप्रतिबन्धकतामादाय तत्र लक्षणगमनान्नाव्याप्तिरित्याशयेनाऽह न सदिति । शुद्धवह्नित्वादिना वन्ह्याद्यनुमित्याविरोधित्वेऽपीति । पर्वतो वह्निमानिति प्रथमदलाऽविरोधित्वेऽपीत्यर्थः । द्वितीयदले–परामर्शदले । प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वादिति । तस्य व्यावृत्तेरग्रे वक्ष्यमाणत्वात् । तस्य–वह्निर्न कांचनमय इति निर्णयस्य । इत्यनुमितिविरोधितया––इत्याकारकसमूहालम्बनानुमितिघटकद्वितीयदलविरोधितया । तत्र–साध्याप्रसिद्धौ ।

नन्वत्र प्रत्येकदलव्यावृत्तेरभिमतत्वे पक्षतावच्छेदकव्यावृत्तिकाले आश्रयाऽसिद्धिस्वरूपासिद्ध्योरव्याप्तिदानमसङ्गतम् , द्वितीयदले पक्षतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात , दलद्वये सकृदेव तद्व्यावृत्तिपरत्वे तु "इति तु न सदिति" खण्डनमसङ्गतम् , द्वितीयदलेऽपि साध्यतावच्छेदकावच्छिन्नान्तर्भावाविरहादिति चेन्न ।

उक्तरीत्या पक्षतावच्छेदकस्य सकृन्निवेशेनाऽश्रयासिद्धिस्वरूपासिद्ध्योरव्याप्तिदानसङ्गतेः ।

अथ पक्षतावच्छेदकस्येव साध्यतावच्छेदकस्यापि सकृन्निवेशः सम्भवति , तथाहि––साध्यतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादि लक्षणम् । वै० स्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वस्वावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन(१), एवं च तन्निवेशस्य साध्याप्रसिध्यव्याप्तिवारकत्वं युक्तमेवेति चेन्न ।

---

(१)तथाच साध्यतावच्छेदकविशिष्टानुमितित्वव्यापकेत्यादि फलितम् , अनुमितौ साध्यतावच्छेदकवै० स्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्व–हेतुविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितावच्छेदकत्वविषयतानिरूपिताभावविषयतानिरूपितत्ववद्विषयतावत्त्वस्वावच्छिन्नविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितहेतुविषयतानिरूपितपक्षविशेष्यताकत्व–स्वावच्छिन्नविषयतानिरूपिताऽभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितभेदविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितावच्छेदकत्वविषयतानिरूपिताऽभावविषयतानिरूपितत्ववद्विषयतावदभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितहेतुवि-

णगमनात् ।

**द्वितीयदलप्रवेशाद् व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिषु नाऽव्याप्तिः, तत्रापि साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वनि-**

---

साध्यव्याप्यहेतुमान्पक्षः साध्यवानिति ग्रन्थस्वरसेन एकस्यैव पक्षतावच्छेदकस्य निवेशो ग्रन्थकृदभिमतो न तु साध्यतावच्छेदकस्येति नोक्तग्रन्थाऽसङ्गतिरिति ध्येयम् ।

**द्वितीयदलप्रवेशादिति** । साध्यव्याप्यहेतुमानिति द्वितीयदलम् । व्यभिचारविरोधनिश्चयो व्याप्तिधीविरोधी, साधनाप्रसिद्धिस्वरूपासिद्धिनिश्चयस्तु विशिष्टहेतुमत्ताग्रहविरोधी । **नाव्याप्तिरिति** । अन्यथा पक्षः साध्यवानिति प्रथमदलस्य व्याप्तिहेत्वघटिततया तत्र तेषामविरोधित्वादव्याप्तिः स्यादेवेति भावः।नन्वत्राऽनुपसंहारित्वे साध्यव्याप्यत्वाभाववद्धेतुरूपव्याप्यत्वासिद्धौ चाऽव्याप्तिसम्भवे कथं तन्नोक्तमिति वाच्यम् । अनुपसंहारित्वस्य व्यभिचारान्तर्गतत्वाद्व्यभिचारपदेनैव तल्लाभात् , साध्यतेऽनुमीयते अनेनेति साधनं हेतुर्व्याप्तिश्च, साधनं च साधनं च साधने, तयोरप्रसिद्धिरिति व्युत्पत्त्या साधनाऽप्रसिद्धिपदेन व्याप्यत्वासिद्धेरपि लाभात् । अथवा गुणीयसंयोगेन वह्नेः साध्यतायां संयोगेन गुणीयत्वाभावस्य गगनसाध्यक

---

षयतानिरूपितपक्षविशेष्यताकत्व–स्वविशिष्टहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताकत्वैतच्चतुष्टयसम्बन्धेन । हेतुतावच्छेदकावच्छिन्नविशेष्यतायां स्ववै० स्वावच्छिन्नविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितत्व–स्वावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितभेदविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितत्व–स्वावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितत्वान्यतरैतदुभयसम्बन्धेन । सर्वत्र स्वं० साध्यतावच्छेदकम् । तेन व्यभिचारिणि व्याप्तेरप्रसिद्धावपि न क्षति भ्रमीयनिरूप्यनिरूपकभावापन्नतादृशविषयतायाः प्रसिद्धेरिति बोध्यम् ।

ईदृशपरम्परायाः संसर्गत्वाऽस्वीकारे प्रकारमुद्रया निवेशो यथा:——साध्यतावच्छेदकानिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता यावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता या प्रतियोगित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता याऽभावनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता याऽधिकरणनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपिता या वृत्तित्वत्वावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकता तन्निरूपिता याऽभावनिष्ठावच्छेदकता तन्निरूपितहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकता तन्निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता याऽनुमितिनिष्ठावच्छेदकता परम्परया तन्निरूपकीभूता यन्निष्ठत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकता तन्निरूपितेत्यादिक्रमेण सकलव्याप्तिं तत्पर्याप्तिं च निवेशयन् अनुमितिपर्यन्तमागत्य साध्यतावच्छेदके प्रत्यागत्य पुनरपि अनुमितिपर्यन्तमागत्य तादृशानुमितिनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिता याऽवच्छेदकतात्वावच्छिन्नप्रतियोगिता तन्निरूपकाभाववत्प्रतिबध्यतेत्यादि ।

अत्रेदं तत्त्वम् । साध्यस्य, अन्वयव्याप्तौ व्यतिरेकव्याप्तौ च तद्घटकसाध्याभावीयप्रतियोगितावच्छेदकतायां हेतुव्यापकसाध्यसामानाधिकरण्यस्यत्र निरूपकतावच्छेदकतायां च साध्यतावच्छेदकस्य निष्ठत्वसम्बन्धेनाऽन्वयात् , साध्यतावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताकाभाववद्वृत्तित्वाभावीयप्रतियोगितानिरूपितपरम्परया साध्यतावच्छेदकतासु साध्यतावच्छेदकस्य निष्ठत्वसम्बन्धेन "बहुष्वेकमिति रीत्या" भानम् ।

यद्यपि उक्तरीत्या साध्यतावच्छेदकस्य सकृन्निवेशे साध्याऽप्रसिद्धावपि अव्याप्तिसम्भवात् यत्तु मतं युक्तमेव प्रतिभाति, तथापि "बहुष्वेकमिति रीत्या" ज्ञानमप्रसिद्धम् , तादृशप्रतीतेराकारत्वाऽसम्भवात् अतः किमाकारकप्रतीतिसाक्षिकाभावस्य निवेश इत्यनुपपत्तिरपि बोध्या ।

वेशाद्व्यभिचारविरोधयोर्व्याप्तिः । वह्निर्धूमव्यभिचारीतिज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तेर्ज्ञानसम्भवात्तद्दोषतादवस्थ्यमतो ऽत्रासौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः ।

अन्वयव्याप्तिव्यतिरेकव्याप्ती विशिष्योपादाय तदुभयविशिष्टहेतुप्रकारकत्वमेव निवेश्यम्, एकतरव्याप्त्युपादाने साधारण्याऽनुपसंहारित्वयोरेकतराऽसंग्रहप्रसङ्गादित्यग्रे व्यक्तीभविष्यति ।

---

स्थलेऽवृत्तिगगनस्य वा व्याप्यत्वाऽसिद्धित्वस्वीकर्तृमते व्याप्यत्वासिद्धित्वावच्छेदेन नाऽव्याप्तिसम्भावनेति न तदुल्लेख इति ध्येयम् । तत्रापि—द्वितीयदलेऽपि । नाव्याप्तिरिति । अन्यथा पक्षः साध्यवान् हेतुमांश्चेति ग्रहस्य व्याप्यत्वविषयकत्वेन तयोरव्याप्तिः स्यादेवेति भावः । वह्निर्धूमव्यभिचारीति ज्ञानदशायामपि । धूमाभाववद्वृत्तिर्वह्निरितिव्यभिचारनिश्चयदशायामपीत्यर्थः । ज्ञानसम्भवादिति । द्रव्यव्याप्यवह्निमानयमिति परामर्शसम्भवादित्यर्थः । तद्दोषतादवस्थ्यमिति । व्यभिचारेऽव्याप्तितादवस्थ्यमित्यर्थः । साध्यतावच्छेदकावच्छिन्नीयत्वनिवेश इति । साध्यतावच्छेदकावच्छिन्ननिरूपितत्वनिवेश इत्यर्थः ।

अत्र महानसीयवन्ह्यभावत्वस्य साध्यत्वे प्रतियोगितया वह्नेर्हेतुत्वे महानसीयवन्ह्यभावत्वाभाववद्वृत्तिर्वह्निरिति व्यभिचारनिश्चयस्य महानसीयवन्ह्यभावत्ववान् वन्ह्यभावत्वव्याप्यवह्निमांश्चेति समूहालम्बनानुमित्यविरोधितया महानसीयवह्न्यभावत्वाभाववद्वृत्तिवह्निरूपव्यभिचारे, एवं वह्न्यभावत्ववान् प्रतियोगितया महानसीयवन्हेरित्यत्र वह्न्यभावत्वाभाववद्वृत्तिर्महानसीयवह्निरिति व्यभिचारनिश्चयस्य वह्न्यभावत्ववान् महानसीयवह्न्यभावत्वव्याप्यमहानसीयवह्निमांश्चेत्यनुमित्यविरोधितया वह्न्यभावत्वाभाववद्वृत्तिमहानसीयवह्निरूपव्यभिचारे चाऽव्याप्तिवारणाय साध्यतावच्छेदकताया न्यूनेतरत्वावकपर्याप्तौ निवेश्ये ।

अथ द्वितीयदले साध्यनिरूपितव्यतिरेकव्याप्तिश्चेत्प्रविष्टा तदा साधारण्येऽव्याप्तिः, साधारण्यनिश्चयस्य व्यतिरेकव्याप्तिविशिष्टहेतुमत्ताज्ञानाऽविरोधित्वात्, अन्वयव्याप्तिर्यदि प्रविष्टा तदाऽनुपसंहारित्वेऽव्याप्तिः, तन्निश्चयस्य अन्वयव्याप्यवत्तापरामर्शाऽविरोधित्वादित्यत आह विशिष्योपादायेति । तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि, अथ च साध्यतावच्छेदकावच्छिन्ननिरूपितान्वयव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारताशालि, तादृशव्यतिरेकव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतेत्यादि निवेशनीयमिति भावः । अथान्वयव्याप्तिव्यतिरेकव्याप्तिद्वयस्य एकत्र द्वयमितिरीत्या हेतुतावच्छेदकावच्छिन्नांशे प्रवेशेनैव सामञ्जस्ये पृथङ्निवेशो व्यर्थ इति चेन्न । अन्वयव्याप्तिव्यतिरेकव्याप्त्युभयाभाववद्धूमेतिव्याप्तेरिति ध्येयम्(१) ।

---

(१) नचाऽन्वयव्याप्तिव्यतिरेकव्याप्त्योरन्यतरत्वेन निवेशः कथं न कृत इति वाच्यम् । हेतुतावच्छेदकसामानाधिकरण्येन व्यभिचारेऽनुपसंहारित्वे चाऽव्याप्तेः । भट्टाचार्यमते धर्मितावच्छेदकैकदेशव्यापकतायाः

**तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायाः तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनाऽनुगमय्य निवेशनं च न सम्भवति,**

---

जनकतावच्छेदकप्रकारतात्वेनेति । एवं च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालि अथ च तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतेत्यादि यथोक्तलक्षणम्, तेन न बाधाद्यसंग्रहः। स्वरूपासिद्धिस्थले निरुक्तहेतुतावच्छेदकावच्छिन्नप्रकारतायाः, साधनाऽप्रसिद्धिस्थले काञ्चनमयधूमत्वावच्छिन्नप्रकारताया एव जनकतावच्छेदकतया तयोरपि संग्रहः । अत्र तत्साध्यकत्वानुपादाने पर्वतो धूमवान् वह्नेरित्यादौ द्रव्यत्वव्याप्यवह्निमान् पर्वत इत्याकारकपरामर्शाऽव्यवहितोत्तरजायमानानुमितिजनकतावच्छेदकव्याप्तेरनुमितिघटकतया तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावात् धूमाभाववद्वृत्तिवह्न्यादावव्याप्तेः । न च तत्र "साधारण्याऽनुपसंहारित्वयोरेकतराऽसंग्रहप्रसंगादि"त्यनेन स्वयमेवाऽव्याप्तिर्दास्यत इति वाच्यम् । यादृशस्थले एकविधव्याप्तिज्ञानादेवाऽनुमितिस्तत्रत्यसाधारण्येऽव्याप्तेः ।

वस्तुतस्तु गोत्ववान् अश्वत्वादित्यादौ गोत्ववान् पशुत्वव्याप्याऽश्वत्ववानित्यनुमितेरपि प्रकृतहेतुकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतप्रकारताशाल्यनुमितित्वेन घर्तुं शक्यतया गोत्वाऽसमानाधिकरणाश्वत्वरूपविरोधेऽव्याप्तिवारणाय प्रकृतसाध्यकत्वनिवेश इति ध्येयम् ।

प्रकृतहेतुकत्वाऽनिवेशे गोत्ववान् अश्वत्वादित्यत्रैव गोत्वव्याप्यजातिमानित्याकारकपरामर्शाऽव्यवहितोत्तरजायमानानुमितिजनकतावच्छेदकव्याप्तेरनुमितिघटकतया गोत्ववान् गोत्वव्याप्यजातिमानित्यनुमितेर्गोत्वाऽसमानाधिकरणमश्वत्वमितिनिश्चयस्याऽविरोधितया गोत्वाऽसमानाधिकरणाश्वत्वरूपविरोधेऽव्याप्तिः स्यादतस्तदुपात्तम् ।

नत्वेन नवर्णस्य पक्षत्वे वन्हेः साध्यत्वे उत्तरत्वसम्बन्धेन आवर्णस्य हेतुत्वे "नो वन्हिमान् आत इत्याकारकानुमितौ" वह्न्यभाववद्वृत्तिआरूपसाधारण्येऽव्याप्तिवारणायाऽनुमितित्वनिवेशः । तथाहि—नो वह्निमानित्याकारकोत्तरत्वसम्बन्धावच्छिन्नाऽऽत्वावच्छिन्नप्रकारक नविशेष्यकवह्निविषयकशाब्दत्वावच्छिन्नजन्यताया अपि प्रकृतहेतुनिश्चयोत्तरप्रकृतसाध्यविधेयकत्वावच्छिन्नतया लक्षणघटकत्वेन तन्निरूपितजनकतावच्छेदकीभूतविशिष्टआत्वावच्छिन्नप्रकारताशालिनी नो वन्हिमान् विशिष्टआवांश्चेति समूहालम्बनात्मिका वाक्यज्ञानरूपाऽनुमितिस्तद्विरोधित्वस्य साधारण्ये विरहात् । न चैतल्लक्षणस्य साधारण्येऽव्याप्तेर्दास्यमानत्वादिष्टापत्तिरिति वाच्यम् । यादृशस्थलविशेषे व्यतिरेकव्याप्तिज्ञानं कदापि न जातं तत्राऽव्याप्तेरिति । अथवाऽत्रैव वह्न्यसमानाधिकरणआरूपे विरोधेऽव्याप्तिर्बोध्या ।

ननु हेतुप्रकारतायास्तत्साध्यकतद्धेतुकाऽनुमितिजनकतावच्छेदकप्रकारतात्वेन निवेशे तादृशप्रकारतानिरूपितत्वं पक्षतावच्छेदकावच्छिन्नविशेष्यतायां निवेशितम्, तदपेक्षया

---

संसर्गांशेऽनङ्गीकारेण "अन्यतरत्वेन व्याप्तेर्भानेऽवच्छेदावच्छेदेन भानविरहात्" सामानाधिकरण्येन व्याप्तिमत्ताबुद्धिं प्रति च हेतुतावच्छेदकसामानाधिकरण्येन व्यभिचारनिश्चयस्याऽप्रतिबन्धकत्वात् ।

**साध्याभाववद्वृत्तित्वज्ञानदशायां केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्ताज्ञानोत्पत्त्या साधारण्यादेस्तादृशप्रकारताशाल्यनुमितिसामान्याविरोधित्वाभावात् ।**

---

तत्पक्षकतत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकीभूतविशेष्यताशाल्यनुमितीत्यादिव कथं न निवेशितम् , प्रकारतानिरूपितेति निरूपितत्वांशाऽनिवेशेन लाघवादिति चेन्न ।

यत्साध्यकानुमितिर्नियतमेकत्रैव पक्षे भवति तत्र जन्यतावच्छेदककोटौ पक्षानिवेशस्याऽनावश्यकतया तादृशांकुरे तत्पक्षकत्वावच्छिन्नजन्यत्वाऽप्रसिद्धेः । न च तादृशस्थले तत्पक्षकत्वं न देयमिति वाच्यम् । एकोक्त्या लक्षणस्यैवाऽभिप्रेतत्वादिति । प्रकृतपक्षकेत्युक्तावपि निरूपकत्वप्रवेशाद्विशेषो नास्ति पदार्थसाम्यादिति । **न सम्भवतीति ।** अयमभिप्रायः । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिप्रकृतहेतुकपरामर्शोत्तरानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतात्वेन सकलव्याप्तिप्रकारता अनुगमय्य तादृशप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकानुमितित्वव्यापकत्व(१) निवेशनं न सम्भवति, साधारण्यानुपसंहारित्वयोरसंग्रहप्रसङ्गात् । तादृशप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वस्य प्रत्येकव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञाने एव सत्वेन परस्परतादृशप्रतिबध्यतायाः तादृशानुमितित्वव्यापकत्वाभावादिति । अमुमेवार्थं मनसि निधायाऽऽह **साध्याभाववद्वृत्तित्वज्ञानदशायामिति ।** साधारण्यनिश्चयदशायामित्यर्थः । **केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्ताज्ञानोत्पत्त्येति ।** साध्याभावव्यापकीभूताभावप्रतियोगिहेतुमानिति परामर्शोत्पत्त्येत्यर्थः । तस्याऽनुपसंहारित्वनिश्चयप्रतिबध्यत्वादिति भावः । **तादृशेति ।** व्यतिरेकव्याप्त्यादिप्रकारकहेत्वित्यर्थः । तथाच साधारण्येऽव्याप्तिरित्यर्थः । इदमुपलक्षणम् । अनुपसंहारित्वनिश्चयदशायां केवलाऽन्वयव्याप्तिप्रकारकहेतुमत्ताज्ञानोत्पत्त्याऽनुपसंहारित्वादेस्तादृशप्रकारताशाल्यनुमितिसामान्यविरोधित्वाभावादित्यपि बोध्यम् ।

ननु प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नकार्यतानिरूपिता या जनकता तन्निरूपितमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता या निरूपितत्वसम्बन्धावच्छिन्नप्रकारत्वनिष्ठाऽवच्छेदकता तन्निरूपिता याऽवच्छेद्यत्वसम्बन्धावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकता तन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्न"प्रकारतात्वावच्छिन्न"अवच्छेदकताश्रयप्रकारतावच्छेदकतापर्याप्त्यधिकरणं यत्किञ्चिद्रूपं तदवच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकाव-

---

(१) अनुगमस्तु—प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नकार्यताविशिष्टानुमितित्वप्रतिबध्यतेत्यादि । अनुमितौ कार्यतावै० स्वाश्रयत्व-स्वनिरूपितकारणतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितहेतुप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेनेति ।

च्छिन्न(१)विशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताशालिनी,

---

(१) अत्र विशेष्यतायां हेतुतावच्छेदकावच्छिन्नत्वमनिवेश्य प्रकारतायां तन्निवेशे पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ साधनाप्रसिद्धावव्याप्तिस्तत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितावपि काञ्चनमयत्वावगाहिपरामर्शनिरूपितकार्यताया निरुक्तसम्बन्धेन सत्त्वात् विशेष्यतायां तन्निवेशे पर्याप्तिनिवेशान्नाव्याप्तिः। तत्प्रकारश्च–प्रकृतहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यतात्वावच्छिन्नेत्यादि तादृशधर्मवृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथाच काञ्चनमयत्वावगाहिसमूहालम्बनानुमितिनिरूपितपक्षविशेषणतापन्नहेतुविशेष्यता च तादृशकाञ्चनमयत्वधूमत्वगतद्वित्वरूपधर्मवृत्तिः। प्रकारतावच्छेदकतापर्याप्तिस्तु न निवेशयितुं शक्यते पक्षविशेष्यतानिरूपितहेतुप्रकारतायां हेतुतावच्छेदकव्याप्त्योरेवावच्छेदकत्वात्। न्यूनवारकपर्याप्तिनिवेशे पर्वतो महानसीयवह्निमान् धूमादित्यत्र व्यभिचारिण्यव्याप्तिः, तत्र परामर्शनिरूपितकार्यतायाः पर्वतो महानसीयवह्निमान् तादृशवह्निव्याप्यधूमवानित्यनुमितावपि सत्त्वात् तत्र महानसीयवह्न्यभाववद्वृत्तिर्धूम इति व्यभिचारनिश्चयस्याऽप्रतिबन्धकत्वात्।

अत्र "पक्षतावच्छेदकावच्छिन्न"मुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपितत्वानुपादाने यत्राऽभावस्य पक्षता प्रतियोगितया महानसीयवह्नेः साध्यता तत्सम्बन्धेन वह्नेर्हेतुता तत्र व्यभिचारेऽव्याप्तिः। स्वनिरूपितकारणतावच्छेदकीभूतहेतुतावच्छेदकावच्छिन्नप्रकारतापदेन महानसीयवह्न्यभाववद्वृत्तिवह्निमानभाव इति परामर्शीयमहानसीयवह्निप्रकारताया अपि धारणसम्भवेन तन्निष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावच्छेदकताश्रयमहानसीयत्वत्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकीभूतवह्नित्वावच्छिन्नविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षतावच्छेदकीभूताभावत्वावच्छिन्नविशेष्यताकत्वस्वाश्रयत्वोभयसम्बन्धेन तादृशकार्यताविशिष्टत्वस्य प्रतियोगितया महानसीयवह्निमानभाव इति ज्ञानेऽपि सत्त्वात, तत्र साधारण्यप्रतिबन्धकताया असत्त्वात्। एवं मुख्यत्वानिवेशेऽपि साध्याभावनिष्ठ (गौणीय) विशेष्यतामादायानयैव रीत्या स एव दोषः स्यात् अतस्तन्निवेशः।

नच तथापि कार्यतायाः प्रत्येकमननुगत त्वेन तादृशकार्यतापदेन धूमव्याप्यवह्निघटव्याप्यवह्निमान् पर्वत इत्येकत्र द्वयमितिरीत्या परामर्शाव्यवहितोत्तरत्वावच्छिन्नकार्यतायाः ग्रहणसम्भवेन तद्विशिष्टत्वस्य घटव्याप्यवह्निमान् पर्वतो धूमवान् इति ज्ञानेऽपि सत्त्वेन तत्र व्यापकताहानिरिति धूमवान् वह्नेरित्यादौ व्यभिचारासङ्ग्रहः। तादृशकार्यतावैशिष्ट्यस्य स्वाश्रयत्व–स्वनिरूपितकारणतावच्छेदकीभूतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतायाः ऐक्येन तत्तन्निरूपितप्रकारत्वावच्छिन्नविशेष्यतानिरूपितघटव्याप्तिप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताकत्वोभयसम्बन्धेन तादृशग्रहे सत्त्वादिति वाच्यम्। स्वनिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेद्यत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितप्रकारत्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्प्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकत्वघटितोभयसम्बन्धेनोपगमात्। केवल'घटा'न्वयव्याप्तिविशिष्टहेतुप्रकारतायाः तादृशकार्यतानिरूपितकारणतानवच्छेदकत्वात्। एकत्र द्वयमिति रीत्या ज्ञानस्मादाय न दोषः।

न चानुगतरूपेण कार्यकारणभावानुरोधेन हेतुतावच्छेदकमनिवेश्य व्याप्त्यवच्छिन्नप्रकारताशालिज्ञानत्वेन कारणतामते स्वनिरूपितकारणतावच्छेदककोटौ हेतुप्रकारतानिवेशासम्भवेन तादृशसम्बन्धाप्रसिद्धिरिति वाच्यम्। प्रयोजनविरहेण हेतुतावच्छेदकावच्छिन्नत्वानिवेशात्, तादृशव्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकोपलक्षितवृत्तिविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षविशेष्यताकत्वस्य सम्बन्धघटकत्वेन साध्यव्याप्यहेत्वन्तरवान् पक्षः साध्यवान् इति ज्ञानधारणासम्भवेन व्यभिचारादावव्याप्त्यभावादिति।

न च साधारणग्रन्थे साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्योभयाभाववद्धेतोरपि व्यभिचारत्वाभिधानेन तत्राव्याप्तिः। तथाहि साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्यवद्धेतुमान्पक्ष इत्येकत्र द्वयमिति

अथ च पक्षे साध्यवैशिष्ट्यावगाहिनी याऽनुमितिस्तत्त्वव्यापकत्वस्य प्रतिबध्यतायां निवेशेनैव साधारण्याऽनुपसंहारित्वयोः सङ्ग्रहसम्भवे प्रत्येकविषयकत्वेन समूहालम्बनानुमितित्वव्यापकत्वस्य प्रतिबध्यतायां निवेशनमयुक्तम् । तथाच प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नकार्यताविशिष्टत्वं प्रतिबध्यतायां निवेशनीयम् । वै० स्वविशिष्टग्रहत्वव्यापकत्वसम्बन्धेन । ग्रहे स्ववै० स्वाश्रयत्व स्वनिरूपितकारणतानिरूपितमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकार-

---

रीत्या हेत्वंशे तदुभयावगाहिज्ञानस्य कारणतया तादृशव्यभिचारग्रहप्रतिबध्यपरामर्शनिरूपितकार्यतानिरूपितकारणतानिरूपितपक्षनिष्ठमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावद्-यत्किञ्चित्प्रकारतावच्छेदकतपर्याप्त्यधिकरणत्वस्य साध्याभाववदवृत्तित्वत्वे साध्यसामानाधिकरण्यत्वेऽपि च सत्त्वात्, तत्प्रत्येकावच्छिन्नप्रकारतानिरूपितहेतुनिष्ठविशेष्यत्वावच्छेद्यप्रकारतानिरूपितपक्षविशेष्यताकत्व स्वाश्रयत्वोभयसम्बन्धेन तादृशकार्यतायाः साध्याभाववदवृत्तिहेतुमान् पक्षः साध्यवान्, साध्यसामानाधिकरण्यवद्धेतुमान् पक्षः साध्यवानिति विशृङ्खलज्ञाने सत्त्वात् व्यापकताभङ्गेन तादृशकार्यताविशिष्टत्वविरहादिति वाच्यम् । स्वनिरूपितकारणतानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतावत्प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपवृत्तिर्या हेतुतावच्छेदकावच्छिन्नविशेष्यता तदवच्छेद्यप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकत्वं द्वितीयसम्बन्धः । रूपवृत्तित्वं च विशेष्यतायां स्वनिष्ठनिरूप्यतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य साध्याभाववदवृत्तित्वत्वसाध्यसामानाधिकरण्यत्वप्रकारतात्वगतसमुदाये सत्त्वेन तद्वृत्तिविशेष्यता न केवलसाध्याभाववदवृत्तितात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता किन्तु साध्याभाववदवृत्तित्वत्वसाध्यसामानाधिकरण्यत्वरूपप्रत्येकधर्मावच्छिन्नप्रकारताद्वयनिरूपितविशेष्यतैवेति तादृशकार्यताविशिष्टत्वं न विशृङ्खलपरामर्शानुमितौ, अपि तु एकत्र द्वयमितिरीत्यैवेत्यव्याप्तिविरहात् ।

एतादृशपरम्परायाः संसर्गत्वास्वीकारे तु प्रकारद्वयानिवेशो यथा—प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपककार्यतानिष्ठावच्छेदकतानिरूपककारणतानिष्ठावच्छेदकतानिरूपकपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपक"पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपक"निरूपितत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकीभूता या, (निरूपिका सती) अवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपकीभूता या प्रतियोगिता तन्निरूपकपर्याप्त्यनुयोगितावच्छेदकधर्मनिष्ठावच्छेदकतानिरूपकानुयोगितानिरूपकपर्याप्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितनिरूप्यतानिष्ठावच्छेदकतानिरूपिताऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या प्रकृतपक्षतावच्छेदकावच्छिन्ना विशेष्यता तच्छालिप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताशाल्यनुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावः प्रतिबध्यतायां निवेशनीय इति चेन्न ।

साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिनानालिङ्गपरामर्शानां हेतुतावच्छेदकमनिवेश्यैकरूपेण कारणतामतेऽप्रामाण्यज्ञानानामनुगतरूपेणोत्तेजकतया पक्षसाध्यादिविषयतानां कार्यतावच्छेदकत्वानावश्यकतयाऽसम्भवापत्तेरिति दिक् ।

व्याप्तिविशिष्टविषयकत्वमात्रस्य तद्विशिष्टहेतुतावच्छेदकावच्छिन्नविषयकत्वमात्रस्य वा निवेशे स्वरूपासिद्धाव्याप्तिः, अतः पक्षांशे तादृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशः। पक्षांशे व्याप्तिविशिष्टप्रकारकत्वमात्रनिवेशेऽपि तद्दोषतादवस्थ्यम्, धूमाभाववान् ह्रद इति ज्ञानस्य द्रव्यत्वादिना हेतुमत्ताज्ञानाऽविरोधित्वात्, साधारण्या-

त्वनिष्ठावच्छेदकतानिरूपितावच्छेदकताश्रयधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छेदहेतु-तावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन, तथाचाऽन्वयव्याप्त्यवगाहिपरामर्शाऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नजन्यतामादाय, एवं व्यतिरेकपरामर्शाऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नजन्यतामादाय, साधारण्यप्रतिबध्यतायां अनुपसंहारित्वप्रतिबध्यतायां च तादृशानुमितित्वव्यापकत्वस्याऽक्षततया एकामेकां कार्यतामादाय साधारण्यानुपसंहारित्वयोर्लक्षणसमन्वय इति चेत् ।

अत्र केचित् ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ह्रदेऽतिव्याप्तेरुक्तरीत्या कारणाऽसम्भवात्। सिद्धान्ते तु साध्यव्याप्यो हेतुः हेतुमान्पक्षः साध्यवानिति त्रिखण्डाकारानुमितेरेव लक्षणघटकतया नोक्तदोषशङ्केत्याहुः ।

वस्तुतस्तु साध्याभाववद्वृत्तित्वरूपव्याप्त्यवगाहिनानालिङ्गपरामर्शानां हेतुतावच्छेदकमनिवेश्यैकरूपेण कारणतामते अप्रामाण्यज्ञानानामनुगतरूपेणोत्तेजकतया पक्षसाध्यविषयितयोः कार्यतावच्छेदकत्वानाक्रान्ततयाऽसम्भवापत्तेरिति । अवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यताघटितधर्मस्यैव जनकतावच्छेदकतया तद्घटितधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यताद्विषयताशालिग्रहत्वस्य साध्यतावच्छेदकवदभाववद्वृत्तिहेतुमानिति ज्ञानसाधारणतया तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नप्रतियोगिताकमेयत्वाभाववदभावविषयकनिश्चयेऽसत्त्वान्मेयत्वाभाववदभावरूपव्याप्यत्वासिद्धावव्याप्तेरित्यस्मद्गुरुचरणाः ।

**व्याप्तिविशिष्टविषयकत्वमात्रस्येति** । मात्रपदेन हेतुप्रकारकत्वस्य पक्षविशेष्यकत्वस्य च व्यवच्छेदः । द्वितीयमात्रपदेन पक्षविशेष्यकत्वस्य व्यवच्छेदः । **निवेशे इति** । साध्यव्याप्यप्रकारकत्वस्य साध्यव्याप्यहेतुप्रकारकत्वस्य वा निवेशे इत्यर्थः । **स्वरूपाऽसिद्धावव्याप्तिरिति** । धूमाभाववान् ह्रद इति स्वरूपासिद्धिनिश्चयप्रतिबध्यतायाः साध्यव्याप्यवान्, साध्यव्याप्यहेतुमान् वेति समूहालम्बनानुमितित्वाव्यापकत्वात् । **अतः**—अव्याप्तेः । न च पूर्वमेव पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वव्यावृत्तेरुक्तत्वात्पौनरुक्त्यमिति वाच्यम् । पूर्वं हेतुप्रकारतापक्षविशेष्यतयोर्निरूप्यनिरूपकभावाऽप्रदर्शनेन तदनिवेशे इदानीं दोषप्रदर्शनान्न पौनरुक्त्यम् । ननु निरूप्यनिरूपकभावापन्नहेतुनिष्ठप्रकारत्वपक्षनिष्ठविशेष्यतयोर्निवेशेनैव निर्वाहे किं हेतुतावच्छेदकावच्छिन्नत्वनिवेशेनेत्यत आह—**पक्षांशे इति** । मात्रपदेन हेतुतावच्छेदकावच्छिन्नत्वव्यपदेशः । **तद्दोषतादवस्थ्यमिति** । स्वरूपासिद्धावव्याप्तितादवस्थ्यमित्यर्थः । तत्र हेतुमाह **धूमाभाववानिति** । **ज्ञानस्य**—निश्चयस्य-

द्धव्याप्तिश्च, वन्हित्वावच्छिन्ने धूमाभाववद्वृत्तित्वग्रहस्य धूमादिव्याप्तिविशिष्टतद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाऽविरोधित्वादतो हेतुतावच्छेदकावच्छिन्नत्वानिवेशः । पक्षांशे साध्यादिप्रकारकस्य संस्कारादेः, आहार्यज्ञानादेश्च बाधादिज्ञानाऽप्रतिबध्यत्वादसंभव इत्यतस्ताहशानुमितित्वव्यापकतानिवेशः ।

साध्यव्याप्यहेतुधर्मितावच्छेदककसाध्यवत्ताज्ञानस्यैव साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारकतया ताहशाकारलिखनस्वरसात्ताहश-

---

त्यर्थः । द्रव्यत्वादिनेति किञ्चिद्धर्मावच्छिन्नप्रकारतोपादानेऽपि दोषं वक्तुम् । अविरोधित्वादिति । वह्निव्याप्यद्रव्यवानिति ज्ञानाऽविरोधित्वादित्यर्थः । हेतुतावच्छेदकानिवेशेऽपि व्याप्तिधर्मितावच्छेदकतया तदनिवेशे आह-साधारणवाद्यव्याप्तिश्चेति । वह्नित्वावच्छिन्न धूमाभाववद्वृत्तित्वग्रहस्येति । धूमाभाववद्वृत्तिर्वह्निरितिनिश्चयस्येत्यर्थः । अविरोधित्वादिति । धूमव्याप्यतद्व्यक्तिमानितिज्ञानाऽविरोधित्वादित्यर्थः । हेतुतावच्छेदकावच्छिन्नत्वानिवेश इति । वह्न्यभावो वह्न्यभावत्ववान् प्रतियोगितया महानसीयवह्नेरित्यत्र वह्न्यभावो वह्न्यभावत्ववान् तद्व्याप्यवह्निमांश्चेत्यनुमितिमादाय महानसीयवह्न्यभाववद्वृत्त्य-भावरूपस्वरूपासिद्धौ, एवं महानसीयवह्न्यभावो महानसीयवह्न्यभावत्ववान् प्रतियोगितया वह्नेरित्यत्र महानसीयवह्न्यभावो महानसीयवह्न्यभावत्ववान् तद्व्याप्यमहानसीयवह्निमांश्चेत्यनुमितिमादाय वह्न्यभाववन्महानसीयवह्न्यभावरूपस्वरूपासिद्धौ चाऽव्याप्तिवारणाय न्यूनेतरवारकपर्याप्ती निवेश्ये ।

अत्र साध्यहेतुप्रकारतायां साध्यताहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं, पक्षतावच्छेदनिष्ठावच्छेदकत्वादौ तदवच्छेदकसम्बन्धावच्छिन्नत्वमपि निवेशनीयम्, प्रयोजनन्तुल्यम् । ज्ञानत्वनिवेशेऽप्याह आहार्येति । आहार्यत्वं च स्वविरोधिधर्मधर्मितावच्छेदककत्वप्रकारकज्ञानत्वम्, आहार्यज्ञानं च प्रत्यक्षरूपं भवति, तच्च विपरीतज्ञानाऽविरोधि, बाधकालीनेच्छाजन्यत्वात्, तथाच बाधादिनिश्चयप्रतिबध्यतायास्ताहशसमूहालम्बनज्ञानत्वाऽव्यापकत्वादसम्भववारणायाऽनुमितित्वनिवेश इति भावः ।

ननु पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यताकत्वविरहादेव वह्न्यभाववान् ह्रदो वह्निमानित्याहार्यव्युदाससम्भवे किमनुमितित्वनिवेशेनेति चेदत्र केचित्—पर्याप्तेरप्रामाणिकतया पक्षतावच्छेदकताव्यापकावच्छेदकताकत्वं निवेशनीयम्, तथाचाऽऽहार्यव्युदासार्थं तन्निवेशस्याऽवश्यकत्वात् । एवं साध्यतावच्छेदकताव्यापकाऽवच्छेदकताकत्वमेव निवेश्यमित्याहुः ।

वस्तुतस्तु पर्याप्तेः प्रामाणिकत्वेऽपि ह्रदो वह्निमान् वह्निव्यभिचारिवह्निव्याप्यद्रव्यवांश्चेत्याहार्यवारणार्थमेवाऽनुमितित्वनिवेशः । व्याप्तिघटकतावच्छेदकाऽधिकरणत्वादिना पदार्थान्तरसाधारण्या एव निरूप्यनिरूपकभावापन्नविषयताया एव निवेश्यतया पर्याप्तिनिवेशाऽसम्भवात्, प्रयोजनविरहाच्चेति ध्येयम् ।

पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेतिसमूहालम्बनानुमितिपरतया साध्यव्याप्यहेतुमान्पक्षः साध्यवानिति दीधितिग्रन्थव्याख्याने स्वरसमाह साध्यव्याप्येति । ताहशा-

हेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकाऽनुमितित्वव्यापकप्रतिबध्यत्वस्य लक्षणघटकत्वोपगमे पर्वतत्वावच्छेदेन वह्नेः साध्यत्वे तत्सामानाधिकरण्येन साध्याभावादेरदोषत्वप्रसङ्गः। सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्वतत्वावच्छेदेन वन्ह्यादिज्ञानं प्रत्येव प्रतिबन्धकतया धूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकवन्ह्यादिज्ञानाऽप्रतिबन्धकत्वादिति तदुपेक्षितम् ।

न च विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेऽपि शुद्धपर्वतत्वावच्छिन्नसंयोगादेर्यत्र संसर्गता तत्र पर्वत्वसामानाधिकरण्येन वन्ह्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकम्, तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन वन्ह्याद्यवगाहित्वादिति वाच्यम् । धर्मितावच्छेदकावच्छेदेन वि-

---

कारेति । साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारेत्यर्थः । समूहालम्बनाभिप्रायकत्वे चकारोऽपेक्षितः स्यात्, अतो ज्ञायते विशिष्टवैशिष्ट्यावगाहिपरत्वमिति भावः(१) । तत्सामानाधिकरण्येन–पर्वतत्वसामानाधिकरण्येन । साध्याभावादेः–वह्न्यभावादेः । अदोषत्वप्रसङ्ग इति । तथाचाऽवच्छेदावच्छेदेन साध्यतास्थले सामानाधिकरण्येन बाधेऽव्याप्तिः स्यादित्यर्थः । तत्र हेतुमाह–सामानाधिकरण्यमात्रेति । एवकारव्यवच्छेद्यमाह धूमविशिष्टेति । तदुपेक्षितमिति । विशिष्टवैशिष्ट्यावगाहिपरत्वमुपेक्षितमित्यर्थः ।

सामानाधिकरण्येन बाधेऽव्याप्तिर्नास्तीत्याशङ्कते नचेति । शुद्धपर्वतत्वावच्छिन्नसंयोगादेर्यत्र संसर्गता तत्र विशेष्यतावच्छेदककोटौ धूमादेराधिकस्य भानेऽपि पर्वतत्वसामानाधिकरण्येन वन्ह्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकमिति योजना । शुद्धपर्वतत्वावच्छिन्नसंयोगादेरिति । पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगस्येत्यर्थः । यत्र–वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति ज्ञाने । संसर्गतेति । इदं चाऽवच्छेदाऽवच्छेदेन बुद्धित्वप्रदर्शनार्थम् । आवश्यकमिति । तथाच शुद्धपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वह्नेः साध्यतास्थले शुद्धस्वरूपसम्बन्धेन वन्ह्यभाववत्ताज्ञानस्य वह्निव्याप्यधूमविशिष्टपर्वतत्वधर्मितावच्छेदककवह्निमत्ताबुद्धिं प्रत्यपि प्रतिबन्धकत्वं संभवतीत्यर्थः । ननु विशिष्टपर्वतत्वधर्मितावच्छेदककानुमितिं प्रति सामानाधिकरण्यमात्रावगाहिबाधज्ञानस्य कथं प्रतिबन्धकत्वं तस्याऽवच्छेदावच्छेदेनाऽनुमितावेव प्रतिबन्धकत्वादित्यत आह–तादृशानुमितेरपीति । वह्निव्याप्यधूमवान्पर्वतो वह्निमानित्यनुमितेरपीत्यर्थः । वन्ह्याद्यवगाहित्वादिति । तादृशविशिष्टधर्मितावच्छेदककानुमितेः विशेष्यतावच्छेदकीभूतपर्वतत्वांशे तादृशधूमरूपाधिकावगाहित्वेऽपि शुद्धपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वन्ह्याद्यवगाहित्वादित्यर्थः । तथाच तादृशानुमितेरपि अवच्छेदावच्छेदेन बुद्धित्वाक्रान्ततया तत्र शुद्धस्वरू-

---

(१) यत्तु साध्यवत्पक्षे हेतुमत्त्वमनभिधाय हेतुमत्पक्षे साध्याभिधानेन समूहालम्बनाभिप्रायकत्वं नास्तीति । तन्न, साध्यवान्पक्षो हेतुमानित्यभिधाने भागासिद्धावव्याप्तेः, एकदेशाव्यापकत्वावच्छिन्नसंसर्गताया वक्ष्यमाणरीत्याऽप्रामाणिकत्वात् ।

शिष्टबुद्धौ धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते न तु तदेकदेशावच्छिन्नत्वमपि, तद्धर्मावच्छिन्नविशेष्यतानिरूपित-तदेकदेशाव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात् ।

अथ लिङ्गोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात्तद्

---

पसम्बन्धेन वन्ह्यभाववत्ताज्ञानस्य प्रतिबन्धकतया सामानाधिकरण्येन वन्ह्यभाववत्पर्वते नाव्याप्तिरिति भावः ।

**धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमिति** । तथाच धर्मितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यताव्यापक-रूपवृत्तिविशेष्यताव्यापकत्वमेव संसर्गांशे भासते इत्यर्थः । विशेष्यतायां रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति । **संसर्गांशे भासते इति** । न च मानाभावः, तदवच्छेदेन तद्भानित्युक्तौ अवच्छिन्नत्वसम्बन्धेनोद्दे-श्यतावच्छेदकस्य संसर्गांशे पारतन्त्र्येणाऽन्वयो भवति, अवच्छिन्नत्वं च तत्प्रतियोगिकत्वम् , तथाच यत्रोद्देश्यतावच्छेदकद्वयं, तत्रैकस्यावच्छिन्नत्वसम्बन्धेऽन्वयो भवति नान्यस्येति नियामकाभावादप्रामाणिकत्वमुक्तम् , नियमे गौरवाद्वक्ष्यमाणबाधकाच्च । अतएवाऽवच्छे-दकावच्छेदेन विशिष्टबुद्धौ उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासते इत्यौत्सर्गिकी प्रतीतिरिति ध्येयम् । एवकारव्यवच्छेद्यमाह **नत्विति** । तत्र हेतुमाह— **अप्रामाणिकत्वादिति** । न च तदेकदेशाव्यापकत्वावच्छिन्नसंसर्गतायाः प्रामाणि-कत्वे को दोष इति वाच्यम्। द्रव्यं वह्निमद् धूमादित्यादौ वह्निव्याप्यधूमवद् द्रव्यं वह्निमदि-त्यत्र एकदेशाव्यापकत्वस्वीकारे प्रतीतेर्भ्रमत्वापत्तेः । न च लिङ्गोपहितलैङ्गिकभानवादिमते तादृशस्थले प्रतीतेर्भ्रमत्वापत्तिरिष्टैवेति वाच्यम् । तादृशस्थले तन्मते बाधस्वीकारात् । अत्र च नीलभूतलं घटाभाववदिति निर्णयदशायां रक्तभूतलं घटवदिति ज्ञानानुदयप्रसङ्गः, एक-देशाव्यापकत्वावच्छिन्नविषयतास्वीकारेण तस्य भूतलत्वावच्छेदेन घटाभाववत्ताज्ञानसमशील-त्वादिति बाधकमप्यवसेयम्(१) ।

अत्र चोक्तबाधकादन्यत्र तथानभ्युपगमेऽपि लिङ्गोपधानमते परामर्शस्य यदवच्छेदेन हेतुमत्तावगाहित्वमनुमितेरपि एकदेशीभूतपर्वतत्वादिधर्मितावच्छेदकावच्छेदेन साध्यवत्त्वा-वगाहित्वमावश्यकमित्याशङ्कते **अथेति** । **लिङ्गोपधानमते इति** । अनुमितौ लिङ्गविष-

---

(१) एवं तादृशसंसर्गतायाः प्रामाणिकत्वे नीलपर्वतविशेष्यिकायां पर्वतविशेष्यिकायां चाऽनुमितौ पर्वतत्वावच्छेद्यत्वस्य स्वीकरणीयतया पर्वतत्वावच्छेदेनाऽनुमितिस्थले एव पृथक् २ कार्यकारणभावकल्प-नस्याऽऽवश्यकतया गौरवमपि बाधकम् । सिद्धान्ते तु पक्षतावच्छेदकभेदेन कार्यकारणभावभेदस्यावच्छेदक-त्वेऽपि पर्वतत्वावच्छेदेनाऽनुमितिं प्रति एकविधकार्यकारणभावेनैवोपपत्तिरिति ध्येयम् ।

न च तदेकदेशाव्यापकत्वावच्छिन्नसंसर्गत्वाऽस्वीकारे यत्र पर्वतत्वावच्छेदेन वन्हेः साध्यता तत्र वन्हि-व्याप्यवत्पर्वतविषयकत्वे लाघवमिति लाघवज्ञानानन्तरं "अवच्छेदावच्छेन परामर्शवशात्" वन्हिव्याप्यधूम-वान्पर्वतो वन्हिमानित्यनुमितिः तत्र सामानाधिकरण्येन वन्ह्यभाववत्तानिश्चयस्याऽप्रतिबन्धकत्वात्तस्य बाध-त्वानुपपत्तिरिति वाच्यम् । विशेष्यांशे लाघवज्ञाने प्रमाणाभावात् ।

**शसंसर्गताभ्युपगम आवश्यकः, अन्यथा शुद्धपर्वतत्वावच्छेदेन हेतुमत्ता-**

यकत्ववादिमते इत्यर्थः । वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्यनुमितिस्वीकर्तृउदयनाचार्यमते(१)इति यावत् । हेतोः—धूमादेः । **धर्मितावच्छेदकतया भानादिति ।** तै "वह्निव्याप्य"धूमवान्पर्वतो वह्निमानित्यनुमितेः स्वीकारादिति भावः । **तादृशसंसर्गताभ्युपगम इति ।** एकदेशव्यापकत्वावच्छिन्नसंसर्गताभ्युपगम इत्यर्थः । **अन्यथा**—एकदेशव्या-

(१) आचार्याणामयमाशयः—पर्वतधर्मिकवन्ह्यनुमितौ वन्हिव्याप्यधूमवत्तानिश्चयत्वेन वन्हिव्याप्यालोकवत्तानिश्चयत्वेन च कारणत्वम्, तथाच सति परस्परजन्याऽनुमितौ व्यभिचारः, अतो वन्हिव्याप्यधूमवान्पर्वत इति परामर्शाऽव्यवहितोत्तर जायमानपर्वतधर्मिकवन्ह्यनुमितिं प्रति वन्हिव्याप्यधूमवान्पर्वत इति निश्चयः कारणम्, एवं वान्हिव्याप्याऽऽलोकवान् पर्वत इति परामर्शाऽव्यवहितोत्तरजायमानपर्वतधर्मिकवन्ह्यनुमितौ वन्हिव्याप्याऽऽलोकवान्पर्वत इति निश्चयः कारणमिति'रीत्या कार्यतावच्छेदककोटावव्यवहितोत्तरत्वं निवेश्यमिति चिन्तामणिकृन्मते गौरवमतो वन्हिव्याप्यधूमवान् पर्वतो वन्हिमान्, वन्हिव्याप्याऽऽलोकवान् पर्वतो वन्हिमानित्येवाऽनुमितिरङ्गीक्रियते आचार्यैः. एवं च वन्हिव्याप्यधूमविशिष्टपर्वतधर्मिकवन्ह्यनुमितौ वन्हिव्याप्यधूमवत्तानिश्चयः कारणमिति पृथक् पृथगेव कार्यकारणभा(१)वः तथाचाऽनुमितेः साध्यव्याप्यहेतुप्रकारकत्वं प्रकल्प्य व्यभिचारवारणस्यैवोचितत्वादिति ।

तथाच धूमव्यापकवन्हिसमानाधिकरणधूमप्रकारतानिरूपिता या पर्वतत्वावच्छिन्नविशेष्यता तदवच्छिन्ना वन्हिव्याप्यधूमपर्वतत्वैतदुभयधर्मावच्छिन्नविशेष्यता तन्निरूपितवन्हित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यकधूमवत्तानिश्चयत्वेन कारणत्वम्, एवं साध्यनिरूपितव्यतिरेकव्याप्तिविशिष्टहेतुमत्पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्याऽनुमितित्वावच्छिन्नं प्रति तादृशव्यतिरेकव्याप्तिविशिष्टहेतुमत्पक्षतावच्छेदकावच्छिन्नविशेष्यकनिश्चयत्वेन कारणत्वम्, एवमालोकादिपरामर्शस्यापीत्यतो न व्यभिचार इति ।

तथाच पक्षधर्मिकहेतुमत्तानिश्चयत्वघटितं साध्यान्वयव्याप्तिविशिष्टहेतुमत्पक्षविषयकनिश्चयत्वं साध्यीयव्यतिरेकव्याप्तिविशिष्टहेतुमत्पक्षविषयकनिश्चयत्वमपि भवतीति तादृशनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकत्वं साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्यनुमितिनिरूपितानां सर्वासामेव विषयतानामस्तीति तादृशविषयत्वावच्छिन्नप्रतिबध्यतामादाय सर्वेष्वेव दोषेषु लक्षणसमन्वयः ।

ननु धूमव्यापकवन्हिसमानाधिकरणधूमवत्पर्वतत्वावच्छिन्नविशेष्यकानुमितित्वावच्छिन्नं प्रत्येव पर्वतत्वावच्छिन्नधर्मिकधूमव्यापकवन्हिसमानाधिकरणधूमवत्तानिश्चयत्वेन कारणता कल्प्यते न तु तादृशधर्मावच्छिन्नविशेष्यकसाध्यविधेयकानुमितित्वावच्छिन्नं प्रति गौरवात् । पर्वतधर्मिकवन्हिव्याप्यधूमप्रकारकनिश्चयं विना वन्हिव्याप्यधूमवत्पर्वतविशेष्यकघटानुमितेरप्यनुत्पादाद् व्यभिचारविरहात् । तथाच पक्षविषयतानिरूपितसाध्यविषयतायाः कार्यतावच्छेदकत्वात्साध्यविधेयकत्वघटितधर्मावच्छिन्नकार्यतावच्छेदकीभूतविषयत्वावच्छिन्नप्रतिबध्यतात्वेन सर्वासां प्रतिबध्यतानामनुगमो न सम्भवति, साध्यविषयत्वावच्छिन्नत्वं परित्यज्य प्रकृतपक्षधर्मिकहेतुप्रकारकनिश्चयत्वघटितधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकीभूतविषयत्वावच्छिन्नत्वेन प्रतिबध्यताप्रवेशे "आचार्यमते" पक्षविषयतानिरूपितसाध्यविषयतायाः निरुक्तकार्यतानवच्छेदकतया बाधसत्प्रतिपक्षयोरव्याप्तिः ।

सत्यम् । सिद्ध्यात्मकपरामर्शसत्त्वेऽनुमितेर्वारणाय सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य कारणत्वमावश्यकम्, एवं च साध्यव्याप्यहेतुमत्पक्षविशेष्यकानुमितित्वावच्छिन्नं प्रति पर्वतधर्मिकसाध्यव्याप्यवत्तानिश्च-

(१) नन्वेवं चिन्तामणिकारमते गौरवमेवेति चेन्न । यत्र प्रथमं वन्हिव्याप्यधूमवानिति परामर्शः, तदनन्तरं लौकिकसन्निकर्षादिजन्यो धूमाभाववान्पर्वत इति निश्चयः तदनन्तरमनुमित्युत्पत्त्यर्थमेवाऽव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशात्, लिङ्गोपधानवादिभिस्तु तत्रानुमितिर्न स्वीक्रियते इति ध्येयम् ।

यत्तु न कारणत्वे पर्वतधर्मिकवन्हिमत्तानिश्चयसत्त्वे यथा वन्हिव्याप्यधूमवत्पर्वतो घटव्याप्यवानिति परामर्शाद् वन्हिव्याप्यधूमवत्पर्वतो घटवानित्यनुमितिः सिषाधयिषाविरहविशिष्टवन्हिमत्तानिश्चयाभावरूपकारणाऽसहकारेण जायते, तथा पर्वतधर्मिकवन्हिव्याप्यधूमवत्तानिश्चयसत्त्वे तादृशसिद्धिसत्त्वेऽपि वन्हिव्याप्यधूमवान्पर्वतो वन्हिमानित्यनुमितिः कथं न जायते तादृशसिद्ध्यभावस्य वन्हिव्याप्यधूमवत्पर्वतविशेष्यकानुमितावसहकारित्वात्सहकारित्वे प्रथमानुमितेरप्यनुपपत्तिः, कार्यतावच्छेदकस्योभयत्राऽविशेषात् । अतो वन्हिव्याप्यधूमवत्पर्वतविशेष्यकवन्हित्वावच्छिन्नविषयताकानुमितिं प्रत्येव तादृशपरामर्शस्य कारणत्वं वाच्यम् । एवं च न कोपि दोषः(१) ।

(१) तथाच प्रकृतपक्षधर्मिकप्रकृतहेतुप्रकारकनिश्चयत्वावच्छिन्नकारणतानिरूपितसाध्यविधेयकत्वघटितधर्मावच्छिन्नकार्यताविशिष्टा या प्रतिबध्यता तन्निरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति । प्रतिबध्यतायां कार्यतावै० स्वावच्छेदकीभूतविषयत्वावच्छिन्नत्व- स्वावच्छेदकीभूतमुख्यविशेष्यत्वावच्छिन्ना या प्रकृतपक्षधर्मिकसाध्यहेतुप्रकारकग्रहत्वाव्यापकप्रतिबध्यता तादृशप्रतिबध्यताभिन्नत्वैतदुभयसम्बन्धेन ।

व्यभिचारे लक्षणसमन्वयोपि, तथाहि—हेतुधर्मिकसाध्यव्याप्यत्वज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदिका या साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्यनुमितिनिरूपितविषयतान्तःपातिव्याप्तिविषयता तदवच्छिन्नत्वस्य, एवं कार्यतावच्छेदकीभूता या निरुक्ताऽनुमितिनिरूपितमुख्यविशेष्यता तदवच्छिन्ना प्रकृतपक्षधर्मिकप्रकृतसाध्यहेतुप्रकारकग्रहत्वाव्यापिका हेतुधर्मितावच्छेदकसाध्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता तदन्यत्वस्य च सत्त्वेन कार्यतावच्छेदकीभूतव्याप्तिविषयताविशिष्टस्य तत्प्रतिबध्यतायां सत्त्वात् ।

एवं पक्षधर्मिकहेतुप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां पक्षधर्मिकसाध्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां च स्वावच्छेदकीभूतमुख्यविशेष्यत्वावच्छिन्नत्वसत्त्वेऽपि तादृशप्रतिबध्यतायाः पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यहेतुप्रकारकग्रहत्वाव्यापकविरहेण तादृशोभयसम्बन्धेन निरुक्तकार्यताविशिष्टत्वमक्षतमेवेति बाधस्वरूपासिद्ध्यादौ लक्षणसमन्वयः ।

ह्रदो वन्हिमान् जलादित्यत्र जलावच्छिन्नविशेष्यकवन्हिप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां, जलवद्ह्रदत्वावच्छिन्नधर्मिकवन्हिप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां च वन्हिव्याप्यजलवद्ह्रदो वन्हिमानित्यनुमितिनिरूपिता या मुख्यविशेष्यता तदवच्छिन्नत्वस्य सत्त्वेऽपि तादृशप्रतिबध्यताया ह्रदो वन्हिमान् धूमवांश्चेति ज्ञानाऽवृत्तितया प्रकृतपक्षधर्मिकसाध्यहेतुग्रहत्वाव्यापकतया स्वावच्छेदकीभूतमुख्यविशेष्यत्वावच्छिन्नप्रकृतपक्षधर्मिकसाध्यहेतुत्वग्रहत्वाव्यापकप्रतिबध्यताभिन्नत्वविरहाच्च निरुक्तोभयसम्बन्धेन प्रकृतपक्षधर्मिकहेतुप्रकारकनिश्चयत्वघटितधर्मावच्छिन्नकारणतानिरूपितप्रकृतसाध्यविधेयकत्वघटितधर्मावच्छिन्नकार्यताविशिष्टत्वमिति जलावच्छेदेन वन्ह्यभावे वन्हित्वावच्छेदेन जलवद्ह्रदाऽवृत्तित्वे वा नाति(१)प्रसङ्गः ।

एवं पर्वतो गगनवान् धूमादित्यत्र धूमव्यापकगगनसमानाधिकरणधूमवान्पर्वतो गगनवानित्यनुमितिनिरूपितमुख्यविशेष्यत्वावच्छिन्ना या वृत्तिमद्धर्मितावच्छेदककगगनप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता तस्याः पर्वतो धूमवान् पर्वतो गगनवानितिज्ञानाऽवृत्तितया प्रकृतपक्षधर्मिकहेतुसाध्यग्रहत्वाऽव्यापकत्वाच्च निरुक्तोभयसम्बन्धेन तादृशकार्यताविशिष्टत्वमिति न तादृशप्रतिबध्यतामादाय वृत्तिमदवच्छेदेन गगनाभावस्य दोषत्वापत्तिः ।

एवं ह्रदो वन्हिमान् धूमादित्यत्र वन्हिव्याप्याभाववद्ह्रदस्य वन्हिव्याप्यधूमाभाववद्ह्रदस्य वा न हेत्वाभासत्वम् । ह्रदधर्मिकवन्हिव्याप्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायाः ह्रदधर्मिकवन्हिव्याप्यधूमप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायाश्च ह्रदो वन्हिमान् धूमवांश्चेति ज्ञानाऽवृत्तितया ह्रदधर्मिकहेतुसाध्यप्रकारकग्रहत्वाव्यापकतया, वन्हिव्याप्यधूमवान् ह्रदो वन्हिमानित्यनुमितिनिरूपितमुख्यविशेष्यत्वावच्छिन्नप्रतिबध्यताभिन्नत्वविरहेण तत्प्रतिबध्यतायां निरुक्तोभयसम्बन्धेन कार्यताविशिष्टत्वाभावादिति ।

ननु लिङ्गोपधानमते ह्रदो वन्हिमान् जलादित्यादौ वन्ह्यभाववज्जलवति अतिव्याप्तिः, लिङ्गधर्मिताव-

(१) सर्वत्राऽतिप्रसङ्गोनुपदमेव वक्ष्यते ।

च्छेदककसाध्यानुमितौ जलसामानाधिकरण्येन जलावच्छेदेन वा वन्ह्यवगाहितया तत्प्रतिबध्यतानिरूपिता या जलावच्छेदेन वन्ह्यभावप्रकारताशालिनिश्चयनिष्ठा प्रतिबन्धकता तच्छालियथार्थज्ञानाविषयत्वात् । न चाऽस्य बाधत्वम्, पक्षतावच्छेदकीभूतहृदत्वधर्मितावच्छेदककवन्ह्यनुमितिप्रतिबन्धकज्ञानाऽविषयत्वाद्विति चेन्न ।

हेतौ साध्याभाववद्वृत्तित्वस्यैव हेतुमति साध्याभावस्यापि व्यभिचारतया तस्य(१) लक्ष्यतयाऽतिव्याप्तेरिष्टत्वात् ।

न च तथापि वन्ह्यभाववज्जलवत्यातिव्याप्तिः, जलावच्छेदेन वन्ह्यभावव्याप्यवत्तानिश्चयस्यापि तादृशानुमितिप्रतिबन्धकत्वादिति वाच्यम् । एतस्याऽपि व्यभिचारेऽन्तर्भावात्, यो यत्र दोषस्तद्व्याप्योऽपि दोष एवेति मथुरानाथेन सिद्धान्तित्वात् वन्ह्यभावहेतुकस्थले वह्निव्याप्यवत्पर्वतस्य व्याप्यत्वासिद्ध्यन्तर्भावादिति ध्येयम् ।

(१) न चैतन्मते साध्यधर्मिकहेतुव्यापकत्ववत्ताबुद्धिं प्रति हेतुधर्मितावच्छेदककविशेषणताविशेषसम्बन्धेन वन्ह्यभावप्रकारकनिश्चयत्वेन हेतुव्यापकत्वविशिष्टवन्ह्यभावप्रतियोगिकविशेषणताविशेषसम्बन्धेन वन्ह्यभावप्रकारकनिश्चय-शुद्धविशेषणतासम्बन्धेन वन्ह्यभावप्रकारकनिश्चययोरेकरूपेण प्रतिबन्धकत्वम्, तथाच जलव्यापकत्वविशिष्टवन्ह्यभावप्रतियोगिकविशेषणताविशेषसम्बन्धेन वन्ह्यभावविशिष्टजलावच्छिन्नाऽविषयकप्रतीतिविषयविशेषणताविशेषसम्बन्धेन वन्ह्यभाववज्जलवान्यस्तद्घटितत्वेन जलावच्छेदेन वन्ह्यभावस्य तादृशविशिष्टान्तरघटितत्वेन तस्य न व्यभिचारतासम्भवः इति वाच्यम् । तस्य साधारणरूपव्यभिचारत्वाऽसम्भवेऽपि सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यं प्रति विरोधि तादृशविशिष्टत्वमिति सव्यभिचारसामान्यलक्षणस्य ह्रदधर्मिकजलप्रकारकनिश्चयविशेषितजलधर्मिकवह्निव्यापकीभूताभावप्रतियोगित्वनिश्चयत्वेन प्रतिबन्धकत्वमादाय यथा वह्निव्यापकीभूताभावप्रतियोगिजले सत्त्वम्, तथा ह्रदधर्मिकजलप्रकारकनिश्चयविशिष्टजलावच्छेदेन वन्ह्यभावप्रकारकनिश्चयत्वेन प्रतिबन्धकतामादाय जलावच्छेदेन वन्ह्यभावेपि सत्त्वामिति तस्य सव्यभिचारसामान्यलक्षणाक्रान्ततया तस्याऽसाधारण्यमध्येऽन्तर्भूतत्वाद् व्यभिचारत्वस्येष्टत्वादिति ।

नन्वेमपि यत्र ह्रदत्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यता जलं च हेतुः तत्र जलवद्ह्रदत्वावच्छेदेन वन्ह्यभावस्य निरुक्तसव्यभिचारसामान्यलक्षणानाक्रान्ततया व्यभिचारभिन्नस्य ह्रदत्वसामानाधिकरण्येन वह्निमत्ताबुद्धिप्रतिबन्धकज्ञानविषयतया बाधात्मकस्य लिङ्गोपधानमतसिद्धानुमितिप्रतिबन्धकज्ञानविषयतया-हेत्वाभाससामान्यलक्षणाक्रान्तस्यातिरिक्तहेत्वाभासत्वापत्तिर्दुर्वारैव, ह्रदधर्मिकजलप्रकारकनिश्चयविशिष्टजलवद्ह्रदत्वावच्छेदेन वन्ह्यभावप्रकारकनिश्चयस्य ह्रदत्वधर्मितावच्छेदककवह्निमत्ताबुद्धिप्रतिबन्धकत्वात्, सामान्यधर्मप्रकारकनिश्चयविशिष्टसामान्यघटितविशेषधर्मावच्छेदेन तदभाववत्तानिश्चयसत्त्वेऽपि तद्वत्ताबुद्ध्युदयात् ।

एतेन जलधर्मिकवह्निसामानाधिकरण्यवत्ताबुद्धिं प्रति जलत्वावच्छेदेन वह्निसामानाधिकरण्याभावप्रकारकनिश्चयस्यैव जलावच्छेदेन वन्ह्यभावप्रकारकनिश्चयस्याऽपि प्रतिबन्धकत्वस्यानुभविकत्वात्, जलावच्छेदेन वन्ह्यभावग्रहस्य हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहविरोधितया विरोधत्वमेव, एवं जलावच्छेदेन वन्ह्यभावव्याप्यस्यापि विरोधित्वमेवेति तस्य हेत्वाभाससामान्यलक्षणाक्रान्तत्वेऽपि न क्षतिरिति परास्तम् ।

एवमपि जलवद्ह्रदत्वावच्छेदेन वन्ह्यभाववत्ताज्ञानस्य जलधर्मिकवह्निसामानाधिकरण्यग्रहाविरोधितया विरोधभिन्नस्य लिङ्गोपधानमते हेत्वाभाससामान्यलक्षणाक्रान्तत्वेनाऽतिरिक्तहेत्वाभासत्वापत्तिर्दुर्वारैव, एवं वह्नित्वावच्छेदेन जलवद्ह्रदाऽवृत्तित्वज्ञानस्यापि जलधर्मिकवह्निसामानाधिकरण्यज्ञानाऽविरोधितया विरोधभिन्नस्य जलवद्ह्रदधर्मिकवह्निमत्ताबुद्धिं प्रति विरोधितया हेत्वाभासत्वापत्तिर्दुर्वारैव, एवं पर्वतो गगनवान् धूमादित्यत्र वृत्तिमदवच्छेदेन गगनाभावस्य हेत्वाभासत्वापत्तिः धूमव्यापकगगनसमानाधिकरणधूमवान्पर्वतो गगनवानित्यनुमितिं प्रति वृत्तिमदवच्छेदेन गगनाभाववानिति ज्ञानस्यापि विरोधित्वम्, वृत्तिमद्धर्मितावच्छेदककगगनवत्ताबुद्धिं प्रति वृत्तिमद्वैशिष्ट्यावच्छेदेन गगनाभाववत्तानिश्चयस्यापि विरोधित्वात् तद्विषयस्य लिङ्गोपधानमते हेत्वाभाससामान्यलक्षणाक्रान्तत्वात्, तस्य हेतुतावच्छेदकावच्छिन्नाघटिततया असाधारण्यसाधारण्यविरोधानात्मकत्वादिति ।

ज्ञानस्थले हेतुविशिष्टपर्वतत्वावच्छिन्नधर्मिकसंयोगादिसंसर्गकानुमितेरेवोपगमे पर्वतत्वसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेऽपि तत्र तथाविधसाध्यनिश्चयवतोऽनुमित्यापत्तेः, नहि सामानाधिकरण्येन बाध-

---

पकत्वावच्छिन्नसंसर्गत्वास्वीकारे। सामानाधिकरण्येन हेतुमत्तापरामर्शान्न तदेकदेशपर्वतत्वावच्छेदेन साध्यानुमितिसम्भवः पर्वतत्वावच्छेदेन परामर्शस्य पर्वतत्वावच्छेदेनाऽनुमितिं प्रत्येव हेतुत्वात्, अवच्छेदावच्छेदेन परामर्शस्य सामानाधिकरण्येनाऽनुमितिहेतुत्वे पर्वतत्वावच्छेदेन परामर्शस्थले प्रतिबन्धकान्तराऽसत्त्वेऽपि पर्वतत्वसामानाधिकरण्येन सिद्धिमात्रसत्त्वेऽनुभवसिद्धाया अनुमितेरनुत्पत्तिः स्यात्, परन्तु विशिष्टपर्वतत्वावच्छेदेन हेतुमत्ताज्ञानस्थले लिङ्गानुपधानमतेऽपि विशिष्टपर्वतत्वावच्छेदेन साध्यानुमितिरिष्यत उक्तम् **शुद्धपर्वतत्वावच्छेदेनेति**। **हेतुमत्ताज्ञानस्थले इति**। पर्वतत्वव्यापकवह्निव्याप्यधूमप्रतियोगिकसंयोगेन पर्वतो वह्निव्याप्यधूमवानिति परामर्शदशायामित्यर्थः। अवच्छेदावच्छेदेन परामर्शकाले इति यावत्। **हेतुविशिष्टपर्वतत्वावच्छिन्नसंयोगादिसंसर्गकेति**। हेतुविशिष्टपर्वतत्वव्यापकसंयोगादिसंसर्गकेत्यर्थः। **अनुमितेरेवोपगमे इति**। त्वया एकदेशव्यापकताया अनङ्गीकारादिति भावः। **तथाविधेति**। सामानाधिकरण्येनेत्यर्थः। लिङ्गानुपधानमते तथाविधपरामर्शात्तथाविधबाधनिश्चयदशायां सामानाधिकरण्येनाऽनुमितेरिष्टत्वात्तथाविधसिद्ध्यनुधावनम्। एतावता आपत्त्यङ्ग आपाद्यव्यतिरेकः सिद्धः। **अनुमित्यापत्तेरिति**। सामानाधिकरण्येन बाधनिश्चयोऽवच्छेदावच्छेदेनाऽनुमितिं प्रतिबध्नाति, अवच्छेदावच्छेदेन परामर्शोत्तरं जायमानाऽप्यनुमितिर्नावच्छेदावच्छेदेन, एकदेशव्यापकताया अनङ्गीकारात्। सामानाधिकरण्येन सिद्धेस्तु सामानाधिकरण्येनाऽनुमितिप्रतिबन्धकत्वेपि नेयमनुमितिः सामानाधिकरण्येन, संसर्गांशे व्यापकत्वभानात्, तत्कारणीभूतसामानाधिकरण्यावगाहिपरामर्शविरहाच्च। तथाच पर्वतत्वमात्रव्यापकत्वानवगाहितया व्यापकत्वभाननिबन्धनाधिकविषयतया चोक्तानुमितौ बाधसिद्ध्योरप्रतिबन्धकत्वादिति भा-

---

एवं तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकतया ह्रदो वह्निमान् घटत्वादित्यत्र वन्ह्यभावव्याप्यवद्घटेऽतिव्याप्तिः। न च तस्य लक्ष्यत्वमेवाऽस्त्विति वाच्यम्। साध्याभावव्याप्यादौ तु हेतुसामानाधिकरण्यादिविरोधित्वान्नाभास इति साधारणग्रन्थे दीधितिकृता तस्याऽभासत्वखण्डनात्।

अत्र मान्याः—प्रकृतलक्षणघटकीभूतप्रतिबन्धकतायां उक्तविशिष्टज्ञानीयाऽलक्ष्यीभूततत्तत्प्रतिबन्धकताभेदस्य निवेशान्न दोषः। निवेशप्रकारस्तु—जलवद्ह्रदत्वावच्छेदेन वन्ह्यभाववत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताभिन्ना या प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तच्छालीत्यादि। एवं वह्नित्वावच्छेदेन जलवद्ह्रदावृत्तित्ववत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताभिन्नत्वम्, वृत्त्यवच्छिन्नावच्छेदकताकविशेष्यतानिरूपितगगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताभिन्नत्वं, घटत्वावच्छेदेन वन्ह्यभावव्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताभिन्नत्वमित्यादिकं यथायथमूह्यम्।

यद्वा साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिग्रहत्वाभाववती या प्रकृतानुमितित्वव्यापकप्रतिबध्यतेत्यादि। ग्रहत्वाभावश्च स्वाव्यापकवृत्त्यवच्छिन्नावच्छेदकताकविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतात्वसम्बन्धेनेति यथायथं सम्बन्धोऽप्यूह्यः।

सिद्धयोः सत्योः कश्चिदनुमितिमुपैति तादृशबाधादिग्रहस्य क्वचिदप्यनुमितौ प्रतिबन्धकत्वाऽसम्भवात्तेषां हेत्वाभासताविलोपापत्तिश्च इति चेद्,

एवमपि लिङ्गानुपधानमते तादृशविषयतायां मानाभाव एव, प्रकृतग्रन्थस्तु न लिङ्गोपधानमताभिप्रायकः, तन्मतेऽनुमितेः सर्वत्रैव तथाकारतया तादृशाकारत्वस्याऽव्यावर्त्तकतयाऽनुमितिपदस्य तादृशानुमितिपरत्वप्रदर्शनाऽसंगतेः।

केचित्तु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्याख्याय यथा-

वः(१)। नचेष्टापत्तिरित्याह **नहीति**। **उपैति**-स्वीकरोति। **तादृशबाधादिग्रहस्य**— सामानाधिकरण्यमात्रावगाहिबाधादिनिश्चयस्य, आदिपदेन सत्प्रतिपक्षपरिग्रहः, आश्रयासिद्धिपरिग्रहस्त्वसत्, तत्र पक्षतावच्छेदकस्य पक्ष एव भानम्, न तु हेतुविशिष्टपक्ष इत्यदोषात्। **तेषां**-सामानाधिकरण्येन बाधादीनाम्। **एवमपि**-लिङ्गोपधानमते तादृशविषयतायाः सप्रमाणत्वेऽपि। **तादृशेति**। एकदेशाव्यापकत्वावच्छिन्नेत्यर्थः। ननु लिङ्गोपधानमते एकदेशाव्यापकताभानस्वीकारस्याऽऽवश्यकत्वे प्रकृतग्रन्थस्तन्मताभिप्रायक एव तादृशलिखनस्वरसानुरोधेन वक्तव्यः, अन्यथा पक्षः साध्यवान् साध्यव्याप्यवानित्येव लिखेत्, तत्र च सामानाधिकरण्येन बाधादौ नाव्याप्तिरित्यत आह **प्रकृतग्रन्थस्त्विति**। साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारानुमितिपरं वेति दीधितिग्रन्थस्त्वित्यर्थः। **न लिङ्गोपधानमताभिप्रायक इति**। एतद्ग्रन्थस्य लिङ्गोपधानमताभिप्रायकत्वे हि एकदेशाव्यापकत्वनिर्वाहः स्यात्, तदेव त्वसिद्धमिति भावः। **तन्मते**—लिङ्गोपधानमते। **तथाकारतया**—साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारतया। **अव्यावर्त्तकतयेति**। लिङ्गानुपधानमते साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारभिन्नाऽऽकारायाः पक्षः साध्यवानित्याकाराया अनुमितेः प्रसिद्धतया तद्व्यावृत्त्यर्थं इत्याकारत्वविशेषणसङ्गतिः। लिङ्गोपधानमते च तदाकारभिन्नाऽऽकारानुमितेरप्रसिद्धया तद्विशेषणस्याऽव्यावर्त्तकतेति भावः। स्वमते इत्याकारकत्वविशेषणात्समूहालंबनानुमितिलाभ इति ध्येयम्।

जगदीशमतमाह **केचित्त्विति**। अस्य व्याचक्षते इत्यनेनाऽन्वयः। **लिङ्गानुपधानमते**—मणिकारमते। **अनुमितिपदस्य**—लक्षणघटकानुमितिपदस्य। **तदुभयपरत्वम्**—अनुमितितत्कारणोभयपरत्वम्। **व्याख्याय** "तत्राऽनुमितिपदमनुमितिकार्य-

(१) सामानाधिकरण्येन बाधनिश्चयस्य सिद्धेश्च प्रतिबध्यतावच्छेदककोटौ धर्मितावच्छेदकतायां इतरवारकपर्याप्तिनिवेशस्यावश्यकतया लिङ्गोपधानमते हेतोरधिकस्यैव धर्मितावच्छेदकतया भानादनुमित्यापत्तिरिति तत्त्वम्। ननु लिङ्गोपधानमते सामानाधिकरण्येन सिद्धेः प्रतिबन्धकताया अपलापापत्तिभिया साध्यव्याप्यहेतुभिन्नत्वे सति पक्षतावच्छेदकभिन्नो यो धर्मस्तदनवच्छिन्नविशेष्यताकत्वस्य प्रतिबध्यतावच्छेदकत्वकल्पनौचित्यम्, सामानाधिकरण्येन सिद्धेः प्रतिबन्धकत्वादेव नोक्तापत्तिरिति चेन्न।

पर्वतत्वसामानाधिकरण्येन वन्हेः सिद्धिदशायां प्रतिबन्धकान्तराऽसत्त्वे पर्वतत्वावच्छेदेन वन्हिव्याप्यधूमपरामर्शात्सर्वजनानुभवसिद्धानुमितेरनुत्पादप्रसङ्गेन संयोगत्वमात्रावच्छिन्नसंसर्गताकत्वस्य तादृशसिद्धेः प्रतिबध्यतावच्छेदकत्वमावश्यकम्, तथाचोक्तस्थले वन्हिव्याप्यधूमपर्वतत्वधर्मद्वयव्यापकसंयोगत्वावच्छिन्नसंसर्गताकानुमितेर्नानुपपत्तिः। एवं चोक्तापत्तिः सुसङ्गतैवेति।

**श्रुतपरतानिर्वाहाय लिङ्गोपधानमतमाश्रयते साध्यव्याप्येत्यादिना, इत्थाकारानुमितिपरम् अनुमितेरित्याकारकतामताभिप्रायकम्' इति व्याचक्षते ।**

---

तानिरूपकसंबन्धित्वेनाऽनुमितितत्कारणज्ञानपरमिति" ग्रन्थेनेति शेषः । **यथाश्रुतपरतेति** । वाच्यार्थ(१)परतेत्यर्थः । **लिङ्गोपधानमतम्**—आचार्यमतम् । आश्रयते दीधितिकार इति शेषः । **अनुमितेरित्याकारकतामताभिप्रायकमिति** । अनुमितेरित्याकारकता यन्मते तन्मताभिप्रायकमित्यर्थः ।

ननु यथाश्रुतार्थपरतानिर्वाहायेत्यनेन प्रथमकल्पपरित्यागे लक्षणारूपदोष एव बीजमिति ज्ञायते, तच्च न सम्यक्, लक्षणघटकीभूतप्रतिबध्यतायां तादृशसंबन्धिग्रहनिष्ठत्वानिवेशे उक्तरीत्या पर्वतो वन्हिमान् ह्रदश्च तथेतिसमूहालम्बनानुमितिमादाय वन्ह्यभाववद्ह्रदादावतिप्रसंगः, तादृशग्रहत्वव्यापकत्वनिवेशे चाऽऽश्रयासिद्ध्यादौ लक्षणगमनसंभवेऽपि बाधव्यभिचारादावव्याप्तिः, बाधनिश्चयीयप्रतिबध्यतायास्तादृशग्रहत्वाऽव्यापकत्वाद् , तादृशग्रहत्वावच्छिन्नत्वनिवेशे त्वसम्भवस्योक्तत्वादिति दोषान्तरस्य सम्भवे लक्षणारूपदोषदानमसङ्गतमिति चेन्न ।

तादृशकार्यताप्रतियोगिकयत्किंचित्सम्बन्धवद्ग्रहत्वव्यापकप्रतिबध्यताया एव लक्षणे निवेशनीयत्वात् , तादृशकार्यताप्रतियोगिकाऽऽश्रयत्वरूपसम्बन्धवद्ग्रहत्वव्यापकत्वस्याऽनुमितिविरोधिबाधनिश्चयीयप्रतिबध्यतायां , तादृशकार्यताप्रतियोगिकनिरूपकत्वरूपसम्बन्धवद्ग्रहत्वव्यापकत्वस्य परामर्शविरोधिव्यभिचारादिनिश्चयीयप्रतिबध्यतायां सर्वत्र सत्त्वेनाव्याप्त्यभावात् (२) ।

नचैवंसति गदाधरमते प्रकारान्तरानुसरणे किं बीजमिति वाच्यम् । साध्याभाववद्वृत्तिहेतुमत्ताज्ञानस्य हेतुतावच्छेदकविषयतानिवेश्यैकरूपेण कारणतामवलंब्य प्रकारान्तरानुसरणात् , तथाहि—एकरूपेण कारणतापक्षे तादृशकार्यताप्रतियोगिकनिरूपकत्वरूपसम्बन्धस्य

---

( १ ) यद्यपि अनुमतिपदस्याऽनुमितित्वावच्छिन्ने एव शक्तिः, न तु तादृशाकारानुमितित्वावच्छिन्ने इति न तस्य यथाश्रुतार्थपरत्वं सम्भवति, तथापि धेनुपदादौ धानकर्मत्वस्य माहिष्यादावतिप्रसक्ततया गोत्वं प्रयोगोपाधिरितिवदनुमितिपदस्य तादृशाकारत्वावच्छिन्ने एव शक्तिः, अनुमितित्वन्तु प्रयोगोपाधिरिति मताश्रयणान्न दोषः । प्रयोगोपाधित्वं च शक्यतानवच्छेदकत्वे सति तज्जन्यबोधविषयत्वम् ।

( २ ) तथाच जनकतावदन्यप्रकृतपक्षसाध्यकानुमितितिष्ठायाः प्रकृतहेतुमत्तानिश्चयाऽव्यवहितोत्तरत्वावच्छिन्नायाः कार्यतायास्तद्व्यक्तित्वेन निवेशः कार्यं इत्यर्थः । जनकतावत्त्वं च स्वानिरूपिताऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताककार्यतावत्व-स्वाभाववद्वृत्तिकारणतानिरूपिताऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताक कार्यतावत्त्वोभयसम्बन्धेन ।

ननु लिङ्गोपधानमते वन्हिव्याप्यघटत्ववान् ह्रदो वन्हिमानित्याद्यनुमितिं प्रति घटो वन्ह्यभाववानितिज्ञानस्य प्रतिबन्धकत्वम् , सामानाधिकरण्येन तद्वत्ताज्ञानं प्रति अवच्छेदकावच्छेदेन तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वाद् , ह्रदो वन्हिमान् घटत्वादित्यादौ वन्ह्यभाववद्घटेऽतिव्याप्तिः, हेतुसमानाधिकरणसाध्याभावस्यापि व्यभिचारत्वेन लक्ष्यत्वे तु वन्ह्यभावव्याप्यघटेऽतिव्याप्तिर्दुर्वारा, तदभावव्याप्यवत्ताज्ञानस्य बाधज्ञानसमानयोगक्षेमसाधारणत्वात् इति चेत् ।

सत्यम् दत्तोत्तरत्वात् ।, 'अन्नवदन्ति'कल्पीयविशिष्टान्तराघटितत्वाभावाच्च नातिव्याप्तिः, तदभावस्य शुद्धपक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणत्वाऽप्रयोजकत्वादिति ।

वह्नीन्धनादिहेतुविषयकपरामर्शेषु सत्त्वेन तत्र च सर्वत्र वह्निर्धूमव्यभिचारीतिव्यभिचारनिश्चयप्रतिबध्यत्वाभावेन तादृशव्यभिचारेऽव्याप्त्यापत्तेः ।

आचार्यैस्तु पृथक् पृथक् कारणतायाः स्वीकारेण तन्मते तादृशसम्बन्धवद्ग्रहत्वस्य नानाविधपरामर्शेष्वसत्त्वेन तथानिवेशेऽव्याप्तिविरहात् ।

नचैवं पृथक् कारणतावादिमतेऽपि तादृशकार्यताप्रतियोगिकयत्किंचित्सम्बन्धवद्ग्रहत्वव्यापकत्वनिवेशे तादृशकार्यतापदेन प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यतानिवेशेऽसम्भवः, अप्रामाण्यज्ञानानामनुगतरूपेणोत्तेजकत्वे पक्षसाध्यविषयतायाः कार्यतावच्छेदककोटावनिवेशात्, तादृशानुमितित्वव्यापकपरामर्शनिरूपितकार्यता तु अप्रसिद्धैव, अनुमितिनिष्ठकार्यतानिवेशे पर्वतो वह्निमान् ह्रदश्च तथेति समूहालम्बनानुमितिनिष्ठह्रदविशेष्यकपरामर्शनिरूपितकार्यतामादाय पर्वतो वह्निमानित्यत्र वन्ह्यभाववद्ह्रदेऽतिव्याप्तिः, तथाच कथं लक्षणान्तरदोष एव लक्षणान्तरानुसरणे बीजमिति वाच्यम् । कार्यतायामनुमितिनिष्ठत्वस्यैव निवेशात् । समूहालम्बनानुमितिमादायोक्तातिव्याप्तिस्तु अनुमितौ विधेयताद्वयाऽनिरूपकत्वनिवेशेन वारणीया ।

नच वह्निव्याप्यधूमवान् घटव्याप्यपटवांश्च पर्वत इति परामर्शानन्तरं, घटवान् पर्वत इति सिद्धिसत्त्वे पर्वतो वह्निमानित्यनुमितेरेवोदयेन विधेयताद्वयाऽनिरूपकतादृशानुमितिनिष्ठघटव्याप्यविषयकपरामर्शोत्तरत्वावच्छिन्नकार्यताप्रतियोगिकनिरूपकत्वरूपसम्बन्धवद्घटव्याप्यपटविषयकपरामर्शनिष्ठप्रतिबध्यतामादाय पर्वतो वह्निमानित्यत्र घटाभाववद्वृत्तिपटेऽतिव्याप्तिरिति वाच्यम् । अव्यवहितोत्तरत्वावच्छिन्नकार्यतानिरूपितज्ञाननिष्ठकारणता(१)विशिष्टान्यत्वस्याऽनुमितौ विशेषणीयत्वात् । अनुमितौ कारणतावै० स्वनिरूपितकार्यतावत्त्वस्वाभाववज्ज्ञाननिष्ठकारणतानिरूपिताऽव्यवहितोत्तरत्वावच्छिन्नकार्यतावत्त्वोभयसम्बन्धेन, तथाच तादृशानुमितौ परामर्शद्वयनिष्ठकारणतानिरूपितकार्यतासत्त्वात्तद्व्यावृत्तिरिति ध्येयम् ।

---

(१) कारणतायामव्यवहितोत्तरत्वावच्छिन्नकार्यतानिरूपितत्वविशेषणादीश्वरज्ञाननिष्ठकारणतामादाय न तादृशानुमित्यप्रसिद्धिः, अव्यवहितोत्तरत्वस्य ध्वंसघटितत्वात्, ज्ञाननिष्ठत्वविशेषणात्सिद्धिविशिष्टानुमितिं प्रति इच्छायाः कारणत्वमते इच्छाकारणतामादाय नाऽप्रसिद्धिः । प्रथमसम्बन्धनिवेशादुदासीनानुमितिनिरूपितोदासीनपरामर्शनिष्ठकारणतामादाय नाऽप्रसिद्धिः ।

द्वितीयसम्बन्धनिवेशात्परामर्शकारणतामादाय नाऽप्रसिद्धिः, द्वितीयसम्बन्धघटककारणतायां ज्ञाननिष्ठत्वाविशेषणात्प्रागुक्तरीत्या इच्छादिकारणतामादाय नाऽप्रसिद्धिः, कार्यतायामव्यवहितोत्तरत्वनिवेशाद्विशेषणज्ञानकार्यतामादाय नाऽप्रसिद्धिः।

न च तथापि पर्वतो वन्हिमान् धूमादित्यादौ वन्ह्यभाववद्वृत्तिद्रव्येऽतिव्याप्तिः, प्रकृतहेत्वंशे व्याप्त्यनवगाहिप्रकृतहेतुविषयकवन्हिव्याप्यद्रव्यवान्पर्वत इति परामर्शोत्तरानुमितौ प्रकृतपक्षसाध्यहेतुकायां तादृशकारणताविशिष्टान्यत्वस्य सत्त्वात्तन्निष्ठकार्यत्वप्रतियोगिकनिरूपकत्वरूपसम्बन्धवत्तादृशपरामर्शत्वव्यापकप्रतिबध्यत्वस्यापि ग्रहणसम्भवादिति वाच्यम् । कारणतावदन्यप्रकृतपक्षसाध्यकानुमितिनिष्ठप्रकृतहेतुमत्तानिश्चयाऽव्यवहितोत्तरत्वावच्छिन्नकार्यतात्वेन तादृशकार्यताया लक्षणे निवेशनीयत्वात् ।

परन्तु एवंरीत्या पूर्वोक्तदोषोद्धारेण पूर्वोक्तरीत्या नानाविधव्याप्तिप्रकारताः प्रातिस्विकरूपेणाऽनिवेश्याऽनुगमसम्भवेनोक्तपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यत्वाऽप्रसिद्ध्याऽसम्भवाऽभिधानमनुचितमिति विभावनीयम् ।

तेन एकत्र हेतौ व्यभिचारादिग्रहेऽपि अन्यस्य परामर्शादनुमित्युत्पादेन

---

व्याख्या(याः) प्रयोजनं स्फुटयति । तेनेति । एकत्र—वह्नित्वाद्येकधर्मावच्छिन्ने । व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः । अन्यस्य परामर्शात्—सत्तद्वह्नित्वादिरूपाऽपरधर्मावच्छिन्ने व्याप्तिपक्षधर्मत्वावगाहिज्ञानात् । व्यभिचारादिति—व्यभिचारादिग्रहाभावस्याऽनुमित्यजनकत्वेऽपीत्यनेन सम्बन्धः । यत्र यद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथंचित्तद्रूपावच्छिन्नलिङ्गकपरामर्शस्तत्र क्षणैकविलम्बेनाऽनुमित्युपगमान्न तत्र व्यभिचारो दर्शितः ।

---

व्याख्यायाः—लक्षणघटकाऽनुमितिपदस्य अनुमितितत्कारणज्ञानपरत्वव्याख्यायाः समूहालम्बनानुमितिपरत्वव्याख्यायाः वा । प्रयोजनं—व्यभिचारादावव्याप्तिवारणरूपं, स्फुटयति—कथयतीत्यर्थः । यथाश्रुतपरित्यागे बीजमाहेति यावत् । दीधितौ तेनेति । अनुमितिपदस्य समूहालम्बनानुमितिपरत्वकथनेनेत्यर्थः । ननु एकत्रेत्यसङ्गतम्, एकत्रैवैकरूपेण व्यभिचारग्रहेऽपि अन्यरूपेण व्याप्तिग्रहस्थलाऽप्रदर्शनेन न्यूनतापातादिति चेद् । एकपदस्यैकधर्मावच्छिन्नार्थकत्वात्, एवमन्यपदस्यापि अन्यधर्मावच्छिन्नार्थकत्वमित्याशयवानाह वह्नित्वाद्येकधर्मावच्छिन्ने इति । स्वरूपासिद्धिपदमनुमितेर्हेतुवैशिष्ट्यावगाहिसमूहालम्बनरूपत्वस्याऽऽवश्यकत्वार्थम् । हेत्वंशे व्याप्तिवैशिष्ट्यावगाहित्वस्यावश्यकत्वार्थं व्यभिचारज्ञानस्याऽनुमितिविरोधितानिराकरणम् । दीधितौ व्यभिचारादिति । व्यतिरेकव्यभिचारादित्यर्थः । तथा च धूमाभाववद्वृत्तिरिति व्यभिचारनिश्चयेऽपि धूमाभाववद्वृत्तितद्वह्निमानिति परामर्शादनुमित्युत्पत्त्या तत्र व्यभिचारनिश्चयाभावरूपकारणविरहेण व्यतिरेकव्यभिचार इति भावः । व्यभिचारादिग्रहाभावस्येति । व्यभिचारनिश्चयाभावस्येत्यर्थः । अनुमित्यजनकत्वेऽपीति । अनुमितिकारणीभूताभावपदेनाऽग्रहणेऽपीति यावत् । न क्षतिरिति । न व्यभिचारादावव्याप्तिरित्यर्थः । ननु तद्धर्मावच्छिन्ने व्यभिचारज्ञानसत्त्वेऽपि तद्धर्मावच्छिन्नधर्मिकव्याप्तिज्ञानसम्भवात्तदकथनेन न्यूनता इत्याक्षेपे सा नास्तीत्याह यत्रेति । कथञ्चित् लौकिकसन्निकर्षजन्यः । न तत्र व्यभिचारो दर्शित इति । ननु यत्र प्रथमं शाब्दादिपरामर्शः ततो लौकिकसन्निकर्षजन्यो व्यभिचारग्रहः तत्र क्षणैकविलम्बेनाऽनुमित्युपगमाऽसम्भव इति चेन्न ।

तत्राऽनुमितेरेवाऽनभ्युपगमात्, अत एवाऽग्रे भट्टाचार्येण इन्धनलिङ्गकपरामर्शोऽनुसृत इति । न च तथापि यत्रैकदा व्यभिचारज्ञानं व्याप्तिज्ञानं च सामानाधिकरण्येन तत्र, एवं यत्रादौ अपेक्षाबुद्ध्यात्मकव्यभिचारज्ञानं ततो व्याप्तिज्ञानं तत्र क्षणविलम्बेनाऽनुमितिस्वीकारेऽपि व्यभिचारतादवस्थ्यम्, एवं यत्र व्यभिचारज्ञानोत्पत्तिचतुर्थक्षणे बाधनिश्चयः तत्र क्षणविलम्बेनाऽनुमितेः स्वीकर्तुमशक्यतया व्यभिचारतादवस्थ्यमिति वाच्यम् । अपेक्षाबुद्धिद्वितीयक्षणे न ज्ञानान्तरम्, सामानाधिकरण्येन व्याप्तिज्ञानस्य न कारणत्वम्, बाधनिश्चयस्य कार्यकालवृत्तितया न प्रतिबन्धकत्वमित्यभ्युपगमस्य तावद्दूरानुधावनम् ।

व्यभिचाराद् , व्याप्त्यादिज्ञानेनाऽन्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभाव·

ननु तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचार· ज्ञानाभावस्य हेतुत्वोपगमान्न व्यभिचारः, तद्धर्मावच्छिन्नलिङ्गकत्वं च अव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्ट· त्वम्, तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत्तदन्यत्वमेव वा जन्यता· वच्छेदकं वाच्यम् , तेन धूमव्याप्यवह्निमानयमित्यादिशाब्दादिपरामर्शोत्प· त्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्यो वह्निर्धूमव्यभिचारी धूमव्याप्ये· न्धनवानित्याकारकसमूहालम्बनग्रहः तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नि· त्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरत आह—व्याप्त्या· दीति । क्लृप्तकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाद्यभावव्यति· रेकेणाऽनुमितिव्यतिरेकस्याऽसिद्धत्वादिति भावः । व्याप्तिज्ञानादेर्व्यभि·

**तद्धर्मावच्छिन्नलिङ्गकत्वं चेति ।** तथा चाऽव्यवहितोत्तरत्वसम्बन्धेन तद्रूपाव· च्छिन्नधर्मिकव्याप्तिज्ञानविशिष्टानुमितौ तद्रूपावच्छिन्नधर्मिकव्यभिचारज्ञानाभावः कारणमि· त्यर्थः । अत्राव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं वाच्यम् , अन्यथा "यत्र यद्रूपावच्छिन्न· धर्मिकव्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथञ्चिदित्यादिना" ग्रन्थकृता क्षणैकविलम्बेन स्वीकृ· ताया अनुमितेः परामर्शद्वितीयक्षणे उत्पादप्रसङ्गात् , द्वितीयक्षणमात्रवृत्त्यव्यवहितोत्तरत्व· निवेशे द्वितीयक्षणे तादृशानुमितेर्व्याप्तिज्ञानविशिष्टत्वाभावेन व्यभिचारज्ञानाऽप्रतिबध्यत्वादिति ध्येयम् । **तेन**—व्यभिचारज्ञानविशिष्टान्यत्वस्य जन्यतावच्छेदककोटौ निवेशेन । **शाब्दा· दीति ।** लौकिकव्याप्तिग्रहानन्तरं लौकिकव्यभिचारग्रहाऽसम्भवात्प्रथमतः शाब्दपरामर्शानु· धावनम् , भिन्नेन्द्रियजन्यपरामर्शस्याऽप्युपलक्षणम् । परामर्शोऽप्ययं सिद्ध्यात्मको बोध्यः, अन्यथा द्वितीयक्षणेऽनुमित्यापत्तेः इष्टापत्तौ व्यभिचारज्ञानाभावस्याऽनुमितिहेतुत्वे व्यभिचा· राभावाद् ग्रन्थाऽसङ्गतेः । **समूहालम्बनग्रह इति ।** व्यभिचारज्ञानोत्तरक्षणे द्वितीयपरा· मर्शस्थापने क्षणद्वयसाधारणाऽव्यवहितोत्तरत्वनिवेशेऽपि नानुमितेस्तद्धर्मावच्छिन्नधर्मिक· व्याप्तिज्ञानविशिष्टत्वमिति समूहालम्बनानुधावनम् ।

**तज्जन्यानुमितेः**—उक्तसमूहालम्बनग्रहजन्यानुमितेः, पर्वतो धूमवानित्याकारिकाया इति यावत् । **उक्तसम्बन्धेन**—अव्यवहितोत्तरत्वसम्बन्धेन । **वह्नित्वावच्छिन्नधर्मि· कव्याप्त्यादिज्ञानविशिष्टत्वेऽपीति ।** धूमव्याप्यवह्निमानयमितिज्ञानविशिष्टत्वेऽपीत्यर्थः । तादृशानुमितेर्वह्नित्वावच्छिन्नधर्मिकव्याप्तिज्ञानविशिष्टतया जन्यतावच्छेदकत्वेन तत्र वह्नित्वा· वच्छिन्नधर्मिकव्यभिचारज्ञानाभावरूपकारणविरहेऽपीति यावत् । **न क्षतिः**—न व्यतिरेक· व्यभिचारः । तादृशानुमितेः स्वसामानाधिकरण्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभय सम्ब· न्धेन वन्हित्वावच्छिन्न धर्मिकव्यभिचार ज्ञानविशिष्टत्वेन कार्यतावच्छेदकानाक्रान्तत्वा· दिति यावत् । तथाच समूहालम्बनानुमितिपरत्वं निर्युक्तिकमेवेति भावः । **अतः**— व्यभिचाराभावाद् । **आहेति ।** व्यभिचारज्ञानाभावस्याऽन्यथासिद्धत्वमाहेत्यर्थः । **असिद्धत्वादिति ।** असत्त्वादित्यर्थः । कार्याभावप्रयोजकीभूताभावप्रतियोगित्वरूपकारण·

स्याऽनुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति ।

---

**चारज्ञानाभावादिना अन्यथासिद्धत्वशङ्का तु द्रागेव निराकृता ।** न क्षतिः— न व्यभिचारादावव्याप्तिः । **यत्राऽसद्धेतुविशेषे ताद्दशानुमितेरप्रसिद्धिः तत्रत्यदोषेष्वव्याप्तेर्वक्ष्यमाणतया ईद्दशव्याख्यायामनिर्भरसूचनाय वदन्ती**त्युक्तम् ।

**पर्वतो वह्निमानित्यादिसद्धेतुस्थले बाधादिभ्रमविषयेऽतिव्याप्तिवार**-

---

त्वस्य व्यभिचारज्ञानाभावेऽसत्त्वादिति यावत् । व्यभिचारज्ञानविशिष्टान्यानुमितित्वावच्छिन्न-व्यतिरेकत्वकिञ्चित्करः, तत्सत्वेऽपि व्यभिचारज्ञानस्थलीयाऽनुमितिजनकमात्रेण तद्विरह-स्थलेऽनुमित्युत्पत्त्या तस्याऽन्यथासिद्धेरिति भावः । ननु व्यभिचारज्ञानाभाव एव कारण-मस्तु, व्याप्तिज्ञानमेवाऽन्यथासिद्धं विनिगमनाविरहादत आह **व्याप्तिज्ञानादेरिति** । **द्रागेव**—सुतरामेव । यस्य व्याप्तिज्ञानं नास्ति व्यभिचारज्ञानं च नास्ति तस्यानुमित्यापत्तिरिति भावः ।

नन्वत्र कीदृशं लक्षणशरीरम् ? यदि तावत्प्रकृतपक्षसाध्यहेतुकानुमितित्वव्यापकत्व-घटितम् , प्रकृतहेतुकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वम् , तथाच तादृशव्यभिचारज्ञानविशिष्टान्यप्रकृतपक्षसाध्यकानुमितित्वव्यापकप्रतिबध्यतेत्यादिलक्षणं पर्यवसितम् , तदा व्यभिचारेऽव्याप्तिविरहेऽपि स्वरूपसिद्धौ विरोधादौ चाऽव्याप्तिः । एकरू-पेण स्वरूपासिद्धिज्ञानेऽपि अपररूपेण पक्षधर्मताज्ञानादनुमित्युत्पत्त्या स्वरूपासिद्धिनिश्चयप्रति-बध्यतायास्तादृशानुमितित्वाऽव्यापकत्वात् । यदि च स्वरूपासिद्धिज्ञानविशिष्टान्यत्वमपि निवे-श्यते, तदा साधनाप्रसिद्धिविरोधानुपसंहारित्वज्ञानविशिष्टान्यत्वस्यापि निवेशनीयतया महागौ-रवमिति चेन्न ।

प्रकृतपक्षविशेष्यकप्रकृतसाध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रति-बन्धकताशालिनिश्चयविशिष्टान्यप्रकृतपक्षसाध्यकानुमितित्वव्यापकप्रतिबध्यताघटितलक्षणस्य विवक्षितत्वात् । तेन न स्वरूपसिद्ध्यादावव्याप्तिः, नवा यत्र घटव्याप्यपटवान् वह्निव्याप्यधू-मवान्पर्वत इति समूहालम्बनपरामर्शः ततः कुतश्चित्प्रतिबन्धकवशाद् घटानुमितिर्न जाता किन्तु वह्न्यनुमितिरेव, तत्रानुमितेः घटत्वावच्छिन्नधर्मिकव्याप्तिज्ञानविशिष्टत्वेऽपि न घटाभा-ववद्वृत्तिपटेऽतिव्याप्तिरिति दिक् ।

**असद्धेतुविशेषे**—धूमहेतौ, सप्तम्यर्थः प्रकारकत्वम् , प्रकारकज्ञानजन्यत्वं वा । तथाच धूमहेतुप्रकारिकायाः, धूमहेतुप्रकारकपरामर्शजन्याया वा इति यावत् । **तादृशानु-मितेः**—निर्वह्निः पर्वतो वह्निमानित्यनुमितेः । **अप्रसिद्धिः** । तादृशज्ञानस्याऽऽहार्यत्वेनाऽऽ-हार्यानुमितेरनभ्युपगमादिति भावः । **तत्रत्यदोषेषु**—तादृशहेतुनिष्ठदोषेषु । वह्निमत्पर्वतरूपा-श्रयासिद्ध्यादिष्वित्यर्थः। **अव्याप्तेर्वक्ष्यमाणतया** न कोपि हेत्वाभासः स्यादिति ग्रन्थेनेत्यर्थः । **ईदृश(यथाश्रुत)व्याख्यायाम्**—अनुमितिपदस्य समूहालम्बनानुमितिपरत्वव्याख्यायाम् ।

**पर्वतो वह्निमानित्यादीति** । आदिना प्रमेयमभिधेयत्वादित्यादेः सद्धेतुमात्रस्य परिग्रहः, अत एवोक्तं-**सद्धेतुस्थले** इति । सद्धेतुमात्रस्थले इति यावत् **बाधादिभ्रमविषये इति** ।

पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमिति-प्रतिबन्धादाह **यथार्थेति** ।

---

कतया यथार्थपदं सार्थकयति पर्वतो निर्वह्निरिति । अत्र इतिपदस्य त्रितयस्थले सम्बन्धाद् भ्रमत्रयलाभः । प्रत्येकभ्रममादायाऽतिप्रसङ्गसम्भवात् समूहालम्बनभ्रमपर्यन्तानुधावनवैफल्यात् तत्परत्वाऽसङ्गतिरिति ध्येयम् ।

प्रथमभ्रमोऽनुमितौ विरोधी अन्त्यौ च तज्जनकज्ञाने तथा, तयोरपि अन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमाद्यंशे भ्रमत्वम् , अन्त्ये च प्रमेयत्वाभाववद्वृत्तित्वस्याऽप्रसिद्ध्या न तद्भ्रमत्वं, किन्तु अभावांशेऽनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमित्येतादृशविशेषमादृत्य शिष्यव्युत्पादनायाऽनेकविधभ्रमकथनम् ।

---

पर्वतो वन्ह्यभाववानितिभ्रमविषये वन्ह्यभावे इत्यर्थः । आदिपदग्राह्यवह्निव्यभिचारी धूम इति भ्रमविषये वन्ह्यभाववद्वृत्तित्वे अभिधेयत्वं मेयत्वव्यभिचारि इति भ्रमविषये मेयत्वे चेत्यर्थः । **अतिव्याप्तिवारकतयेति** । अतिव्याप्तिवारणायेत्यर्थः । **इतिपदस्येति** । पर्वतो निर्वह्निरिति भ्रमाद्, धूमो वन्हेर्व्यभिचारीति भ्रमाद्—अभिधेयत्वं प्रेयत्वस्य व्यभिचारीति भ्रमादित्यन्वयः। **तत्परत्वेति**। समूहालम्बनपरत्वेत्यर्थः । **प्रथमभ्रमः** पर्वतो वन्ह्यभाववानित्याकारकः । **अन्त्यौ चेति** । धूमो वन्हेर्व्यभिचारी, अभिधेयत्वं मेयत्वस्य व्यभिचारीति भ्रमौ चेत्यर्थः । **तज्जनकज्ञाने** व्याप्तिज्ञाने इत्यर्थः । **तथा**—विरोधिनौ इत्यर्थः ।

**तयोरपीति** । अन्त्ययोरपीत्यर्थः । प्रथमे इति शेषः । **अन्यत्र**—मीनशैवालादौ । **साध्याभाववद्वृत्तित्वस्य**—वन्ह्यभाववद्वृत्तित्वस्य । **अन्त्ये चेति** । अभिधेयत्वं प्रमेयत्वाभाववद्वृत्तीत्यत्र चेत्यर्थः । **अनुयोगिताविशेषसम्बन्धेनेति** । स्वरूपसम्बन्धावच्छिन्नस्ववृत्तिप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्यर्थः । **साध्यस्य**—मेयत्वस्य । **विशेषमादृत्येति** । प्रथमे बाधभ्रमः, अन्त्ययोर्व्यभिचारभ्रमः, तत्राप्याद्ये वन्हिव्यभिचारित्वस्य मीनशैवालादौ प्रसिद्धस्य धूमे भ्रमः, अन्त्ये मेयत्वाभाववद्वृत्तित्वस्याऽप्रसिद्ध्या, मेयत्वस्य अनुयोगिताविशेषसम्बन्धेन अभावे भ्रम इति विशेषः इत्यन्वयः । **न तद्भ्रमत्वम्**—न मेयत्वाभाववद्वृत्तित्वभ्रमत्वम्, **साध्यस्य**—मेयत्वस्य ।

अथ केवलान्वयिसाध्यकेऽप्रसिद्ध्या साध्याभाववद्वृत्तित्वरूपा व्याप्तिर्दोषलक्षणघटकानुमितौ न निवेश्या, किन्तु हेतुव्यापकसाध्यसामानाधिकरण्यरूपैव, तथा चाऽभिधेयत्वं मेयत्वव्यभिचारीत्यत्र तादृशसाध्याभाववद्वृत्तित्वरूपव्यभिचारस्याऽनुपयोगितया तत्र प्रयासो व्यर्थ इति चेन्न ।

साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकत्वमतेनैवाऽयं ग्रन्थः, भ्रमात्मकसमूहालम्बनानुमितिमादाय दोषलक्षणस्योन्नेयत्वात् । न च तन्मते केवलान्वयिसाध्यकहेतोर्दुष्टत्वे "पर्वतो बन्हिमानित्यादिसद्धेतुस्थले" इति ग्रन्थविरोध इति वाच्यम्। अनुगतरूपेण सर्वासामेव व्याप्तीनां लक्षणघटकसमूहालम्बनानुमितौ निवेशात् , तत्र साध्याभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धकतामादाय दोषशङ्कानिरासार्थमयं प्रयासः । न चैवं "अप्रतियोगिसाध्यमित्यादेः केव-

**इदं त्ववधेयम् । अभिधेयत्वं मेयत्वस्य व्यभिचारीत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वभ्रमो वाच्यः, प्रतियोगितांशे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोः साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात् , एवञ्च**

---

लान्वयित्वज्ञानस्य "अनुपसंहारित्वज्ञानात्मकस्य" विषयीभूतो यः तस्य दोषस्य केवलान्वयिसाध्यके सत्वात् सद्धेतुत्वकथनमस्याऽसङ्गतमिति वाच्यम् । दर्शितातिव्याप्तिविषयव्यभिचारादिदोषरहितस्यैव सद्धेतुपदार्थत्वात्, अतिव्याप्तिस्तु व्यभिचारे दर्शितेति न काप्यनुपपत्तिः, एवं च साध्याभाववद्वृत्तिरूपव्याप्तिनिवेशेऽयं ग्रन्थः सङ्गच्छते। यद्वा अप्रतियोगि साध्यमितिज्ञानं नैतन्मते प्रतिबन्धकम् , असमानाकारकज्ञानस्याऽप्रतिबन्धकत्वादित्यपि केचित् ।

**अभिधेयत्वं मेयत्वस्य व्यभिचारीत्यत्रेति** । अभिधेयत्वं मेयत्वाभाववद्वृत्तीत्यत्रेत्यर्थः। **प्रमेयत्वभ्रमो वाच्य इति**। अभावांशे इति शेषः । **साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकतयेति** । तथाच साध्यविशिष्टाभाववदवृत्तित्वं व्याप्तिः, अभावे साध्यवै० साध्यतावच्छेदकसम्बन्धावच्छिन्नत्ववृत्तिसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन(१)। **तदंशे**-प्रतियोगित्वांशे । **तदुभयावगाहीति** । साध्यतावच्छेदकसम्बन्धाव-

---

( १ ) अथ साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वेनैव कारणत्वमस्तु, तथाच स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वस्य भ्रमसम्भवेन न भ्रमानुपपत्तिरिति चेन्न ।

महानसीयवन्ह्यभाववदवृत्तिधूमवान्पर्वत इति परामर्शस्य तादृशरूपाक्रान्ततया ततः पर्वतो वन्हिमानित्यनुमित्यापत्तेः । न च(२) साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारताघटितनिश्चयत्वेन कारणत्वान्नोक्तापत्तिरिति वाच्यम् । महानसीयत्वमुपलक्षणविधयाऽवगाहमानात्तादृशपरामर्शात्पर्वतो वन्हिमानित्यनुमित्यनुपपत्तेः, तादृशपरामर्शस्याऽभावांशे महानसीयत्ववन्हित्वधर्मद्वयावच्छिन्नप्रकारताकतया तादृशप्रकारतावच्छेदकतायाः धर्मद्वय एव पर्याप्तत्वात् साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताघटितधर्मस्य कारणतावच्छेदकत्वे तु महानसीयवन्हिव्याप्यधूमवान् पर्वत इति परामर्शात्पर्वतो वन्हिमानित्यनुमितिवारणाय साध्यतावच्छेदकसंसर्गतावच्छेदकतापर्याप्तिर्निवेश्या, तथाच महानसीयत्वमुपलक्षणविधयाऽवगाहमानतादृशपरामर्शीयाऽभावविशेष्यतानिरूपितसाध्यनिष्ठप्रकारतावच्छेदकसम्बन्धीभूतप्रतियोगितानिरूपितावच्छेदकतापर्याप्तिः शुद्धवन्हित्वे एव, अभावप्रतियोगितावच्छेदककुक्षौ उपलक्षणविधया प्रविष्टस्यावच्छेदकत्वाभावादिति न तादृशपरामर्शादनुमित्यनुपपत्तिरिति दिक् ।

---

( १ ) ननु पर्याप्तिनिवेशेऽपि वन्हिमहानसीयाभाववदवृत्तिधूमवान्पर्वत इति निश्चयस्याऽपि महानसीयत्ववन्हित्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकप्रकारताकनिश्चयत्वरूपकारणतावच्छेदकाक्रान्तत्वान्महानसीयवन्हिमानित्यनुमित्यापत्तिरिति चेन्न ।

पर्वतो महानसीयवन्हिमानित्यत्र वन्हित्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितमहानसीयत्वनिष्ठप्रकारताकबुद्धित्वरूपद्वित्वस्यैव स्वाश्रयनिरूपितविलक्षणविषयतासम्बन्धेन साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वादिति ।

**भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगिताकत्वाऽप्रसिद्ध्या तादृशसम्बन्धेन भ्रमत्वानुपपत्तिः। प्रतियोगितांशे सम्बन्धविशेषावच्छिन्नत्वस्य भ्रम इत्यपि न युक्तम्। तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेः।**

---

च्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयावगाहीत्यर्थः। **एवं चेति।** प्रतियोगित्वांशे तदुभयावगाहिव्यभिचारज्ञानस्य विरोधित्वे चेत्यर्थः। **तादृशसम्बन्धेनेति।** स्वरूपसम्बन्धावच्छिन्नस्ववृत्तिप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्यर्थः। **प्रतियोगित्वांशे इति।** स्ववृत्तिप्रमेयत्वत्वावच्छिन्नप्रतियोगितायामित्यर्थः। **सम्बन्धविशेषावच्छिन्नत्वस्य**—स्वरूपसम्बन्धावच्छिन्नत्वस्य। **तस्य**—सम्बन्धविशेषावच्छिन्नत्वस्य। **सम्बन्धघटकतयेति।** स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वरूपसम्बन्धघटकतयेत्यर्थः। **तत्प्रकारकत्वघटितेति।** सम्बन्धविशेषावच्छिन्नत्वप्रकारकत्वघटितेत्यर्थः। **तद्भ्रमत्वानुपपत्तेरिति।** सम्बन्धविशेषावच्छिन्नत्वभ्रमत्वानुपपत्तेरित्यर्थः। सम्बन्धघटकविशेषणे प्रकारत्वं न स्वीक्रियते, एवं विशेषणविषयतायां सम्बन्धावच्छिन्नत्वमपि, तत्र प्रकारतास्थाने विशेषणतास्वीकारः, सा च संसर्गानवच्छिन्नेति तात्पर्यम्। अस्तु वा उभयत्रैव प्रकारता, किन्तु सा नोभयसाधारणी, धर्मस्था संसर्गावच्छिन्ना संसर्गस्था च संसर्गानवच्छिन्नैवेति विशेषः। अथवा उभयप्रकारतायाः संसर्गावच्छिन्नत्वेऽपि मिथो भेदः स्वीकार्य एव, अनयोः कथमपि वैलक्षण्याऽस्वीकारे विशेषणज्ञानं विना विशिष्टसम्बन्धज्ञानस्याऽप्यनुदयप्रसङ्गः, विशेषणज्ञानं विना विशिष्टबुद्ध्यनुत्पत्त्या तत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तद्विषयकज्ञानत्वेन कारणत्वस्याऽवश्यं कल्पनीयत्वात्। मिथो भेदे तु धर्मप्रकारतैवाऽत्र कार्यतावच्छेदककोटौ निविष्टेति नानुपपत्तिः। तथाच धर्मसम्बन्धसाधारणाऽनुगतभ्रमत्वं न शक्यं निर्वक्तुम्, तदभाववति तत्प्रकारकत्वं धर्मांशे भ्रमत्वम्, संसर्गांशे भ्रमत्वं तु अधिकरणतानिरूपितनिरूपकतानिरूपितसांसर्गिकावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाऽवृत्तिसंसर्गताकत्वम्, वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवं चाऽऽदिमभ्रमस्याऽत्राऽसम्भवप्रदर्शनार्थं तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेरित्युक्तम्।

नच यथाकथंचित्चिद्भ्रममादायैव यथार्थपदव्यावृत्तिसम्भवात्तदनुपपत्तावपि का क्षतिरिति वाच्यम्। शिरोमण्युक्तेनैकेनैव भ्रमशब्देनाऽननुगततादृशद्विविधभ्रमसंग्रहस्यानुपपत्तौ तात्पर्यात्। नाऽप्यत्र भ्रमश्च भ्रमश्चेत्येकशेषतो भ्रमद्वितयलाभसम्भवः। एकप्रवृत्तिनिमित्तानामेव एकशेष इति पाणिनीयानुशासनात्। यद्यपि इन्द्रचन्द्रादिपरहरिशब्दस्य हरयः इत्येकशेषसमस्यमानत्वं दृश्यते, तथाप्यत्र भ्रमादित्येकवचनान्तनिर्देशेन तस्याऽयुक्तत्वमेवेति। न च सर्वत्रैव संसर्गांशे भ्रममादाय व्यावृत्तिः संगमनीयेति वाच्यम्। परामर्शविरोधिनो भ्रमद्वयस्यैकविधत्वे वैचित्र्यविरहेण स्थलद्वयानुसरणस्य वैफल्यात्।

अथ गुणीयत्वाभाववान् संयोग इति निश्चयसत्त्वे गुणीयः संयोग इति बुद्धेरिव गुणीयसंयोगेन वह्निमान्पर्वत इति बुद्धेरप्यनुदयादनुगतरूपेण प्रतिबध्यप्रतिबन्धकभावो वक्तव्यः, एवं च धर्मसंसर्गतावच्छेदकसाधारणी अनुगतप्रकारता, तादृशप्रकारतायां संसर्गानवच्छिन्नत्वं

**न च तेन रूपेण प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः, नतु तदव च्छेदकत्वं स्वीकरणीयम् इति चेन्न ।**

उक्तप्रतिबध्यप्रतिबन्धकभावस्य स्वरूपसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नगुणीयत्वविशेषणतानिरूपितसंयोगत्वावच्छिन्नविशेष्यताशालिबुद्धित्वेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकगुणीयत्वाभावप्रकारकसंयोगविशेष्यकनिश्चयत्वेन कल्पनयैवाऽनुपपत्तिविरहात् । समवाये यथा संयोगनिष्ठसंसर्गतानियामकत्वम्, तथा गुणीयत्वनिष्ठसंसर्गतावच्छेदकतानियामकत्वं स्वरूपसम्बन्ध एव, गुणीयत्वनिष्ठसंसर्गतावच्छेदकतायाः स्वरूपसम्बन्धानवच्छिन्नत्वेऽपि स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकगुणीयत्वाभावप्रकारकनिश्चयस्य गुणीयत्वनिष्ठसंसर्गतावच्छेदकताकबुद्धौ विरोधित्वमनुभवसिद्धम् । न चैवं संयोगसम्बन्धावच्छिन्नप्रतियोगिताकगुणीयत्वाभावप्रकारकनिश्चयोऽपि प्रतिबध्नातु गुणीयसंयोगेन वह्निमत्ताबुद्धिम्, तत्रापि संयोगसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नगुणीयत्वप्रकारकबुद्धित्वस्यैव प्रतिबध्यतावच्छेदकत्वेन तुल्ययुक्त्या वक्तव्यत्वादिति वाच्यम् । सम्बन्धभेदेन प्रतिबध्यप्रतिबन्धकभावस्य भिन्नतयोक्तसंयोगसम्बन्धस्थले संयोगसम्बन्धावच्छिन्नप्रकारताकबुद्धित्वमेव प्रतिबध्यतावच्छेदकम्, संसर्गानवच्छिन्नप्रकारताकबुद्धेरप्रतिबध्यत्वेन प्रतिबध्यतावच्छेदकीभूतप्रकारतायां संसर्गानवच्छिन्नत्वानिवेशस्याऽनावश्यकत्वात् (१) ।

साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वमेव व्यभिचारः, न तूक्तरीत्या प्रतियोगिताकत्वसंसर्गकः, तथा च प्रतियोगितायाः प्रकारतया भानेन तदंशे भ्रमत्वमुपपन्नमेवेत्याशंकते **नचेति । तेन रूपेणेति** । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वरूपेणेत्यर्थः । **प्रतियोगिताप्रकारक एवेति** । न तु प्रतियोगितासंसर्गक इत्यर्थः । **अत्र**—अभिधेयत्वं मेयत्वव्यभिचारीत्यत्र । **तदवच्छिन्नेति** । साध्यतावच्छेदकसम्ब-

(१) अथोक्तयुक्त्या भ्रमत्वनिर्वचनेऽपि तत्सम्बन्धावच्छिन्नतदभाववति तत्सम्बन्धातिरिक्तसम्बन्धानवच्छिन्नतद्विशेषणताकत्वरूपमनुगतमेव धर्मसम्बन्धसाधारणं भ्रमत्वं वाच्यमिति चेन्न ।

वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निमानभाव इति ज्ञानस्यापि संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्नित्वावच्छिन्नाभाववति प्रतियोगित्वे संयोगातिरिक्तसम्बन्धानवच्छिन्नायाः वह्नित्वावच्छिन्नत्वनिष्ठसंसर्गतावच्छेदकीयविशेषणतायाः निरूपकत्वेन भ्रमत्वापत्तेः, अनुगतरूपेण भ्रमत्वनिर्वचनस्यैवाभिमेतत्वेन प्रकारतावच्छेदकसम्बन्धभेदेन लक्षणभेद इत्यस्यापि दुर्वचत्वात् । अनुगमस्तु प्रतियोगिताविशिष्टविशेष्यताकत्वम् । वै० स्वनिरूपिताभाववन्निष्ठत्वस्वविशिष्टविशेषणतानिरूपितत्वोभयसम्बन्धेन । वै० स्वावच्छेदकधर्मावच्छिन्नत्वस्वानवच्छेदकसम्बन्धानवच्छिन्नत्वोभयसम्बन्धेन । केचित्तु तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेरिति ग्रन्थार्थस्तु स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वाभाववति तत्सम्बन्धेन प्रमेयत्वत्वप्रकारकप्रमेयत्वभ्रमानुपपत्तेरिति निरुक्तसम्बन्धस्यालीकतया तद्घटितभ्रमत्वासिद्धिरिति तात्पर्यमित्याहुः ।

यत्तु तदभाववति तद्विषयकत्वमेव भ्रमत्वम्, नतु प्रकारकत्वघटितम्, तच्च संसर्गप्रकारसाधारणमिति ।

तन्न, तथासति रक्तदण्डवानितिज्ञानस्य दण्डाभाववद्रक्तत्वनिष्ठविषयतानिरूपितदण्डनिष्ठविषयताकत्वेन भ्रमत्वापत्तेः । न च तदभाववति तत्प्रकारकत्वेऽपि एष दोषस्तदवस्थ एव, दण्डनिष्ठ "पुरुषनिष्ठविशेष्यतानिरूपित" प्रकारताविशेष्यतयोरभेदादिति वाच्यम् । तादृशविशेष्यतात्वेन प्रकारतात्वावच्छिन्ननिरूपकत्वनिवेशात् । तथाच तदभाववन्निष्ठविशेष्यतात्वावच्छिन्ननिरूपकतानिरूपितत्वावच्छेदकतानिष्ठप्रकारतात्वावच्छिन्ननिरूपकताकत्वस्यैव विवक्षणात् ।

च्छिन्नप्रतियोगितासंसर्गक इति वाच्यम्। लाघवात् प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकव्यभिचारज्ञानस्याऽकिञ्चित्करत्वात्।

अत्राहुः—स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वमेवाऽभावस्य साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकं लाघवात्। एवं च तादृशेन सम्बन्धेनाऽभावांशे

न्धावच्छिन्नेत्यर्थः। **लाघवादिति**। प्रतियोगिताप्रकारकज्ञानस्य हेतुत्वे प्रतियोगित्वनिष्ठप्रकारतावच्छेदकसंबन्धविषयतायाः(१) कारणतावच्छेदकत्वे गौरवम्, प्रतियोगितासंसर्गकज्ञानस्य हेतुत्वे तु संसर्गसंसर्गभानस्य विशिष्टबुद्धावनभ्युपगमेन प्रतियोगित्वसंसर्गविषयतायाः कारणतावच्छेदककोटावनिवेशेन लाघवं बोध्यम्। **प्रतियोगितासंसर्गकज्ञानस्यैवेति**। उक्तसंबन्धेन साध्यविशिष्टाभाववद्वृत्तित्वज्ञानस्यैवेत्यर्थः। एवकारेण प्रतियोगिताप्रकारकस्य व्यवच्छेदः। **तत्प्रकारकेति**। प्रतियोगिताप्रकारकेत्यर्थः। **अकिञ्चित्करत्वादिति**। असमानाकारकज्ञानस्याऽप्रतिबन्धकत्वादिति भावः।

भ्रमत्वमुपपादयति **अत्राहुरिति**। स्वं—साध्यतावच्छेदकम्, तथाच साध्यतावच्छेदकविशिष्टाऽभाववदवृत्तित्वं (२)व्याप्तिः। अभावे वै० भट्टाचार्योक्तसंबन्धेन। **लाघवादिति**। अवच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यतावच्छेदकस्य निवेशे साध्याऽनिवेशेन लाघवादित्यर्थः। स्वं परिचायकम्, स्ववृत्त्यन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यतावच्छेदकावच्छिन्नस्याऽभावांशे प्रवेशे साध्यतावच्छेदकस्य प्रकारतावच्छेदकतया संसर्गघटकतया च द्विधा निवेशे गौरवमिति ध्येयम्।

**एवञ्चेति**। साध्यतावच्छेदकविशिष्टाभावस्य व्याप्तिघटकत्वे चेत्यर्थः। **तादृशसम्बन्धेनेति**। स्वावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्यर्थः। अ-

---

(१) इदमुपलक्षणम्। प्रतियोगित्वनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकसम्बन्धविषयताया इत्यपि बोध्यम्, तथाच साध्यनिष्ठप्रतियोगितायाः अभावविशेषणतया निवेशे प्रतियोगिताप्रकारकज्ञाननिष्ठकारणतावच्छेदककोटौ अभावत्वावच्छिन्नप्रकारतायां आधेयतासम्बन्धावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न—निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगितात्वावच्छिन्नप्रकारतानिरूपितत्वनिवेशे गौरवम्, तदपेक्षया प्रतियोगितासम्बन्धेन प्रकृतसाध्यस्य व्याप्तिघटकत्वे लाघवमिति दिक्।

(२) ननु महानसीयवह्निमानित्यनुमितौ तद्व्याप्यवत्ताज्ञानस्य केन रूपेण कारणत्वम्, यदि महानसीयत्ववह्नित्वधर्मद्वयनिष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यताघटितधर्मेण तदा क्वचिन्महानसीयवह्निमान् क्वचिद्वह्निमहानसीयवानित्यनुमितिभेदः कथं स्यात्। न च व्याप्तिघटकसामानाधिकरण्यांशे साध्यस्य येन रूपेण भानं तेनैव रूपेणाऽनुमितावपि भानमित्यनुमितिवैलक्षण्यमुपपद्यते इति वाच्यम्। महानसीयवह्न्यभाववदवृत्तिवह्निमहानसीयसमानाधिकरणधूमवानितिपरामर्शादपि वह्निमहानसीयवानित्यनुमित्यापत्तेरिति चेन्न।

यत्र परामर्शेऽभावविशेषणतापन्नवह्न्यंशे वह्नित्वं धर्मितावच्छेदकीकृत्य महानसीयत्वं भासते तत्र "विशिष्टवैशिष्ट्यबोधमर्यादया" धर्मिपारतन्त्र्येण सामानाधिकरण्यसम्बन्धेन महानसीयत्वस्य वह्नित्वेऽपि भानात् महानसीयत्वावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारताकाऽभावत्वावच्छिन्नविशेष्यताघटितनिश्चयत्वेन महानसीयवह्निमानित्यनुमितिं प्रति कारणत्वम्।

**साध्यतावच्छेदकप्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्वत्वादेः प्रसिद्धेन तादृशसम्बन्धेन प्रमेयत्वत्वादेरभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति न किञ्चिदनुपपन्नम् ।**

**अन्ये तु प्रथमे साध्याभाववद्वृत्तित्वज्ञानविरोधी हेतौ साध्याभाववद्-**

---

**भावांशे इति ।** अभावविशेष्यकेत्यर्थः । **व्यभिचारज्ञानस्येति ।** साध्यतावच्छेदकविशिष्टाऽभाववद्वृत्तिर्हेतुरिति ज्ञानस्येत्यर्थः । **व्याप्तिग्रहविरोधितयेति ।** समानविषयकत्वेनेत्यादिः । **घटत्वत्वादेः(१) प्रसिद्धेनेति ।** अभावे इति शेषः । **तादृशसम्बन्धेनेति ।** अवच्छिन्नसाध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्यर्थः । **तथाविधग्रह इति ।** व्यभिचारग्रह इत्यर्थः । प्रमेयत्वत्वविशिष्टाभाववद्वृत्ति अभिधेयत्वमिति निश्चय इति यावत् ।

**अन्ये त्विति । प्रथमे इति ।** जनकज्ञानप्रतिबन्धकभ्रमपरवाक्ययोर्मध्ये इति शेषः ।

---

एवं यत्र महानसीयत्वं धर्मितावच्छेदकीकृत्य वह्नित्वं भासते तत्र वह्निमहानसीयाभाववदवृत्तिवह्निमहानसीयसमानाधिकरणधूमवानितिपरामर्शस्य "वह्नित्वावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यताघटितनिश्चयत्वेन" वह्निमहानसीयवानित्यनुमितौ कारणत्वमिति न कोऽपि दोषः।

परामर्शस्याऽनुगतकारणता च तद्धर्मविशिष्टविधेयताशाल्यनुमितित्वावच्छिन्नं प्रति तद्धर्मविशिष्टप्रतियोगिताकत्वसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यताघटितनिश्चयत्वेनेति । उभयत्र वै० स्वावच्छिन्नावच्छेदकतानिरूपितत्वस्वावच्छिन्नत्वैतदुभय- स्वावच्छिन्नत्वाऽन्यतरसम्बन्धेनेति ध्येयम् ।

केचित्तु महानसीयवह्निमान् वह्निमहानसीयवानित्यनुमितौ चाऽगत्या साध्यघटितव्याप्तिज्ञानस्य कारणत्वम् ।

न च तथापि वाच्यत्ववत्प्रमेयवानित्यनुमितिं प्रति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वस्याऽप्रसिद्धतया तादृशसम्बन्धावच्छिन्नसाध्यनिष्ठप्रकारतान्तर्भावेण कार्यकारणभावकल्पनं दुर्घटम्, अवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकप्रकारतान्तर्भावेण च वाच्यत्ववत्प्रमेयवान् प्रमेयत्ववद्वाच्यत्ववानित्यनुमित्योर्युगपदुत्पादप्रसङ्ग इति वाच्यम् । साध्यसामानाधिकरण्यघटकांशे साध्यस्य येन रूपेण भानं तेन रूपेण साध्यस्यानुमितौ भानेन नैकदोभयानुमितिप्रसङ्गः ।

न चैकदोभयानुमितिप्रसङ्गवारणेऽपि वाच्यत्ववत्प्रमेयाभाववदवृत्तिप्रमेयत्ववद्वाच्यत्वसमानाधिकरणज्ञेयत्ववान्पर्वत इति परामर्शादनुमित्यापत्तिरिति वाच्यम् । तत्राऽगत्या साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छेद्या याऽवच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकप्रकारताद्वयनिरूपितविशेष्यता तद्घटितनिश्चयत्वस्यैव कारणतावच्छेदकत्वकल्पनादित्याहुः ।

(१) आदिना घटत्वप्रकारकप्रमाविशेष्यत्वस्य सङ्ग्रहः । कुत्रचिद् घटत्वादेरिति पाठः स चाऽयुक्तः, रूपवान् पृथिवीत्वादित्यादौ विषयितासम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकताकसाध्यतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाऽव्याप्तिः, तद्वारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाऽवच्छेदकत्वस्य व्याप्तिघटकताया आवश्यकत्वे व्यभिचारेऽपि तस्य घटकतया घटत्वे तद्विरहात् ।

केचित्तु घटत्वादेरित्येव पाठः । तत्र निरूपितत्वं न षष्ठ्यर्थः, येन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावादावित्यर्थः स्यात् , किन्तु निष्ठत्वं षष्ठ्यर्थः, तथाच स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभावस्य घटत्वरूपतया घटत्वनिष्ठप्रसिद्धघटत्वाभावत्वादेस्तादृशप्रतियोगिताकत्वेनेत्यर्थ इति वदन्ति ।

त्तित्वरूपव्यभिचारस्य भ्रमः। द्वितीये च तदप्रसिद्ध्या व्यापकसामानाधिकरण्यज्ञानविरोधी साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य भ्रमोऽभिहितः, असमानप्रकारकज्ञानस्याऽविरोधितया द्विविधव्यभिचारसङ्ग्रहाय द्विविधव्याप्तिविषयकसमूहालम्बनस्यैव लक्षणे निवेशनीयत्वात्। न च हेतुः साध्यस्य व्यभिचारीत्यतः साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया तदवगाहिज्ञानस्य अभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकता नोपपद्यते इति वाच्यम्। यतोऽभाववद्वृत्तित्वं समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं चेति द्वयमेव हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः। तत्र प्रथमव्यभिचारपदार्थैकदेशेऽभावेऽनुयोगितारूपषष्ठ्यर्थस्य, तत्र प्रकृत्यर्थतावच्छेदकवह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः। मत्वर्थीयार्थः स्वरूपसम्बन्धवान्, तस्य चाभेदसम्बन्धेन प्रथमान्तार्थेऽन्वयः।

---

**प्रथमे**—धूमो वह्नेर्व्यभिचारीति प्रथमवाक्यादित्यर्थः। **द्वितीये चेति**। अभिधेयत्वं मेयत्वस्य व्यभिचारीति वाक्याच्चेत्यर्थः। **तदप्रसिद्ध्या**—साध्यीभूतमेयत्वाभाववद्वृत्तित्वस्याऽप्रसिद्ध्या। **साध्यतावच्छेदके**—मेयत्वत्वे। **हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्येति**। अभिधेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्येत्यर्थः। अस्य प्रसिद्धिस्तु घटत्वादौ बोध्या। तथाच भेदेन तदुत्कीर्त्तनं विभिन्नव्यभिचारविषयत्वलाभार्थमिति भावः। ननु दीधितिकारस्य अभिधेयत्वं मेयत्वस्य व्यभिचारीति वाक्यात्साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वभ्रमोऽभिप्रेतस्तदापि तादृशभ्रममादाय यथार्थपदप्रयोजनकथनमसङ्गतमेव, साध्याभाववद्वृत्तित्वरूपाऽन्वयव्याप्तिव्यतिरेकव्याप्तिद्वयस्यैव लक्षणघटकतया तादृशभ्रमस्य तद्विषयकानुमित्यप्रतिबन्धकत्वादतोऽन्वयव्याप्त्यन्तरस्य लक्षणघटकत्वमाह **असमानप्रकारकज्ञानस्याऽविरोधितयेति**। साध्याभाववद्वृत्तिर्हेतुरिति व्याप्तिज्ञानं प्रति साध्यतावच्छेदकं हेतुसामानाधिकरणाभावप्रतियोगितावच्छेदकमिति व्यभिचारनिश्चयस्याऽविरोधितयेत्यर्थः। **द्विविधव्यभिचारसङ्ग्रहायेति**। हेतौ साध्याभाववद्वृत्तित्वरूपस्य साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वरूपस्य च व्यभिचारस्य सङ्ग्रहायेत्यर्थः। **द्विविधव्याप्तिविषयकेति**। साध्याभाववद्वृत्तित्व—हेतुमन्निष्ठाभावप्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यविषयकेत्यर्थः। **निवेशनीयत्वादिति**। धूमवान् वह्नेरित्यादौ द्विविधव्यभिचारसम्भवेन तत्सङ्ग्रहाय साध्याभाववद्वृत्तित्व-हेतुव्यापकसाध्यसामानाधिकरण्यरूपाऽन्वयव्याप्तिद्वयं, केवलान्वयिनि च प्रमेयत्वादिसाध्यके संयोगादिसम्बन्धेनाऽभिधेयत्वहेतौ विरोधसंग्रहाय व्यापकसामानाधिकरण्यमात्रं लक्षणघटकम्, अन्यथा साध्याभावाऽप्रसिद्ध्या तथाविधव्याप्तिद्वयभ्रमाऽसम्भवात्, पूर्वमते तु असमानप्रकारकज्ञानस्यापि विरोधितया लक्षणसङ्गतिः, सकलदोषोद्धारोऽनावश्यको वेति बोध्यम्। **तदवगाहिज्ञानस्य**—साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावगाहिज्ञानस्य। **तस्य**—मत्वर्थीयार्थस्य। **प्रथ-**

द्वितीयतत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्यान्वयः, षष्ठीप्रकृतेस्तद्धर्मपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे, तस्य तद्धितार्थसम्बन्धिनः एकदेशे घटकत्वरूपसम्बन्धे, सम्बन्धिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः। एवं चोक्तवाक्यात्तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वघटकत्वस्यापि लाभात्तत्र तदवगाहिभ्रमस्य दर्शिताकारतासम्भवादित्यपि वदन्ति।

भ्रमादिति पञ्चम्यर्थः प्रयुक्तत्वम्, तस्य प्रतिबन्धपदार्थेऽनुत्पादेऽन्वयः। यथार्थेतीति। यथार्थपदेन स्वव्यधिकरणप्रकारावच्छिन्ना (१)या या

---

मान्तार्थे-हेतौ। तथाच धूमो वह्नेर्व्यभिचारीत्यतः वह्नित्वावच्छिन्ननिरूपितत्वसंबन्धेन वह्निविशिष्टानुयोगितावदभाववद्वृत्तित्व "स्वरूपसम्बन्ध"वदभिन्नो धूम इति बोधः। द्वितीयतत्पदार्थेति। समानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारपदार्थेत्यर्थः। तत्परकाऽभिधेयत्वं मेयत्वस्य व्यभिचारीति वाक्यस्थले चेत्यर्थः। षष्ठीप्रकृतेः—मेयत्वस्य। तद्धर्मपरतयेति। मेयत्वत्वपरतयेत्यर्थः। निष्ठत्वं षष्ठ्यर्थः। प्रथमान्तार्थेऽन्वय इति। तथा चाऽभिधेयत्वं मेयत्वस्य व्यभिचारीत्यतः प्रमेयत्वत्वनिष्ठाऽभिधेयत्वनिरूपितसामानाधिकरण्यवदभावप्रतियोगितावच्छेदकत्वघटकत्ववदभिन्नमभिधेयत्वमिति बोधः। एवं चेति। समानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारपदार्थत्वे चेत्यर्थः। दर्शिताकारतेति। अभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारतेत्यर्थः। वदन्तीत्यस्वरसः, तद्बीजन्तु असमानविषयकत्वेन प्रतिबन्धकतामुपगम्य पूर्वमतस्यैव सम्यक्त्वात्, भवन्मतेऽपि असमानप्रकारकज्ञानस्य विरोधित्वमावश्यकम्, अन्यथा साध्यव्याप्यो हेतुरिति दोषलक्षणघटकानुमितौ स्वरूपसम्बन्धेन प्रकारीभूतसाध्याभाववद्वृत्तित्वज्ञाने हेतुः साध्यस्य व्यभिचारीत्यतः दर्शितव्युत्पत्तिलभ्यतादृशवृत्तित्व"स्वरूपसम्बन्ध"वन्निष्ठाऽभेदसम्बन्धावच्छिन्नप्रकारताकहेतुविशेष्यकज्ञानस्याऽप्रतिबन्धकत्वतादवस्थ्यात्, प्रथमाया निरूपितत्वार्थकत्वस्य व्युत्पत्तिविरुद्धत्वाच्चेति ध्येयम्।

अन्वय इति। तथा च भ्रमप्रयुक्तानुमित्यनुत्पादादित्यर्थः। ननु तद्वति तत्प्रकारकत्वरूपयाथार्थ्यनिवेशे पर्वतो वन्ह्यभाववानित्यादिज्ञानानामप्यंशतो यथार्थत्वात्तद्विषयेऽतिव्याप्तितादवस्थ्यमत आह यथार्थपदेनेति। स्वव्यधिकरणेति। स्वं—विशेष्यता। अग्रिमविषयता च विशेष्यतारूपा ग्राह्या। तथा च स्वव्यधिकरणो यः प्रकारस्तदवच्छिन्नं

---

(१) इत्थं वह्निमानितिज्ञानस्य प्रमात्वापत्तिः, स्वपदेन पर्वतो वन्ह्यभाववानिति ज्ञानीयपर्वतनिष्ठयत्किञ्चिद्विशेष्यतामादाय तद्व्यधिकरणवन्ह्यभावावच्छिन्नपर्वतनिष्ठविशेष्यत्वानिरूपकत्वस्य तत्र सत्त्वादतो या येति।

तथाच विशेष्यताविशिष्टविशेष्यताव्यापकत्वं ज्ञाने निवेशनीयम्। विशेष्यतायां विशेष्यतावैशिष्ट्यं च स्वतादात्म्यस्वाधिकरणावृत्तिनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन। व्यापकता च निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। तेन वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वेन निरूपकतासम्बन्धेन तादृशविषयतासामान्याभावस्याऽप्रसिद्धावपि प्रामाण्यवादे भट्टाचार्योक्तरीत्या विषयतानिरूपकत्वस्याऽव्याप्यवृत्तावपि न क्षतिः।

**विषयता तदनिरूपकत्वस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तमादाय दोष इति भावः ।**

यत्स्वं (१)तदनिरूपकत्वं प्रमात्वमित्यर्थः । पर्वतो वह्निमानितिज्ञानस्य प्रमात्वं, तथाहि स्वपदेन पर्वतो वह्निमानिति ज्ञानीयपर्वतनिष्ठविशेष्यता गृहीतुं न शक्यते, प्रकारीभूतवह्नेः पर्वतनिष्ठविशेष्यताव्यधिकरणत्वाभावात्, वन्ह्यभावात्मकप्रकारस्य विशेष्यताव्यधिकरणत्वेऽपि वन्ह्यभावात्मकप्रकारावच्छिन्नत्वस्य स्वीयविशेष्यतायामसत्त्वात्, किन्तु स्वपदेनोदासीन"ह्रदो वह्निमानितिज्ञानीय"विशेष्यतैवोपादेया, तथा च स्वं ह्रदनिष्ठविशेष्यता तद्व्यधिकरणो यः वह्निरूपः प्रकारः, तदवच्छिन्ना या विषयता ह्रदनिष्ठविशेष्यता तदनिरूपकत्वस्य पर्वतो वह्निमानितिज्ञाने सत्त्वात् । पर्वतो वन्ह्यभाववानिति भ्रमनिश्चयस्य न प्रमात्वम्, स्वं० पर्वतो वन्ह्यभाववानितिज्ञानीयपर्वतनिष्ठविशेष्यता तद्व्यधिकरणो यः प्रकारः वन्ह्यभावात्मकः प्रकारः तदवच्छिन्नं यत्स्वं पर्वतनिष्ठविशेष्यता तन्निरूपकत्वस्यैव तत्र सत्त्वात् । विशेष्यतायां प्रकारावच्छिन्नत्वं च प्रकारनिष्ठप्रकारतानिरूपितत्वम्, विशेष्यतायां प्रकारावच्छिन्नत्वमेव (२)वा स्वीक्रियते इति ध्येयम् ।

अत्र स्वव्यधिकरणत्वं च न स्वानधिकरणवृत्तित्वम्, घटो द्रव्यमितिज्ञानस्य प्रमात्वानुपपत्तेः, तत्र प्रकारीभूतद्रव्यत्वस्य स्वानधिकरणीभूतपटादिवृत्तित्वात्, किन्तु स्वाधिकरणाऽवृत्तित्वम्, तथाच स्वाधिकरणावृत्तिनिष्ठप्रकारतानिरूपिता या या विशेष्यता तत्तदनिरूपकत्वमिति फलितम् । स्वं-विशेष्यता ।

अत्र स्वाधिकरणाऽवृत्तित्वघटकवृत्तित्वं प्रकारतावच्छेदकसम्बन्धेन विवक्षणीयम्, अन्यथा ह्रदो वह्निमानितिज्ञानस्याऽपि सर्वांशे प्रमात्वापत्तिः (३), कालिकेन वन्ह्यादेर्ह्रदे सत्त्वात्, स्वपदेन ह्रदनिष्ठविशेष्यताया धर्तुमशक्यत्वात्, घटो गगनवानितिज्ञानीयघटादिनिष्ठविशेष्यताया एव स्वपदेन धर्तव्यतया तदनिरूपकत्वस्योक्तभ्रमे सत्त्वात्, विवक्षिते च स्वाधिकरणह्रदनिरूपितप्रकारतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य वन्ह्यादौ सत्त्वेन ह्रदनिष्ठविशेष्यतायाः स्वपदेनोपादातुं शक्यतयोक्तज्ञानस्य प्रमात्वापत्तिविरहात् । तथाच स्वाधिकरणनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववान् यः प्रकारस्तन्निष्ठप्रकारतानिरूपिता या या विशेष्यता तत्तदनिरूपकत्वं समुदितार्थः ।

---

(१) पर्वतो वह्निमान् भूतलं घटवच्चेतिसमूहालम्बनस्य प्रमात्वानुपपत्तिः । पर्वतनिष्ठविशेष्यतायाः व्यधिकरणघटावच्छिन्नभूतलनिष्ठविषयताकत्वादतस्तादृशप्रकारावच्छिन्नत्वं विषयतायामनिवेश्य स्वस्मिन्नेव निवेशितम् ।

(२) वाकारोऽनास्थायाम् । विशेष्यतायां प्रकारावच्छिन्नत्वोपगमे घटावच्छिन्नविशेष्यकवन्हिमत्ताबुद्धिं प्रति वन्ह्यभावघटवानित्याकारकस्य "एकत्र द्वयमिति"रीत्या निश्चयस्य प्रतिबन्धकत्वापत्तिः, तस्याऽपि घटावच्छिन्नविशेष्यकवन्ह्यभावप्रकारकत्वात् । अत एवाऽवयवग्रन्थे गन्धनिष्ठस्य गन्धत्वप्रकारतानिरूपितविशेष्यत्वस्य गन्धत्वानवच्छिन्नत्वादित्युक्तं जगदीशेनेति ध्येयम् ।

(३) इयमापत्तिः सम्बन्धसामान्येन स्वाधिकरणवृत्तित्वविवक्षणे, यत्किञ्चित्सम्बन्धेन तादृशवृत्तित्वविवक्षणे तु पर्वतः संयोगेन वन्हिमानितिज्ञानस्य याथार्थ्यानुपपत्तिः, स्वाधिकरणे यत्किञ्चित्सम्बन्धेन वन्हेरवृत्तित्वात् ।

नन्वेवं गुणः संयोगेन घटवानितिज्ञानस्य प्रमात्वापत्तिः, स्वाधिकरणगुणनिरूपितप्रकारतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्या गुणनिष्ठविशेष्यतायाः स्वपदेन धर्तुमशक्यत्वाद् घटो गगनवानितिज्ञानीयघटादिनिष्ठविशेष्यतायाः स्वपदेनोपादेयतया तदनिरूपकत्वस्य तत्र सत्त्वात् (१) ।

---

(१) न च "स्वाधिकरणानिरूपितवृत्तित्वाभाववान् यः प्रकारस्तन्निष्ठप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वमि"ति समुदितार्थे स्वाधिकरणनिरूपितवृत्तित्वाभावः प्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, न तु वृत्तितायां प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, तावतैव ह्रदो वह्निमानितिज्ञानस्य न प्रमात्वापत्तिः, संयोगसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन ह्रदनिरूपितवृत्तितायाः वह्न्यावृत्तित्वेन स्वपदेन ह्रदनिष्ठविशेष्यतायाः धर्तुं शक्यत्वात् । नापि गुणः संयोगेन घटवानितिज्ञानस्य प्रमात्वापत्तिः, स्वरूपसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धस्य गुणनिरूपितवृत्तितायाः व्यधिकरणतया तादृशविशेष्यताश्रयगुणनिरूपितवृत्तित्वनिष्ठतादृशस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्य प्रकारीभूतघटे सत्त्वेन स्वपदेन गुणनिष्ठविशेष्यतायाः धर्तुं शक्यत्वादिति वाच्यम् । विशेषरूपेण संसर्गताऽस्वीकारे घटत्वप्रतियोगिकसमवायेन पटत्ववान् पट इति ज्ञानस्य प्रमात्वापत्तेः, प्रकारतावच्छेदक"केवल"समवायसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन तज्ज्ञानीयविशेष्यताश्रयपटनिरूपितवृत्तित्वस्यैव पटत्वरूपप्रकारे सत्त्वेन घटनिष्ठविशेष्यतायाः स्वपदाग्राह्यत्वात् ।

न च प्रकारतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकतानिरूपकसंसर्गनिष्ठाऽवच्छेदकतानिरूपकवृत्तित्वीयस्वरूपेण स्वाधिकरणवृत्तित्वाभावो विवक्षणीयः । तथाचोक्तज्ञानीयपटत्वनिष्ठप्रकारतानिरूपितघटत्वप्रतियोगिकसमवायनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद् घटत्वप्रतियोगिकत्वसमवायत्वगतं द्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकघटत्वप्रतियोगिकसमवायनिष्ठावच्छेदकतानिरूपकवृत्तित्वीयस्वरूपसम्बन्धस्य तज्ज्ञानीयविशेष्यताश्रयपटनिरूपितवृत्तित्वस्य व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकतादृशवृत्तित्वाभावस्य घटत्वादिरूपप्रकारे सत्त्वेन तादृशविशेष्यतायाः स्वपदग्राह्यतया न तत्सङ्ग इति वाच्यम् । गुणीयसंयोगेन घटवान् गुण इति ज्ञानस्य प्रमात्वापत्तेः । तज्ज्ञानीयप्रकारतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगुणप्रतियोगिकत्वसंयोगत्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकगुणीयसंयोगनिष्ठावच्छेदकतानिरूपकवृत्तित्वाऽप्रसिद्ध्या स्वपदेन तादृशज्ञानीयगुणनिष्ठविशेष्यतायां धर्तुमशक्यत्वादिति ।

अत्रोच्यते—स्वनिरूपितप्रकारतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकीय(१)स्वरूपसम्बन्धेन स्वाश्रयनिरूपितवृत्तित्वाभावस्य विवक्षणेनोक्तदोषानवकाशात्, प्रकृते गुणप्रतियोगिकत्वसंयोगत्वद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकीभूता या संसर्गविधया संयोगनिष्ठावच्छेदकता तन्निरूपकत्वस्य वृत्तित्वेऽप्रसिद्धावपि तज्ज्ञानीयघटत्वावच्छिन्नप्रकारत्वे तत्प्रसिद्धेः, "अत एव तादृशावच्छेदकानिरूपकत्वेन निवेशो न तु तादृशावच्छेदकतानिरूपकवृत्तितात्वेन तादृशनिरूपकत्वस्य वृत्तित्वप्रकारत्वोभयसाधारण्यात्" तादृशप्रकारत्वीयस्वरूपसम्बन्धस्य तज्ज्ञानीयविशेष्यताश्रयपटनिरूपितवृत्तित्वस्य व्यधिकरसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकतादृशवृत्तित्वाभावस्य प्रकारीभूतघटे सत्त्वेन तादृशविशेष्यतायाः स्वपदग्राह्यत्वात् ।

न च तद्व्यक्तित्वादिना घटत्वावगाहिज्ञानधर्मिकविषयितासम्बन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिः, तज्ज्ञानीयतज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपिताव-

---

(१) निरूपकप्रतियोगिकेत्यर्थः ।

एवं विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाऽभावानभ्युपगमेन गुणो विशिष्टसत्तावानिति ज्ञानस्यापि प्रमात्वापत्तिः, स्वाधिकरणगुणनिरूपितवृत्तित्वस्य विशिष्टसत्तायां सत्त्वात्, स्वपदेन गुणनिष्ठविशेष्यताया उपादातुमशक्यत्वात् ।

न च स्वाधिकरणनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वीयस्वरूपसम्बन्धेन स्वाधिकरणनिरूपितवृत्तितावच्छेदकत्वाभाववान् यो धर्मस्तद्धर्मावच्छिन्नप्रकारतानिरूपिता या या विशेष्यता तत्तदनिरूपकत्वमेव तत्, तथाच संयोगसम्बन्धावच्छिन्नाधेयतावच्छेदकत्वीयस्वरूपसम्बन्धेन गुणनिरूपितवृत्तितावच्छेदकत्वाभावस्य केवलान्वयितया विशिष्टसत्तात्वेऽपि सत्त्वेन स्वपदेन गुणनिष्ठविशेष्यताया उपादातुं शक्यतया नातिव्याप्तिरिति वाच्यम् । एवमपि रंगे स्वरूपतो रजतत्वावगाहि "इदं रजतमि"तिज्ञानस्य प्रमात्वापत्तिर्दुर्वारैव, तत्र प्रकारतावच्छेदकीभूतरजतत्वत्वादेर्भानविरहेण स्वपदेन रङ्गनिष्ठविशेष्यताया उपादातुमशक्यत्वादिति चेन्न ।

विशेष्यताविशिष्टप्रकारत्वानिरूपकत्वमेव सर्वांशे प्रमात्वम् । प्रकारतायां विशेष्यतावै० स्वनिरूपितत्वस्वाधिकरणनिष्ठाधिकरणतानिरूपितानिरूपकतावदन्य(१)त्वोभयसम्बन्धेन, निरूपकतावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्य–स्वानवच्छेदकानवच्छिन्नत्व–स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वरूपेण(२) ।

---

च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्विषयितात्वनिष्ठतद्व्यक्तित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गनिष्ठावच्छेदकतानिरूपकविषयितासम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन तादृशज्ञाननिरूपितवृत्तित्वस्य घटत्वादिरूपप्रकारे सत्त्वेन तादृशविशेष्यताया धर्तुमशक्यत्वादिति वाच्यम् । तादृशसम्बन्धेन स्वाश्रयनिरूपितनिरवच्छिन्नवृत्तित्वाभाववन्निष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य विवक्षितत्वात्, एवं च तादृशज्ञाननिरूपितविषयितासम्बन्धावच्छिन्नवृत्तित्वस्य घटत्वे सत्त्वेऽपि न तद्वृत्तित्वं निरवच्छिन्नमतो नोक्तदोषः । प्रकारतायां निरवच्छिन्नत्वनिवेशाद् घटत्वत्वेन घटत्वावगाहिज्ञानधर्मिकस्य विषयितासम्बन्धेन घटत्वत्वेन घटत्वप्रकारकज्ञानस्याऽप्रसङ्गः ।

न चैवंसति ह्रदो वह्निमानितिज्ञानस्य प्रमात्वापत्तिः, तज्ज्ञानीयवह्निनिष्ठप्रकारताया निरवच्छिन्नत्वाभावादिति वाच्यम् । स्वाश्रयनिरूपितवृत्तितानवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य तदर्थत्वात् । तथाच तज्ज्ञानीयविशेष्यताश्रयह्रदनिरूपितवृत्तितानवच्छेदकवह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकतयोक्तापत्तिविरहात् ।

अत्र च स्वनिरूपितवृत्तिता प्रकारतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा पूर्वोक्तदोषप्रसङ्गात् । तथाच तादृशवृत्तितावच्छेदकत्वाभावो न स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, किन्तु स्वनिरूपितप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गतानिरूपकनिरूपितावच्छेदकत्वीयस्वरूपसम्बन्धेन, नाऽतः प्रागुक्तरीत्या दोषावकाश इति ध्येयम् ।

(१) स्वविशिष्टनिरूपकतावदन्यत्वेति तदर्थः । निरूपकतायां स्ववै० स्वाश्रयनिष्ठाधिकरणतानिरूपितत्वसम्बन्धेन ।

(२) असम्भववारणाय स्वनिरूपितत्वनिवेशः, अन्यथा पर्वतो वह्निमानितिप्रमीयप्रकारताया अपि उदासीनह्रदादिविशेष्यताविशिष्टतया तदनिरूपकत्वस्य प्रमायां विरहेणाऽसम्भवः स्यात्, निवेशे तु प्रकारतायामुदासीनविशेष्यतानिरूपितत्वविरहेण वैशिष्ट्यविरहात् । भ्रममात्रे प्रमात्वापत्तिवारणाय द्वितीयसम्बन्धनिवेशः । तत्रापि स्वावच्छेदकसम्बन्धावच्छिन्नत्वानुक्तौ ह्रदो वह्निमानिति ज्ञानस्य प्रमात्वापत्तिः, संयोगस-

यत्तु प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वं सर्वांशे भ्रमभिन्नत्वम् । वै० स्वविशिष्टप्रतियोगिताकाभाववद्वृत्तित्वस्वनिरूपितत्वोभयसम्बन्धेन । प्रतियोगितायां स्ववै० स्वावच्छेदकधर्मानवच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति ।

तन्न । तथासति रङ्गे स्वरूपतो रजतत्वावगाहिनः इदं रजतमितिज्ञानस्य प्रमात्वापत्तिः, स्वावच्छेदकधर्माऽप्रसिद्ध्या स्वपदेनोक्तज्ञानीयरजतत्वनिष्ठप्रकारताया उपादातुमशक्यत्वात् ।

न चोक्तसम्बन्धघटकप्रतियोगितायां प्रकारतावैशिष्ट्यं स्वावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन विवक्षणीम्, तथाच नोक्तापत्तिः, रजतत्वनिष्ठनिरवच्छिन्नप्रकारतायाः अवच्छेदकाऽप्रसिद्धावपि स्वावच्छिन्नत्वघटितोक्तोभयसम्बन्धेन तादृशप्रकारतावैशिष्ट्यस्य रजतत्वनिष्ठप्रतियोगितायां सत्त्वादिति वाच्यम् । विशिष्टसत्तावान् गुण इतिज्ञानस्य प्रमात्वापत्तेः, तादृशज्ञानीयविशिष्टसत्तानिष्ठप्रकारत्वावच्छिन्नसत्तानिष्ठप्रतियोगिकाभाववद्वृत्तित्वस्य गुणनिष्ठविशेष्यतायामसत्त्वेन स्वपदेन तज्ज्ञानीयविशिष्टसत्तानिष्ठप्रकारताया धर्तुमशक्यत्वात् ।

यदि चाऽवच्छिन्नप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वे सति निरवच्छिन्नप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वं तत् । वैशिष्ट्यं पूर्वोक्तसम्बन्धेन, एवं च विशिष्टसत्तावान् गुण इति ज्ञानस्याऽवच्छिन्नप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वविरहेण इदं रजतमितिज्ञानस्य च निरवच्छिन्नप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वविरहेण च न प्रमात्वापत्तिरित्युच्यते, तदापि विषयितया प्रकारत्वेन घटत्वावगाहिज्ञानधर्मिकस्य स्वरूपतो घटत्वावगाहिभ्रमस्य प्रमात्वा-

---

म्बन्धावच्छिन्नप्रकारताया अपि कालिकसम्बन्धावच्छिन्नवन्हिनिष्ठनिरूपकतावत्त्वेन ह्रदनिष्ठविशेष्यतायाः स्वपदाऽग्राह्यत्वात् । एवं स्वसामानाधिकरण्यानुक्तौ गुणो द्रव्यमितिज्ञानस्य प्रमात्वापत्तिः, गुणत्वनिष्ठनिरवच्छिन्ननिरूपकतायाः अन्यसम्बन्धत्रयेण द्रव्यत्वनिष्ठप्रकारतायां सत्त्वात् ।

न च निरवच्छिन्ननिरूपकताया अवच्छेदकस्य द्रव्यत्वनिष्ठप्रकारतायाश्चाऽवच्छेदकस्याऽप्रसिद्ध्या नेयमापत्तिरिति वाच्यम् । स्वानवच्छेदकानवच्छिन्नत्वमित्यस्य यथाश्रुतार्थकत्वे घटो द्रव्यमिति ज्ञानस्य प्रमात्वानुपपत्तिः, स्वावच्छेदकाऽप्रसिद्धेः, अतस्तस्याऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मानवच्छिन्नत्वमित्यर्थो वाच्यः, तथाचोक्तापत्तिवारणाय स्वसामानाधिकरण्यदलस्याऽऽवश्यकत्वात् ।

तृतीयसम्बन्धाऽनिवेशे स्वरूपतो घटत्वावगाहिज्ञानधर्मिकस्य विषयितासम्बन्धेन घटत्वत्वेन घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिः, स्वरूपतो घटत्वनिष्ठनिरूपकतायाः अन्यसम्बन्धत्रयेण घटत्वत्वेन घटत्वनिष्ठप्रकारतायां सत्त्वात् । एवं गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति ज्ञानस्य प्रमात्वापत्तिश्च ।

घटत्वत्वेन घटत्वावगाहिज्ञानधर्मिकस्य विषयतासम्बन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिवारणाय चतुर्थसम्बन्धनिवेश इति ।

अत्र स्वावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वरूपपञ्चमसम्बन्धोऽपि निवेशनीयः, अन्यथा सामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति ज्ञानस्य प्रमात्वाऽपत्तिः स्यात्, स्वरूपसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तानिष्ठनिरूपकतावैशिष्ट्यस्यैव सत्त्वात् ।

वस्तुतस्तु घटत्वप्रतियोगिकसमवायसम्बन्धेन प्रमेयाश्रयवान् घट इत्यादिज्ञानस्य प्रमात्वानुपपत्तिः, विशेष्यताविशिष्टप्रकारत्वानिरूपकत्वविरहादतः सम्बन्धचतुष्टयं परित्यज्य स्वनिरूपितनिरूपकतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारताकविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतावत्त्वनिवेशः कार्यः । जन्यतावत्त्वं च स्वनिरूपितजनकतानवच्छेदकतावच्छिन्नविषयताशून्यज्ञानीयत्वसम्बन्धेनेति विभावनीयम् ।

पत्तिः, अवच्छिन्नप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वे सति निरवच्छिन्नप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वादिति ।

कालीशंकरभट्टाचार्यास्तु प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वमेव सर्वांशे प्रमात्वम् । विशेष्यतायां प्रकारतावै० स्वनिरूपितत्व–स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वोभयसम्बन्धेन । स्वं प्रकारता । स्वावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात् ह्रदो वह्निमानितिज्ञानस्य न प्रमात्वापत्तिः, नापि गुणः संयोगेन घटवानितिज्ञानस्य प्रमात्वापत्तिः । एवं गुणो विशिष्टसत्तावानितिज्ञानस्यापि न प्रमात्वापत्तिः, तज्ज्ञानस्य तादृशविशिष्टनिरूपितसमवायसम्बन्धावच्छिन्नविशिष्टसत्तानिष्ठप्रकारत्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वघटितोभयसम्बन्धेन विशिष्टसत्तानिष्ठप्रकारताविशिष्टविशेष्यतानिरूपकत्वात् । रङ्गे स्वरूपतो रजतत्वावगाहिज्ञानस्य दर्शितोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यतानिरूपकत्वादेव न प्रमात्वापत्तिः । अत एव वैशिष्ट्यनियामकद्वितीयसम्बन्धे स्वावच्छिन्नेत्यत्र स्वावच्छेदकावच्छिन्नेति नोक्तम् ।

ननु तथापि विषयितासम्बन्धेन "प्रकारत्वेन घटत्वानवगाहि" घटत्वत्वेन घटत्वावगाहिज्ञानधर्मिकस्य विषयितया घटत्वत्वेन घटत्वप्रकारकज्ञानस्य "इदं ज्ञानं विषयितासम्बन्धेन घटत्ववदि"त्याकारकस्य प्रमात्वानुपपत्तिः, तज्ज्ञानस्य स्वावच्छेदकीभूतविषयित्वसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारत्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वघटितदर्शितोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यताशालित्वात् । एवं विषयितया प्रकारत्वेन घटत्वावगाहिज्ञानधर्मिकस्य स्वरूपतो घटत्वप्रकारकभ्रमस्य प्रमात्वापत्तिश्च, तादृशज्ञाने विषयितासम्बन्धेन प्रकारत्वावच्छिन्नाऽभावाऽसत्त्वेन स्वपदेन तज्ज्ञानीयप्रकारताया धर्तुमशक्यतया तज्ज्ञानस्य दर्शितोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत्वाऽनिरूपकत्वादिति चेन्न ।

स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्व–स्वनिरूपितत्वोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यताशून्यत्वे सति स्वनिरूपितत्वस्वाश्रयनिष्ठाधिकरणतात्ववत्त्वोभयसम्बन्धेन विशेष्यताविशिष्टनिरवच्छिन्नप्रकारताशून्यत्वस्य भ्रमभिन्नत्वपदेन विवक्षणात् । तादृशाधिकरणतात्ववत्ता च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकता च स्वावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयनिष्ठनिरूपकताकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ।

प्रकारत्वेन घटत्वानवगाहिनिरुक्तज्ञानस्य प्रमात्वसम्पादनाय प्रकारतायां निरवच्छिन्नत्वनिवेशः । प्रकारत्वेन घटत्वावगाहिनिरुक्तज्ञानस्य प्रमात्वनिराकरणाय सम्बन्धघटकनिरूपकतायां निरवच्छिन्नत्वनिवेश इति प्राहुः(१) ।

---

(१) वस्तुतस्तु स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाभाववद्वृत्तित्वस्वनिरूपितत्वोभयसम्बन्धेन विशेषणताविशिष्टविशेष्यत्वानिरूपकत्वे सति स्वनिरूपितत्वस्वाश्रयनिष्ठाधिकरणतात्ववत्त्वोभयसम्बन्धेन विशेष्यताविशिष्टनिरवच्छिन्नविशेषणत्वाऽनिरूपकत्वमेव सर्वांशे भ्रमभिन्नत्वम् । स्वावच्छेदकावच्छिन्नाभाववत्त्वं च निरवच्छिन्नं ग्राह्यम्, तेन कपिसंयोगवान् वृक्ष इत्यस्य न भ्रमत्वापत्तिः । विशेषणतानिवेशा-

चन्द्रनारायणभट्टाचार्यास्तु प्रकारताविशिष्टान्यप्रकारत्वानिरूपकत्वम् सर्वांशे भ्रमभिन्नत्वम् । वै० स्वतादात्म्य-स्वविशिष्टाधिकरणताश्रयनिष्ठविशेष्यतानिरूपितत्वोभयसम्बन्धेन । अधिकरणतायां स्ववैशिष्ट्यं च स्वाश्रयनिरूपितत्व-स्वावच्छेदकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वैतदुभयसम्बन्धेनेति प्राहुः(१) ।

भेदविशिष्टप्रकारत्वाऽनिरूपकत्वं तदित्यपि केचित् । प्रकारतायां भेदवै० स्वप्रतियोगित्वावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणविशेष्यतानिरूपितत्व—स्वप्रतियोगितानिरूपितावच्छेदकताविशिष्टत्वैतदुभयसम्बन्धेन । अवच्छेदकतावै० स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्ववृत्तित्वैतत्त्रितयसम्बन्धेन । स्ववृत्तित्वं चाऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेनेति(२) ।

---

न्मूलावच्छिन्नो वृक्षः कपिसंयोगवानित्यादिज्ञानस्य वृक्षः सत्ताप्रतियोगिकसंयोगेन द्रव्यत्ववानित्यादिज्ञानस्य च न प्रमात्वापत्तिः, संसर्गसंसर्गतावच्छेदकादेः प्रकारत्वासत्त्वेऽपि विशेषणताया विशेष्यतायाश्च सर्वजनसिद्धत्वादिति ध्येयम् ।

(१) पर्वतो वन्ह्यभाववानिति ज्ञानीयायाः वन्ह्यभावप्रकारताया अपि पर्वतो वह्निमानितिज्ञानीया या प्रकारता निरुक्तोभयसम्बन्धेन तद्विशिष्टाधिकरणताश्रयनिष्ठविशेष्यतानिरूपितत्वसम्बन्धेन प्रकारताविशिष्टान्यप्रकारत्वाऽप्रसिद्ध्या स्वतादात्म्यानिवेशः, तथाच वन्ह्यभावप्रकारतायां वह्निप्रकारतातादात्म्यविरहान्नोक्तदोषः ।

पर्वतो वन्ह्यभाववानिति ज्ञानीयवन्ह्यभावप्रकारतायामपि वन्ह्यभावप्रकारतायाः स्वतादात्म्यसम्बन्धेन सत्त्वात्प्रकारताविशिष्टान्यप्रकारत्वाऽप्रसिद्धिरत उभयसम्बन्धनिवेशः ।

द्वितीयसम्बन्धघटकाधिकरणतायां प्रकारतावैशिष्ट्यं केवलस्वाश्रयनिरूपितत्वसम्बन्धेन यदि निवेश्यते, तदा पर्वतो वन्ह्यभाववानितिज्ञानीयदैशिकविशेषणताविशेषसम्बन्धावच्छिन्ना या प्रकारता स्वाश्रयनिरूपितत्वसम्बन्धेन तद्विशिष्टा कालिकसम्बन्धावच्छिन्नवन्ह्यभावाधिकरणताऽपि तदाश्रयपर्वतनिष्ठविशेष्यतानिरूपितत्वसम्बन्धेन तत्प्रकारतायां वन्ह्यभावप्रकारताविशिष्टान्यत्वाऽसम्भवादतः स्वावच्छेदकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वनिवेशः । गुणो विशिष्टसत्तावानित्यस्य विशिष्टसत्ताप्रतियोगिकसमवायसम्बन्धेन विशिष्टसत्तावगाहित्वेनाऽप्रमात्वम्, शुद्धसमवायेन चैतत्प्रमात्वम्, इति विशिष्टवैशिष्ट्यबोधे विशिष्टप्रतियोगिकसमवायो नियमतः संसर्गमर्यादया भासते, उपलक्षणत्वे तु शुद्धसमवाय इति गदाधरभट्टाचार्याणामाशयः । तथाचोक्तस्थले स्वनिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणं विशिष्टसत्ताप्रतियोगिकसमवायत्वमेव तदवच्छिन्नसंसर्गताकविशिष्टसत्ताधिकरणत्वं न गुणस्येति न तस्य प्रमात्वम् । जातिर्जातिमतीतिज्ञानीयसमवायसम्बन्धावच्छिन्नजातिनिष्ठप्रकारतायां तदवच्छेदकसमवायसम्बन्धावच्छिन्नाधिकरणतावज्जातिमन्निष्ठविशेष्यतानिरूपितत्वविरहान्न प्रमात्वम् ।

यदि चैकधर्मावच्छिन्नाधिकरणताया ऐक्यम्, जातित्वावच्छिन्नसकलजातिनिरूपितमधिकरणत्वमेकमेव, जातित्वावच्छिन्नघटत्वाधिकरणत्वमपि पटेऽस्ति, घटः पट इति भ्रमस्य या घटत्वनिष्ठप्रकारता तस्या अपि स्वाश्रयनिरूपिताधिकरणताश्रयनिष्ठविशेष्यतानिरूपितत्वेन तादृशविशेष्यताशालिज्ञानस्य यथार्थत्वापत्तिरित्युच्यते, तदा स्वाश्रयनिरूपितत्वमपहाय स्वाश्रयेतरानिरूपितत्वमेव सम्बन्धघटकं बोध्यम् ।

(२) तथाच पर्वतो वन्ह्यभाववानितिज्ञानीयवन्ह्यभावत्वावच्छिन्नप्रकारतायाः वन्ह्यभाववद्भेदप्रतियोगित्वावच्छिन्नप्रतियोगिताकभेदाधिकरणपर्वतनिष्ठविशेष्यतानिरूपितत्वावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववद्धर्मावच्छिन्नत्वसम्बन्धावच्छिन्नस्वप्रतियोगिताकाभाववत्त्वसम्बन्धेन तादृशावच्छेदकतावृत्तित्वेन च सामानाधिकरण्य-स्वावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नत्व-स्ववृत्तित्वैतत्त्रितयसम्बन्धेन स्वनिरूपितप्रतियोगितावच्छेदकत्वाविशिष्टत्वैतदुभयसम्बन्धेन भेदविशिष्टतया तदनिरूपकत्वस्य तादृशज्ञानेऽसत्त्वान्नतस्य प्रमात्वम् ।

ईश्वरज्ञानाऽवृत्तिविषयिताशून्यत्वं तदित्यपरे ।

---

अत्र पर्वतो वन्हिमानितिज्ञानीयवन्हित्वावच्छिन्नप्रकारतायाः घटवद्भेदप्रतियोगित्वावच्छिन्नप्रतियोगिताकभेदाधिकरणपर्वतनिष्ठविशेष्यतानिरूपितत्वात्, तेन सम्बन्धेन तस्याः घटवद्भेदविशिष्टतया निरुक्तान्वितयसम्बन्धेन वह्निमद्भेदप्रतियोगितावच्छेदकताविशिष्टतया चैकैकतरसम्बन्धमात्रोपादाने तेन सम्बन्धेन घटवद्भेदविशिष्टत्वम् वन्हिमद्भेदविशिष्टत्वं च तत्रास्तीति तदनिरूपकत्वं न पर्वतो वन्हिमानिति प्रमात्मकज्ञाने इति सम्बन्धद्वयनिवेशः ।

घटो द्रव्यमितिप्रमीयानिरवच्छिन्नद्रव्यत्वनिष्ठप्रकारतायां च पटभेदसमानाधिकरणविशेष्यतानिरूपितत्वसत्त्वेन पटभेदप्रतियोगितावच्छेदकताघटकसमवायावच्छिन्नत्वसत्त्वेन स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्धर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वसम्बन्धावच्छिन्नत्वानिरूपितवृत्तिताश्रयत्वैतदुभयसम्बन्धेन घटभेदीयप्रतियोगितावच्छेदकताविशिष्टत्वसत्त्वेन च निरुक्तोभयसम्बन्धेन भेदविशिष्टत्वसत्त्वात्तादृशज्ञानस्य प्रमात्वानुपपत्तिरतः प्रतियोगितावच्छेदकतासामानाधिकरण्यनिवेशः ।

घटवृत्तित्वविशिष्टद्रव्यत्ववद्भेदप्रतियोगितावच्छेदकतासामानाधिकरण्यस्य पटो द्रव्यमितिज्ञानीयद्रव्यत्वप्रकारतायां सत्त्वेन तदवच्छेदकसम्बन्धावच्छिन्नत्वसत्त्वेन चैतदुभयसम्बन्धेन तादृशावच्छेदकताविशिष्टत्व–स्वप्रतियोगित्वावच्छिन्नप्रतियोगिकभेदसमानाधिकरणविशेष्यतानिरूपितत्वैतदुभयसम्बन्धेन भेदविशिष्टत्वसत्त्वात्तस्याः प्रकारतायास्तदनिरूपकत्वं न पटो द्रव्यमितिज्ञाने इति तस्य प्रमात्वानुपपत्तिरतोऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्धर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वस्य स्ववृत्तित्वघटकसम्बन्धविधया प्रवेशः ।

विषयितासम्बन्धेन द्रव्यत्वस्यापि स्वरूपतो भानेन विषयितासम्बन्धेन द्रव्यत्ववद्भेदप्रतियोगितावच्छेदकतायां घटो द्रव्यमितिज्ञानीयद्रव्यत्वनिष्ठप्रकारताया अवच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववद्धर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन वृत्तितया तस्य प्रमात्वानुपपत्तिरतः स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्यावच्छेदकतावैशिष्ट्यघटकसम्बन्धविधया प्रवेशः ।

कपिसंयोगभेदस्याऽव्याप्यवृत्तित्वमते वृक्षः कपिसंयोगवानितिज्ञानीयकपिसंयोगनिष्ठप्रकारतायाः कपिसंयोगिभेदसमानाधिकरणविशेष्यतानिरूपितत्वेन तस्य प्रमात्वानुपपत्तिरतः स्वसमानाधिकरणविशेष्यतानिरूपितत्वसम्बन्धेन स्वावच्छिन्नप्रतियोगिताकभेदवैशिष्ट्यमपहाय स्वप्रतियोगित्वावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणविशेष्यतानिरूपितत्वप्रवेश इति ।

न्यायरत्नकृतस्तु स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपितस्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नवत्ताग्रहविरोधितानियामकसम्बन्धावच्छिन्ननिरवच्छिन्नाधिकरणतावद्वृत्तित्वस्वावच्छिन्नाभाववद्वृत्तित्वैतदन्यतर–स्वनिरूपितत्वैतदुभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत्वाऽनिरूपकत्वं सर्वांशे प्रमात्वम् । विशेषरूपेण संसर्गताऽभ्युपगमे तु प्रकारतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन स्वाधिकरणाऽवृत्तित्वमेव स्वव्याधिकरणत्वम् ।

यत्तु प्रकारतावच्छेदकसम्बन्धावच्छिन्नयदधिकरणतासामान्ये स्वाधिकरणानुयोगिकत्वाभावस्तत्त्वमेव तदिति।

तन्न । तथासति संयोगेन रूपवान् घट इति ज्ञानस्यापि प्रमात्वापत्तेः, संयोगेन रूपाधिकरणताया अप्रसिद्धत्वात् ।

केचित्तु प्रकारतावच्छेदकसम्बन्धसामान्ये स्वाधिकरणानुयोगिकत्वयद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तद्धर्मवत्त्वं स्ववैयधिकरण्यपदार्थः । न च भूतलं संयोगसमवायोभयसम्बन्धेन घटवदितिज्ञानस्य प्रमात्वापत्तिः, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकतदाश्रयवृत्तिप्रतियोगिताकाभावानभ्युपगमेन संसर्गतावच्छेदकोभयत्वावच्छिन्ने उभयाभावाऽसत्त्वादिति वाच्यम् । प्रकारतावच्छेदकसंसर्गतावच्छेदकसामान्ये स्वाधिकरणवृत्त्यनुयोगितानिरूपकतावच्छेदकत्व–यद्धर्मावच्छिन्नप्रतियोगितानिरूपकतावच्छेदकत्वोभयाभावस्तद्वत्त्वस्य विवक्षितत्वादित्याहुः ।

ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः ।

---

अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावतिप्रसङ्गवारणेऽपि असद्धेतुस्थले तादृशप्रमाविषयदोषघटकसाध्यादेः प्रत्येकं दोषत्वापत्तिर्दुर्वारैव, तदर्थं प्रकारान्तरानुसरणे च तत एव पूर्वदोषस्याऽपि वारणसम्भवे यथार्थपदं व्यर्थम् इति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाऽघटितलक्षणान्तरानुसरणे बीजत्वमाह नन्विति । एकदेशस्याऽपि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्येष्टत्वादाह प्रत्येकमिति । प्रत्येकपदार्थपर्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः । हेत्वाभासतापत्तिः-

---

अत्र-लक्षणे । सद्धेतुस्थले पर्वतो वह्निमानित्यादौ । अनुमितिविरोधिभ्रमविषयेति । पर्वतो वह्निमानित्यनुमितिविरोधी यो भ्रमः पर्वतो वन्ह्यभाववानित्याकारकः, तद्विषयेत्यर्थः । अतिप्रसङ्गवारणेऽपीति । तादृशभ्रमे याथार्थ्याभावादिति भावः। असद्धेतुस्थले-ह्रदो वह्निमानित्यादौ । तादृशप्रमाविषयेति । ह्रदो वन्ह्यभाववानितिप्रमाविषयेत्यर्थः । प्रमापदं यथार्थत्वसूचनाय । दोषघटकेति । वन्ह्यभाववद्ह्रदरूपदोषघटकेत्यर्थः । दोषत्वापत्तिर्दुर्वारैवेति । साध्यादेरनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वादिति भावः । तदर्थं-दोषघटकसाध्यादावतिव्याप्तिवारणार्थम् । प्रकारान्तरानुसरणे चेति । यद्रूपावच्छिन्नविषयिता प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिः तद्रूपवत्त्वमित्युक्तौ चेत्यर्थः । तत एवेति-प्रकारान्तरानुसरणादेवेत्यर्थः । पूर्वदोषस्यापीति । भ्रमविषयसाध्याभावादावतिव्याप्तेरित्यर्थः । तस्यैव-वैयर्थ्यस्यैव । यथार्थपदाऽघटितलक्षणान्तरानुसरणे-द्वितीयलक्षणानुसरणे । दीधितौ व्यभिचारादीति । धूमव्यभिचारी वह्निरित्येवं रूपव्यभिचारघटकधूमादेरित्यर्थः । आदिना बाधादेः संग्रहः । एकदेशस्यापि-वन्ह्यादेरपि । विशिष्टघटकतया-वन्ह्यभाववद्ह्रदरूपविशिष्टघटकतया । हेत्वाभासपदार्थत्वस्य-दोषपदार्थत्वस्य । इष्टत्वादिति । यादृशविशिष्टविषयकं ज्ञानं प्रतिबन्धकं तादृशविशिष्टं दोषपदाद्बोद्धव्यमित्याकारायाः ईश्वरेच्छायाः दोषपदाधीनबोधविषयत्वस्याऽऽश्रयतासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताया विशेष्ये इव अवच्छेदकत्व-तदवच्छेदकत्वादिपरंपरासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः तद्विशेषणतद्विशेषणादौ सत्त्वात् । आश्रयतेतरसम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपितविशेष्यताया इष्टत्वात्, इत्थमेव च गोत्वलोमादौ

---

तत्र । संयोगत्वेन संयोगसमवायोभयसंसर्गकस्य घटप्रकारकभूतलविशेष्यकज्ञानस्य प्रमात्वापत्तेर्दुर्वारत्वात, संयोगत्वादौ तादृशोभयाभावाऽसत्त्वादिति वदन्ति ।

संसर्गविशिष्टान्यप्रकारतावदन्यज्ञानत्वं सर्वांशे याथार्थ्यम् । प्रकारतायां संसर्गवै० स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्व-स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वैतत्त्रितयसम्बन्धेन । स्वं संसर्गः । संयोगेन वन्ह्यभाववान् पर्वत इति भ्रमवारणाय प्रथमसम्बन्धनिवेशः । कालिकसम्बन्धमादाय पर्वतः समवायेन वन्हिमानितिभ्रमवारणार्थं द्वितीयसम्बन्धनिवेशः । संयोगेन घटवान् गुण इति भ्रमवारणार्थं तृतीयसम्बन्धनिवेश इत्यस्मद्गुरुचरणाः ।

अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम्, तद्घटकं च न विशिष्टमिति चेत्, तर्हि यथार्थेति व्यर्थम् भ्रमविषयविशिष्टस्याऽप्रसिद्धत्वादित्यनुशयेनाऽऽह यदिति ।

---

हेत्वाभासपदार्थत्वापत्तिः । यद्रूपावच्छिन्नज्ञानस्यानुमित्यविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपावच्छिन्नमात्रज्ञानाद्धेतौ दुष्टत्वव्यवहारस्य चाऽनुदयेन इष्टापत्तिर्न सम्भवतीति भावः ।

यादृशविशिष्टविषयकत्वं तादृशाऽनुमितिविरोधिताऽनतिरिक्तवृत्ति तत्त्वमिति विवक्षया न साध्यादावतिव्याप्तिरित्याशयेनाऽऽशङ्कते अथेति । विशिष्टविषयकं—साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेव । तद्घटकं च—तादृशविशिष्टघटकप्रत्येकपदार्थविषयकत्वं च । न विशिष्टं—न तादृशविशिष्टनिरूपितम् । तथाच प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकताया

---

गोपशुपदार्थत्वमन्यत्रोपपादितमिति । हेत्वाभासपदार्थत्वापत्तिः—हेत्वाभासपदजन्यबोधीयमुख्यविशेष्यत्वापत्तिरित्यर्थः । तादृशज्ञानविषयो यद्यद्रूपावच्छिन्नस्तत्तद्रूपावच्छिन्नो दोषपदाद्बोद्धव्य इत्याकारिकाया ईश्वरेच्छाया वाच्यतया तदीयाऽऽश्रयतासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः साध्यादावक्षुण्णत्वादिति भावः । अत्र स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्नित्वगतैकत्ववृत्तिर्या विशेष्यता तन्निरूपितदोषपदप्रयोज्यप्रकारतायां प्रमानिरूपितत्वाऽऽपत्तिः पर्यवसितार्थः । आपत्त्याकारस्तु-तादृशविशेष्यतानिरूपितदोषपदप्रयोज्यप्रकारत्वं यद्यनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वावच्छिन्नं स्यात्तदा प्रमानिरूपितं स्यादिति । यद्रूपावच्छिन्नज्ञानस्य—वह्निरितिज्ञानस्य । तद्रूपावच्छिन्ने—वह्नित्वावच्छिन्ने । इष्टापत्तिर्न सम्भवतीति । तथाच साध्यादेर्दोषपदार्थत्वे चाऽत्र हेतौ साध्यं दोष इति व्यवहारः स्यात्, अयं हेतुर्दुष्ट इति व्यवहारो वा स्यादित्यतो विशिष्टमेव लक्ष्यम्, तथाचाऽतिव्याप्तौ नेष्टापत्तिसम्भव इति तात्पर्यम् ।

एतेन दोषघटकसाध्यादेर्दोषत्वे न किञ्चिदनिष्टम्, तत्सम्बन्धेन प्रकृतहेतोरेव दुष्टत्वात् साध्याविषयकज्ञानादनुमितिप्रतिबन्धः स्यादित्यत्राऽऽपादकाभाव इति निरस्तम् । यादृशविशिष्टेति । यद्रूपावच्छिन्नेत्यर्थः । तत्त्वं—तद्रूपवत्त्वम् साध्यादौ । दीधितौ विशिष्टविषयकमिति सावधारणम् । तदेवाह साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेवेति । एवकारस्य भिन्नक्रमः, प्रतिबन्धकमेवेत्यर्थः । स च अनतिरिक्तवृत्तित्वलाभाय । विशिष्टविषयकं ज्ञानं प्रतिबन्धकमेवेति योजनया विशिष्टविषयकत्वे प्रतिबन्धकताशून्यवृत्तित्वाभावलाभात्, वन्हिमानेव धूमवानितिवत् । तादृशविशिष्टघटकेति । वन्ह्यभाववद्ह्रदादिरूपदोषघटकेत्यर्थः । प्रत्येकपदार्थेति । साध्यादीत्यर्थः । न तादृशविशिष्टनिरूपितमिति । न वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूपितमित्यर्थः, अपि तु वह्नि-

अतिरिक्तवृत्तित्वान्नातिव्याप्तिरिति भावः । व्यर्थमिति । यथार्थपदाऽदानेऽपि सद्धेतुस्थलेऽतिव्याप्तिवारणसम्भवात् । ननु तत्र भ्रमविषयप्रत्येकपदार्थ-विषयकत्वस्योक्तरीत्या वारणेऽपि तद्विषयविशिष्टेऽतिव्याप्तिरत आह भ्रमविषयेति । अप्रसिद्धत्वादिति । तथाच क्वातिव्याप्तिरिति भावः ।

---

त्वावच्छिन्ननिरूपितम् । अतिव्याप्तिवारणसम्भवादिति । भ्रमविषयप्रत्येकपदार्थवि-षयकत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वाभावादिति भावः । तत्र–सद्धेतुस्थले । उक्तरी-त्या प्रतिबन्धकतातिरिक्तवृत्तित्वाद् । तद्विषयेति भ्रमविषयेत्यर्थः । विशिष्टे–वन्ह्यभाव-वत्पर्वते । अतिव्याप्तिरिति । वन्ह्यभाववत्पर्वतविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वा-दिति भावः । दीधितौ भ्रमविषयविशिष्टस्याऽप्रसिद्धत्वादिति । भ्रमविषये— तदभाववति तत्प्रकारकभ्रमविषये, विशिष्टस्य–तत्प्रकारवैशिष्ट्यस्य संसर्गाभाव इत्यर्थे ता-त्पर्यम्, तेन अलीकधर्मिकाऽभावस्याऽनंगीकारेण भ्रमविषयनिष्ठप्रसिद्धत्वाभावरूपार्थस्य कल्प-यितुमशक्यत्वेऽपि न क्षतिः । अथवा भ्रमविषयतायां प्रकृतानुमितिप्रतिबन्धकत्वाभावो विव-क्षितः । प्रतिबन्धकत्वाभावश्च स्ववृत्तिरूपावच्छिन्नत्वसंबन्धेन, स्वं प्रतिबन्धकता, वृत्तित्वं च स्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वसंबन्धेनेति । स्वं–रूपम् ।

अथात्र यथार्थपदानुपादाने यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरि-क्तवृत्ति तद्रूपवत्वं हेत्वाभासत्वमित्यवशिष्टम् । तथाच सति संशयाऽऽहार्याऽप्रामाण्यज्ञानान्या-दायाऽसंभवः,वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः ह्रदो वह्निमान्नवेति संशये, वन्हिमान् ह्रदो वन्ह्यभाववानित्याहार्यज्ञाने, ह्रदो वन्ह्यभाववानित्यप्रामाण्यज्ञानास्कन्दितज्ञाने च सत्त्वेन तत्र प्रतिबन्धकत्वाभावेन तस्याः प्रतिबन्धकताऽतिरिक्तवृत्तित्वात् , अतस्तद्वारणायाऽनाहा-र्याऽऽप्रामाण्यज्ञानानास्कन्दितानिश्चयवृत्तित्ववैशिष्ट्यं यद्रूपावच्छिन्नविषयितायामवश्यं निवेशनी-यम्, तदपेक्षया लाघवेन तद्रूपावच्छिन्नविषयितायां यथार्थज्ञानीयत्वनिवेशनमेवोचितमिति यथार्थपदवैयर्थ्याभिधानमसङ्गतमिति चेन्न ।

यथार्थपदोपादानेऽपि जलं वन्ह्यभावविरोधीति भ्रमकालीनस्य अविरुद्धभावाऽभाव द्वयकोटिकसंशयाङ्गीकर्तृमतेन वा ह्रदो जलवान् वन्ह्यभाववान् वेत्यादिज्ञानस्य संशयत्वा-त्सर्वांशे यथार्थतया वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायामनुमितिप्रतिबन्धकताऽतिरिक्त-वृत्तित्वेनाऽसम्भववारणाय संशयान्यत्वरूपनिश्चयत्वनिवेशस्यावश्यकतया संशयमादाय दोषाऽ-सम्भवेन यथार्थपदवैयर्थ्यात् । अविरुद्धभावाभावद्वयकोटिकसंशयानङ्गीकारे तु कपिसंयोगा-भाववद्वृक्षेऽव्याप्तिः, "तस्याऽपि बाधत्वं स्वीकृतं बाधग्रन्थे" वृक्षः कपिसंयोगाभाववान्न वेत्या-कारकसंशयस्य सर्वांशे यथार्थत्वात् ।

न चाऽऽहार्याऽप्रामाण्यज्ञानास्कन्दितज्ञानवारणाय यथार्थपदसार्थक्यमिति वाच्यम् । व-न्हिमान् ह्रद इतिज्ञानोत्तरमिच्छाप्रयोज्यं यद् वन्ह्यभाववान् ह्रद इति ज्ञानं तस्याऽऽहार्यत्वा-त्सर्वांशे यथार्थतया च तद्वारणायाऽनाहार्यत्वस्य, भाविज्ञानमप्रमेत्याप्रामाण्यज्ञानं ततो वन्ह्य-भाववान् ह्रद इति निश्चयः ततोऽतीतज्ञानमप्रमेत्यप्रामाण्यज्ञानद्वयघटितबाधनिश्चयस्य सर्वांशे यथार्थस्य वारणायाऽप्रामाण्यज्ञानानास्कन्दितत्वस्य च निश्चयविशेषणस्यावश्यकतया न तद्वा-

रणाय यथार्थपदसार्थक्यमिति तत्त्वम्(१)।

ननु प्रतिबन्धकताऽनतिरिक्तवृत्तित्वमित्यत्राऽनतिरिक्तवृत्तित्वस्य स्वव्यापकतरकत्वरूपस्याऽर्थे विवक्षणीयतया यद्रूपावच्छिन्नविषयकयथार्थज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकताया, यद्रूपावच्छिन्नविषयकज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूप"यथार्थपदाघटित"व्यापकतातो भिन्नतयाऽखण्डाभावघटकतयैव यथार्थपदसार्थक्यसम्भवे कथं वैयर्थ्याभिधानमिति चेन्न।

यथार्थत्वस्य विशेषणविधया प्रवेशे प्रयोजनविरहेणोपलक्षणविधयैवाऽभावप्रतियोगितावच्छेदककोटौ निवेशनीयतया ज्ञाननिष्ठावच्छेदकतायां याथार्थ्यसामानाधिकरण्यं निवेशनीयम्, एवं च प्रकृतानुमितिप्रतिबन्धकतावृत्तिर्योऽभावस्तदीया याऽवच्छेदकत्वनिष्ठा प्रतियोगिता

---

(१) नव्यास्तु तत्तदप्रामाण्यज्ञानाभावस्य आहार्यत्वाभावस्य संशयत्वाभावस्य च तत्तद्व्यक्तित्वेन प्रवेशे गौरवमतोऽनुगतरूपेणैवाऽप्रामाण्यज्ञानाद्यभावाः निवेशनीयाः। तथाच यद्यदप्रामाण्यज्ञानसत्त्वे पर्वतो वह्न्यभाववानितिनिश्चयसत्त्वे पर्वतो वह्निमानितिबुद्धिः प्रामाणिकी तत्तदप्रामाण्यज्ञानाभावविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम्, एवं संशयादीनामप्यनुगमः। नचैवं यत्तदर्थयोरननुगमाल्लक्षणस्याऽननुगम इति वाच्यम्। तत्तत्कूटत्वविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वे अनुगमात्। निश्चये कूटत्ववै० स्वाश्रयसामानाधिकरण्यसम्बन्धेन।

यद्वाऽभावविशिष्टान्यत्वं यद्रूपावच्छिन्नविषयकज्ञाने निवेशनीयम्। ज्ञाने वै० स्वाभाववत्त्व-स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतावत्त्वोभयसम्बन्धेन। स्वाभाववत्त्वं च स्वरूपाविशेष्यत्वान्यतरसम्बन्धेन। अभावपदेनाहार्यत्वाभाव-अप्रामाण्यज्ञानाभाव-संशयत्वाभावा उपादेयाः। एवं चैतादृशविशेषणेनैवोक्ताहार्यस्याऽप्रामाण्यज्ञानास्कन्दितस्य च वारणसम्भवेन याथार्थ्यविशेषणस्य वैयर्थ्यात्।

न चोक्तानुगमेनाऽनियताऽऽहार्यवारणेऽपि नियताहार्यवारणाऽसम्भवः, नियताऽऽहार्यज्ञानीयाविषयिताया दोषविषयकाऽऽहार्यज्ञानीयाविषयितातो भेदस्य वक्ष्यमाणतया नियताहार्यज्ञानीयाविषयितायाः प्रतिबन्धकतानवच्छेदकत्वेन नियताऽऽहार्यज्ञानस्याऽभावविशिष्टान्यत्वादिति नियताऽऽहार्यव्यावृत्त्यर्थं यथार्थपदसार्थक्यमिति वाच्यम्। यथार्थपदोपादानेऽपि उक्तरीत्या कपिसंयोगाभाववद्वृक्षेऽव्याप्तिः, अतो नियताहार्यस्य "कपिसंयोगवान्वृक्षः कपिसंयोगाभाववानित्याकारकस्य" वारणाय वैशिष्ट्यघटकद्वितीयसम्बन्धः स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयितावत्त्वरूपोऽवश्यं वक्तव्यः। तथाच नियताऽऽहार्यवारणम्, तद्ज्ञानीयाविषयितायाः प्रतिबन्धकतानवच्छेदकत्वेऽपि प्रतिबन्धकतावच्छेदकाऽनाहार्यज्ञानीयविषयितामादाय तन्निरूपकतावच्छेदकधर्मावच्छिन्नविषयितावत्त्वं तद्ज्ञानेऽक्षतमेवेति यथार्थपदं व्यर्थमेवेति ध्येयम्।

ननु सर्वमिदं तदा स्याद्यदि आहार्यभेदस्य प्रतिबन्धकतावच्छेदकत्वं स्यात्, तदेव न सम्भवति, तथासति ह्रदो वह्निमानितिज्ञानं प्रति ह्रदो वह्न्यभाववान् घटाभाववत्पर्वतो घटवानितिसमूहालम्बनस्य प्रतिबन्धकत्वानुपपत्तेः, तस्याऽऽशङ्काऽऽहार्यतयाऽऽहार्यभिन्नत्वाभावात्। एवं संशयभेदोऽपि न प्रतिबन्धकतावच्छेदकः। तथाचोक्तविशेषणेनाऽप्रामाण्यज्ञानास्कन्दितज्ञानवारणेऽपि संशयाऽऽहार्यज्ञानयोर्वारणमशक्यमेव, स्वावच्छिन्नप्रतिबन्धकताघटितद्वितीयसम्बन्धविरहप्रयुक्ताऽभावविशिष्टान्यत्वस्याऽक्षतत्वादिति तयोर्वारणाय याथार्थ्यविशेषणं सार्थकमेवेति चेन्न।

आहार्यभेदस्य प्रतिबन्धकतावच्छेदकत्वाभावेऽपि आहार्यस्य प्रतिबन्धकतावारणार्थं विरोधिविषयिताया इच्छाऽप्रयोज्यत्वं, संशयस्य प्रतिबन्धकतावारणार्थं विषयित्वानवच्छिन्नत्वं च निवेशनीयम्, एवं चाऽभावपदेनेच्छाप्रयोज्यत्वाभावं विषयित्वावच्छिन्नत्वाभावं चोपादाय तयोर्वारणम्। अत्र वैशिष्ट्यघटकस्वाभाववत्त्वं स्वाश्रयीभूतविषयितावत्त्व विशेष्यत्वान्यतरसम्बन्धेन। प्रथमसम्बन्धनिवेशादाहार्यसंशययोर्वारणम्। द्वितीयसम्बन्धनिवेशादप्रामाण्यज्ञानास्कन्दितज्ञानवारणम्। एवं च यथार्थपदं व्यर्थमेवेति प्राहुः।

तन्निरूपितप्रतियोगितात्वावच्छिन्नावच्छेदकतानिरूपितभेदत्वावच्छिन्नावच्छेदकतानिरूपिता या वृत्तितात्वावच्छिन्नावच्छेदकता तन्निरूपिता या याथार्थ्यसमानाधिकरणनिश्चयत्वावच्छिन्नावच्छेदकता तन्निरूपितविषयितात्वावच्छिन्नावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्त्वं हेत्वाभासत्वमिति लक्षणाभिप्रायेण वैयर्थ्याभिधानम्, न त्वभावप्रतियोगितावच्छेदककोटौ याथार्थ्यनिवेशाभिप्रायेण ।

एतेन यथार्थपदनिवेशेऽसम्भवसम्भवे वैयर्थ्याभिधानमसङ्गतम्, अभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालियथार्थज्ञाननिष्ठभेदप्रतियोगितावच्छेदकतात्वस्य तत्समनियत(१)"यथार्थपदाऽघटित"तादृशावच्छेदकतात्वापेक्षया गुरुतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेन तादृशाऽभावाऽप्रसिद्धेरिति निरस्तम् । याथार्थ्यस्य प्रतियोगितावच्छेदककुक्षावनिवेशात्, याथार्थ्यसामानाधिकरण्यस्यैव ज्ञाननिष्ठावच्छेदकतायां निवेशादिति(२) ध्येयम् ।

---

(१) ननु अभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य अभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य कुतः समनैयत्यम्, यतोऽभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिज्ञानं ह्रदो वह्न्यभाववान्पर्वतश्च तथेति समूहालम्बनज्ञानं तत्र निरुक्तयथार्थत्ववान्नेति भेदो वर्तते तादृशभेदप्रतियोगितावच्छेदकतात्वं निरुक्तयथार्थत्वनिष्ठावच्छेदकतायामस्ति तादृशदोषविषयकाऽभावविशिष्टान्ययथार्थज्ञानं च न तादृशसमूहालम्बनज्ञानं, तत्र याथार्थ्यविरहात, किन्तु ह्रदो वह्न्यभाववानित्यादियथार्थज्ञानमेव तत्र यथार्थत्ववान्नेतिभेदाभावेन भेदान्तरीयप्रतियोगितावच्छेदकतात्वं यथार्थत्ववद्भेदप्रतियोगितावच्छेदकतायां नास्तीति न समनियतत्वं तयोरिति चेन्न ।

वक्ष्यमाणाऽनतिरिक्तवृत्तित्वकल्पेऽव्यापकीभूतविषयताशून्यत्वस्य ज्ञाने निवेशनीयतया दोषविषयकाशिकत्रमस्य "ह्रदो वह्न्यभाववान्पर्वतश्च तथेति समूहालम्बनात्मकस्य" अव्यापकीभूतविषयिताशून्यत्वाभावेन तस्याऽभावविशिष्टान्यज्ञानपदेन धर्तुमशक्यत्वात्, किन्तु दोषविषयकयथार्थज्ञानस्यैव "ह्रदो वह्न्यभाववानि"त्याकारकस्य तादृशतया तत्र च यथार्थत्ववद्भेदाभावेन तयोः समनियतत्वमस्त्येवेति ।

(२) अत्रेदं बोध्यम् । यथार्थत्वनिष्ठावच्छेदकताया न्यूनवारकपर्याप्तिनिवेशे प्रयोजनाभावेन यथार्थत्वघटितयद्रूपावच्छिन्नविषयिताशालिअभावविशिष्टान्ययथार्थज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावत्वस्य याथार्थ्याऽघटितयद्रूपावच्छिन्नविषयिताशालिअभावविशिष्टान्यज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावसाधारण्यमस्त्येव, तथाहि—"निष्ठत्वसम्बन्धावच्छिन्न"यद्धर्मनिष्ठावच्छेदकताभिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकतातदनिरूपिका अथ चेदृशावच्छेदकताद्वयनिरूपिका याऽवच्छिन्नत्वसम्बन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकता तद्भिन्ना सती विषयितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका विषयितानिष्ठावच्छेदकता तद्भिन्ना सती ज्ञानत्वनिष्ठावच्छेदकताभिन्ना सती अभावविशिष्टान्यत्वनिष्ठावच्छेदकताभिन्ना सती याथार्थ्यनिष्ठावच्छेदकताभिन्ना सती अथ च "याथार्थ्यनिष्ठावच्छेदकतां विहाय" अवच्छेदकतात्रयनिरूपिका या ज्ञाननिष्टानिष्ठावच्छेदकता तद्भिन्ना सती वृत्तित्वत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चेदृशावच्छेदकताद्वयनिरूपिका या वृत्तित्वनिष्ठावच्छेदकता तद्भिन्ना सती भेदत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका, अथ चेदृशावच्छेदकताद्वयनिरूपिका या भेदनिष्ठावच्छेदकता तद्भिन्ना सती प्रतियोगितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चेदृशावच्छेदकताद्वयनिरूपिका या प्रतियोगित्वनिष्ठावच्छेदकता तद्भिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका, अथ चेदृशावच्छेदकताद्वयनिरूपकाऽ"वच्छेदकत्वनिष्ठ"प्रतियोगिताकाभावत्वस्य द्विविधाऽभावसाधारणतया स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वरूपवैयर्थ्यसम्भवः । याथार्थ्यस्य प्रतियोगितावच्छेदककोटावनिवेशेन नाप्यप्रसिद्ध्याऽसम्भवावकाश इति ध्येयम् ।

न चाऽभावविशिष्टान्यत्वमित्यत्र वैशिष्ट्यघटकस्वाभाववत्वस्य विशेष्यत्वस्वाश्रयविषयितावत्वाऽन्यतरस-

केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि । तत्र तृतीयमिव प्रथममपि

केचित्त्विति । नन्वाद्यस्य दुष्टहेतुलक्षणत्वे दोषस्यातिव्याप्तिः, तेषामपि अनुमितिविरोधियथार्थज्ञानविषयत्वात् । न च ह्रदादिपक्षकवन्ह्यादिसाध्यकस्थले वन्ह्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुतया लक्ष्यत्वमेति वाच्यम् । तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं, यदि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिविरोधियथार्थज्ञानविषयत्वमात्रं, तदा ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयवन्ह्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरित्याशङ्कां परिजिहीर्षुः तादृशाभावप्रतियोगिनां ज्ञानमिति षष्ठीसमासमाश्रित्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वमर्थं व्याख्यास्यति, तच्च ज्ञायमानदोषप्रतिबन्धकतामते एव सङ्गच्छते अतस्तन्मतमवलम्ब्यैवाह तत्रेति । तेषु लक्षणेषु

यथार्थपदसार्थक्यं प्रकारान्तरेण कुर्वतां मतमाह केचित्त्विति । दुष्टनिरूपणस्यैव प्रतिज्ञातत्वादौचित्यौ दुष्टानामेवेत्युक्तम् । दोषलक्षणत्वे यथार्थपदवैयर्थ्यापातात्, प्रथमस्य दुष्टलक्षणत्वे ऽन्त्ययोरपि तथात्वमित्याशयः । प्रतियोगिपदज्ञानपदयोः "विरोधिपदज्ञानपदयो(१)र्वा" षष्ठीतत्पुरुषसमासबीजं स्फुटीकर्तुं कर्मधारयमधिकृत्य शङ्कते नन्विति । अतिव्याप्तौ हेतुमाह तेषामपीति । वन्ह्यभाववद्ध्रदादिरूपदोषाणामपीत्यर्थः । दुष्टहेतुतयेति । ह्रदो वह्निमान् वह्न्यभाववद्ध्रदादित्यादौ वन्ह्यभाववद्ध्रदादीनां बाधितत्वेन दुष्टहेतुत्वादित्यर्थः । पर्वतत्वावच्छिन्नपक्षकवन्हित्वावच्छिन्नसाध्यकद्रव्यत्वावच्छिन्नहेतुकस्थले धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरतस्तेन रूपेणेति, तथाच पर्वतत्वावच्छिन्नपक्षकवन्ह्यादिसाध्यकधूमादिहेतुव्यावृत्यर्थं तेन रूपेणेत्यस्य निवेशः । एतादृशं रूपं लक्ष्यतावच्छेदकीकृत्य यदि तत्पक्षसाध्यकानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमात्रं लक्षणमुच्यते, तदा ह्रदो वन्हिमान् धूमादित्यादौ वन्ह्यभाववद्ध्रदेऽतिव्याप्तिः तत्र हेतुतावच्छेदकरूपलक्ष्यतावच्छेदकाभावादित्यर्थः । तादृशाभावेति । अनुमितिकारणीभूताभावेत्यर्थः । प्रतियोगिनां ज्ञानमिति षष्ठ्यर्थः प्रकारकत्वम् । तच्च—व्याख्यानं च ।

म्बन्धेन विवक्षणे याथार्थ्यस्य वैयर्थ्येऽपि विशेष्यतामात्रेण स्वाभाववत्त्वाविवक्षणे न तद्वैयर्थ्यम्, आहार्यसंशययोर्वारणीयत्वादिति वाच्यम् । यथार्थपददानेऽपि अनियताऽऽहार्यवारणाय तादृशविवक्षाया आवश्यकतया तेनैव संशयानियताऽऽहार्यवारणसम्भवेन यथार्थपदनिवेशे प्रयोजनाभावादिति दिक् ।

(१) ननु केचित्तुमते यद्रूपावच्छिन्नविषयतासामान्यं प्रकृताऽनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वस्य दुष्टत्वार्थत्वे पर्वते वह्निसाधने धूमो न दुष्ट इति व्यवहारानुपपत्तिः, तत्र समभिव्याहृतपदार्थाऽन्वितदुष्टत्वार्थस्याप्रसिद्ध्या तदभावप्रकारकबोधाऽसम्भवात्, नञोऽसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यत्प्रकारकबोधोऽनुभवसिद्धः, नञ्समभिव्याहारस्थले तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावप्रकारकबोधो भवतीति व्युत्पत्तेः, तथाच पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकरूपप्रकारकप्रमाविशेष्यत्वाभाव एव प्रत्येतव्यः स च न सम्भवति, तादृशानुमितिप्रतिबन्धकाऽप्रसिद्धेरिति चेन्न ।

ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य । तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वम् ।

---

मध्ये इत्यर्थः । तृतीयलक्षणस्य सर्वमते एव ज्ञायमानदोषप्रतिबन्धकतामताभिप्रायकतया दृष्टान्तत्वेनोपन्यासः । तदर्थश्चेति । प्रतियोग्यन्तेन व्यभिचारादिदोषानादाय लक्षणं सङ्गमनीयमिति दर्शयितुं व्यभिचारादय इति, नतु तेन रूपेण लक्षणघटकत्वमित्यवधेयम् । एवं च यथार्थपदानुपादाने दुष्टत्वभ्रममादाय प्रकृतहेतुभिन्नेऽतिप्रसङ्ग इति यथार्थपदसार्थक्यम् ।

---

एवं च—अनुमितिकारणीभूताभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वस्य लक्षणत्वे चेत्यर्थः । अत्र ह्रदो वन्हिमानित्यनुमितिकारणीभूतो योऽभावः वन्ह्यभाववद्ह्रदाऽभावः "दोषाणां प्रतिबन्धकत्वे दोषाभावस्य प्रतिबन्धकाभावविधया कारणत्वात्" तस्य प्रतियोगी वन्ह्यभाववद्ह्रदः—तत्प्रकारकं यद् यथार्थज्ञानं स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वन्ह्यभाववद्ह्रदवान् धूम इत्याकारकं तद्विषयत्वस्य धूमे सत्वाल्लक्षणसमन्वयः । एवमेव व्यभिचारिहेत्वादौ लक्षणसमन्वयो बोध्यः । **यथार्थपदानुपादाने इति** । तादृशप्रतियोगिप्रकारकज्ञानविषयत्वस्य लक्षणत्वे चेत्यर्थः । **दुष्टत्वभ्रममादाय**—दोषप्रकारकभ्रममादाय । **प्रकृतहेतुभिन्ने**—सद्धेत्वादौ ।

एतल्लक्षणं यदि ज्ञायमानदोषप्रतिबन्धकतामताभिप्रायेण तदा सद्धेतुस्थलेऽनुमितिप्रति-

---

नञ्समभिव्याहारस्थले स्वविशेष्यतानिरूपितप्रमीयप्रकारताश्रयाविशेष्यकप्रमानिरूपितत्वाभावविशिष्ट-"तत्पक्षसाध्यहेतुकानुमितिप्रतिबन्धकतावच्छेदकीभूत"विषयताको भेदः दुष्धात्वर्थतया प्रतीयते, अनन्यगतिकत्वात्, तदभावश्च नञा बोध्यते । तादृशनिरूपितत्वाभावश्च विषयतात्वावच्छेदेन बोध्यः । तेन साध्याभाववत्वादिना घटावगाहिव्यभिचारादिभ्रममादाय धूमसाधने वह्निर्न दुष्ट इति व्यवहारस्य नापत्तिः ।

नन्वेवमपि द्रव्येण वह्निसाधने धूमो न दुष्ट इति व्यवहारानुपपत्तिः, द्रव्येण वह्निसाधने धूमो दुष्ट इति व्यवहारापत्तिश्च दुर्वारैव, वह्निव्यभिचारिद्रव्यवान् धूम इति ज्ञानस्य प्रमात्वादिति चेन्न ।

धर्मितावच्छेदकतापन्नहेतुतावच्छेदकस्यैव प्रकारतावच्छेदकसम्बन्धघटकत्वात् ।

तादृशप्रतिबन्धकतासमानाधिकरणप्रकारतानिरूपितसंसर्गतासामान्ये स्वविशेष्यत्वाभावः स्वनिरूपकानिरूपितत्वस्वावच्छेदकवृत्तित्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको वा बोध्यः ।

दुष्ट इत्यत्र प्रतिबन्धकतामात्रं दुष्धात्वर्थः । स्वविशिष्टप्रकारताकप्रमीयाविशेष्यत्वसम्बन्धावच्छिन्नाऽऽश्रयत्वं क्तप्रत्ययार्थः । वै० सामानाधिकरण्यसम्बन्धेन । तच्च स्वावच्छेदकविषयतात्वव्यापकतदवच्छेदकताकधर्मवत्वसम्बन्धेन तदधिकरणे स्वरूपसम्बन्धेन वृत्तित्वरूपम् । एवं च दुष्ट इत्यत्र एतादृशसम्बन्धेन प्रतिबन्धकताश्रय इत्यन्वयबोधः । न दुष्ट इत्यत्र ईदृशव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकप्रतिबन्धकत्वाभावस्यैव बोधः, अनायत्या प्रत्ययार्थस्य संसर्गत्वोपगमात् । एवं चाऽनुमितिप्रतिबन्धकतावच्छेदकतायां स्ववृत्तितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयतात्वव्यापकत्वाभावः प्रत्येतव्यः(१) । वृत्तित्वं च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नं ग्राह्यमित्यस्मद्गुरुचरणाः ।

---

(१) तथाच स्वविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकधर्मावच्छिन्नविषयतात्वव्यापकत्वाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकताकत्वेन खण्डशक्त्या हेतौ बोध इति भावः ।

यद्यपि पर्वतत्वाद्यवच्छिन्ने वन्हित्वावच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट इत्यादेः सद्धेतौ दुष्टत्वव्यवहारस्य नापत्तिः, तत्र तत्पक्षसाध्यहेतुकानुमितिप्रतिबन्धकरूपदोषप्रकारकज्ञानविषयत्वस्यैव प्रत्येतव्यत्वात्, तादृशानुमितिप्रतिबन्धकबाधव्यभिचारादेश्चाऽप्रसिद्धत्वात्, ह्रदादौ वन्ह्यादिसाधनमादाय च सर्वत्र दुष्टत्वव्यवहार इष्टः, तथापि धूमसाधने वन्हित्वेनाऽयं दुष्ट इत्यादौ वन्हित्वावच्छिन्नहेतुकधूमाद्यनुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वस्य प्रत्ययात् वक्ष्यमाणसम्बन्धावच्छिन्नतादृशानुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवन्ह्यादिरूपदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्येणाऽपि तथा व्यवहारः स्यात्।

---

बन्धकदोषस्याऽप्रसिद्ध्या सद्धेतावतिव्याप्तिविरहेण यथार्थपदवैयर्थ्यमित्याशङ्कते यद्यपीति। पर्वतत्वावच्छिन्ने सप्तम्यर्थो विशेष्यकत्वम्, वन्हित्वावच्छिन्नसाधने साधनपदार्थोऽनुमितिः, तथाच वन्हित्वावच्छिन्नसाध्यकानुमितावित्यर्थः। अनुमितावेवोक्तविशेष्यकत्वस्याऽन्वयः। दुष्ट इत्यत्र दुष्धात्वर्थः प्रतिबन्धकप्रकारकज्ञानविषयत्वम्, यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकज्ञानविशेष्यत्वं वा। आश्रयत्वं क्तप्रत्ययार्थः। तथाच पर्वतत्वावच्छिन्नविशेष्यकवन्हित्वावच्छिन्नसाध्यकानुमितिप्रतिबन्धक"रूपदोष"प्रकारकज्ञानविशेष्यतावदभिन्नो धूमत्वावच्छिन्नः इति "पर्वतत्वावच्छिन्ने वन्हित्वावच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट" इति वाक्याद्बोधः। इत्यादेः—इत्यात्मकस्य। सद्धेतौ विशेष्यकत्वं सप्तम्यर्थः, तस्य व्यवहारेऽन्वयः। दुष्टत्वव्यवहारस्येति। दुष्टत्वप्रकारकव्यवहारस्येत्यर्थः। आपत्त्यभावे हेतुमाह तत्रेति। तत्र—सद्धेतौ, निष्ठत्वं सप्तम्यर्थः, तस्य विषयत्वेऽन्वयः। विषयता चाऽत्र विशेष्यत्वरूपा बोध्या। तत्पक्षकसाध्यहेतुकानुमितीति। पर्वतपक्षकवन्हिसाध्यकधूमहेतुकाऽनुमितीत्यर्थः। प्रत्येतव्यत्वात्—बोधविषयत्वादित्यर्थः। आपाद्यत्वादिति यावत्। व्यवहारेणेति शेषः। तादृशविषयत्वापादनं च न सम्भवतीत्याह तादृशेति। तत्पक्षसाध्यहेतुकेत्यर्थः। बाधव्यभिचारादेरिति। वह्न्यभाववत्पर्वतरूपबाधस्य वन्ह्यभाववद्वृत्तिधूमरूपव्यभिचारस्य चेत्यर्थः। आदिनाऽसिद्ध्यादिपरिग्रहः। अप्रसिद्धत्वादिति। एवं च तादृशदोषाऽप्रसिद्ध्या(१) तादृशदोषप्रकारकज्ञानविषयत्वस्याऽप्रसिद्ध्या आपाद्याऽप्रसिद्धेरिति भावः। ह्रदादौ वन्ह्यादिसाधनमादाय चेति। ह्रदादौ वन्ह्यादिसाधने चेति यावत्। सर्वत्र—धूमादौ। तथाच यथार्थपदवैयर्थ्यमिति शङ्काकर्तुराशयः। समाधत्ते तथापीति। धूमसाधने इति। धूमसाध्यकवन्हिहेतुकानुमितावित्यर्थः। तत्र वन्हौ अवच्छिन्नत्वार्थकतृतीयान्तवन्हित्वेनेत्यस्याऽन्वयः। अयंपदार्थो रासभः। तथाच धूमसाध्यकवन्हित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यतावदभिन्नो रासभः इत्युक्तवाक्याद् बोध इति ध्येयम्। इत्यादौ—इत्यादिवाक्यादिति यावत्। वक्ष्यमाणसम्बन्धावच्छिन्नेति। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकसम्बन्धावच्छिन्नेत्यर्थः। अन्वयश्चाऽस्य दोषनिष्ठप्रकारतायाम्। भ्रममादायेति। स्वज्ञानविष-

---

(१) अनुमितिविरोधियथार्थज्ञानविषयत्वमिति लक्षणाभिप्रायेण।

नच तत्र विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्यभानाद्रासभे तद्बाधेन नायमतिप्रसङ्ग इति वाच्यम् । तथासति दोषपदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वाऽलाभात् तल्लाभानुरोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटकहेतौ वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्य, तत्प्रकारतायां वा स्वावच्छिन्नत्वार्थकतृतीयान्तलभ्यवह्नित्वावच्छिन्नत्वस्यान्वय इत्ये-

---

यप्रकृतहेतुतावच्छेदकत्वसम्बन्धेन धूमाभाववद्वृत्तिमान्रासभः इति भ्रममादायेत्यर्थः । **तथा व्यवहारः स्यादिति** । तादृशव्यवहारस्य प्रामाण्यापत्तेरित्यर्थः । यथार्थपदोपादाने तु तादृशानुमितिप्रतिबन्धको यो धूमाभाववद्वृत्तिवह्निरूपो दोषस्तत्प्रकारकयथार्थज्ञानाविशेष्यत्वस्य रासभादौ विरहेणोक्तव्यवहारविरहादिति ध्येयम् ।

अथ धूमसाधने वह्नित्वेनाऽयं दुष्ट इत्यत्र वह्नित्वेनेति तृतीयान्तार्थस्य वह्नित्वावच्छिन्नत्वस्य न साधनपदार्थघटकहेतौ अन्वयः, किन्तु विशेष्ये इदंपदार्थे एव, तथाच नोक्तव्यवहारापत्तिरित्याशङ्कते **नचेति** । तत्र—धूमसाधने वह्नित्वेनाऽयं दुष्ट इत्यत्र । **विशेष्ये**—इदंपदार्थे । **तद्बाधेन**—वह्नित्ववैशिष्ट्यबाधेन । तथाच रासभादिपदार्थः नेदंपदतात्पर्यविषयीभूत इति भावः । **नायमतिप्रसङ्ग इति** । न रासभादितात्पर्येण धूमसाधने वह्नित्वेनाऽयं दुष्ट इति व्यवहारापत्तिरित्यर्थः । स्व"विषयक"ज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धावच्छिन्ना या प्रकृतानुमितिप्रतिबन्धकनिष्ठा प्रकारता तच्छालिज्ञानविशेष्यत्वं यथा "अयं दुष्टः इति" दुष्टताव्यवहारनियामकम्, तथा वह्नित्ववैशिष्ट्यमपीति तादृशविशेष्यत्ववह्नित्वोभयस्य रासभे बाधेनोक्तापत्तिवारणसम्भवे व्यर्थमेव यथार्थपदमित्याशयः । **तथासति**—वह्नित्ववैशिष्ट्यस्य विशेष्ये अन्वये सति । दोषपदार्थश्चाऽनुपदं वक्ष्यमाणः हेतुप्रकारकज्ञानजन्याऽनुमितिप्रतिबन्धकरूपः । **वह्नित्वावच्छिन्नहेतुकत्वाऽलाभादिति** । वह्नित्वविशिष्टहेतुकत्वाऽलाभादित्यर्थः । वह्नित्वविशिष्टहेतुकत्वलाभानुरोधेन—**वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्येति** । अस्याऽन्वय इत्यनेनाऽन्वयः । ननु हेतौ तृतीयान्तार्थस्य "वह्नित्ववैशिष्ट्य"स्याऽन्वये "धूमतात्पर्येण" पर्वते वह्निसाधने धूमत्वेनाऽयं दुष्ट इति व्यवहारापत्तिः, द्रव्यत्वावच्छिन्नहेतुकानुमितेर्धूमत्वविशिष्टहेतुकानुमितिकतया धूमत्वविशिष्टहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यत्वस्य तत्र सत्त्वादत आह **तत्प्रकारतायां वेति** । हेतुनिष्ठप्रकारतायां वेत्यर्थः । तथाच द्रव्यत्वावच्छिन्नप्रकारतायां धूमत्वावच्छिन्नत्वविरहान्न तथाव्यवहार इति भावः । **इत्येवोपगन्तव्यत्वादिति** । अयं भावः—तद्धेतुकत्वाऽप्रवेशे रासभलिङ्गकानुमितेरपि अनुमितिसामान्यान्तर्गततया धूमाभाववद्वृत्तिवन्ह्यादिरूपव्यभिचारादेस्तादृशाऽनुमितिसामान्याप्रतिबन्धकत्वादसम्भवः स्यादिति प्रकृतहेतुप्रकारकज्ञानजन्यत्वरूपप्रकृतहेतुकत्वादेर्दुष्धात्वर्थघटकानुमितौ निवेश आवश्यकः । एवं तद्घटकहेतुनिष्ठप्रकारतायां हेतुतावच्छेदकावच्छिन्नत्वनिवेश आवश्यकः, अन्यथोक्तरीत्या द्रव्यादिलिङ्गकानुमितेरपि सामान्यान्तर्गततयेनाऽसम्भवाऽनुद्धारात् । एवं च "वह्नित्वेनेत्यनेनैव तद्धर्मावच्छिन्नलिङ्गकत्वनिवेशलाभो वाच्यः, तथासति विशेष्ये वह्नित्ववैशिष्ट्यस्यानन्वयेन तादृशज्ञानविशेष्यत्वस्य रासभादौ अबाधितत्वेन रासभादितात्पर्येण धूमसाधने वह्नित्वेनाऽयं

बोपगन्तव्यत्वात्। नच विशेष्ये वह्नित्वादिधर्मवैशिष्ट्यबोधकपदसमभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकोर्थः, अथवा अनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वाद्यवच्छिन्नहेतुकानुमितिरूपविशेषलाक्षणिकत्वम्, धात्वर्थेऽनुमित्यन्तर्भावे साधनपदार्थानन्वयप्रसङ्गात्, तथाच विशेष्य एव तृतीयार्थवैशिष्ट्यान्वयोपगमान्नोक्तातिप्रसङ्ग इति वाच्यम्। एवमपि वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारस्य भ्रममादायातिप्रसङ्गादिति यथार्थपदसार्थक्यम्।

---

दुष्ट इति व्यवहारापत्तिर्दुर्वारैवेति तद्वारणार्थं यथार्थपदमावश्यकमिति ध्येयम्।

वह्नित्वेनेति तृतीयान्तार्थवह्नित्ववैशिष्ट्यस्य विशेष्ये एवाऽन्वय इति शङ्कते **नचेति**। **विशेष्ये**—रासभादौ। सप्तम्यर्थो विशेष्यकत्वम्, बोधान्वयि, तथाच रासभविशेष्यकवह्नित्ववैशिष्ट्यबोधजनकपदसमभिव्याहारस्थले इत्यर्थः। **दोषार्थकधातोरेवेति**। नतु वह्नित्वेनेति तृतीयान्तस्य, न वा साधनपदस्येत्यर्थः। तथाच वह्नित्वेनेति तृतीयान्तार्थवह्नित्ववैशिष्ट्यस्य रासभे एवाऽन्वयेनोक्तापत्त्यभावाद्यर्थमेव यथार्थपदमिति भावः। अस्मिन्पक्षे अनुमित्यर्थकसाधनपदं व्यर्थम्, अनुमितेर्धातुना प्रतिपादनात्। तत्सार्थकत्वमभिप्रेत्याह **अथवेति**। **साधनशब्दस्यैवेति**। नतु तृतीयान्तस्येति यावत्। तथाचाऽनुमितौ वह्नित्वावच्छिन्नहेतुकत्वलाभः साधनपदादेवाऽतस्तृतीयान्तार्थवह्नित्ववैशिष्ट्यस्य विशेष्ये एवाऽन्वय इति भावः। पूर्वकल्पे दोषमाह **धात्वर्थे इति**। **धात्वर्थे**—दुष्धात्वर्थे। **अनुमित्यन्तर्भावे**—अनुमितिघटितत्वे। **साधनपदार्थानन्वयप्रसङ्गादिति**। घटो घटः इतिवदिति भावः। **तथाच**—अनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वाद्यवच्छिन्नहेतुकानुमितिरूपविशेषलाक्षणिकत्वे चेत्यर्थः। **विशेष्ये एव**—इदंपदार्थसाधने एव। **नोक्तातिप्रसङ्ग इति**। एवं च धूमसाधने वह्नित्वेनाऽयं दुष्ट इत्यत्र धूमसाधने इत्यस्य धूमसाध्यकवह्नित्वावच्छिन्नहेतुकानुमितावित्यर्थः। निरूपितत्वं सप्तम्यर्थः। दुष्धातोः प्रतिबन्धकोऽर्थः। क्तप्रत्ययार्थः प्रकारकज्ञानविषयत्वम्। एवं चोक्तवाक्याद् धूमसाध्यकवह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यत्ववह्नित्वोभयलाभ इति भावः। **एवमपीति**—तृतीयान्तार्थवह्नित्ववैशिष्ट्यस्य विशेष्येऽन्वयेऽपि। नन्वत्राऽपि तृतीयार्थो वैशिष्ट्यमेव तस्य रासभे बाधान्नापत्तिरिति चेन्न। तथासति वह्निना धूमसाधने वह्निर्दुष्ट इति व्यवहारेऽप्रामाण्यापत्तिः, वह्नौ वह्निवैशिष्ट्यस्य बाधात्। एवं च वह्निनेति वह्निहेतुकत्वस्य साधनपदार्थानुमितावेवान्वय इति ध्येयम्। **भ्रममादायेति**। वह्निहेतुकधूमसाध्यकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यो रासभ इति भ्रममादायेत्यर्थः। **अतिप्रसङ्गादितीति**। अतिप्रसङ्गवारणायेति यावत्। **यथार्थपदसार्थक्यमिति**। यथार्थपददाने तु निरुक्तसम्बन्धावच्छिन्नाऽनुमितिप्रतिबन्धकनिष्ठप्रकारताशालियथार्थज्ञानविशेष्यत्वस्य रासभे बाधान्न दुष्टत्वव्यवहारापत्तिरिति ध्येयम्।

ननु वह्निना धूमसाधने रासभो दुष्ट इत्यादौ तृतीयाया अभेदार्थकत्वे वह्न्यभेदस्य रासभे

**अथवा इतरभेदानुमापकमेवेदं लक्षणम् । तथाच पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्ट-लक्षणस्य तथाविधानुमिति-विरोधि-व्यभिचारादि-**

बाधानातिप्रसङ्ग इत्यत आह **अथवेति**(१) । **इतरभेदानुमापकमेवेति** । व्यावर्त्तकमेवेत्यर्थः । एवकारेण व्यवहारौपयिकत्वव्यवच्छेदः । अत्र (२)दुष्टः दुष्टेतरभिन्नः प्रकृतानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यत्वादिति न्यायप्रयोगो बोध्यः । **तथाच**—लक्षणस्येतरभेदानुमापकत्वे च । **पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्टलक्षणस्येति** । पर्वतपक्षकधूमसाध्यकवह्निहेतुकानुमितिप्रतिबन्धकप्रकारज्ञानविशेष्यत्वस्येत्यर्थः, हेतोरिति यावत् । इतरभेदव्यभिचारित्वादित्यनेनाऽन्वयः । **तथाविधेति** । पर्वतपक्षकधूमसाध्यकवह्निहेतुकेत्यर्थः ।

---

(१) केचित्तु यथार्थपददानेऽपि पर्वतो वह्निमान् द्रव्यादित्यादौ वन्ह्यभाववद्वृत्तिद्रव्यादिरूपव्यभिचारस्य तादृशद्रव्यत्वादिमत्त्वसम्बन्धेन धूमादिहेतावपि सत्त्वेन पर्वते द्रव्येण वह्निसाधने धूमो दुष्ट इति व्यवहारापत्तिः, वन्ह्यभाववद्वृत्तिद्रव्यवान् धूम इति ज्ञानस्य यथार्थत्वात् ।

न च तद्रूपावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वं तद्रूपावच्छिन्ने दुष्टत्वव्यवहारनियामकमित्युक्तौ नोक्तापत्तिरिति वाच्यम् । एवंसति यथार्थपदसार्थक्यानुपपत्तेः वन्हिना धूमसाधने सभो दुष्ट इति व्यवहारस्योक्तरीत्यैव वारणसम्भवादित्यत आह—अथवेति ।

न चैवमपि वन्हिना धूमसाधने आर्द्रेन्धनप्रभववन्हिर्दुष्ट इति व्यवहारापत्तिरिति वाच्यम् । तद्रूपमात्रावच्छिन्ने दुष्टत्वव्यवहारानियामकत्वस्य विवक्षितत्वात् । न च वन्हिना धूमसाधने अयोगोलकीयवन्हिर्दुष्ट इति व्यवहारानुपपत्तिरिति वाच्यम् । इष्टापत्तेरिति प्राहुः ।

(२) पक्षता च दुष्टत्वसामानाधिकरण्येन, तेन न स्वरूपासिद्धिः तथाच यद्धर्मावच्छिन्नपक्षसाध्यकस्थले यद्धर्मावच्छिन्ने दुष्टत्वव्यवहारः, तद्धर्मावच्छिन्नः स्वेतरभिन्नः तत्पक्षसाध्यकानुमितिकारणीभूताभावप्रतियोगिनिष्ठस्वज्ञानविषयतद्धर्मवत्त्वसम्बन्धावच्छिन्नप्रकारतानिरूपितयथार्थज्ञानीयविशेष्यत्वादित्याकारः ।

अथ निरुक्तसम्बन्धेन प्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वस्यैव हेतुत्वमस्तु किं तत्पक्षसाध्यकानुमितिपर्यन्तनिवेशनेति चेन्न ।

सामान्यव्याप्त्यनुरोधेन तन्निवेशात्, सामान्यव्याप्तिश्च यो यत्पक्षसाध्यहेतुकाऽनुमितिप्रतिबन्धकप्रकारकानिरुक्तसम्बन्धावगाहियथार्थज्ञानविषयतावान् स तत्पक्षकतत्साध्यकतद्धेतुकानुमितिदुष्टप्रतिपाद्येतरभिन्न इत्याकारिका । एवं च हेतुभूतलक्षणे तादृशानुमितिपर्यन्ताऽनिवेशे सामान्यव्याप्तिभङ्गप्रसङ्ग इति ।

एतेन "पर्वतपक्षकधूमसाध्यकवह्निहेतुकस्थले" दुष्टः स्वेतरभिन्नः पर्वतपक्षकधूमसाध्यकवह्निहेतुकाऽनुमितिप्रतिबन्धकप्रकारकानिरुक्तसम्बन्धावगाहियथार्थज्ञानविशेष्यत्वादितिविशेषाऽनुमाने यथार्थपदानुपादाने व्यभिचार उक्तो गदाधरेण । तत्राऽनुमितिपर्यन्तनिवेशो व्यर्थ इति निरस्तम् ।

नन्वेवं धमवान् प्रमेयादित्यादौ दुष्टेतराऽप्रसिद्धिः, सामान्यत एव दुष्टेतरा(१)ऽप्रसिद्धिः । न च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दुष्टत्वमेव "दोषवत्वं" साध्यम्, तस्यापि दुष्टेतरभेदरूपसाध्यात्मकत्वादिति वाच्यम् । तथापि धूमवान् वह्नेरित्याद्यसद्धेतावेव तादृशसम्बन्धावच्छिन्नसाध्याभाववति रासभादौ तादृशप्रतिबन्धकप्रकारकभ्रमविशेष्यतासत्त्वेन व्यभिचारसम्भवात्सद्धेतावित्यसङ्गतं स्यादिति चेदत्र केचित् । सद्धेतावित्यस्य प्रकृतहेतुभिन्न इत्यर्थः । यद्वा प्रकृतसाध्यव्यभिचारितावच्छेदकत्वोपलक्षितधर्मवत्त्वसम्बन्धेन दुष्टत्वसाधनान्न तदसङ्गतिरित्याहुः ।

---

(१) एतेन प्रतियोगितावच्छेदकवत्यपि धर्मान्तराऽवच्छेदेन भेदः स्वीक्रियते, यथा सत्तात्वावच्छेदेन विशिष्टसत्ताभेदः, एवं विशिष्टसत्तात्वावच्छेदेन सत्ताभेदः, तद्वदत्रापि दुष्टप्रमेयभेदस्य धूमत्वावच्छेदेन प्रमेये एव प्रसिद्धत्वान्नाप्रसिद्धिः । यद्वा प्रमेयहेतुकस्थले इतरभेदानुमापकत्वाऽसम्भवेऽपि दर्शितस्थले एव तत्सम्भावद्यथार्थपदसार्थक्यरूपेष्टसिद्धिरव्याहतैवेति निरस्तम् ।

**भ्रममादाय सद्धेताविवतरभेदव्यभिचारित्वात् यथार्थपदसार्थक्यम् । ज्ञानञ्चात्र स्वज्ञानविषय-प्रकृतहेतुतावच्छेदकवत्त्व-सम्बन्धावगाहि ग्राह्यम् । तेन प्रकृतहेतुभिन्नस्यापि सम्बन्धान्तरेण दोषप्रमाविषयत्वेऽपि नातिप्र-**

---

**व्यभिचारादिभ्रममादायेति** । स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमाभाववद्वृत्तिवह्निमान् तृणविशेष इति व्यभिचारप्रकारकभ्रममादायेत्यर्थः । **सद्धेतौ**-तादिन्धनादौ । **इतरभेदव्यभिचारित्वादिति** । दुष्टेतरभेदाभाववद्वृत्तित्वादित्यर्थः । तथाच पर्वते वह्निना धूमसाधने वह्निर्दुष्ट इतिव्यवहारविषयत्वावच्छिन्ने पक्षे तादृशव्यवहारत्वावच्छिन्नेतरभेदस्य पर्वतपक्षकधूमसाध्यकवह्निहेतुकानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वहेतुना साधने हेतौ यथार्थत्वानुपादाने व्यभिचारः, तादृशेतरभेदशून्ये धूमव्याप्यतृणविशेषेऽनुमितिप्रतिबन्धकीभूतधूमाभाववद्वृत्तिवह्निप्रकारकभ्रमविशेष्यत्वस्य सत्त्वादिति भावः । **यथार्थपदसार्थक्यमिति** । ज्ञाने याथार्थ्यनिवेशे च तादृशानुमितिप्रतिबन्धकीभूतधूमाभाववद्वृत्तिवह्निप्रकारकप्रमाविशेष्यत्वस्य सद्धेतौ विरहान्न व्यभिचार इति बोध्यम् । **अत्र**—एतल्लक्षणे, घटकत्वं सप्तम्यर्थः । एतल्लक्षणघटकीभूतज्ञानं चेत्यर्थः । एवं वन्ह्यभाववद्ध्रदादिरूपो दोषः, तस्य ज्ञानं वह्न्यभाववान्ह्रदो धूमश्चेति ज्ञानम्, तद्विषयीभूतं यद्धेतुतावच्छेदकं तद्वत्त्वसम्बन्धावगाहीत्यर्थः । **तेन**—प्रतिबन्धकनिष्ठप्रकारतायामुक्तसम्बन्धावच्छिन्नत्वनिवेशेन[(१)] । **प्रकृतहेतुः**—"धूमवान्वह्नेरित्यत्र" वह्निहेतुः । तद्भिन्नस्य रासभादेरपीत्यर्थः । **सम्बन्धान्तरेण**—कालिकसम्बन्धेन । **दोषप्रमाविशेष्यत्वेपि**—धूमाभाववद्वृत्तिवह्नि-

---

( १ ) अथ प्रकारतायां स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नत्वाविवक्षणे तेन सम्बन्धेन तादृशाऽनुमितिप्रतिबन्धकवत्त्वमित्यस्यैव सम्यक्त्वे तादृशानुमितिप्रतिबन्धकप्रकारकप्रमाविशेष्यत्वरूपगुरुलक्षणं कथमनुसृतमिति चेन्न ।

तथात्वे तृतीयलक्षणाऽभेदापत्तेरिति ध्येयम् ।

अत्र एकज्ञानविषयत्वसम्बन्धावच्छिन्नत्वस्य तादृशप्रकारतायां विवक्षणे ह्रदो वन्हिमान् धूमादित्यत्रोदासीनघटादौ दुष्टत्वव्यवहारापत्तिः, दोषविषयकसमूहालम्बनज्ञानविषयत्वस्य घटादौ सत्वादतो हेतुतावच्छेदकेति ।

एवमपि वन्ह्यभावत्वसाध्यकप्रतियोगितासम्बन्धेन महानसीयवह्निहेतुकस्थले वह्निर्दुष्ट इति व्यवहारापत्तिः, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकीभूतवन्हित्वस्य तत्र सत्त्वात्, एवं ह्रदो वान्हिमान् प्रमेयधूमादित्यादौ घटादौ दुष्टत्वव्यवहारापत्तिश्च, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकप्रमेयत्वस्य तत्र सत्त्वात्, तथैव व्यभिचारश्चेत्यतो हेतुतावच्छेदकतापर्याप्तिर्निवेश्या ।

तथाच स्वज्ञानविषयप्रकृतहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतावत्त्वसम्बन्धेनेत्यर्थः । रूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

नन्वेवं ह्रदो वान्हिमान् काञ्चनमयधूमादित्यत्र हेतोर्दुष्टत्वानुपपत्तिः, काञ्चनमयधूमेन पर्वते वान्हिसाधने काञ्चनमयधूमो दुष्ट इति व्यवहारानुपपत्तिश्च, प्रकृतहेतुतावच्छेदकाऽप्रसिद्धेरिति चेन्न ।

साध्यसाधनभेदेन लक्षणस्य भिन्नतयाऽत्र पर्याप्त्यनिवेशेन तादृशधूमत्ववत्तामादायैव तदुपपत्तेः । अथवा प्रकृतहेतुताव्याप्यहेतुतावच्छेदकवत्त्वसम्बन्धावगाहितादृशज्ञानं ग्राह्यमित्यदोषः ।

अथवा हेतुनिरूपितवृत्तिताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति

**सङ्गः । अग्रेपीदृशसम्बन्धेनैव तद्वत्त्वं बोध्यम् ।**

**अथ ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिना बाधादिदोषाणां प्रतिबन्धकता न सम्भवति, साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र दोषाणामज्ञायमानतयाऽविरोधित्वेनानुमित्यापत्तेः, किन्तु ज्ञानीयपक्षताव-**

मान् रासभ इति प्रमाविशेष्यत्वेऽपीत्यर्थः । **अग्रेपि**—द्वितीयतृतीयलक्षणयोरपीत्यर्थः । **तद्वत्त्वं**—दोषवत्त्वम् ।

अथास्य लक्षणस्येतरभेदानुमापकत्वे प्रतिबन्धकप्रकारकनिरुक्तसम्बन्धावगाहियथार्थज्ञान विशेष्यत्वमेव लक्षणमस्तु किमनुमितिपदनिवेशेन । न च सद्धेतावपि प्रतिबन्धकप्रकारक प्रमाविशेष्यत्वरूपहेतोः सत्वेन व्यभिचार इति वाच्यम् । तत्र दुष्टेतर भेदस्यैवाऽप्रसिद्धया साध्याप्रसिद्ध्यैव व्यभिचारविरहादिति चेन्न । सामान्यमुखीव्याप्त्यनुरोधेन तथाऽविवक्षणात् । सा च यो यत्पक्षक यत्साध्यक-यद्धेतुकानुमिति प्रतिबन्धकप्रकारकनिरुक्त सम्बन्धावगाहियथार्थज्ञानविषयतावान् स तत्पक्षकतत्साध्यकतद्धेतुकानुमिति दुष्टशब्दप्रतिपाद्येतरभिन्न इत्येवं रूपा । तथा च हेतुभूतलक्षणे तादृशानुमित्यप्रवेशे सामान्य मुखी व्याप्ति भङ्ग प्रसङ्गः ।

अथ तथापि इतरभेदसाधनमनुपपन्नम् । प्रमेयहेतुकस्थले तदितराप्रसिद्धेरिति चेन्न । प्रतियोगितावच्छेदकवत्यपि धर्मान्तरावच्छेदेन भेदः स्वीक्रियते एवं च घटत्वाद्यवच्छेदेन तादृशादुष्टप्रमेयभेदस्य प्रमेय एव प्रसिद्धत्वात् । प्रमेयहेतुकस्थले इतरभेदानुमापकत्वासम्भवेऽपि दर्शितस्थले एव तत्सम्भवेन यथार्थपदसार्थक्यसम्भवादिति ध्येयम् ॥

ज्ञायमानदोषस्य प्रतिबन्धकतामतेऽपि प्रतिबन्धकतावच्छेदकं निरूप्यनिरूपकभावापन्नविषयत्वमेवेति वक्तुमारभते **अथेत्यादिना । ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिनेति ।** ह्रदे वन्ह्यभाव इति ज्ञानविषयीभूतह्रदवृत्तिवन्ह्यभावत्वादिनेत्यर्थः । आदिना वन्ह्यभाववान् ह्रद इति ज्ञानविषयीभूतवन्ह्यभाववद्ह्रदत्वादेः परिग्रहः । **बाधादिदोषाणामिति ।** ह्रदवृत्तिवन्ह्यभावादीनां वन्ह्यभाववद्ह्रदादीनां वा । **प्रतिबन्धकता न सम्भवतीति ।** वन्ह्यभाववद्ह्रदत्वादेः, ह्रदवृत्तिवन्ह्यभावत्वादेर्वा प्रतिबन्धकतावच्छेदकत्वं न सम्भवतीति यावत् । **साध्याभावत्वादिना**—वन्ह्यभावत्वादिना । पदार्थान्तरस्यैव यत्र ज्ञानमित्यर्थः । घटादेर्ज्ञानमित्यर्थः । **दोषाणां**—वन्ह्यभाववद्ह्रदादीनां-ह्रदवृत्तिवन्ह्यभावादीनां वा । **अज्ञायमानतया**—ज्ञानाऽविषयतया । **अनुमित्यापत्तेरिति ।** अत्रेदं बोध्यम्—वन्ह्यभाववान् ह्रदो, ह्रदे वह्न्यभाव इति निश्चयो वा ह्रदो वह्निमानित्यनुमितौ विरोधी, विरोधिता च वह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालित्वेन न तु अखण्डवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयताशालित्वेन तथा,

---

निरूपकतावत्त्वसम्बन्धेन बोध्यम् । अवच्छेदकतायां वृत्तितावि० सामानाधिकरण्यसम्बन्धेन । रूपवृत्तित्वं चोक्तसम्बन्धेन । महानसीयवन्हिहेतुकस्थले प्रमेयधूमहेतुकस्थले च महानसीयत्ववन्हित्वोभयनिष्ठं एवं प्रमेयत्वधूमत्वोभयनिष्ठमवच्छेदकत्वमेव वृत्तिताविशिष्टमिति नातिव्याप्तिः । साधनाऽप्रसिद्धौ च धूमत्वस्यैवाऽवच्छेदकत्वं न तु काञ्चनमयत्वस्येति नाव्याप्तिः ।

न च प्रमेयहेतौ घटो दुष्ट इति व्यवहारापत्तिरिति वाच्यम् । तस्येष्टत्वादिति ध्येयम् ।

च्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्नविषयतावत्त्वेन, तादृशविषयतया ज्ञानविशिष्टत्वेन वा । तच्च रूपं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेति तेषामेव तादृशभ्रमदशायां विरोधित्वान्नोक्तापत्तिः । एवञ्च सद्धेतूनामनुमितिप्रतिबन्धकतावच्छेदकानिरुक्तविषयताश्रयवन्ह्यभावादिप्रमाविशेष्यत्वादतिव्याप्तिरिति चेन्न ।

---

वह्नित्वेन घटावगाहि—अभावत्वेन पटावगाहि–ह्रदत्वेन मठावगाहि—वन्ह्यभाववान् ह्रद इति निश्चये तादृशाऽखण्डविषयताशालित्वविरहात् । एवं च तुल्ययुक्त्या ज्ञायमानदोषप्रतिबन्धकतामतेऽपि निरूप्यनिरूपकभावापन्नविषयतावत्त्वेनैव प्रतिबन्धकत्वम्, न तु अखण्डवह्न्यभाववद्ह्रदत्वेन ह्रदवृत्तिवन्ह्यभावत्वेन वा' उक्तभ्रमविषये तदसत्त्वात्, उक्तभ्रमसत्त्वेऽनुमित्यापत्तेः उक्तभ्रमसत्त्वेऽनुमित्यनुत्पादस्य सर्वानुभवसिद्धतया इष्टापत्तेरयोगादिति ध्येयम् । **किन्त्विति** । **साध्याभावत्वाद्यवच्छिन्नविषयतावत्त्वेनेति** । साध्यतावच्छेदकावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतावत्त्वेनेत्यर्थः । ह्रदत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतावत्त्वेनेति यावत् । प्रतिबन्धतेत्यनुषज्यते । विषयतायाः संसर्गत्वे तदीयसम्बन्धद्वयाऽनिवेशेन लाघ(१)वादाह **तादृशेति** । वह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नेत्यर्थः । **ज्ञानविशिष्टत्वेन वेति** । वन्ह्यभाववान् ह्रदः, ह्रदे वन्ह्यभाव इति ज्ञानविशिष्टत्वेन वेत्यर्थः । **तच्च रूपम्** तादृशविषयतावत्त्वं, तादृशविषयतया ज्ञानविशिष्टत्वं चेत्यर्थः । **भ्रमविषयेति** । वह्नित्वेन घटावगाहि अभावत्वेन पटावगाहि ह्रदत्वेन मठावगाहि वन्ह्यभाववान् ह्रदः, ह्रदे वन्ह्यभाव इति भ्रमविषयेत्यर्थः । **पदार्थान्तरेति** । घटपटमठादिपदार्थान्तरेत्यर्थः । **तेषां**—घटपटमठादीनाम् । **तादृशेति** । वह्नित्वेन घटावगाहि अभावत्वेन पटावगाहि ह्रदत्वेन मठावगाहि ह्रदो वन्ह्यभाववान् ह्रदे वन्ह्यभाव इत्याकारकेत्यर्थः । **नोक्तापत्तिरिति** । नोक्तानुमित्यापत्तिरित्यर्थः । **एवं च**—अनुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयप्रकारकयथार्थज्ञानविशेष्यत्वस्य लक्षणत्वे च । **सद्धेतूनां**—धूमादिहेतूनाम् । **अनुमितीति** । पर्वतपक्षकवह्निसाध्यकधूमहेतुकाऽनुमितीत्यर्थः । **प्रतिबन्धकतावच्छेदकेति** । प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावदित्यर्थः । **निरुक्तविषयतेति** । पर्वतो वन्ह्यभाववानिति"भ्रमात्मक"ज्ञानीयवह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयतेत्यर्थः । **वन्ह्यभावादीति** । वन्ह्यभावादिप्रकारकेत्यर्थः । आदिना पर्वतस्य परिग्रहः । **प्रमेति** । स्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धेन वन्ह्यभाववान् धूम इत्याकारिकेत्यर्थः । तथाच पर्वतो

---

(१) ह्रदमुपलक्षणम् ह्रदो वन्हिमानित्यादौ जातिमद्वृत्तिवन्ह्यभावादेर्वारणाय पक्षतावच्छेदककोटौ निरवच्छिन्नत्वनिवेश आवश्यकः, एवं साध्यतावच्छेदककोटावपि । विषयतायाः संसर्गविधया प्रवेशे तु तदनिवेशाल्लाघवं बोध्यम् । जातित्वावच्छिन्नविषयतायाश्च न प्रतिबन्धकतावच्छेदकघटकसंसर्गता, भिन्नविषयतात्वादिति ध्येयम् ।

यद्रूपावच्छिन्नविषयतासामान्यं प्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयम् । ह्रदो वह्निमान् धूमादित्यादौ च तादृशं रूपं ह्रदविशिष्टवह्न्यभावत्वादिकं, ह्रदे वह्निर्नास्तीत्यादिज्ञाननिरूपिततद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वाद्यवच्छिन्नविषयतानिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयतात्वेन दोषनिष्ठानुमितिप्रतिबन्धकतायामवच्छेदकत्वात् । सद्धेतुस्थले च न केवलवह्न्यभावत्वादिकं तथा, तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्यविषयकज्ञाननिरूपिततादृशविषयतानामनुमितिप्रतिबन्धकतानवच्छेदकत्वात् । पर्वतविशिष्टवह्न्यभावत्वादिविशिष्टञ्च न किञ्चिद्वस्तु प्रसिद्धमिति नातिप्रसङ्गः । तृतीयमपि लक्षणमनयैव री-

---

वह्निमानित्यत्र धूमेऽतिव्याप्तिः, पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतावच्छेदक"निरूप्यनिरूपकभावापन्न"तादृशविषयताश्रयवह्न्यभावप्रकारकप्रमाविशेष्यत्वस्य तत्र सत्त्वादिति पूर्वः पक्षः । प्रसक्तामतिव्याप्तिं सामान्यपदं निवेश्य समाधत्ते यद्रूपावच्छिन्नेति । अत्र यद्रूपपदेन दोषतावच्छेदकधर्मो ग्राह्य इत्याह तादृशं रूपमिति । यद्रूपमिति यावत् । तत्र हेतुमाह ह्रदे वह्निर्नास्तीत्यादीति । आदिना ह्रदो वह्न्यभाववानित्यादिज्ञानपरिग्रहः । तद्रूपावच्छिन्नविषयतासामान्यस्यैवेति । ह्रदवृत्तिवह्न्यभावत्वादिविषयतासामान्यस्यैवेत्यर्थः । वह्न्यभावत्वावच्छिन्नविषयतात्वेनेति । वह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतात्वेनेत्यर्थः । निरूप्यनिरूपकभावापन्नविषयतात्वेनेति यावत् । दोषनिष्ठा—वह्न्यभाववद्ह्रदादिरूपदोषनिष्ठा याऽनुमितिप्रतिबन्धकता तस्यामवच्छेदकत्वादित्यर्थः । तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वस्य धूमे सत्त्वाल्लक्षणसमन्वयोऽपि बोध्यः । अत्र यद्विषयतासामान्यानिवेशे वह्न्यभावविशिष्टह्रदस्य ह्रदानन्यतया तद्विषयतासामान्यस्य न प्रतिबन्धकतावच्छेदकत्वमिति यद्रूपानुधावनम् । वह्न्यभाववान् पर्वत इति ज्ञानीयवह्न्यभावप्रकारतायाः स्वरूपसम्बन्धरूपावच्छेदकतावत्त्वाद् वह्न्यभावेऽतिव्याप्तिरतः सामान्यपदोपादानम् । तदेव स्फुटयति सद्धेतुस्थले चेति । न तथा—न यद्रूपपदग्राह्यमित्यर्थः । तदवच्छिन्नविषयतासामान्यान्तर्गतेति । वह्न्यभावत्वावच्छिन्नविषयतासामान्यान्तर्गतेत्यर्थः । धर्म्यविषयकज्ञाननिरूपितेति । पर्वताऽविषयकज्ञाननिरूपितेत्यर्थः । वह्न्यभाव इत्याकारकज्ञाननिरूपितेति यावत् । तादृशविषयतानां—केवलवह्न्यभावत्वावच्छिन्नविषयतानामित्यर्थः । अनुमितिप्रतिबन्धकतायामनवच्छेदकत्वादिति । पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतानवच्छेदकत्वादित्यर्थः । तथाच वह्न्यभावत्वावच्छिन्नविषयतासामान्यस्य पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतानवच्छेदकतया तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वस्य धूमे सत्त्वेऽपि नोक्तातिव्याप्तिः । ननु यद्रूपपदेन पर्वतवृत्तिवह्न्यभावत्वं वह्न्यभाववत्पर्वतत्वं वा ऽऽदायाऽतिव्याप्तिरापादनीया, तदवच्छिन्नविषयतासामान्यस्यैवाऽनुमितिप्रतिबन्धकतावच्छेदकत्वादित्यत आह पर्वतविशिष्टेत्यादि । पर्वतवैशिष्ट्यं चाऽऽधेयतासम्बन्धेनेत्यर्थः । पर्वतवृत्तीति यावत् । इति—अप्रसिद्ध्या । नातिप्रसङ्ग इति । पर्वतवृत्तिवह्न्यभावत्वादेर्यद्रूपपदाऽग्राह्यत्वादिति भावः ।

त्या परिष्कार्यमिति ।

यद्यपि अस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतानतानाश्रयणेऽपि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषयतद्धेतुता·

तथाच यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नप्रकारकप्रमाविशेष्यत्वं पर्यवसितम्, ज्ञायमानदोषस्य प्रतिबन्धकतया तद्विषयत्वस्य च प्रतिबन्धकतावच्छेदकत्वाल्लक्षणसमन्वयः ।

नन्वत्र स्वरूपसंबन्धरूपाऽवच्छेदकत्वमेव निविष्टम्, अन्यथा सामान्यपदसार्थक्यानुपपत्तेः, तथाच पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ अतिव्याप्तिः, पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयतासामान्यस्यैव प्रकृताऽनुमितिप्रतिबन्धकतावच्छेदकत्वात्, पाषाणमयत्ववत्पर्वतत्वावच्छिन्नप्रकारकप्रमाविशेष्यत्वस्य तत्र हेतौ सत्त्वात् पाषाणमयो न वह्निमानितिज्ञानविशिष्टस्य पर्वतश्च पाषाणमय इति ज्ञानस्य प्रतिबन्धकत्वात्, सामानाकारकज्ञानीयविषयताया ऐक्यात्, अन्यथाऽग्रेऽपि पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिदानाऽसंगतेरिति चेन्न ।

ज्ञानभेदेन विषयताभेदमङ्गीकृत्यैतल्लक्षणकरणात् । अग्रे च समानाकारकज्ञानीयविषयताया ऐक्यं स्वीकृत्य दोषस्य वक्ष्यमाणत्वात् । एवं चाऽनाहार्यत्वादिकमप्यत्र निवेश्यम् ।

नन्वेवमप्यसंभवः, ह्रदे वह्न्यभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानकालीनह्रदो वह्न्यभाववानितिनिश्चयस्याऽप्रतिबन्धकत्वेन तादृशविषयतासामान्यस्याऽनवच्छेदकत्वात् । न च ज्ञानेऽव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वं निवेशनीयमिति वाच्यम् । वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तेः, अव्याप्यवृत्तित्वज्ञानाभावे तद्ज्ञानस्याप्यनुमितिप्रतिबन्धकत्वादिति चेन्न ।

अव्याप्यवृत्तित्वप्रमानास्कन्दितत्वस्य विवक्षणीयत्वात् । वृक्षे कपिसंयोगाभावोऽव्याप्यवृत्तिरिति ज्ञानस्य प्रमात्वेन अव्याप्यवृत्तित्वप्रमानास्कन्दिततया तदीयविषयतायाः सामान्यान्तर्गतायास्तादृशप्रतिबन्धकतानवच्छेदकत्वेनाऽतिव्याप्तिविरहात् ।

नचैवमसाधारण्येऽव्याप्तिः, तद्विषयतासामान्यान्तर्गतपक्षधर्मताज्ञानाऽसमानकालीनज्ञानीयविषयतायाः प्रतिबन्धकतानवच्छेदकत्वादिति वाच्यम् । अस्य दुष्टलक्षणतया दोषलक्षणत्वाभावेनाऽसाधारण्यनियतबाधस्वरूपासिद्धिमादायैव दुष्टे लक्षणसमन्वयात् ।

न चैवंसति अयमसाधारण्येन दुष्ट इति व्यवहारानुपपत्तिः, यद्यपीत्याद्युत्तरग्रन्थाऽसंगतिश्च तत्र दोषघटितलक्षणस्य स्वारस्याभिधानादिति वाच्यम् । तादृशज्ञानीययद्धर्मावच्छिन्नविषयतात्वव्यापकः प्रकृताऽनुमितिप्रतिबन्धकतानवच्छेदकत्वअसाधारण्यविषयिताभिन्नत्वोभयाभावस्तद्रूपवत्त्वमिति विवक्षणेनाऽदोषात् ।

ज्ञानभेदेन विषयताभेदाऽनंगीकारे तु अनाहार्यत्वविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकः प्रकृताऽनुमित्यप्रतिबन्धकत्वाऽसाधारण्यविषयताशून्यत्वोभयाभावः तद्रूपवत्त्वं विवक्षणीयम् । एवं च पाषाणमयत्ववत्पर्वते नातिव्याप्तिः । पाषाणमयो न वह्निमानितिज्ञानाकालीनपाषाणमयत्ववत्पर्वतनिश्चये उभयाऽभावाऽसत्त्वादिति दिक् ।

**अस्य**–प्रथमलक्षणस्य । **मतानाश्रयणेऽपीति** । षष्ठीतत्पुरुषाऽस्वीकारेऽपीत्यपि बो·

वच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षसाध्यहेतुकस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य यथार्थपदसार्थक्यमुपपादयितुं शक्यते । वथापि दुष्टस्य दोषघटितत्वानुरोधेन तन्मतमवलम्ब्य षष्ठीसमास आदृत इति ।

ननु द्वितीयतृतीयलक्षणयोर्दोषेऽतिव्याप्तिरव्याप्तिश्च क्वचिद्धेतौ, यत्पदेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह तत्त्वमित्यस्येति । प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनैवोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितम्, तत्त्वमित्यस्य यथाश्रुतार्थकत्वानुरोधादतस्तथैवाह आश्रयस्यैवेति । ईदृशव्याख्याया निर्दोषत्वात् प्राहुरित्युक्तम् ।

ध्यम् । प्रमा चाऽत्र हेतुविषयिणी समूहालंबनरूपा ग्राह्या (१) । तन्मतमवलम्ब्य—ज्ञायमानदोषप्रतिबन्धकतामतमवलम्ब्य । क्वचिद्धेतौ—बाधितहेतावित्यर्थः अव्याप्तिं योजयति यत्पदेनेति । लक्षणघटकेत्यादिः । तन्मात्रवृत्तित्वात्—दोषमात्रवृत्तित्वात् । उपपत्तौ—यथार्थपदसार्थक्योपपत्तौ ।

इति महामहोपाध्याययाज्ञिकमूर्धन्य पं० श्रीप्रभुदत्तशास्त्रिसुतन्यायाचार्य पं० श्री शिवदत्तमिश्रविरचिता गादाधरीसामान्यनिरुक्तिप्रथमलक्षणस्य गंगानाम्नी व्याख्या समाप्ता ।

शुभं भूयात् ।

(१) अथ यत्र ह्रदादौ वन्हिसाधने वान्हिमद्ध्रदकालीन धूमादेर्हेतुतास्थले हेतुतावच्छेदकाविषयिणी दोषप्रमानियतमाहार्य्याकारिकैव तत्र प्रतिबन्धकत्वविरहेण तादृशहेताव्याप्तिरिति चेन्न । तादृशानुमितिप्रतिबन्धकतावच्छेदकीभूतविषयताशालिप्रमाविषयहेतुतावच्छेदकवत्त्वस्य विवक्षणीयत्वात् । सामानाकारकज्ञानीयविषयितायाः ऐक्येन हेतुतावच्छेदकाविषयकतादृशज्ञानीयविषयितायाः नीयविषयितायाः ऐक्येन न काप्यनुपपत्तिः । एवं प्रतिबन्धकप्रमीयविषयताशालिज्ञानविषयहेतुतावच्छेदकवत्त्वविवक्षणेऽपि न कोऽपि दोष इति ध्येयम् ।

* श्रीः *

**यद्विषयकत्वेन लिङ्गज्ञानस्याऽनुमितिप्रतिबन्धकत्वं तत्त्वम् ।**

लिङ्गज्ञानस्येति । **लिङ्गांशनिवेशस्य निष्प्रयोजनकतया तस्याऽविवक्षित**ः विषयो यत्रेति यद्विषयकम्, तस्य भावो यद्विषयकत्वम्, तेन । लिङ्गस्य ज्ञानमिति षष्ठीतत्पुरुषः । लिङ्गविषयकं ज्ञानमित्यर्थः । षष्ठ्यर्थो निष्ठत्वम्, तस्य यद्विषयकत्वेऽन्वयः । यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वम्, तस्यापि यद्विषयकत्वेऽन्वयः । अनुमितेः प्रतिबन्धकमनुमितिप्रतिबन्धकम्, अनुमितिप्रतिबन्धकस्य भावोऽनुमितिप्रतिबन्धकत्वम्, अनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमित्यर्थः । तस्य तृतीयार्थाऽवच्छेदकत्वेऽन्वयः । अनुमितिपदं च समूहालंबनानुमितिपरम् । यद्विषयकत्वं च यन्निष्ठविषयतानिरूपितविषयित्वम् । तथा च लिङ्गज्ञाननिष्ठ(१)यन्निष्ठविषयतानिरूपितविषयित्वं प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तत्त्वं हेत्वाभाससामान्यलक्षणम् । धूमवान् वन्हेरित्यत्र धूमाभाववद्वृत्तिवन्हिरूपव्यभिचारे लक्षणसमन्वयः, तथा हि—धूमाभाववद्वृत्तिर्वन्हिरित्याकारकलिङ्गविषयकज्ञाननिष्ठा या धूमाभाववद्वृत्तिवन्हिनिष्ठविषयतानिरूपितविषयिता सा प्रकृतानुमितिप्रतिबन्धकतावच्छेदिकाऽस्तीति तत्त्वस्य धूमाभाववद्वृत्तिवन्हिरूपदोषे सत्त्वात् । न च बाधे कथं लक्षणसमन्वयः, बाधनिश्चयस्य लिङ्गविषयकत्वाभावादिति वाच्यम् । वन्ह्यभाववान् ह्रदो धूमश्चेति समूहालम्बनज्ञानमादाय यथाश्रुते लक्षणसमन्वयादिति ध्येयम् ।

**निष्प्रयोजनकतयेति ।** यद्विषयकत्वेन ज्ञानस्याऽनुमितिप्रतिबन्धकत्वं तत्त्वस्यैव सम्यक्त्वादिति भावः । तथा च लिङ्गमविवक्षितं निष्प्रयोजनकत्वादिति पर्यवसितम् । अविवक्षितत्वं च अर्थबोधजनकत्वप्रकारकमूलकादिच्छाविषयत्वाभावः । निष्प्रयोजनकत्वं च फलाऽभावप्रयुक्तेच्छाविषयत्वाभावः ।

नन्वत्र लिङ्गाद् ज्ञानं लिङ्गज्ञानमिति व्युत्पत्त्या लिङ्गज्ञानपदेनाऽनुमितेर्लाभाद् "यद्विषयकानुमितित्वं प्रकृताऽनुमितिप्रतिबन्धकतावच्छेदकं तत्त्वमित्येव फलितम् । एवं चाऽप्रामाण्यज्ञानानास्कन्दितत्वमात्रं प्रवेश्यम्, नत्वनाहार्यत्वनिश्चयत्वेऽपि प्रवेश्ये, परोक्षज्ञाने आहार्यत्वसंशयत्वयोरभावात्, तथा चाऽनाहार्यत्वाद्यनिवेशप्रयुक्तलाघवसम्पादनेन लिङ्गांशनिवेशस्य सप्रयोजनत्वेन कथं तस्य निष्प्रयोजनकत्वमुक्तम् । न च घटोऽवृत्तिरित्यादौ घटवद्रूपबाधेऽव्याप्तिः, निर्धर्मितावच्छेदककानुमित्यनङ्गीकारेण(२) तादृशदोषविषयकाऽनुमित्यप्रसिद्धेः,

---

(१) यत्पदेन विषयो धर्त्तव्यः, अग्रिमतत्पदेनाऽपि स एव, विषया एव दोषा इति फलितम् । विषयाश्च धूमाभाववद्वृत्तिवह्न्यादिरूपाः निर्विभक्तिकाः । ज्ञानं च सविभक्तिकम्, धूमाभाववद्वृत्तिर्वन्हिरित्याकारकम् । निश्चयः प्रतिबन्धको भवति, प्रतिबन्धकतावच्छेदकं निश्चयत्वं, विषयिता च निरूपकत्वसम्बन्धेन विषयताऽपीति । प्रतिबध्यं ज्ञानं भवति, प्रतिबध्यतावच्छेदकं ज्ञानत्वम्, एवं विषयित्वविषयत्वेऽपि बोध्ये ।

(२) ननु घटवानित्यत्र मतुबर्थः सम्बन्धः, आश्रयश्च, तत्र सम्बन्धे प्रतियोगितासम्बन्धेन प्रकृत्यर्थस्य सम्बन्धस्य चाऽऽश्रयत्वविशिष्टैकदेशे आश्रयत्वेऽन्वयः । एवं च घटवानित्यत्र प्रतियोगितासम्बन्धेन घटविशिष्टसम्बन्धाश्रयत्ववानिति बोधाङ्गीकारात्तत्र "सम्बन्धो घटीयः" इत्यनुमितेरपि तत्समानार्थविषयकत्वं,

तथा च लक्षणेऽनुमितित्वप्रवेशो न सम्भवतीति वाच्यम् । घटवद्भूतलमित्यनुमितिमादायैव लक्षणसमन्वयसम्भवादिति(१) चेन्न । यादृशस्थलविशेषे यद्दोषविषयिण्यनुमितिः कस्यापि न जाता तत्रत्यदोषेऽव्याप्तेरिति दिक् ।

अथाऽव्यापकीभूतविषयिताशून्यत्वस्याऽवश्यं निवेशनीयतया ह्रदो वन्ह्यभाववान् धूमश्चेति निश्चयस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकलिङ्ग"धूम"विषयिताशून्यत्वाभावेन यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यलिङ्गविषयकयद्रूपावच्छिन्नविषयिताशालिनिश्चयाऽप्रसिद्ध्या हेत्वघटितदोषमात्रेऽव्याप्तिसम्भवेऽनतिप्रयोजनकत्वकथनमनुचितम् । न च प्रकृतलिङ्गविषयिताभिन्ना या यद्रूपावच्छिन्नविषयित्वव्यापकविषयिता तच्छून्यत्वनिवेशे नाऽसम्भव इति वाच्यम् । ह्रदो वह्निमान् जातेरित्यादौ जातिमान् वन्ह्यभाववानिति ज्ञानमादाय बाधाऽव्याप्तेः ।

वस्तुतस्तु अव्यापकीभूतविषयिताशून्यत्वं ज्ञाने न निवेश्यते अपि तु यद्रूपावच्छिन्नविषयितायां अव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वं निवेश्यते । उपलक्षणत्वं च प्रतियोगिव्यधिकरणतदभावाभाववत्त्वम् । तस्य च लिङ्गविषयकानिश्चयीयवन्ह्यभाववद्ह्रदत्वाव-

---

'उद्देश्यानुमित्यन्यूनाऽनतिरिक्तविषयकशाब्दजनकत्वमि'ति वदतां चिन्तामणिकाराणामभिप्रेतम्, तथा च सम्बन्धात्मकमतुबर्थविशेष्यकघटप्रकारकानुमितेः सधर्मितावच्छेदककत्वान्निर्धर्मितावच्छेदककानुमितिवर्णनमसङ्गतमिति चेन्न । मतुपो निरर्थकत्वाभिप्रायेण तथा वर्णनादिति ध्येयम् ।

(१) न चाव्यापकीभूतविषयताशून्यत्वनिवेशस्यावश्यकतया घटावच्छिन्नविषयत्वाव्यापकभूतलादिविषयताशालितादृशानुमितिमादाय लक्षणसमन्वयो न सम्भवतीति वाच्यम् । घटो घटवानित्यनुमितिमादायैव लक्षणसमन्वयात्, तादृशानुमितिविषयतायाः सर्वस्या अपि घटावच्छिन्नविषयताव्यापकत्वात् । नच तत्रापि घटांशे घटत्वस्य सामानाधिकरण्येन भानात्तद्विषयतैवाऽव्यापिकेति वाच्यम् । यद्रूपावच्छिन्नविषयताव्यापकत्वं प्रतिबन्धकत्वे वक्तव्यम् तद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य लक्षणे न प्रवेशः, किन्तु किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्यैव, तथा च तादृशविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिज्ञाननिष्ठभेदप्रतियोगितानवच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्यैव प्रतिबन्धकत्वांशे निवेशात् ह्रदो वन्हिमानित्यादौ तादृशं रूपं वह्न्यभाववद्ध्रदत्वमवति तत्संग्रहः । वह्न्यभावत्वावावच्छिन्नविषयित्वाव्यापकविषयिताशून्यतदवच्छिन्नविषयिताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावश्च न प्रतिबन्धकतायामिति नैकदेशातिव्याप्तिः, एवं च वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभावत्वावच्छिन्नविषयिताशालिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावश्च न प्रतिबन्धकतायाम्, एतत्तत्त्वमग्रे स्फुटीभविष्यति । तथा च प्रकृते घटवद्भूतलत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यघटावच्छिन्नविषयिताशालि भूतलं घटवदित्यनुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावमादायैव लक्षणसम्भवादिति चेत् ।

अत्र केचित् । महानसीयवह्नीतरवह्न्यभाववत्पर्वतो वह्न्यभाववानित्यत्र वह्निमत्तादृशपर्वतरूपबाधेऽव्याप्तिः, तत्र दोषविषयकानुमितौ पक्षे इतरबाधसहकृतपरामर्शादितरप्रतियोगिविधेयकत्वभानेन महानसीयत्वावच्छिन्नविषयतायाः नियमतः सत्त्वेन महानसीयत्वावच्छिन्नविषयतायाः वह्निमत्पर्वतत्वावच्छिन्नविषयत्वाव्यापकत्वात् । न च महानसीयवह्न्यभाववान्पर्वत इति बाधनिश्चयकालीनानुमितिमादाय तत्र लक्षणसमन्वयस्तत्काले शुद्धवह्नेरेवानुमितौ भानादिति वाच्यम् । यादृशस्थले एकविशेषेतरबाधस्य पक्षतावच्छेदकता, दोषानुमितेः प्राक् तद्विशेषस्य न बाधनिश्चयः, तत्र यादृशदोषविषयकानुमितिरेव न, तत्र चानुमितित्वघटितलक्षणासम्भवाल्लिङ्गांशाविवक्षणादिति प्राहुः ।

लिङ्गमविवक्षितम् ।

---

त्वमाह लिङ्गमिति ।

---

च्छिन्नविषयितायां सत्त्वेन नाऽव्याप्तिः, लिङ्गविषयकलिङ्गाविषयकसमानाकारकज्ञानीयविषयितायाः ऐक्यादसमूहालम्बनवन्ह्यभाववान् ह्रद इत्याकारकाऽव्यापकीभूतविषयिताशून्यज्ञानीयविषयितायास्तादृशसमूहालम्बनेऽपि सत्त्वात्(१) ।

ननु लिङ्गांशनिवेशे ह्रदो वह्निमान् वह्निमद्ह्रदादित्यादौ वन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्तिः, वह्निमद्ह्रदरूपप्रकृतहेतुविषयकतादृशबाधनिश्चयस्याऽऽहार्यत्वेनाऽनाहार्यतादृशनिश्चयाऽप्रसिद्धेः । एवं ह्रदो वह्निमान् जलवद्ह्रदादित्यादौ वन्ह्यभाववज्जलवत्यतिव्याप्तिः, हेतुभूतजलवद्ह्रदविषयकवन्ह्यभाववज्जलवद्विषयकनिश्चयस्य निश्चयविशिष्टनिश्चयत्वेन प्रकृतानुमितिप्रतिबन्धकत्वादिति चेन्न । लिङ्गतावच्छेदकस्य पर्याप्तेरनिवेशेन शुद्धह्रदत्वस्यापि लिङ्गतावच्छेदकतया तद्विशिष्टविषयकत्वस्य वन्ह्यभाववान् ह्रदः ह्रदश्च इत्यनाहार्यनिश्चयेऽपि सत्त्वात् । एवं जलवद्ह्रदादिहेतुके शुद्धह्रदादिविषयकज्ञानमादायैवाऽतिव्याप्त्यभावादिति । यद्वा लिङ्गत्वं केवलान्वयि, एवं च दोषात्मकलिङ्गविषयकज्ञानमादाय सर्वत्र लक्षणसमन्वयादिति ध्येयम् ।

ननु लिङ्गांशनिवेशस्य वैयर्थ्यसम्भवे फलाभावप्रयुक्तेच्छाविषयताशून्यत्वरूपस्य "इच्छाधीनेच्छाविषयताशून्यत्वरूपस्य वा" निष्प्रयोजकत्वस्य कथनमसङ्गतमिति चेन्न । अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशपक्षे स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकं यत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तद्वच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वरूपवैयर्थ्याऽसम्भवात् । लिङ्गविषयकयद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धस्य व्यापकतारूपाऽभावस्य केवलयद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाऽभावाऽघटितत्वात् । तथाहि—दोषपदप्रतिपाद्यः दोषेतरभिन्नः प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगिता निरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपित"लिङ्गविषयकत्वघटित"निरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितपर्याप्तिनिष्ठावच्छेदकतानिरूपितानुयोगित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वरूपप्रकृतलक्षणवत्त्वात् । अत्र हेतोः लिङ्गांशं परित्यज्य प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिर्यः तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयितावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितानिरूपितपरंपरायाऽवच्छेदकतावद्रूपस्य तादृशत्वेऽपि तद्घटितत्वाभावेन वैयर्थ्याभावात् । तथा चाऽखण्डाऽभावघटकतया सार्थक्यमिति ध्येयम् ।

ननु अखण्डाभावघटकतया सार्थक्यसम्भवेऽपि प्रयोजनान्तरविरहेण मूलकृता लिङ्गांश-

---

(१) केचित्तु लिङ्गविषयतानिवेशे ह्रदत्वेन धूमावगाहिवन्ह्यभाववान् ह्रदो ह्रदश्चेति समूहालम्बनं लिङ्गविष-

निवेशः कथं कृत इति चेद् । सत्यम् । लिङ्गस्य ज्ञानं लिङ्गज्ञानमिति षष्ठीतत्पुरुषाश्रयणेन लिङ्गविषयकं ज्ञानं लब्धम्, तद्वृत्तित्वविशिष्टस्य यद्विषयकत्वेऽन्वये दोषविषयकत्वमपि ज्ञाने तुल्यवित्तिवेद्यतया लभ्यते । एवं एकज्ञानविषय"प्रकृतहेतुतावच्छेदकव"त्वसम्बन्धेन दोषवत्त्वरूपं दुष्टलक्षणं लभ्यते इति मूले दुष्टनिरूपणं प्रतिज्ञाय तल्लक्षणाऽकथनप्रयुक्तन्यूनतानिरासार्थं लिङ्गपदम्, परन्तु लक्षणे तन्निवेशो निष्प्रयोजनक इति शिरोमणेरभिप्रायः ।

नचैवं लिङ्गपदसार्थक्यकल्पने प्रथमलक्षणे एव तदुपादानं युक्तं, तस्य दुष्टलक्षणत्वादिति

---

यकज्ञानमाददते, तन्न व्याप्यापकीभूतविषयिताशून्यत्वमक्षतमेव । ननु अभावत्वेन ह्रदत्वावगाहि अभाववान् वन्ह्यभाववानितिज्ञानमादायाऽसम्भववारणाय विषयता(१)विशिष्टविषयता(२)शून्यत्वस्य ज्ञाने निवेशनीयतया तत एव तादृशज्ञानवारणसम्भवः, वै० स्वनिरूपितत्व-स्वाश्रयाभाववन्निष्ठत्वोभयसम्बन्धेनेति चेन्न । एतादृशविशेषणदाने एतल्लक्षणस्य याथार्थ्यघटितत्वेन "यथार्थपदाऽघटितेत्यादि पूर्वग्रन्थविरोधापत्तिः । नचाऽभाववान् वन्ह्यभाववानित्यादिज्ञानमादायाऽसम्भव इति वाच्यम् । अवच्छेदकताविशिष्टावच्छेदकताशून्यत्वस्यैव अभाववान् वन्ह्यभाववानितिज्ञानवारणाय निवेशनीयत्वात् । वै० पूर्वोक्तोभयसम्बन्धेन । न च घटपक्षकद्रव्यभेदसाध्यके द्रव्यात्मकघटरूपबाधेऽव्याप्तिः, घटत्वेन द्रव्यावगाहि घटवान् घट इति ज्ञानस्यापि तादृशत्वादिति वाच्यम् । अवच्छेदकताविशिष्टविषयताशून्यत्वस्य विवक्षितत्वात् । वै० उक्तोभयसम्बन्धेन । अवच्छेदकताविशिष्टसांसर्गिकविषयतावत्त्वादसम्भववारणाय किञ्चित्सम्बन्धावच्छिन्नत्वं विषयतायां निवेशनीयम् । न च स्वरूपतः समवायनिष्ठावच्छेदकताकद्रव्यभेदसाध्यके द्रव्यात्मकघटरूपबाधेऽव्याप्तिः, घटत्वेन समवायावगाहिघटसम्बन्धेन द्रव्यं घट इतिज्ञानस्यापि तथात्वात् । किञ्च वैशिष्ट्यघटकस्वाश्रयाभावः स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, अन्यथा व्यभिचारित्वादिसम्बन्धेन स्वाश्रयाभाववन्निष्ठत्वस्यैव सत्त्वादुभयसम्बन्धेनावच्छेदकताविशिष्टविषयत्वाप्रसिद्धेः । तथा च स्वरूपप्रतियोगिकसंयोगेनाभावत्वेन ह्रदत्वावगाहि अभाववान् वह्न्यभाववानिति ज्ञानस्यावारणात्, तादृशसम्बन्धावच्छिन्नाभावत्वनिष्ठावच्छेदकतायाः स्वपदेन धर्तुमशक्यत्वात्, तदवच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेरिति वाच्यम् । विषयताविशिष्टावच्छेदकताशून्यत्वस्य विवक्षणीयत्वात् । वै० स्वनिरूपितत्व-स्वाश्रयानिरूपितवृत्तिताविशिष्टान्यत्वोभयसम्बन्धेन । वृत्तितावै० प्रसिद्धचतुष्टयसम्बन्धेन । अभावत्वनिष्ठावच्छेदकतायां ह्रदत्वनिष्ठविषयताविशिष्टत्वात्तच्छून्यत्वं तादृशज्ञाने इति असम्भवानवकाशात् । तथा च तत एव ह्रदत्वेन धूमावगाहिज्ञानवारणसम्भवाल्लिङ्गांशनिवेशोऽसम्भवो नास्त्येव । किञ्च भ्रमवारकविशेषणस्याप्रवेशात्, अभावत्वेन ह्रदत्वावगाहिज्ञानस्य वारणन्तु यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशनिरूपकतावत्त्वमितिपर्य्यवसिततल्लक्षणेनैव ।

जातिमान् वन्ह्यभाववानिति ज्ञानस्य वारणन्तु अव्यापकीभूतविषयताशून्यत्वनिवेशेनैव । तथा हि—अभावत्वेन ह्रदत्वावगाहिज्ञाने वन्ह्यभाववद्ह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितायाः अस्वीकारात्, अन्यथा तादृशज्ञानानन्तरं वन्ह्यभाववद्ह्रदमहं जानामीत्यनुव्यवसायापत्तेः, एतादृशानुव्यवसायं प्रति वन्ह्यभाववद्ह्रदत्वगतसमुदायत्ववृत्तिनिरूपकताकविषयिताशालिज्ञानत्वेन हेतुतया अभाववान् वन्ह्यभाववानितिज्ञानीयविषयिताया अपि वह्नि-वह्नित्व-अभाव-अभावत्व-ह्रद-ह्रदत्वगतसमुदायत्वे सत्त्वात्, अभावत्वस्य द्विधा भानेऽपि अभावस्याऽनिवेशात् । वन्ह्यभाववदभाववत्त्वावच्छिन्ननिरूपकताकविषयितायाश्च भ्रमज्ञानेऽप्यसत्त्वात् । जातिमान् वन्ह्यभाववानिति यथार्थज्ञाने च वह्न्यभाववज्जातिमत्त्वस्य प्रसिद्धतया तद्रूपावच्छिन्ननिरूपकताकविषयितायाः स्वीकारः । तज्ज्ञानानन्तरं वह्न्यभाववज्जातिमन्तं जानामीत्यनुव्यवसायात् । तादृशज्ञाने वह्न्यभाववद्ह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविषयितायाः सत्त्वादव्यापकीभूतविषयिताशून्यत्वनिवेशेन तद्वारणादिति ध्येयम् ।

(१) प्रकारता । (२) विशेष्यता ।

यद्विषयकत्वत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं, तच्च यदि अनतिरिक्तवृत्तित्वरूपमिदानीं निवेश्यते तदाऽसंभवः, विशिष्टस्याऽनतिरिक्ततया वह्न्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य शुद्धह्रदत्वावच्छिन्नविषयकज्ञानेऽपि सत्त्वेनाऽनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात्, अतः स्वरूपसंबन्धरूपमेव तद्वाच्यम्, तथा च पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकभ्रमविषयवह्न्यभावादावतिप्रसङ्गः, तद्विषयकत्वस्याऽपि प्रतिबन्धकतावच्छेदकघटकत्वात्, असंभवभयेन चाऽवच्छेदकतापर्याप्तिनिवेशाऽसंभवात्,

---

वाच्यम्। प्रथमतृतीयलक्षणाऽपेक्षया द्वितीयलक्षणे एव ग्रन्थकृतो निर्भरत्वादिति ध्येयम्।

तच्च—अवच्छेदकत्वं च। इदानीं—यादृशविशिष्टविषयकत्वविवक्षणात्प्राक्। निविश्यते इति। तथा च यद्विषयकत्वं प्रकृताऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वं लक्षणम्, तत्राह—तदेति। असम्भवं सङ्गमयति विशिष्टस्येति। वह्न्यभावविशिष्टह्रदस्येत्यर्थः। अनतिरिक्ततयेति। शुद्धह्रदाऽनतिरिक्ततयेत्यर्थः। शुद्धह्रदत्वावच्छिन्नेति—वह्न्यभावाऽविशेषितेत्यर्थः। तेनाऽभाववान् ह्रद इति ज्ञानस्यापि सङ्ग्रहः। तथा च वन्ह्यभाववद्ह्रदविषयकत्वस्य वन्ह्यभाववान् ह्रद इति ज्ञाने इवाऽनुमितिप्रतिबन्धकताशून्ये ह्रद इति ज्ञानेऽपि सत्त्वेनाऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वाभावादसम्भव इति भावः। अतः—असम्भवात्। असम्भवापत्तेरिति यावत्। तद्वाच्यम्—अवच्छेदकत्वं वाच्यम्। एवं च यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तत्त्वरूपलक्षणार्थेऽसम्भवविरहेऽपि अतिव्याप्तिमाह तथा चेति। स्वरूपसम्बन्धरूपाऽवच्छेदकतास्वीकारे चेत्यर्थः। पर्वतो वह्निमानित्याद्यनुमितीति। आदिना ह्रदो वह्निमानित्यादेः सङ्ग्रहः। भ्रमविषयेति। पर्वतो वन्ह्यभाववानित्याकारकभ्रमविषयेत्यर्थः। अतिव्याप्तेर्हेतुमाह तद्विषयकत्वस्याऽपीति। वह्न्यभावविषयकत्वस्यापीत्यर्थः। प्रतिबन्धकतावच्छेदकघटकत्वात्—प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वात्। स्वरूपसम्बन्धरूपाऽवच्छेदकत्ववादिना ज्ञानभेदेन विषयिताभेदः स्वीक्रियते, एवं च वह्न्यभाववान् पर्वत इति भ्रमात्मकज्ञानीयवन्ह्यभावविषयितायाः वन्ह्यभाव इत्यादिज्ञानान्तरे विरहेण वन्ह्यभावविषयकत्वस्याऽपि पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन पर्वतो वह्निमानित्यत्र वन्ह्यभावेऽतिव्याप्तिरिति भावः।

ननु स्वरूपसम्बन्धरूपाऽवच्छेदकत्वमेव निवेशनीयम्, उक्तातिव्याप्तिस्तु अवच्छेदकतापर्याप्तिनिवेशेनैव वारणीया, वन्ह्यभावविषयितायां तादृशप्रतिबन्धतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेऽपि तादृशावच्छेदकतापर्याप्त्यधिकरणत्वविरहात्, तादृशप्रतिबन्धकतावच्छेदकतायाः पर्वतविषयितायामपि सत्त्वादित्यत आह असम्भवभयेनेति। वन्ह्यभाववद्ह्रदविषयकत्वस्य प्रतिबन्धतावच्छेदकतापर्याप्त्यधिकरणत्वाऽसम्भवादित्यादिः। वन्ह्यभाववद्ह्रद—शुद्धह्रदयोरैक्येन प्रतिबन्धकतावच्छेदकतायाः ह्रदविषयकत्वातिरिक्तवह्न्यादिविषयकत्वेऽपि सत्त्वात्। न च ह्रदविषयकत्वस्यापि "प्रत्येकस्य" प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणतया कुतोऽसम्भवः, अन्यथा समुदायेऽपि प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वस्य दुर्घटत्वापत्तेरिति वाच्यम्।

**यद्विषयकत्वेन—यादृशविशिष्टविषयकत्वेन ।**

**अतो याद्विषयकत्वेनेति पदं व्याचष्टे यादृशविशिष्टविषयकत्वेनेति । यद्रूपावच्छिन्नविषयताकत्वेनेत्यर्थः । एवं च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमर्थः ।**

तुल्ययुक्त्या वह्न्यभावाद्येकदेशेऽतिप्रसङ्गतादवस्थ्यापातात् । यद्विषयकत्वगतसमुदायत्वं तादृशावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकमित्युक्तौ तु असम्भव इति ध्येयम् । अतः—प्रथमामिति शेषः । **यद्रूपावच्छिन्नविषयताकत्वेनेत्यर्थ** इति । यद्रूपावच्छिन्न"विषयतानिरूपित"विषयित्वेनेति यावत् । एवं च यद्रूपावच्छिन्नविषयताकत्वार्थत्वे च । अवच्छेदकत्वं चाऽत्राऽनतिरिक्तवृत्तित्वरूपं ग्राह्यम्, अनुपदमेव वक्ष्यति "उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वमेवावच्छेदकत्वं विवक्षणीय"मिति गदाधरः । तथा च यद्रूपावच्छिन्न"विषयतानिरूपित"विषयिता प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिः तद्रूपवत्त्वं हेत्वाभाससामान्यलक्षणम्। ह्रदो वह्निमान् धूमादित्यादौ केवलह्रदत्वावच्छिन्नविषयतानिरूपितविषयितायाः ह्रद इति ज्ञानवृत्तित्वेन प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि वह्न्यभाववद्ह्रदत्वावच्छिन्न"विषयतानिरूपित"विषयितायाः ह्रद इति ज्ञानाऽवृत्तित्वेन प्रतिबन्धकताऽनतिरिक्तवृत्तितया वह्न्यभाववद्ह्रदत्वमादाय वह्न्यभाववद्ह्रदे लक्षणसमन्वयः। पर्वतो वह्निमानित्यत्र वह्न्यभावाद्येकदेशेऽतिव्याप्तिवारणन्तु स्वयमेव स्फुटयिष्यति ।

अथ यत्पदस्य यद्रूपावच्छिन्नपरत्वेऽपि यद्रूपपदेन किं धर्त्तव्यम् ? दोषतावच्छेदकं वह्न्यभाववद्ह्रदत्वादिकमिति चेद् , तद्यदि वह्न्यभाव ह्रदत्वोभयं तदा एकत्र द्वयमिति रीत्या जायमाने वह्न्यभावह्रदत्ववानिति ज्ञानेऽपि वह्न्यभाव–ह्रदत्वोभयावच्छिन्नविषयितासत्त्वात् तादृशज्ञानस्य निर्धर्मिकतया ह्रदपक्षकवह्निसाध्यकानुमित्यप्रतिबन्धकत्वादसम्भवः । न च सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वमेव यद्रूपपदेन ग्राह्यम्, ह्रदो वह्न्यभाववानिति ज्ञाने विशिष्टवैशिष्ट्यबोधमर्यादया उद्देश्यविधेयभावमहिम्ना वा उद्देश्यतावच्छेदकह्रदत्वादौ वह्न्यभावादेः सामानाधिकरण्येसम्बन्धेन भानादिति वाच्यम् । तथासति ह्रदत्ववानिति ज्ञाने वह्न्यभावविशिष्टह्रदत्ववानिति ज्ञाने वा निर्धर्मितावच्छेदके वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकत्वस्याऽक्षततया प्रतिबन्धकताऽतिरिक्तवृत्तित्वेनाऽसम्भवापत्तेः । न च यद्रूपावच्छिन्नप्रकारितानिरूपित(१)यद्रूपावच्छिन्नविशेष्यित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नविशिष्टतद्रूपावच्छिन्नत्वमर्थः, तथा च नोक्तदोषावकाश इति वाच्यम् । घटादौ पृथिवीभेदे साध्ये शुद्धपृथिवीत्ववद्घटादेर्बाधतया तत्राव्याप्तेः, घटः पृथिवीति प्रतिबन्धकज्ञानीयपृथिवीत्वप्रकारताया निरवच्छिन्नत्वेन यद्रूपावच्छिन्नेत्यनेन दुःसङ्ग्रहत्वात् । न च साध्यहेतुभेदेन दोषलक्षणभेदात्तत्रत्यलक्षणे यत्प्रकारितैव निवेश्या, न तु यद्रूपावच्छिन्नप्रकारिता, शब्दैक्यस्याऽनुपादेयत्वादिति वाच्यम् । तथा सति घटः पृथिवीभिन्नो मेयत्वादित्यादौ पृथिवीत्ववद्वृत्तिमेयत्वरूपव्यभिचारेऽव्याप्तेः, पृथिवीनिरूपिताऽऽधेयत्वप्रकारतानिरूपितमेयत्वत्वावच्छिन्नविशेष्यतानिरूपकत्वस्य वृत्ति प्रमेयमित्याद्यप्रतिबन्धकज्ञानसाधारण्यात् । यद्रूपाव·

(१) प्रकारितानिरूपितत्वं प्रकारित्वावच्छिन्नत्वम् ।

च्छिन्नप्रकारितानिवेशे चैतत्स्थलयित्वैव बाधस्याऽसङ्ग्रहापत्तेः । किञ्च ह्रदो वह्न्यभाववानित्यत्र प्रकारितानिष्ठं वह्न्यभावत्वावच्छिन्नत्वं किम् ? वह्नि-अभावत्वोभयावच्छिन्नत्वं उत वह्निविशिष्टाभावत्वावच्छिन्नत्वं, तदुभयमपि पूर्वोक्तदूषणग्रस्तम् ।

मैवम् । यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वमित्यस्य यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टवत्त्वं लक्षणा(१)र्थः । यादृशसमुदायत्वपदेन च वह्न्यभाववान् ह्रद इति ज्ञानीयविषयतारूपं वह्नि-वह्नित्व-अभाव-अभावत्व-ह्रद-ह्रदत्वगतं विलक्षणसमुदायत्वं गृह्यते, तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वं वह्न्यभाववान् ह्रद इति ज्ञाने एव स्वीक्रियते, न तु सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्ववानिति ज्ञाने, तदुत्तरं वह्न्यभावविशिष्टह्रदविषयकज्ञानवानहमित्यनुव्यवसायाऽभावात् । तादृशानुव्यवसायं प्रति तादृशसमुदायत्ववृत्तिनिरूपकताकविषयिताशालिज्ञानत्वेन हेतुतया तादृशविषयितायाः अपि वह्नि-वह्नित्व-अभाव-अभावत्व-ह्रद-ह्रदत्वगतसमुदायत्वे वृत्तित्वात् ।

न च तादृशसमुदायत्वविशिष्टवत्त्वस्य लक्षणत्वे तादृशसमुदायत्वविशिष्टं यद् ह्रदत्वं वह्नित्वं अभावत्वं वा तद्वत्त्वस्य शुद्धह्रदे वह्नौ-अभावे वा सत्वात्, ह्रदो वह्निः-अभावो वा दोषः इति व्यवहारापत्तिरिति वाच्यम् । वन्ह्यभाववद्ह्रदो दोष इत्यत्र हि साक्षात्परम्परासाधारणोद्देश्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे दोषपदार्थघटकतावच्छेदकसमुदायत्वस्य धर्मिपारतन्त्र्येणाऽभेदभानाभ्युपगमेनोक्तव्यवहारापत्तिविरहात् । दोषपदार्थश्च यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टवान् । एवं च ह्रदत्वगतैकत्वे तादृशसमुदायत्वाऽभेदविरहेण न ह्रदो दोष इति व्यवहापत्तिरिति ध्येयम् ।

ननु यद्विषयत्वेनेत्येवोच्यतां किं यद्विषयकत्वेनेत्यनेन, वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयताया अपि निरूपकतासम्बन्धेन प्रतिबन्धकतायामवच्छेदकत्वादिति चेन्न । असम्भवापत्तेः वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतायां मानाभावात् । वन्ह्यभाववान् ह्रद इति ज्ञाने हि वन्ह्य-

(१) संसर्गविधया निवेशस्तु प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वम् । रूपे प्रतिबन्धकतावृत्तित्वं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । तादृशं च रूपं वह्नि-वह्नित्व-अभाव अभावत्वं ह्रद-ह्रदत्वगतसमुदायत्वम् ।

प्रकारमुद्रया निवेशस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धतावृत्त्यभावीयाऽवच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितपर्याप्तिनिष्ठावच्छेदकतानिरूपितानुयोगित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावाच्छिन्नावच्छेदकतावद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वं समुदितार्थः । अभावप्रतीतिश्च रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति दिक् ।

भावत्वावच्छिन्ना प्रकारता ह्रदत्वावच्छिन्ना विशेष्यता च, नतु वन्ह्यभाववद्ह्रदत्वावच्छिन्ना कापि विशेष्यता स्वस्य स्वधर्मितावच्छेदकघटकत्वापत्तेः ।

नचैवं सति वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वमपि अप्रामाणिकम्, वन्ह्यभाववान् ह्रद इति ज्ञानस्य वह्नित्वावच्छिन्नविषयित्व—अभावत्वावच्छिन्नविषयित्व—ह्रदत्वावच्छिन्न विषयिताभिरेवोपपत्तेरिति वाच्यम् । वन्ह्यभाववान् ह्रद इति ज्ञानं विषयितया वन्ह्यभाववद् ह्रदवदिति प्रतीत्यनुरोधेन तस्य अतिरिक्तत्वोपगमात् । न हि तादृशप्रत्यये केवलह्रदत्वावच्छिन्नविषयितानियामिका, तथा सति ह्रद इति ज्ञानं विषयितया वन्ह्यभाववद्ह्रदवदिति प्रतीतिप्रसङ्गात् । अतो वन्ह्यभाववान् ह्रद इति प्रमायां विशिष्टविषयकत्वं स्वीक्रियते, तादृश प्रमानिष्ठह्रदत्वावच्छिन्नविशेष्यितायां वह्न्यभाववद्ह्रदत्वावच्छिन्नविलक्षणनिरूपकताकत्वं स्वीक्रियते, तादृशनिरूपकत्वं च न विषयतारूपं किन्त्वतिरिक्तमेवोक्तबाधकबलादिति ध्येयम् ।

कालीशङ्करभट्टाचार्यास्तु-वह्न्यभावह्रदत्वोभयमेव यद्रूपपदेन वक्तव्यम्, सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्ववान्, वह्न्यभावह्रदत्वोभयवानित्यादिज्ञानवारणाय यद्रूपावच्छिन्न विषयितायां स्वरूपसम्बन्धरूपाऽवच्छेदकत्वमपि निवेशनीयम्। तथा च यद्रूपावच्छिन्नविषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नविषयत्वाभावकूटावच्छिन्नज्ञानीयस्वरूपसम्बन्धरूपावच्छेदकतावद् यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वं लक्षणम् । एकत्र द्वयमितिरीत्या वह्न्यभावह्रदत्वोभयवानिति ज्ञाने यद्विषयित्वं तत्र स्वरूपसम्बन्धरूपावच्छेदकतावदिति तद्व्युदासः।वह्न्यभावरूपैकदेशेऽपि नातिव्याप्तिः, वह्न्यभावत्वावच्छिन्नविषयित्वे वह्न्यभावह्रदत्वोभयावच्छिन्नाऽनिरूपितत्वं वर्त्तते इति तादृशोभयावच्छिन्ननिरूपितविषयित्वाभावकूटवद् यद्वह्न्यभावविषयकं ज्ञानं तदीयविषयित्वे स्वरूपसम्बन्धरूपाऽवच्छेदकत्वाभावात् । एवं च जातिमान् वह्न्यभाववानितिज्ञानवारणायाऽव्यापकीभूतविषयिताशून्यत्वमपि न निवेशनीयम् । पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेश(१) इत्याहुः । तच्चिन्त्यम् । गोत्वाभावपक्षकगोत्वाभावसाध्यकस्थले गोत्वाभावो गोत्ववानितिभ्रमात्मकबाधज्ञानविषयितामादाय गोत्वाभावेऽतिव्याप्तिः, गोत्वाभावत्वावच्छिन्नविषयितायां गोत्वाद्यनिरूपितत्वाऽसत्त्वात् । न च गोत्वाभावत्वावच्छिन्नविषयितायां गोत्व—गोत्वाभावत्वोभयात्मकयादृशधर्मावच्छिन्नाऽनिरूपितत्वसत्त्वादुक्तबाधभ्रमस्य तादृशधर्मावच्छिन्नविषयित्वाभावकूटवत्त्वविरहेण, गोत्वाभाव इतिज्ञानीयविषयितायां च स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण नातिव्याप्तिरिति वाच्यम् । गोत्वत्वेन सास्नाद्यवगाहिनो

(१) यत्तु ज्ञानभेदेन विषयिताभेदे प्रतिबन्धकज्ञानीयपाषाणमयत्ववत्पर्वतविषयितायाः अनतिरिक्तवृत्तित्वात्तत्रातिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयितासामान्यपर्यन्तमावश्यकम्, एवं च एकत्रद्वयमितिज्ञानीयविषयितायाः सामान्यान्तर्गततयाऽसम्भव इति स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेश इति । तन्न । ज्ञानभेदेन विषयितायाः भेदेऽभेदे वा स्वरूपसम्बन्धरूपाऽवच्छेदकत्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकतायाः प्रवेशेनैवोपपत्तौ सामान्यपर्यन्ताऽनिवेशात् । प्रतिबन्धकताऽनतिरिक्तवृत्ति यादृशरूपावच्छिन्नविषयितासामान्यं स्वरूपसम्बन्धरूपाऽवच्छेदकतावत्तादृशरूपवत्त्वमिति तु एकत्र द्वयमितिज्ञानीयविषयितायां सामान्यान्तर्गततायां स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादसम्भवग्रस्तमिति ध्येयम् ।

तेनाऽनुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः ।

---

व्याख्यायाः प्रयोजनं स्फुटयति तेनेति । यत्प्रकारकत्वेन प्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गसंभवः, पर्वता-

---

निरुक्तभ्रमस्याभिप्रेतत्वात् तत्र च गौरव—गोरवाभावत्वोभयावच्छिन्नविषयिताशून्यत्वसत्वात् । अन्यत्र सास्नायाः स्वरूपतोऽभानेन सास्नात्वविशिष्टसास्नागोत्वाभावत्वोभयावच्छिन्नविषयिताशून्यत्वाच्चेति ध्येयम् ।

व्याख्यायाः—यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेति व्याख्यायाः । दीधितौ । तेनेति । यादृशविशिष्टविषयकत्वविवक्षणेनेत्यर्थः । इदमुपलक्षणम् । अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वानिवेशस्य चेत्यपि बोध्यम् । अन्यथा वस्रूपसम्बन्धरूपावच्छेदकत्वानिवेशे यादृशविशिष्टविषयकत्वविवक्षणेऽपि पर्वतो वह्निमानित्यत्र वन्ह्यभावाद्येकदेशेऽतिव्याप्तेर्दुर्वारतया तेनेत्यादेरसङ्गतत्वापत्तेः । प्रयोजनं—अतिव्याप्तिवारणरूपम् । स्फुटयति करोति । दीधितौ तेन-यादृशविशिष्टविषयकत्वविवक्षणेन । अनुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये इति । पर्वतो वह्निमानित्यनुमितिप्रतिबन्धको यः "पक्षविशेष्यकः" पर्वतो वन्ह्यभाववानित्याकारको भ्रमः तद्विषये इत्यर्थः । इदमुपलक्षणम् । ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकह्रदो वन्ह्यभाववानित्याकारकभ्रमाविषये इत्यपि बोध्यम् । अत एव वक्ष्यति "भ्रमपदं निश्चयसामान्यपर"मिति । साध्याभावादौ—वन्ह्यभावादौ । साध्याभावे सद्धेत्वादिनिष्ठत्वोक्तिस्तु साध्याभावस्य दोषत्वे वक्ष्यमाणसम्बन्धेन ताद्दशदोषवत्त्वस्य हेतौ सत्त्वेन हेतोर्दुष्टत्वप्रसञ्जनार्था ।

नातिप्रसङ्गः—एकदेशे नातिव्याप्तिः । वन्ह्यभावत्वावच्छिन्नविषयताकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादित्यर्थः । विशिष्टेऽपि नातिव्याप्तिः, वन्ह्यभाववत्पर्वतत्वावच्छिन्नविषयताकत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वेऽपि तद्रूपस्याऽप्रसिद्धत्वादित्यग्रे व्यक्तीभविष्यति ।

न च "दीधितौ" पक्षविशेष्यकेत्युक्तिः किमर्था, पक्षविषयकेत्यस्यैव सम्यक्त्वात्, अत एव पर्वते वन्ह्यभाव इति पक्षविशेषणकभ्रममादायाऽतिव्याप्तेरपि संग्रहः, पक्षविशेष्यकेत्युक्तौ तु तदसंग्रहेण न्यूनता स्यादिति वाच्यम् । यद्विषयकत्वेन ज्ञानस्याऽनुमितिविरोधित्वमिति मूलस्य यत्प्रकारकत्वेन प्रतिबन्धकत्वमित्यर्थकरणे वन्ह्यभावादौ नातिप्रसङ्गसम्भवः, तादृशभ्रमस्य वन्ह्यभावप्रकारकत्वाभावादित्याह यत्प्रकारकत्वेनेति । नातिप्रसङ्गसम्भव इति । दोषलक्षणस्येत्यादिः । तथा च पक्षविशेषणकज्ञानव्यावृत्तये पक्षविशेष्यकेत्युक्तमिति भावः ।

नन्वेवं विवक्षणे वन्ह्यभाववद्ह्रदप्रकारकत्वेनाऽनुमितिप्रतिबन्धकत्वाभावादसम्भव इति चेन्न । ह्रदे वन्ह्यभाव इति ज्ञानस्य ह्रदप्रकारकत्वेन प्रतिबन्धकतया वन्ह्यभावविशिष्टह्रदस्य शुद्धह्रदानतिरिक्ततया लक्षणसमन्वयात् ।

ननु मास्तु वन्ह्यभावेऽतिप्रसङ्गः पर्वते एवाऽतिव्याप्तिः स्यात्, पर्वतप्रकारकत्वेन ज्ञानस्याऽनुमितिविरोधितया तत्वस्य पर्वते सत्त्वादित्यत आह पर्वतादावतिप्रसङ्गसम्भ-

**ह्यावतिप्रसङ्गसंभवेऽपि यत्संबन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनाऽनुमितिविरोधित्वम् तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे**

वेऽपीति । अस्य प्रसिद्धधूमादिहेतौ दुष्टताव्यवहारापत्तेरयोग इत्यनेनाऽन्वयः । दुष्टताव्यवहारनियामकत्वोपगमे इति । तथाच स्वरूपसम्बन्धावच्छिन्नवह्न्यभावनिष्ठप्रकारताकत्वेन वह्न्यभाववान् ह्रद इति निश्चयस्य ह्रदो वह्निमानित्यनुमितिविरोधित्वमस्ति, स्वरूपसम्बन्धेन वह्न्यभावस्य धूमे सत्त्वाद् धूमे दुष्टत्वव्यवहारः । एवं स्वरूपसम्बन्धावच्छिन्नवह्न्यभावनिष्ठप्रकारताकनिश्चयः "पर्वतो वह्न्यभाववानिति भ्रमात्मकः" पर्वतो वह्निमानित्यनुमितिविरोधी स्वरूपसम्बन्धेन वह्न्यभाववत्त्वस्यापि धूमे(१) सत्त्वाद्दुष्टत्वापत्तिरिति भावः

अत्रेदं बोध्यम् । अवच्छेदावच्छेदेन विशिष्टबुद्धौ यथोद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासते तथा विधेयव्याप्योद्देश्यतावच्छेदकप्रतियोगिकत्वं उद्देश्यतावच्छेदकतावच्छेदकसंसर्गे भासते इत्यङ्गीकरणीयम् , अन्यथा पर्वतो वह्निमानित्यत्र पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यत्वे एव पर्वतत्वावच्छेदेन वह्न्यभाववत्ताभ्रममादाय प्रसिद्धधूमे दुष्टत्वव्यवहारापत्तिर्वाच्या ( अवच्छेदावच्छेदेन वह्नेः साध्यत्वे तु तस्य सद्धेतुत्वाऽयोगात् ) सा च न संगच्छते , सामानाधिकरण्येनाऽनुमितिं प्रति पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रकारताकत्वेनैव पर्वतो वह्न्यभाववानिति बाधभ्रमस्य प्रतिबन्धकतया तादृशसम्बन्धाऽप्रसिद्ध्या तेन सम्बन्धेन तद्वत्त्वस्याप्यप्रसिद्धेः(२) । तादृशनियमानङ्गीकारे तु पक्षविशेष्यकभ्रममादायापि प्रसिद्धधूमे दुष्टत्वव्यवहारापत्तिः सङ्गच्छते । तथाहि—यत्सम्बन्धावच्छिन्नयन्निष्ठावच्छेदकताकविशेष्यताकयत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारता तादृशप्रतिब-

---

(१) वह्न्यभावस्य पर्वते स्वरूपसम्बन्धेन प्रकारता तेन सम्बन्धेन धूमवृत्तिता चेति भवत्यतिव्याप्तिः ।

(२) न च संसर्गतावच्छेदकतापर्याप्तिमनिवेश्य यद्धर्मावच्छिन्नयन्निष्ठसंसर्गताकयन्निष्ठप्रकारता प्रतिबन्धकतावच्छेदिका तद्धर्मावच्छिन्नतन्निष्ठसंसर्गताकतन्निष्ठनिरूपकताकाधिकरणतावत्त्वं विवक्षणीयम्, तथा च स्वरूपत्वावच्छिन्नस्वरूपनिष्ठसंसर्गताकवह्न्यभावत्वावच्छिन्नप्रकारता तादृशप्रतिबन्धकतावच्छेदिका तादृशसंसर्गताकवह्न्यभावत्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य धूमादौ सत्त्वादतिव्याप्तिः सम्भवत्येवेति वाच्यम् । तथा सति पक्षविशेषणकभ्रममादायाऽप्यतिव्याप्तिः सम्भवति, पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्न"शुद्ध"आधेयतासंसर्गकपर्वतनिष्ठनिरूपकताकाधिकरणत्वस्य धूमे सत्त्वात् , सम्बन्धभेदेनाऽऽधेयताभेदेऽपि संयोगेन वह्न्यभावव्याप्यः पर्वतः इति ज्ञानीयपर्वतत्वव्यापकवह्न्यभावव्याप्यप्रतियोगिकसंयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतप्रकारताया अपि अवच्छेदकतया संयोगसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नसंसर्गताकनिरूपकताकाधिकरणत्वस्य धूमे सत्त्वात् , अतो यद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकप्रकारता तादृशप्रतिबन्धकतावच्छेदिका तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकनिरूपकताकाधिकरणतावत्त्वं विवक्षणीयम् । तथाच पक्षविशेषणकभ्रममादाय नातिव्याप्तिः, तत्र संसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य पर्वतत्वव्यापकवह्न्यभावव्याप्यप्रतियोगिकसंयोगसम्बन्धावच्छिन्नाऽऽधेयतात्वगतसमुदायत्व एव सत्त्वेन तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकनिरूपकत्वस्याप्रसिद्धेः । परन्तु एवं सति पक्षविशेष्यकभ्रममादायाऽपि नातिप्रसङ्गसम्भवः, तत्रापि पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपत्वगतसमुदायत्वरूपं यत्तादृशप्रतिबन्धकतावच्छेदकप्रकारतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकनिरूपकत्वस्याऽप्रसिद्धत्वादिति ।

**पर्वतादिविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वात्तेन सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रसिद्ध-**

---

न्धकतावच्छेदिका तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकतत्सम्बन्धावच्छिन्नतन्निष्ठनिरूपकताकाधिकरणतावत्त्वस्य पर्यवसिते वन्ह्यभावव्याप्यपर्वतत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नपर्वतत्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितायाः वन्ह्यभावत्वनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकवह्न्यभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतायाः सामानाधिकरण्येनाऽनुमितिप्रतिबन्धकतावच्छेदकतया स्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वनिष्ठावच्छेदकताकवह्न्यभावनिष्ठस्वरूपसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वस्य धूमे सत्त्वात्। नच "पर्वतमहानसान्यतरत्वरूपसद्धेतौ सत्त्वेऽपीति" ग्रन्थविरोध इति वाच्यम्। धूमवति वह्न्यभाव इति सामानाधिकरण्येन व्यभिचारभ्रममादाय ग्रन्थस्य सङ्गमनीयत्वात्। नैवं पक्षविशेषणकभ्रममादाय प्रसिद्धधूमे दुष्टत्वव्यवहारापत्तिः, तत्र वह्न्यभावत्वावच्छिन्नविशेष्यतानिरूपितायाः वह्न्यभावव्याप्यपर्वतत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नपर्वतत्वनिष्ठावच्छेदकताकस्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नपर्वतनिष्ठप्रकारतायाः सामानाधिकरण्येनाऽनुमितिप्रतिबन्धकतावच्छेदकतया तादृशसम्बन्धावच्छिन्नपर्वतत्वनिष्ठावच्छेदकताकनिरूपकत्वाऽप्रसिद्धेरिति दिक्।

उक्तस्य दुष्टताव्यवहारनियामकत्वस्वीकारे पर्वतो वह्निमान् धूमादित्यत्र पक्षविशेषणकभ्रममादाय प्रसिद्धधूमहेतौ दुष्टत्वव्यवहारापत्तिर्न सम्भवतीत्याह **पर्वतादिविशेषणकवन्ह्यभावज्ञानस्येति**। पर्वते वन्ह्यभावः इति ज्ञानस्येत्यर्थः। **तेन सम्बन्धेन**–विशेषणताविशेषसम्बन्धावच्छिन्नाधेयतासम्बन्धेनेत्यर्थः। **पर्वतादिमत्तायाः**—पर्वतादिसम्बन्धितायाः। **पर्वतमहानसान्यतरत्वादिरूपसद्धेताविति**। पर्वतमात्रे वह्निसद्भावमभिप्रेत्येदम्, अन्यथा पर्वतविशेषमहानसान्यतरत्वं हेतुः, पर्वतविशेषस्य (१)पक्षत्वं च। अत्र पर्वतमहानसान्यतरत्वहेतौ असद्धेतुत्वभ्रमेण कदाचिद् दुष्टताव्यवहार इष्ट इति यदि ब्रूयात्तदा तद्भ्रमव्यावृत्त्यर्थं **सद्धेता(२)वित्युक्तम्**। **सत्त्वेऽपीति**। अन्यतरत्वस्य भेदद्वयावच्छिन्न-

---

(१) एतेन "पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नपर्वतनिष्ठप्रकारताशालिज्ञानस्यैव पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकत्वेन तेन सम्बन्धेन पर्वतादिमत्तायाः कथं पर्वतमहानसान्यतरत्वहेतावपि" इति केषांचिदाशङ्कनम्, तदुपरि "पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धस्य शुद्धस्वरूपसम्बन्धत्वेन संसर्गता, उपस्थितिबलाच्च पर्वतत्वव्यापकत्वभानम्। एवं च शुद्धस्वरूपसम्बन्धावच्छिन्नाधेयतारूपसंसर्गस्यैव नियमे निवेशात्तेन सम्बन्धेन तद्वत्त्वं तत्राऽक्षतमिति" केषांचित्समाधानम्, तदुभयमपि प्रलापमात्रं वेदितव्यम्। उक्तस्थले पर्वतविशेषस्यैव पक्षत्वादुक्तशंकाया एवाऽनवतारात्।

वस्तुतस्तु उद्देश्यतावच्छेदकतावच्छेदकसम्बन्धे विधेयव्याप्योद्देश्यतावच्छेदकप्रतियोगिकत्वं भासते, एवं चाऽत्र शुद्धस्वरूपस्यैव भानम्, शुद्धस्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतादिमत्त्वं च पर्वतमहानसान्यतरत्वे सुलभमेवेति ध्येयम्।

(२) अथ वास्तविकदोषातिरिक्तपदार्थमादाय हेतौ दुष्टताव्यवहारो नेष्टः इत्यवश्यमङ्गीकरणीयम्, अन्यथा भ्रमविषयसाध्याभावादौ इति दीधितिग्रन्थस्थादिपदग्राह्याऽसद्धेतौ दुष्टताव्यवहारापत्तिवारणाऽ-

**धूमादिहेतावसत्त्वात्तत्र दुष्टताऽव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यकेत्युक्तम् ।**

---

प्रतियोगिताकभेदरूपतया हेतुतावच्छेदकसम्बन्धः स्वरूप एव । तथाच स्वरूपसम्बन्धावच्छिन्नाऽऽधेयतासम्बन्धेन पर्वतवत्तायाः पर्वतमहानसान्यतरत्वहेतौ सत्वेन पर्वतमहानसान्यतरत्वहेतौ दुष्टत्वव्यवहारापत्तावपीत्यर्थः । **प्रसिद्धधूमादिहेतावसत्त्वादिति** । तादृशसम्बन्धेन पर्वतादिमत्तायाः इत्यादिः । धूमे पर्वतवत्ता तु संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेनेति बोध्यम् । **तत्र**–धूमे । **तदनुरोधेन**–प्रसिद्धधूमे दुष्टत्व(१)व्यवहाराऽऽपत्त्यनुरोधेनेति यावत् ।

---

प्रकृतेः । एवञ्चोक्ताऽन्यतरत्वहेतौ असद्धेतुत्वभ्रमदशायामपि वास्तविकदोषातिरिक्तपक्षादिकमादाय दुष्टताव्यवहारे इष्टापत्तेर्दुष्करतया कथं सद्धेतावित्यस्य सार्थक्यम् । नचाऽसद्धेतौ वास्तविकदोषमादायैव तद्घटकपदार्थमादायाऽपि दुष्टताव्यवहारः कदाचिदिष्ट इति वक्तुं शक्यते, उदासीनपदार्थमादाय तत्र दुष्टताव्यवहारोऽनिष्ट एव, तथा प्रकृते पक्षस्य दोषघटकत्वेन तमादायाऽन्यतरत्वादिहेतौ असद्धेतुत्वभ्रमदशायां तत्र दुष्टताव्यवहार इष्ट एवेति वक्तुं शक्यते, एवञ्च सद्धेतौ दोषं तद्घटकं उदासीनपदार्थं वाऽऽदाय दुष्टताव्यवहारोऽनिष्ट एवेति तद्भ्रमव्यावर्त्तकतया सद्धेतावित्यस्य सार्थक्यमस्त्येवेति वाच्यम् । प्रकृते वास्तविकदोषस्याऽप्रसिद्धत्वेन पक्षस्य तद्घटकत्वाऽसम्भवात्, तमादायाऽसद्धेतुत्वभ्रमदशायामपि दुष्टताव्यवहार इष्ट इति वक्तुमशक्यत्वात् । नचाऽन्यतरत्वहेतौ असद्धेतुत्वभ्रमदशायां पक्षस्यापि दोषघटकत्वभ्रमः कल्पयितुं शक्यते एव, एवं च तद्दशायां तादृशदोषवत्त्वमादाय तद्व्यवहार इष्ट इत्यस्य सुवचतया तद्भ्रमव्यावर्त्तकतया सार्थक्यमस्त्येवेति वाच्यम् । तथासति भ्रमपदं निश्चयसामान्यपरमितिदीधितिग्रन्थाऽसंगतेः । साध्याभावत्वेनोदासीनघटाद्यवगाहिप्रतिबन्धकभ्रमविषयघटादिकमादायैव सद्धेत्वादीत्यादिपदग्राह्याऽसद्धेतौ दुष्टताव्यवहारापत्तिवारकतया दीधितौ सम्भवात् । अतो दोषघटकसाध्याभावमादायैवाऽसद्धेतौ दुष्टताव्यवहारापत्तिवारको दीधितिग्रन्थ इत्युपेयम् । एवं च दोषघटकताभ्रमदशायामपि दुष्टताव्यवहारोऽनिष्ट एवेति असद्धेतुताभ्रमव्यावृत्तेराकिंचित्करत्वात्सद्धेतावित्यस्य वैयर्थ्यं दुर्वारमेवेति चेद् । तर्हि अत्यन्ताऽसहिष्णुतासूचनार्थमेव सद्धेतावित्युपादानादिति ।

यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनेत्यादेरनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टनिरूपकताकाधिकरणतावत्त्वं दुष्टताव्यवहारनियामकम् । निरूपकतायां प्रकारतावै० स्वसामानाधिकरण्य—स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व—स्वावच्छेदकतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वैतत्त्रितयसम्बन्धेन । प्रथमरूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । द्वितीयरूपवृत्तित्वं च स्वावच्छेदकतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

( १ ) नन्वत्र दोषलक्षणं कीदृशम् ? यदि यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनाऽनुमितिप्रतिबन्धकत्वं तत्त्वम्, तदा वह्न्यभाववद्ह्रदादिरूपबाधेऽव्याप्तिः । यदि च स्वतन्त्रमेव "दोषाऽघटितमेव" दुष्टस्येदं लक्षणमित्युच्यते, तदा दोषवत्त्वं दुष्टत्वमिति व्यवहारानुपपत्तिरिति चेन्न । वह्न्यभावत्वेन वह्न्यभाववद्ह्रदावगाहिवह्न्यभाववान् ह्रद इतिज्ञानीयवह्न्यभाववद्ह्रदनिष्ठवन्ह्यभावत्वावच्छिन्नप्रकारताया अपि ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतावच्छेदकतया तत्त्वस्य वन्ह्यभाववद्ह्रदे सत्त्वेन लक्षणसमन्वयात् । नचैवं वस्तुमात्रे दोषलक्षणाऽतिव्याप्तिरिति वाच्यम् । इष्टत्वात् ।

अथवाऽन्तराभासमानविषयतयोरभेदाभ्युपगमे वन्ह्यभाववद्ह्रदवान् धूम इति ज्ञानीयस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नवन्ह्यभाववद्ह्रदत्वावच्छिन्नप्रकारताया अपि विशेष्यत्वाभिन्नतया प्रतिबन्धकतावच्छेदकत्वात् ।

अथैवं धूमत्ववान् पर्वतो वह्निमान् धूमादित्यत्र "आश्रयासिद्ध"हेतोर्दुष्टत्वानुपपत्तिः, स्वरूपसम्बन्धावच्छिन्नधूमत्वाभावनिष्ठप्रकारताकत्वेन "धूमत्वाभाववान्पर्वत इति ज्ञानस्य" अनुमितिविरोधितया स्वरूपसम्बन्धेन धूमत्वाभावस्य धूमेऽभावात् । नच धूमत्वं पर्वताऽवृत्ती-त्याकारकस्य धूमत्वविशेष्यकपर्वतवृत्तित्वाभावप्रकारकज्ञानस्यापि विरोधितया पर्वतनिरूपित समवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य स्वरूपसम्बन्धेन हेतौ सत्त्वेन न दुष्टत्वानुपपत्तिरिति वाच्यम् । तथापि रूपत्ववान् पर्वतो वह्निमान् तद्रूपादित्यादौ दुष्टत्वानुपपत्तेः । पर्वतनिरूपित-समवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य स्वरूपेण तद्रूपे विरहादिति वाच्यम् । यदापि रूपत्व-निष्ठाधेयतायां पर्वतनिरूपितत्वाभावज्ञानस्यापि विरोधितया पर्वतनिरूपितत्वाभावस्य हेतौ सत्त्वाद्दुष्टत्वोपपत्तिरित्युच्यते, तदापि निरूपकत्वसम्बन्धेन पर्वतनिरूपिताधेयतानिरूपिताधेय-तावान्पर्वतो वह्निमान् पर्वतनिरूपिताधेयत्वादित्यादौ हेतोर्दुष्टत्वानुपपत्तिः, तत्र निरूपकत्वस-म्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकाभावस्य "पक्षनिष्ठस्य" निरूपकतासम्बन्धावच्छि-न्नपर्वतवृत्तित्वाभावस्य पक्षतावच्छेदकनिष्ठस्य तादृशपक्षतावच्छेदकनिष्ठाधेयतायां वर्त्तमा-नस्य पक्षनिरूपितत्वाभावस्य च प्रकृतहेतावभावात् । नच तत्र पक्षनिष्ठाधारतायां पक्षताव-च्छेदकनिरूपितत्वाभावस्य तथात्वात्तद्दुष्टस्य हेतौ सत्त्वान्नानुपपत्तिरिति वाच्यम् । तावतापि पर्वततादृशाधेयत्वान्यतरस्य पक्षतावच्छेदकत्वस्थले प्रकृतहेतौ तादृशान्यतरनिरूपितत्वा-भावासत्त्वाद्दुष्टत्वानुपपत्तिरिति चेन्न । धूमत्वाभावत्वेन घटाभावावगाहिज्ञानीयघटाभावनिष्ठ-प्रकारतामादाय लक्षणसमन्वयादिति(१) ।

---

(१) अथवा रूपत्वाभावव्याप्यः पर्वतवृत्तिः, एवं तादृशाऽऽधेयतानिरूपिताऽऽधेयत्वाभावव्याप्यः पर्वत वृत्तिरित्यादिज्ञानप्रकारतापन्नपर्वतवृत्तित्वमादाय तत्र तत्र निर्वाच्यम् । एतेन पर्वतो वन्ह्यभाववान् घटत्वादित्यादौ दुष्टत्वानुपपत्तिः, वह्नित्वेन घटाभावावगाहिवह्निमान्पर्वत इतिज्ञानीयसंयोगसम्बन्धावच्छिन्नघटाभावप्रकारतायाः प्रतिबन्धकतावच्छेदकत्वेऽपि संयोगेन कस्यापि वस्तुनो घटत्वेऽसत्त्वादिति निरस्तम् । वह्निः पर्वतवृत्तिरि-त्याकारकं पर्वतवृत्तितात्वेन घटाभावावगाहिज्ञानमादाय दुष्टत्वोपपत्तेश्च ।

नचैवं वह्न्यभावव्याप्यः पर्वते इतिसत्प्रतिपक्षनिश्चयस्य संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्न-पर्वतनिष्ठप्रकारताकत्वेनाऽनुमितिप्रतिबन्धकतया तेन सम्बन्धेन पर्वतवत्तायाः धूमादौ सत्त्वेन दुष्टताव्यवहा-रापत्तिसम्भवाद्दीधितिकृतां पक्षविशेष्यकत्वानुधावनं व्यर्थमिति वाच्यम् । तावतापि प्रसिद्धबाधरूपदोषमादाय तद्व्यवहारापत्तेः । पक्षविशेष्यकभ्रममादायैवेत्यणुरपि विशेषोऽध्यवसायकर इतिन्यायेन तथोक्तमिति ध्येयम् ।

वस्तुतस्तु यादृशसम्बन्धावच्छिन्नयादृशरूपनिष्ठावच्छेदकताकयादृशसम्बन्धावच्छिन्नप्रकारताकत्वेनाऽनु-मितिप्रतिबन्धकत्वं तादृशसम्बन्धावच्छिन्नतादृशरूपनिष्ठावच्छेदकताकतादृशसम्बन्धावच्छिन्ननिरूपकताका-धिकरणतावत्त्वं दुष्टताव्यवहारनियामकम् । एवं च वह्न्यभावव्याप्यजलं पर्वते इतिज्ञानं पर्वतत्वावच्छेदेनैव ग्राह्यम्, अन्यथा सामानाधिकरण्येन तादृशज्ञानस्य सामानाधिकरण्येन वह्न्यनुमितिविरोधित्वानुपपत्तेः । एवं पर्वतत्वावच्छेदेन वह्न्यभावव्याप्यजलं पर्वते इति ज्ञाने पर्वतत्वमेवोद्देश्यतावच्छेदकं विशेषणविशेष्यभाव-वैपरीत्येऽपि उद्देश्यविधेयभाववैपरीत्यविरहात् । तथाच "उक्तनियमाद्विधेयव्याप्यत्वस्योद्देश्यतावच्छेदकं-प्रतियोगिकसंसर्गे भानात्" वन्ह्यभावव्याप्यजलव्याप्यपर्वतत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नपर्वतत्वनिष्ठा-वच्छेदकताकपर्वतनिष्ठाधेयत्वसम्बन्धावच्छिन्नप्रकारताकवन्ह्यभावव्याप्यजलनिष्ठविशेष्यताकनिश्चयत्वेन प्रति-बन्धकतया तादृशसम्बन्धस्यैवाऽप्रसिद्ध्या तादृशसम्बन्धावच्छिन्नतादृशरूपनिष्ठावच्छेदकताकतादृशसम्बन्धा-वच्छिन्ननिरूपकताकाधिकरणतावत्त्वविरहात्पक्षविशेषणकभ्रममादाय दुष्टताव्यवहारापत्तेरयोग इति पक्ष-विशेष्यकेत्युक्तम् ।

भ्रमपदं निश्चयसामान्यपरम्, तेन सद्धेत्वादीत्यादिपदग्राह्यसाध्यशून्यपक्षकदुष्टहेतौ प्रतिबन्धकप्रमाविषयसाध्याभावादेरेव सत्त्वेऽपि नातिप्रसङ्ग इति ।

उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वमेवाऽवच्छेदकत्वं विवक्षणीयम् । विशेषणीभूतवन्ह्यभावाद्यविषयके शुद्धह्रदत्वादिना ह्रदादिविषयकज्ञाने वन्ह्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविलक्षणविषयतानिरूपकत्वस्याऽसत्त्वेनोक्ताऽसम्भवाऽनवकाशात् ।

---

यादृशविशिष्टविषयकत्वाऽविवक्षणे स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे यथा पर्वतो वह्निमानित्यत्र वन्ह्यभाववान्पर्वत इति भ्रममादाय वन्ह्यभावेऽतिव्याप्तिरुक्ता, तथा ह्रदो वह्निमानित्यत्रापि वन्ह्यभाववान् ह्रद इति प्रमामादाय वन्ह्यभावेऽतिव्याप्तिः सम्भवतीत्याशयेन दीधितिस्थभ्रमपदं भ्रमप्रमासाधारणतया व्याचष्टे—**निश्चयसामान्य(१)परमिति** । **तेन** निश्चयसामान्यपरत्वकथनेन । **साध्यशून्यपक्षकदुष्टहेतौ**—बाधितहेतावित्यर्थः । **प्रतिबन्धकप्रमाविषयसाध्याभावादेरिति** । ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकीभूता या वन्ह्यभाववान् ह्रद इत्याकारिका प्रमा तद्विषयवन्ह्यभावादेरित्यर्थः । **सत्त्वेऽपि**—वक्ष्यमाणसम्बन्धेन हेतौ सत्त्वेऽपीत्यर्थः । **नातिप्रसङ्ग इति** । वन्ह्यभावविषयकत्वस्याऽनुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वादिति भावः ।

**उक्तव्याख्याने**—यादृशविशिष्टविषयकत्वविवक्षणे । **अनतिरिक्तवृत्तित्वमेवेति** । न तु स्वरूपसम्बन्धरूपावच्छेदकत्वमित्यर्थः, अन्यथैकदेशाऽतिव्याप्तेः "तेन विशिष्टस्याऽसत्त्वेऽपि भ्रमात्प्रतिबन्धेऽपि न क्षति"रिति वक्ष्यति । इदानीं अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वविवक्षणेऽसम्भवो नास्तीत्याह—**विशेषणीभूतेति** । **ह्रदादिविषयकज्ञाने**—ह्रदः इत्याकारके । विशिष्टस्य शुद्धानतिरिक्ततया वन्ह्यभावविशिष्टह्रदादिविषयकत्वस्य ह्रद इति ज्ञाने सत्त्वेऽपि वन्ह्यभावविशिष्टह्रदत्वावच्छिन्नविषयितायाः "वन्ह्यभाववान् ह्रद इति ज्ञान एव सत्त्वेन" प्रतिबन्धकतानतिरिक्तवृत्तित्व'न्नासम्भव इति । नाप्येकदेशातिव्याप्तिरि-

---

(१) तथा च भ्रमपदं निश्चयत्वेन रूपेण भ्रमप्रयोभयत्र लाक्षणिकमिति भावः। इदन्तु चिन्त्यते—सद्धेत्वादीत्यादिपदग्राह्याऽसद्धेतुनिष्ठस्य साध्याभावादीत्यादिपदग्राह्यसाध्याभावत्वेन घटादिभ्रमात्मकज्ञानविषयस्य सम्भवेन भ्रमविषयेत्यस्य यथाश्रुतार्थकत्वेऽपि क्षत्यभावेन निश्चयसामान्ये लक्षणा व्यर्था। नच यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेत्यादिक्रमेण तेन सम्बन्धेन तद्वत्त्वस्यैव दुष्टताव्यवहारनियामकत्वात्, प्रकृते स्वरूपसम्बन्धेन घटप्रकारकभ्रमस्य प्रतिबन्धकत्वेऽपि तेन सम्बन्धेन घटवत्त्वाऽप्रसिद्धेर्दुष्टत्वव्यवहारापत्त्यसम्भवेन भ्रमपदस्य निश्चयपरत्वमावश्यकमिति वाच्यम् । साध्याभावत्वेन घटाभावभ्रमस्यैवोपादानादिति ।

केचित्तु सद्धेतुस्थलेऽसद्धेतुस्थले च साध्याभावत्वेन गगनाभावादेरपि भानसम्भवादसद्धेतोर्गगनाभावरूपप्रकारवत्त्वमादाय दुष्टत्वापत्तिसम्भवे भ्रमपदस्य निश्चयसामान्यपरत्वाऽऽदरो व्यर्थ एव। पर्वतप्रकारकज्ञानमादाय "पर्वतत्वेन गगनाभावप्रकारकभ्रममादायाऽपि" स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन कस्यापि धूमेऽसत्त्वेन न पक्षविशेषणकभ्रममादाय दोषप्रसक्तिरित्याहुः।

लक्षणाकरणं प्रमाविषयसाध्याभावादिकमादायाऽव्यतिप्रसङ्गकथनन्यूनतापरिहारार्थमित्यस्मद्गुरुचरणाः।

**तथाच केवलवन्ह्यभावत्वावच्छिन्नविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वान्नातिप्रसङ्ग इत्यर्थः ।**

**ननु स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशेऽयमेवाऽतिप्रसङ्गो दुर्वारः, अप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणमित्येतादृशविवक्षया तादृशातिप्रसङ्गवारणे पुनरसम्भवः, वह्न्यभावत्वादिना घटाद्यवगाहिनो वह्न्यभाववान् ह्रद इतिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकताया वाच्यतया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतायास्तादृशप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयतात्वेनाऽवच्छेदकत्वेऽपि अप्रामाण्यज्ञानाभावादिविशिष्टह्रदत्वावच्छिन्नविषयताकनिश्चयत्व-**

स्याह—**तथाचेति** । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे चेत्यर्थः ।

स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे दोषमुक्त्वाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वं समर्थयति-**नन्वित्यादिना** । **अयमेवेति**-एवकारो दुर्वारपदोत्तरं योजनीयः । तथाचाऽयमतिप्रसङ्गो दुर्वार एवेत्यर्थः(१) । **अतिप्रसङ्गः**-एकदेशातिव्याप्तिरूपः । **तादृशातिप्रसङ्गवारणे**-एकदेशातिप्रसङ्गवारणे । एकदेशविषयतायाः स्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेऽपि तादृशावच्छेदकतापर्याप्त्यधिकरणत्वाभावादिति भावः । **विवक्षयेति** । यद्रूपावच्छिन्नविषयकनिश्चयत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतिबन्धकता तद्रूपावच्छिन्नं हेत्वाभासत्वम्, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति विवक्षयेत्यर्थः । **पुनरसम्भव इति** । वह्नित्वावच्छिन्नवह्निनिष्ठविषयतानिरूपिताऽभावत्वावच्छिन्नाभावनिष्ठविषयतानिरूपितविषयितारूपवन्ह्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य प्रतिबन्धकतावच्छेदककोटिप्रविष्टवन्ह्यादिनिष्ठत्वघटिततया तद्घटितविषयतानां प्रतिबन्धकतावच्छेदकतापर्याप्त्यनधिकरणत्वात्, तदेवोपपादयति-**वन्ह्यभावत्वादिनेति** । **ज्ञानस्यापि**—भ्रमात्मकज्ञानस्यापीत्यर्थः । **प्रतिबन्धकतयेति** । वन्ह्यभावत्वेन घटावगाहिनो भ्रमस्य वन्ह्यभावत्वेन वह्न्यभावावगाहिनो यथार्थज्ञानस्य चैकाकारतया उभयोरपि विनिगमनाविरहेण प्रतिबन्धकतयेति यावत् । वह्न्यभावादि"विषयतायाः" निष्ठत्वस्याऽवच्छेदककोटावप्रवेशे हेतुमाह **तत्साधारण्यानुरोधेनेति** । भ्रमसाधारण्यानुरोधेनेत्यर्थः । **वाच्यतयेति** ।

---

(१) एतेनाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशकल्पे विशेषणान्तरानिरसनीयाऽतिप्रसङ्गव्यवच्छेदकत्वमेवकारस्य न सम्भवति, मेयत्वविशिष्टदोषविषयितायाः दोषविषयितात्वेन प्रतिबन्धकतावच्छेदकतया स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशकल्पेऽपि विशिष्टान्तराऽघटितत्वनिवेशस्याऽऽवश्यकत्वादिति निरस्तम् ।

केचित्तु मेयत्वविशिष्टविषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण विशिष्टान्तराऽघटितत्वं न निवेशनीयम्, अतो यथाश्रुतमेव सम्यक् । विशेषणीयं चेत्यस्याऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वमात्रकल्पे इत्यर्थ इत्याहुः ।

**अवच्छेदकत्वं चेहाऽनतिरिक्तवृत्तित्वम् ।**

स्याऽवच्छेदकतापर्याप्त्यनधिकरणत्वाद्तस्तृतीयाया अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं स्फुटयति अवच्छेदकत्वं चेति । इह—लक्षणे । घटकत्वं सप्तम्यर्थः ।

नच विशिष्टविषयकत्वस्याप्रतिबन्धकसंशयादौ सत्त्वात् पुनरसम्भव इति वाच्यम् । ज्ञानस्येत्यत्र ज्ञानपदमनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चय(१)परं, षष्ठ्यर्थ आधेयत्वं तस्य यद्विषयकत्वेऽ(२)ऽन्वयः । एवञ्च एतादृशनिश्चयत्वस्योभयसाधारण्यादिति भावः । अवच्छेदकतापर्याप्त्यनधिकरणत्वादिति । यद्रूपपदेन वह्न्यभावविशिष्टह्रदत्वस्यैव धर्त्तव्यतयाऽखण्ड"निरूप्यनिरूपकभावानापन्न"तद्रूपावच्छिन्नविषयताकनिश्चयत्वस्य प्रतिबन्धकतावच्छेदकतापर्याप्त्यनधिकरणत्वादिति भावः(३) । अतः—अतिव्याप्तेः । तृतीयायाः । यद्विषयकत्वेनेत्यत्रेत्यादिः । सप्तम्यर्थ इति । तथाच यद्विषयकत्वेनेत्यादिलक्षणघटकीभूततृतीयार्थोऽवच्छेदकत्वं चेत्यर्थः ।

यद्रूपावच्छिन्नविषयतानिरूपितविषयिताप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिः तद्रूपवत्त्वमिति फलितार्थेऽप्यसम्भवमाशङ्कते—नचेति । विशिष्टवि·

---

(१) जन्यतासम्बन्धेन इच्छावदन्यत्वमनाहार्यत्वम् । आहार्यज्ञाने इच्छाया हेतुत्वोपगमान्न तस्य तथात्वम् । सिद्धिकालीनानुमितौ इच्छाया न हेतुत्वम्, किन्तूत्तेजकत्वमेव, तच्च प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वम् । जन्यतासम्बन्धेन बाधकालीनेच्छावदन्यत्वमनाहार्यत्वमिति तु सम्यक् ।

आहार्यत्वं च स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वम् । अप्रामाण्यज्ञानानास्कन्दितत्वं च स्वविषयत्व-स्वसामानाधिकरण्य—कालिकैतत्त्रितयसम्बन्धावच्छिन्नप्रतियोगिताकतत्तदप्रामाण्यज्ञानाभावकूटवत्त्वम् । दोषज्ञानस्य सर्वस्यापि प्रमात्वेन तत्राऽप्रामाण्यज्ञानं भ्रम एवेति ईश्वराऽवृत्तिज्ञानशून्यत्वं वा तत् । निश्चयत्वं संशयान्यज्ञानत्वम् । तच्च स्वसामानाधिकरण्य—स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन प्रकारिताविशिष्टप्रकारितावदन्यत्वमिति दिक् ।

(२) ननु यद्विषयकत्वेन ज्ञानस्याऽनुमितिविरोधित्वं तत्त्वमिति वाक्ये षष्ठ्यन्तज्ञानपदार्थज्ञाननिष्ठत्वस्य स्वरसतो विरोधित्वे एवाऽन्वयः समुचितः । अन्यथा कामिनीप्रत्यक्षेऽतिव्याप्तेः । कामिनीप्रत्यक्षविषयकेच्छाया प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतासत्त्वेन कामिनीप्रत्यक्षविषयकत्वस्य प्रतिबन्धकतावच्छेदकत्वात् । ज्ञानवृत्तित्वस्य विरोधितायामन्वये तु तादृशप्रतिबन्धकतायां ज्ञानवृत्तित्वविरहेणाऽतिव्याप्तेरभावादिति चेन्न । एकदेशेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वं विवक्षणीयम्, ततश्च संस्काराऽऽहार्यादिज्ञानमादायाऽसम्भववारणाय विषयितायां ज्ञानवृत्तित्वविशिष्टत्वस्याऽवश्यं विवक्षणीयतया विषयितायामेव षष्ठ्यन्तज्ञानपदार्थोऽन्वयो युक्तः । कामिनीप्रत्यक्षेऽपि नातिव्याप्तिः, कामिनीप्रत्यक्षविषयकत्वस्य कामिनीप्रत्यक्षविषयज्ञाने "कामिनीमनुभवामीत्याकारके"ऽपि सत्त्वेन कामिनीप्रत्यक्षविषयकत्वस्य प्रतिबन्धकताऽतिरिक्तवृत्तित्वादिति ध्येयम् ।

(३) न च विशिष्टविषयतान्तर्भावेनाऽवच्छेदकतापर्याप्त्यनभ्युपगमे तद्विशिष्टज्ञानात्कार्यप्रतिबन्धानुपपत्तिः, प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टवत्ताया एव कार्यानुत्पत्तिप्रयोजकत्वात्, अतो निश्चयत्वसहितविशिष्टविषयितायां निश्चयत्वसहितभ्रमविषयितायां च विभिन्ने पर्याप्ती स्वीकार्ये, तथाच तादृशविशिष्टविषयितायां पर्याप्त्यभावकथनाऽसङ्गतिरिति वाच्यम् । पर्वतविशेष्यतानिरूपितवह्न्यभावप्रकारताशालिनिश्चयत्वेऽवच्छेदकत्वपर्याप्तिमादाय वह्न्यभावादावतिप्रसङ्गानुद्धारात्, निश्चयत्वविशिष्टयद्रूपावच्छिन्नविषयितात्वं अवच्छेदकतापर्याप्त्यवच्छेदकमिति विवक्षणीयम् । तत्र च पक्षविशेष्यतानिरूपितत्वसहितमेव

**तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य विवक्षणीयतया असम्भवाभावात् ।** अन-

---

**षयकत्वस्येति**। यद्रूपावच्छिन्नविषयतानिरूपितविषयिताया इत्यर्थः। बन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतानिरूपितविषयिताया इति यावत्। **अप्रतिबन्धकसंशयादाविति**। ह्रदो वन्हिमान्नवेतिसंशयादावित्यर्थः। आदिनाऽऽहार्याऽप्रामाण्यज्ञानास्कन्दितज्ञानसंस्कारादीनां परिग्रहः। **पुनरसम्भव इति**। वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वस्य ह्रदो वन्हिमान्नवेति संशये, वन्हिमान् ह्रदो वन्ह्यभाववानित्याहार्यज्ञाने-ह्रदो वन्ह्यभाववानिति ज्ञानमप्रमेति अप्रामाण्यज्ञानास्कन्दितज्ञाने-संस्कारे च सत्वेन तत्र प्रतिबन्धकताया अभावेन, वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वस्य प्रतिबन्धकताऽतिरिक्तवृत्तित्वादिति भावः(१)। **तादृशनिश्चयेति**। अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयेत्यर्थः। **यादृशविशिष्टविषयकत्वमिति**। यद्रूपावच्छिन्नविषयतानिरूपितविषयितेत्यर्थः। **तादृशत्वस्येति**। तद्रूपावच्छिन्नत्वस्येत्यर्थः। **विवक्षणीयतयेति**। अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चय(२)वृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितविषयिताऽनुमितिव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिः तद्रूपावच्छिन्नत्वमिति विवक्षयेत्यर्थः। **असम्भवाभावादिति**। अनाहार्याऽप्रामाण्य-

---

वह्न्यभावविषयितात्वं तादृशपर्याप्त्यवच्छेदकमिति नातिव्याप्तिः। एवं च विशिष्टविषयितात्वघटितसमुदायत्वस्याऽवच्छेदकतापर्याप्त्यनवच्छेदकतयाऽसम्भवसङ्गतिरिति बोध्यम्।

(१) ननु अभावस्य पक्षत्वे संयोगेन वह्नेः साध्यत्वे संयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वह्निविशिष्टाऽभावस्य स्वरूपेण हेतुतायां "अभावो वह्निमान् वह्न्यभावादित्यत्र" वह्न्यभाववदभावरूपबाधे लक्षणसमन्वयात्कथमसम्भवः, तथाहि-अत्राऽभावो वह्न्यभाववान्नवेति संशयेऽपि उक्तस्थलीयाऽनुमितिव्यापक-पक्षे हेतुमत्ताग्रह—प्रतिबध्यतानिरूपितायाः अभावत्वावच्छिन्ने संयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वन्ह्यवगाहित्वघटितधर्मावच्छिन्नप्रतिबन्धकतायाः सत्त्वात्, तादृशसंशयीयनिषेधकोटौ अभावांशे तादृशसम्बन्धेन वह्न्यवगाहित्वादिति चेन्न। अभावो वह्निमान् वह्न्यभाववद्वृत्तितादृशवन्ह्यभाववांश्चेति समूहालम्बनज्ञानस्य व्याप्तिघटकाऽभावांशे संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन वन्ह्यवगाहित्वेनाऽऽहार्यतया तादृशाऽनुमित्यप्रसिद्धेः।

यद्वा संशयादीत्यत्राऽऽदिपदात् अप्रामाण्यज्ञानास्कन्दिताऽऽहार्ययोः सङ्ग्रहात्, तेषां समुचितानामेवाऽसम्भवे हेतुता विवक्षिता। तथाचोक्तस्थलेऽप्रामाण्यज्ञानास्कन्दितज्ञानमादायाऽव्याप्तिः, संशयमादाय च ह्रदो वन्हिमानित्यत्र संशयमादायाऽव्याप्तिर्बोध्या। नचाऽव्यापकीभूतविषयिताशून्यत्वस्याग्रे निवेशनीयतया नोक्ताऽव्याप्तिः, वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकवन्हिमद्ह्रदत्वावच्छिन्नविषयिताशून्यत्वस्य तादृशसंशये विरहादिति वाच्यम्। अग्रे वक्ष्यमाणत्वात्। गुणो द्रव्यमित्यत्र द्रव्यभेदवद्गुणरूपबाधविषयकस्य स्वरूपतो द्रव्यत्वद्रव्यभेदोभयकोटिकस्य गुणो द्रव्यं न वेति संशयस्याऽप्रतिबन्धकतयाऽव्याप्तिर्बोध्या।

(२) इदमुपलक्षणम्। निश्चयेऽव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वमपि निवेश्यम्, तेन ह्रदे वन्ह्यभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानकाले वन्ह्यभाववान् ह्रद इति निश्चयस्याऽप्रतिबन्धकत्वेऽपि नाऽसम्भवः। नच वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः, अव्याप्यवृत्तित्वज्ञानानास्कन्दितस्य कपिसंयोगाभाववान् वृक्ष इति निश्चयस्यानुमितिप्रतिबन्धकत्वादिति वाच्यम्। अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्यैव निवेशात्। एवं च वृक्षे कपिसंयोगाभावेऽव्याप्यवृत्तित्वव्याप्यवृत्तित्वप्रमास्कन्दितस्यापि निश्चयस्याऽव्याप्यवृत्तित्वभ्रमानास्कन्दिततया तत्र प्रतिबन्धकताविरहान्नातिव्याप्तिरिति ध्येयम्।

**तिरिक्तवृत्तित्वं स्वव्यापकतत्कत्वं ननु तच्छून्यावृत्तित्वं तादृशनिश्चयवृत्तित्वविशिष्टस्य विशिष्टविषयकत्वस्य विशेष्यीभूतविशिष्टविषयकत्वानतिरिक्ततया तस्यातिप्रसक्तत्वे विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटत्वात् ।**

ज्ञानाऽनास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितायाः आहार्यज्ञानादावसत्त्वादिति भावः । निश्चयेऽनाहार्यत्वनिवेशेनाऽऽहार्यज्ञानव्यावृत्तिः । अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशेनाऽप्रामाण्यज्ञानास्कन्दितज्ञानव्यावृत्तिः। निश्चयत्वनिवेशेन संशयसंस्कारयोर्व्यावृत्तिः । नन्वेवमपि असम्भवो दुर्वार इव, तथाहि विशेष्यवृत्तिधर्मस्य विशिष्टेऽभावो नाङ्गीक्रियते इति नियमः । यथा सत्तावृत्तिधर्मस्य गुणवृत्तित्वस्य विशिष्टसत्तायामभावविरहः, तन्मूलिकैव गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिः, विशिष्टसत्तानिष्ठाऽऽधेयतायाः शुद्धसत्तानिष्ठाऽऽधेयतायाः ऐक्येन विशिष्टं शुद्धानातिरिच्यते इति प्रवादोऽपि सङ्गच्छते । एवञ्च केवलयद्रूपावच्छिन्नविषयितायाः संशयादौ सत्त्वेन प्रतिबन्धकताऽतिरिक्तवृत्तित्वेन अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितायां "प्रतिबन्धकतानतिरिक्तवृत्तित्वरूप"प्रतिबन्धकतातिरिक्तवृत्तित्वाभावविरहादित्याशङ्कां निराकुरुते—**अनतिरिक्तवृत्तित्वं चेति** । **स्वव्यापकतत्कत्वमिति** । स्वस्याः व्यापिका सा यस्याः सा स्वव्यापकतत्का, तस्याः भावः स्वव्यापकतत्कत्वमिति विग्रहः । स्वं—विषयिता । स्वपदघटितबहुव्रीहौ अन्यपदार्थोऽपि स्वमेव । तथाच स्वस्याः "विषयितायाः"व्यापिका सा"प्रतिबन्धकता"यस्याः"विषयितायाः" तत्कत्वस्य विषयितायां सत्त्वात् । तथाच यद्रूपावच्छिन्नविषयिताव्यापिका(१)प्रतिबन्धकतेति फलितम् । स्वव्यापकतत्कत्वमिति सावधारणम् । स्वव्यापकतत्कत्वमेवेत्यर्थः । व्यवच्छेद्यमाह **नत्विति**। **तच्छून्येति** । प्रतिबन्धकताशून्येत्यर्थः। प्रतिबन्धकत्वाभाववदवृत्तित्वं (२)नैवेति यावत् । तत्र हेतुमाह—**विशिष्टविषयकत्वस्येति** । अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयित्वस्येत्यर्थः ।

**विशेष्यीभूतविशिष्टविषयकत्वेति** । केवलयद्रूपावच्छिन्नविषयित्वेत्यर्थः । **तस्य**—विशेष्यीभूतयद्रूपावच्छिन्नविषयकत्वस्य । **अतिप्रसक्तत्वे**—प्रतिबन्धकताऽतिरिक्तवृत्तित्वे । **विशिष्टे तस्मिन्निति** । अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयित्वे इत्यर्थः । **अनतिप्रसक्तत्वस्य**—प्रतिबन्धकताऽनतिरिक्तवृत्तित्वस्य ।

---

(१) तथाच यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽभावः-समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं च । तत्र सामानाधिकरण्ये प्रकृत्यर्थस्य "यद्विषयकत्वस्य" निरूपितत्वसम्बन्धेनाऽन्वयः, प्रकृत्यर्थान्वितसामानाधिकरण्यघटितोक्तप्रतियोगितावच्छेदकत्वस्याऽनुयोगितयाऽभावे, तादृशाऽभावस्याश्रयतया प्रतिबन्धकतायामन्वयः । एवञ्च यद्रूपावच्छिन्नविषयिताव्यापकत्वलाभ इति ध्येयम् ।

(२) अस्मिन्पक्षेऽभाववद्वृत्तित्वं-अभावश्च तृतीयार्थः । तत्र प्रथमेऽभावेऽनुयोगितासम्बन्धेन प्रतिबन्धकत्वाऽन्वयः । द्वितीयाऽभावे तदभाववद्वृत्तित्वस्यान्वयः, अभावस्य च प्रकृत्यर्थेऽन्वयः ।

एवञ्च यद्विषयकत्वं प्रतिबन्धकत्वाभाववदवृत्तीत्यर्थलाभः, बोधस्य प्रथमातिरिक्तप्रत्ययार्थ-प्रथमान्तार्थयोर्मुख्यविशेष्यकत्वे तु उक्तरीत्या लब्धे तृतीयार्थे प्रतिबन्धकत्वाभाववदवृत्तित्वरूपे प्रकृत्यर्थस्याऽधेयतयाऽन्वयः । प्रकृत्यर्थान्वितततृतीयार्थस्य निरूपकतासम्बन्धेन प्रतिबन्धकतायाम्प्रतिबन्धकत्वस्य द्वेधाऽन्वयस्य व्युत्पत्तिसिद्धत्वादिति ध्येयम् ।

दुर्घटत्वादिति । विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाऽभावाऽनङ्गीकारादिति भावः । तथा चाऽसम्भवाऽपत्तेरिति ध्येयम् ।

तथाच अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धता तद्रूपवत्त्वं हेत्वाभाससामान्यलक्षणम् ।

अनुगमस्तु-प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्त्वम्। प्रतिबन्धकतावृत्तित्वं च रूपे स्वावच्छिन्नविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वद्वयं रूपपरम् । तादृशरूपं च वह्न्यभाववद्ध्रदत्वादिकम् ।

प्रकारविधयाऽनुगमस्तु—प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयाऽवच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्वम् । अभावप्रतीतिस्तु रूपावच्छिन्नविषयित्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति ।

ननु प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावेऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दितदोषाविषयकनिश्चयवृत्तित्वाभाव एव कुतो नोक्तः किं व्यापकत्वानिवेशेन । तथा च तादृशप्रतिबन्धकत्वाभावे अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितयद्रूपावच्छिन्नविषयताशालिनिश्चयानिरूपितवृत्तित्वाऽभाववत्तद्रूपवत्त्वम्, एवञ्च नासंभवः, तादृशनिश्चयपदेन आहार्यादितादृशनिश्चयानां धर्तुमशक्यत्वात् । नच लक्षणान्तरम्, प्रतिबन्धकत्वाभाववदवृत्तित्वस्य विषयितायां विवक्षणे तुल्यवित्तिवेद्यतया प्रतिबन्धकत्वाभावे विषयितावद्वृत्तित्वाभावविवक्षणे लक्षणान्तरत्वाभावात् । नचाऽधिकरणभेदेनाऽभावभेदाङ्गीकर्तृनये घटादिवृत्तिप्रतिबन्धकत्वाभावस्य "घटे एव सत्वेन" पटादिनिश्चयेऽप्यसत्वात्पटेऽतिव्याप्तिरिति वाच्यम् । तादृशप्रतिबन्धकत्वाभावत्वे तादृशनिश्चयवृत्तितानवच्छेदकत्वविवक्षणेनाऽतिव्याप्तेरभावात् । अधिकरणभेदेनाऽभावभेदाङ्गीकर्तृमतेऽपि तादृशाभावत्वस्याऽनुगतत्वादिति चेन्न । केवलाभावत्वे निश्चयवृत्तितावच्छेदकत्वसत्वे विशिष्टाऽभावत्वे तदभावस्यासत्वेनाऽसंभवतादवस्थ्यात्। यदि तादृशप्रतिबन्धकताप्रतियोगिकत्वाऽभावत्वगतद्वित्वे तादृशनिश्चयानिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावो निवेश्यते तदा गौरवम्, अभावद्वयपर्याप्तिघटितत्वात् । सिद्धान्ते एकाभावस्य निवेशादिति ध्येयम् (१) ।

ननु अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितात्वावच्छिन्ना"धेयतानिरूपिता"धिकरणता तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तिरित्यधिकरणतां निवेश्याऽनतिरिक्तवृत्तित्वनिवेश एव उचित इति चेन्न । सामान्यधर्मावच्छिन्नाधिकरणताया अप्यधिकरणभेदेन भेदाभ्युपगमे तादृशनिश्चयवृत्तित्वविशिष्टवह्न्यभावत्वावच्छिन्नविषयितात्वाव-

---

(१) एवं प्रतिबन्धकत्वाभावे तादृशविषयित्वाधिकरणवृत्तित्वाभाव एव तादृशविषयिताव्यापकत्वम् । यथा वह्न्यभावे धूमाधिकरणावृत्तित्वमेव धूमव्यापकत्वमित्यनुमितौ भट्टाचार्येणोक्तत्वादिति ध्येयम् ।

**यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवानतिरिक्तवृत्तित्वम् , अतो नोक्तरीत्या असम्भव इति । तदसत् । तथासति मूलोक्तस्य ज्ञानस्ये-**

च्छिन्नाधिकरणताव्यक्तेः प्रतिबन्धकताशून्यावृत्तित्वेन एकदेशे वह्न्यभावत्वावच्छिन्नेऽतिप्रस-ङ्गात् । अधिकरणतासामान्योक्तौ तादृशातिप्रसंगवारणेऽपि सामान्यपदस्य व्यापकत्वपरतया-अनतिरिक्तवृत्तित्वेऽधिकरणतात्वव्यापकत्वनिवेशापेक्षया प्रतिबन्धकतायां व्यापकत्वनिवेश एव लाघवादिति ध्येयम् ।

नन्वत्र यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिमत्यवृत्ति तद्रूपवत्त्वमित्येव लाघवात्कुतो नो-क्तम्? अनतिरिक्तवृत्तित्वादिकं व्यर्थम्, वह्निमान् ह्रदो वह्न्यभाववाँश्चेतिसमूहालम्बनस्याऽऽहा-र्यत्वेन तत्रानुमितित्वविरहात् । न च निश्चयत्वस्य संशयान्यज्ञानत्वरूपतया शुद्धज्ञानत्वे प्रकृता-नुमितिवृत्तित्वसत्त्वे विशिष्टज्ञानत्वे तदभावासत्त्वादसम्भव इति वाच्यम् । यद्रूपावच्छिन्नविष-यकनिश्चयत्वत्वं प्रकृतानुमितिवृत्तितानवच्छेदकं "यद्रूपावच्छिन्नविषयकत्वनिश्चयत्वत्वैत-द्गतसमुदायत्वं प्रकृतानुमितिनिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितानवच्छेदक"मिति विवक्षणेनैवोक्तदोषविरहादिति चेन्न । पर्वतो वन्ह्यभावव्याप्य-वानित्यत्र वह्निमत्पर्वतेऽतिव्याप्तेः, एवं सत्प्रतिपक्षनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्ध-कत्वानुपगमे सत्प्रतिपक्षेऽव्याप्तिश्च स्यात् । सत्पतिपक्षनिश्चयस्य कार्यकालवृत्तितया प्रति-बन्धकत्वानुपगमपक्षश्च सत्प्रतिपक्षप्रकरणे यदि चेत्यादिना दीधितिकृता प्रदर्शितत्वात् ।

नचैवमपि यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृताऽनुमित्यव्यवहितपूर्वक्षणवृत्तिज्ञानाऽवृ-त्ति तद्रूपवत्त्वमित्युक्तौ न कुत्रापि दोष इति वाच्यम् । एवमपि ह्रदो वन्ह्यभाववज्जलवत्का-लीनवह्निमान् धूमादित्यादौ जलवद्ह्रदेऽतिव्याप्तेः , जलवद्ह्रदविषयकनिश्चयोत्तरं तादृशानु-मितेरनुदयात् ।

न च यत्र प्रथमं जलवान् ह्रद इति निश्चयः—तत्तृतीयक्षणेऽनुमित्युत्पत्तौ बाधकाभाव इति वाच्यम् । तादृशानुमितौ परामर्शस्यापेक्षितत्वेन तत्पूर्वं परामर्शसत्त्वे ज्ञानविशिष्टज्ञान-संवलनेन तृतीयक्षणेऽपि तादृशानुमित्यनुपपत्तेरिति ध्येयम् ।

अनतिरिक्तवृत्तित्वं तदभाववदवृत्तित्वरूपमेव, परन्तु तदभाववतः तादृशनिश्चयत्वेन निवेशः कार्यः, तथा च प्रतिबन्धकत्वाभाववान् यस्तादृशनिश्चयस्तदवृत्तित्वमित्यर्थे नोक्त-दोष इत्याह—**यत्त्विति** । **तादृशनिश्चयेति** । अनाहार्योऽप्रामाण्यज्ञानानास्कन्दितनि-श्चयेत्यर्थः । एवकारेण स्वव्यापकतत्कत्वस्य व्यवच्छेदः । **अत इति** । अनाहार्योऽप्रामा-ण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितित्वव्यापकप्रति-बध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयाऽवृत्ति तद्रूपावच्छिन्नत्वस्य विवक्षणादित्यर्थः । **उक्तरीत्येति** । विशिष्टे लक्षिमन्ननतिप्रसक्तत्वस्य दुर्घटत्वादित्युक्तरीत्येत्यर्थः । **नाऽसम्भ-व इति** । प्रतिबन्धकताशून्यो यस्तादृशनिश्चयः "घटवद्भूतलादिविषयकनिश्चय एव [ न तु संशयादिः, तेषां प्रतिबन्धकताशून्यत्वेऽपि तादृशनिश्चयाऽनात्मकत्वात ] तादृशनिश्चयाऽ-वृत्तित्वस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायां सत्त्वादित्यर्थः । **तदसदिति** । **तथा सतीति** । प्रतिबन्धकताशून्यतादृशनिश्चयाऽवृत्तित्वरूपाऽनतिरिक्तवृत्तित्वविवक्षणे इत्यर्थः ।

स्यैत्वं वैयर्थ्याद्, ह्रदत्वाद्यवच्छिन्ना या वन्ह्यभावविशिष्टह्रदत्वाद्यवच्छिन्न-विषयकयत्किञ्चिज्ज्ञानीयविषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्य-तादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वाद्यवच्छिन्नेऽतिप्रसङ्गाच्च । मन्मते चानु-मितिप्रतिबन्धकतायास्तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषय-तात्वावच्छिन्नव्यापकताविरहेणातिप्रसङ्गानवकाशात् ॥

ज्ञानस्येत्यस्येति । अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वार्थकस्येत्यर्थः । वैय-र्थ्यादिति । संशयादौ तादृशविशिष्टविषयितायाः सत्त्वेऽपि प्रतिबन्धकताशून्यतादृशनिश्च-यपदेन संशयादीनां धारणाऽसम्भवेन तादृशविशिष्टविषयितायां तादृशनिश्चयावृत्तित्वस्याऽ-क्षततयाऽसम्भवविरहादिति भावः ।

ननु यद्विषयकत्वेनेत्यत्र तृतीयाया अवृत्तित्वं शून्यत्वं चार्थः, शून्यत्वे प्रतिबन्धक-त्वस्य शून्यत्वस्य च मूलोक्तज्ञानपदार्थे निश्चये निश्चयस्य चाऽवृत्तित्वेऽन्वयादुक्तविशिष्टला-भान्न ज्ञानपदवैयर्थ्यमतो दूषणान्तरमाह—ह्रदत्वाद्यवच्छिन्नेत्यादिना । यत्किञ्चिज्-ज्ञानीयविषयतेति । वन्ह्यभाववान् ह्रद इत्याकारकज्ञानीया या ह्रदत्वाद्यवच्छिन्नविषय-तेति यावत् ।

आदिना वन्ह्यभावत्वावच्छिन्नविषयतायाः संग्रहः । तन्निरूपकत्वस्य—वन्ह्यभाव-वान् ह्रद इति ज्ञानीयविषयतानिरूपकत्वस्य । तादृशनिश्चयेति । अनाहार्याऽप्रामाण्य-ज्ञानानास्कन्दितनिश्चयेत्यर्थः । ह्रद इत्यादिनिश्चयेति यावत् । अवृत्तित्वेन—ज्ञानभेदेन विषयताभेदादिति भावः । शुद्धह्रदत्वावच्छिन्नेऽतिप्रसङ्गाच्चेति । तथा च "वन्ह्य-भाववान् ह्रद इति ज्ञानीय"ह्रदत्वावच्छिन्नविषयतायाः प्रतिबन्धकताशून्यतादृशनिश्चयाऽवृ-त्तित्वेन शुद्धह्रदेऽतिप्रसङ्गादिति(१) भावः । यद्रूपावच्छिन्नविषयितासामान्ये तादृशनिश्चयाऽ-वृत्तित्वनिवेशेन दोषैकदेशाऽतिव्याप्तिवारणेऽपि तादृशाऽनतिरिक्तवृत्तित्वे यद्रूपावच्छिन्नविष-यितात्वव्यापकतानिवेशस्य पर्यवसिततया गौरवं बोध्यम्(२) ।

---

(१) अथ यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयित्वे एवोऽक्ताऽवृ-त्तित्वस्य विवक्षितत्वेन तादृशह्रदत्वावच्छिन्नविषयिताया ह्रद इति ज्ञाने एव प्रतिबन्धकताशून्ये सत्त्वेन कुतोऽ-तिव्याप्तिरिति चेन्न । अस्मिन्कल्पे सर्वेषामेवाऽनाहार्यत्वादीनां ज्ञानविशेषणानां प्रतिबन्धकताशून्यज्ञानविशे-षणत्वेनाऽव्यापकीभूतविषयिताशून्यत्वस्यापि तद्विशेषणस्यैव विवक्षितत्वेनातिप्रसङ्गसम्भवात् । किञ्चिद्रूपा-वच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वस्यैव सिद्धान्तत्वेन तज्ज्ञानवृत्तित्वस्य यद्रूपावच्छिन्नविषयित्वविशे-षणत्वेऽपि अतिव्याप्तेः सम्भवाच्च ।

(२) अथात्र यद्रूपावच्छिन्नविषयितात्वं प्रकृतानुमितिप्रतिबन्धकताशून्यतादृशनिश्चयानिरूपितवृत्तिता-नवच्छेदकं (यद्रूपं वा तादृशनिश्चयवृत्तिविषयितानिरूपकतानवच्छेदकं) तद्रूपवत्त्वमित्युक्तावेव नोक्तातिव्या-प्तिः, विषयिताया भेदेऽपि विषयितात्वस्यानुगतत्वेन ह्रदत्वावच्छिन्नविषयितात्वस्य प्रतिबन्धकताशून्यह्रद इति निश्चयनिरूपितवृत्तितावच्छेदकत्वात् (एवं ह्रदत्वस्य तादृशप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तिविषयितानि-रूपकतावच्छेदकत्वात्) न च शुद्धविषयितात्वे तादृशनिश्चयनिरूपितवृत्तितावच्छेदकत्वसत्त्वेन विशिष्टविष-यितात्वस्यानतिरिक्ततया तत्रापि तादृशावच्छेदकत्वस्यैव सत्त्वात् (एवं ह्रदत्वे तादृशनिश्चयनिष्ठविषयिता-निरूपकतावच्छेदकत्वसत्त्वे विशिष्टह्रदत्वे तादृशाभावस्य दुर्घटत्वात्) असम्भव इति वाच्यम् । यादृशवस्तु

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान् वह्न्यभाववा- नित्यादिज्ञानस्यापि वह्न्यभाववद्ह्रदत्वाद्यवच्छिन्नविषयकतया तस्य च ह्रदो वह्निमानित्याद्यनुमित्यविरोधित्वादसम्भवः । जलवान् वह्निमानित्या-

एवमपीति । स्वव्यापकतत्कत्वनिवेशेपीत्यर्थः । यद्रूपावच्छिन्नविषयिताव्यापकत्वनिवे- शेऽपीति यावत् । ज्ञानस्यापीति । अपिना वन्ह्यभाववान् ह्रद इति ज्ञानस्य संग्रहः । तस्य चेति । जातिमान् वन्ह्यभाववानिति निश्चयस्य चेत्यर्थः। ह्रदो वह्निमानित्याद्यनु- मित्यविरोधित्वादिति । निरवच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकवह्निमत्ताज्ञानं प्रति निरवच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकवन्ह्यभाववत्तानिश्चयस्यैव प्रतिबन्धकत्वादिति भावः । असम्भवः—वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः जातिमान् वन्ह्यभाववानि- त्यनुमित्यप्रतिबन्धकज्ञानेऽपि सत्त्वेन तादृशविषयिताव्यापकत्वस्य प्रतिबन्धकतायां विरहा- दिति हृदयम् ।

नन्वत्राऽसम्भवाभिधानमसङ्गतम्, ह्रदो वह्निमानित्यनुमितिः सामानाधिकरण्येनाऽवच्छे- दावच्छेदेन च, तत्र ह्रदत्वावच्छेदेन वह्निसाध्यकस्थलेऽव्याप्तिसम्भवेऽपि ह्रदत्वसामानाधिकर- ण्येन वह्नेः साध्यत्वे ह्रदत्वावच्छेदेन वन्ह्यभाववद्ह्रदात्मकबाधे लक्षणसमन्वयात्, तथा-

दायत्वं प्रतिबन्धकताशून्यतादृशनिश्चयनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिता- कपर्य्याप्त्यनुयोगितावच्छेदकत्वसामान्याभाववत् तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपक- तावत्त्वस्यैव वक्तव्यत्वात् ।

संसर्गमुद्रया निवेशस्तु प्रतिबन्धकताशून्यतादृशनिश्चयनिष्ठविषयिताविशिष्टान्यरूपाश्रयत्वम् । वै० स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तादृश- विषयिताविशिष्टं ह्रदत्वगतमेकत्वमेव, न तु वह्न्यभाववद्ह्रदत्वगतसमुदायत्वमित्यसम्भवानवकाशात् । न चासाधारण्येऽव्याप्तिः, असाधारण्यतावच्छेदकधर्मस्य "वन्हिव्यापकीभूताभावप्रतियोगिजलत्वादेः" पक्षधर्मताज्ञानाऽसमानकालीनतादृशप्रतिबन्धकताशून्याऽसाधारण्यविषयकतादृशनिश्चयवृत्तिविषयितानिरूपक- तावच्छेदकत्वादिति वाच्यम् । स्वमते तादृशाव्याप्तेः समानत्वात् । यदि च स्वमते प्रकृतपक्षे प्रकृतहे- तुमत्ताज्ञानसमानकालीनत्व—प्रकृतानुमित्यप्रतिबन्धकत्वोभयाभावे यद्रूपावच्छिन्नविषयिताव्यापकत्वं विवक्ष्यते, तदा मन्मतेऽपि पक्षधर्मिकहेतुमत्ताज्ञानकालीनप्रतिबन्धकताशून्यतादृशविषयितानिरूपकतानवच्छेदकत्वविव- क्षणे न कश्चिद्दोषस्तादृशज्ञानं यदि पक्षधर्मिकहेतुमत्ताज्ञानकालीनं तदा प्रतिबन्धकमेव इति चेन्न । ह्रदो वन्हिमानित्यादौ कपिसंयोगाभाववत्कपिसंयोगवति अतिव्याप्तेः। तद्विषयकज्ञानस्य नियताहार्य्यतया तादृशनि- श्चयनिष्ठविषयितानिरूपकतावच्छेदकत्वात्(१) । न च स्वातन्त्र्येण अनाहार्य्यनिश्चयनिरूपितवृत्तितावच्छेदक- त्वनिवेशेनैव तद्वारणमिति वाच्यम् । यत्र स्थलविशेषे घटविषयकं ज्ञानं वन्ह्यभाववद्ह्रदविषयकम्, स्वतन्त्रं चेद् अप्रामाण्यज्ञानास्कन्दितं तत्र घटेऽतिव्याप्तेरिति ध्येयम् ।

(१) नन्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यो यः प्रकृतानुमितीयविषयि- ताविशिष्टान्यो निश्चयस्तदवृत्तित्वस्य लक्षणघटकत्वान्नातिव्याप्तिः । प्रकृतानुमितीयविषयितावैशिष्ट्यञ्च स्वनि- रूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयितावत्त्व—स्वनिरूपकतावच्छेदकधर्मावच्छिन्नविषयितावज्ज्ञान- विषयकेच्छाप्रयोज्यविषयितावत्त्वान्यतरसम्बन्धेन, तथा च ह्रदो वन्हिमानित्यादौ ह्रदो वन्हिमान्नवेत्यादिसंशया- दिकमेव निरुक्तविषयिताविशिष्टं तदन्यश्च घटवद्भूतलमित्यादिज्ञानं तदवृत्तित्वस्य वन्ह्यभाववद्ह्रदत्वादौ स- त्वाल्लक्षणसमन्वयः । प्रकृते च कापिसंयोगाभाववत्कपिसंयोगवत्त्वस्याऽतथात्वादिति चेन्न । एतत्कल्पे अभा- वस्य द्विधा निवेशेन उभयत्र न्यूनाधिकवारकपर्याप्तिनिवेशप्रयुक्तगौरवस्य दुर्वारत्वादिति ध्येयम् ।

हि—ह्रदत्वावच्छेदेन वन्ह्यभावावगाहिज्ञाने ह्रदत्वव्यापकवन्ह्यभावप्रतियोगिकस्वरूपस्य प्रकारीभूतवन्ह्यभावसम्बन्धतया "तत्स्थलीयबाधे" तादृशसम्बन्धावच्छिन्नवन्ह्यभावनिष्ठनिरूपकताकविषयितामादायैव लक्षणसमन्वयात् । तादृशविषयितायाश्च जातिमान् वन्ह्यभाववानिति ज्ञानेऽसत्त्वात् । तत्र हि जातित्वावच्छिन्नवन्ह्यभावप्रतियोगिकस्वरूप एव प्रकारसम्बन्धः, एकदेशव्यापकत्वानभ्युपगमेन जात्यवच्छेदेन वन्ह्यभाववत्तानिश्चये ह्रदत्वव्यापकताया अभानादिति(१) चेन्न । असम्भवशब्देनाऽव्याप्तेरेवाभिहितत्वात् ।

---

(१) यत्तु ह्रदो वन्हिमानित्यनुमितिं प्रति स्वरूपता ह्रदत्वधर्मितावच्छेदककस्य वन्ह्यभाववान् ह्रद इति ज्ञानस्यैव प्रतिबन्धकतया तत्र ह्रदत्वनिष्ठनिरवच्छिन्ननिरूपकताकाधिकरणत्वघटितह्रदत्वव्यापकत्ववद्वन्ह्यभावप्रतियोगिकस्वरूपस्य भासमानतया तद्घटितस्यैव दोषत्वेन दोषतावच्छेदकगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकत्वस्य जातित्वादिना ह्रदत्वावगाहिज्ञाने विरहादुक्तविषयताकत्वस्याऽनतिरिक्तवृत्तित्वाऽक्षतेः लक्षणसमन्वयेनाऽसम्भवाभिधानमनुचितमिति ।

तन्न, यद्विषयतायाः प्रतिबन्धकतावच्छेदकत्वं तद्घटितस्यैव दोषत्वं, न तु प्रतिबन्धकज्ञानविषयमात्रघटितस्य, एवं च निरवच्छिन्नह्रदत्वनिष्ठनिरूपकत्वघटितसंसर्गावगाहिज्ञानत्वेन प्रतिबन्धकत्वे निरवच्छिन्नत्वादिनिष्ठसांसर्गिकविषयतायाः प्रतिबन्धकतावच्छेदकत्वापत्त्या गौरवात्, लाघवेन निरवच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकज्ञानत्वेनैव प्रतिबन्धकत्वं वाच्यम्, तथाच ह्रदत्वनिष्ठनिरूपकत्वघटितसंसर्गेण वन्ह्यभाववद्ह्रदस्यैव दोषतया दोषतावच्छेदकगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविषयताकत्वस्य जातिमान् वन्ह्यभाववानितिज्ञानेऽपि सत्त्वादसम्भवसम्भवात् ।

कालीशङ्करतर्कवागीशास्तु प्रकारीभूतवह्न्यभावत्वांशे प्रमेयत्वावगाहिह्रदो वह्नीयप्रमेयत्वविशिष्टवद्वानिति ज्ञानमादाय तत्रापि लक्षणगमनाऽसम्भवायुक्तमेवाऽसम्भवाभिधानम् । न च व्यापकतावच्छेदकभेदेन व्यापकताया भिन्नत्वेन वन्हीयप्रमेयत्वविशिष्टवद्वान् ह्रद इति ज्ञाने प्रमेयत्वविशिष्टवन्ह्यभावत्वरूपधर्मेणैव व्यापकत्वं भासते न तु केवलवन्ह्यभावत्वेन, तथाच नाऽव्याप्तिरिति वाच्यम् । वन्ह्यभावप्रतियोगिकस्वरूपत्वांशे प्रमेयत्वावगाहि—ह्रदो ह्रदत्वव्यापकप्रमेयवता वन्ह्यभाववानिति ज्ञानमादायाऽसम्भवसम्भवादिति प्राहुः ।

अन्ये तु व्यापकतारूपाऽभावगताऽभावत्वस्य प्रमेयत्वेन यत्र भानं ह्रदत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाऽप्रमेयविशिष्टवद्वन्ह्यभावप्रतियोगिकस्वरूपसम्बन्धेन वन्ह्यभाववान् ह्रद इत्याकारकज्ञानस्य वारणाऽसम्भवेनाऽसम्भव एवेति वदन्ति ।

वस्तुतस्तु अव्याप्तिशङ्कैव नावतरति अवच्छेदकावच्छेदनोद्देश्यविधेयभावस्थलीयप्रतीतौ उद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्मनिरूपितव्यापकत्वमेव संसर्गशरीरे भासते, न तु तदवच्छेदकावच्छिन्ननिरूपितव्यापकत्वमपि, तथासति अवच्छेदकावच्छेदेन विरोधिन्याः प्रतिबन्धकतावच्छेदकशरीरे धर्मितावच्छेदकावच्छिन्नत्वेन विशेष्यतायाः निवेशे प्रयोजनाभावः, तद्धर्मावच्छिन्नव्यापकत्वघटितप्रकारतावच्छेदकसंसर्गबुद्धेस्तद्धर्मावच्छिन्नविशेष्यकत्वनियमात् । "न च ह्रदत्वावच्छिन्नव्यापकत्वघटितप्रकारतावच्छेदकसंसर्गकबुद्धित्वस्य ह्रदवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववद्वन्ह्यभावप्रतियोगिकस्वरूपसम्बन्धेन वन्ह्यभाववानित्यादिज्ञाने सत्त्वेन तत्र ह्रदत्वावच्छिन्नविशेष्यताया असत्त्वात्कथं तद्धर्मावच्छिन्नविशेष्यकत्वनियम इत्युपपद्यत इति वाच्यम् । तद्धर्मावच्छिन्नमित्यनेन ह्रदत्ववद्ध्रदवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वनिवेशात्, तथा च ह्रदत्वनिष्ठप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतायास्तत्र निविष्टत्वान्नानुपपत्तिगन्धोऽपीति" । न चेष्टापत्तिः, अवच्छेदकावच्छेदेन बाधस्य प्रतिबन्धकतावच्छेदकविषयित्वानिरूपकधर्मितावच्छेदकघटिततया वन्ह्यभाववद्ध्रदत्वावच्छिन्नस्य दोषत्वानुपपत्तेः, एवं चोद्देश्यतावच्छेदकत्वपर्याप्त्यधिकरणघटितत्वस्य संसर्गत्वस्वीकारेऽवच्छेदकावच्छेदेन बाधनिश्चयप्रतिबन्धकतावच्छेदकशरीरे धर्मितावच्छेदकावच्छिन्नत्वेन धर्मिविशेष्यताया निवेश आवश्यकः, अन्यथा ह्रदो वन्हिमानित्यादौ जातिमान् वन्ह्यभाववानित्यादिनिश्चयान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावव्यभिचारात् तादृशनिश्चयस्यापि ह्रदत्वव्यापकवन्ह्यभावप्रतियोगिकस्वरूपसम्बन्धेन वन्ह्यभावप्रकारक-

वस्तुतस्तु अवच्छेदावच्छेदेन विशिष्टबुद्धौ विधेयसंसर्गे उद्देश्यतावच्छेदकव्यापकत्वमिव उद्देश्यतावच्छेदकप्रतियोगिकसंसर्गे विधेयव्याप्यत्वं तुल्यवित्तिवेद्यतया भासते, ह्रदो वन्ह्यभाववानित्यस्य वन्ह्यभावव्याप्यह्रदत्वप्रतियोगिकसमवायेन ह्रदत्वविशिष्टः शुद्धस्वरूपेण वन्ह्यभाववानित्यर्थः । एवं च ह्रदो वन्ह्यभाववान्, जातिमान् वन्ह्यभाववानिति ज्ञानद्वयस्याऽपि वन्ह्यभावाभाववदवृत्तित्वाऽवगाहित्वाऽविशेषाद्भ्रमत्वसम्भव इति ।

ननु लक्षणघटक"अनाहार्याऽप्रामाण्यज्ञानानास्कन्दित"निश्चये "पक्षतावच्छेदकांशे अन्याऽप्रकारकत्वं" निवेशनीयम्, तच्च पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽनिरूपकत्वम् । एवं च नाऽसम्भवः, जातिमान् वन्ह्यभाववानिति ज्ञाने पक्षतावच्छेदकीभूतह्रदत्व"जाति"निष्ठविशेष्यतानिरूपितजातित्वनिष्ठप्रकारतानिरूपकत्वस्यैव सत्वात्, इति चेत्तथाप्यव्याप्तिमाह—जलवान् वह्निमानित्यादिस्थलीयदोषाऽसंग्रहेणेति । जलवान् वन्हिमानित्यनुमितौ वन्ह्यभाववज्जलवद्रूपबाधेऽव्याप्तिभयेनेत्यर्थः । तथाच जलवान् वन्ह्यभाववानिति बाधनिश्चये पक्षतावच्छेदकीभूतजलनिष्ठविशेष्यतानिरूपितजलत्वनिष्ठप्रकारत्वाऽनिरूपकत्वविरहाद् वन्ह्यभाववज्जलवत्यव्याप्त्या पक्षतावच्छेदकांशे अन्याऽप्रकारकत्व(१)निवेशो न युक्त इति भावः ।

---

त्वात् । धर्मितावच्छेदकावच्छिन्नत्वेन विशेष्यतानिवेशे तु प्रतिबध्यज्ञानीयविशेष्यतावच्छेदकता यादृशी तादृश्या एव प्रतिबन्धकतावच्छेदकशरीरे निवेशनीयतया न व्यभिचारः, एवं च जातिमान् वन्ह्यभाववानितिज्ञानेऽप्यवच्छेदकावच्छेदेन बाधे या विषयतामादाय लक्षणं सङ्गमनीयं तस्याः सत्त्वात्कथं सामानाधिकरण्येन साध्यकस्थले लक्षणसमन्वय इति गोलोकन्यायरत्नमहोदयाः ।

(१) ननु किमिदं पक्षतावच्छेदकांशे अन्याऽप्रकारकत्वम्, यदि तावत्पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽनिरूपकत्वम्, तदाऽसम्भवः, ह्रदो वन्ह्यभाववानितिज्ञानस्यापि "धर्मिपारतन्त्र्येण ह्रदत्वे सामानाधिकरण्यसम्बन्धेन वन्ह्यभावस्य प्रकारतया" पक्षतावच्छेदकीभूतह्रदत्वनिष्ठविशेष्यतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नवन्ह्यभावनिष्ठप्रकारतानिरूपकत्वात् । न च प्रकारतायां सामानाधिकरण्यसम्बन्धानवच्छिन्नत्वं निवेश्यमिति वाच्यम् । सामानाधिकरण्यसम्बन्धेन जातित्वेन प्रमेयत्वेन वा ह्रदत्वावगाहिज्ञानस्य सङ्ग्रहापत्त्या तद्दोषतादवस्थ्यात् । न च तादृशप्रकारतायां प्रकारत्वाऽनवच्छिन्नत्वं निवेश्यम्, ह्रदो वन्ह्यभाववानितिज्ञानीयह्रदत्वनिष्ठविशेष्यतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नवन्ह्यभावनिष्ठप्रकारतायाः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नतया न तदसङ्ग्रहः । जातिमान् वन्ह्यभाववानिति ज्ञानस्य ह्रदत्वनिष्ठविशेष्यतानिरूपितजातित्वनिष्ठप्रकारतानिरूपकत्वात्तद्वारणं चेति वाच्यम् । तथापि प्रमेयत्वेन प्रकारतावच्छेदकावगाहिनो ह्रदो वन्हीयप्रमेयवद्वानितिज्ञानस्याऽवारणात् । न चाऽऽदिपदेन प्रकारतावच्छेदकांशे अन्याऽप्रकारकत्वं निवेशनीयमिति वाच्यम् । ह्रदो वन्ह्यभाववानितिज्ञानस्यापि असङ्ग्रहापातात्, प्रकारतावच्छेदकीभूतवन्ह्यंशे वन्हित्वप्रकारकत्वादिति चेन्नैवम् ।

विशेष्यताविशिष्टप्रकारत्वाऽनिरूपकत्वं तत् । वै० स्वनिरूपितत्व–स्वावच्छिन्नावच्छेदकतानिरूपकविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वोभयसम्बन्धेन, तथाच ह्रदत्वनिष्ठविशेष्यतानिरूपितवन्ह्यभावनिष्ठप्रकारतायाः तादृशप्रकारतानवच्छेद्यत्वविरहान्नोक्तानुपपत्तिः । जातिमान् वन्ह्यभाववानितिज्ञानं च जातिनिष्ठविशेष्यतानिरूपिता, अथ च तादृशविशेष्यत्वावच्छेद्यावच्छेदकतानिरूपकजात्यवच्छिन्नविशेष्यतानिरूपितवन्ह्यभावनिष्ठप्रकारत्वानवच्छिन्ना च या जातित्वनिष्ठप्रकारता तन्निरूपकमिति तदसङ्ग्रहः । एवं जलवान् वन्हिमानित्यत्र वन्ह्यभाववज्जलवद्रूपबाधेऽव्याप्तिरपि सङ्गच्छते जलवान् वन्ह्यभाववानिति ज्ञानस्य जलनिष्ठविशेष्यतानिरूपिता अथ च तादृशविशेष्यत्वावच्छेद्यावच्छेदकतानिरूपकजलावच्छिन्नविशेष्यतानिरूपितवन्ह्यभावनिष्ठप्रकारत्वानवच्छिन्ना च या प्रकारता तन्निरूपकत्वात् ।

**द्विस्थलीयदोषासंग्रहेण अविशेषितधर्म्मावच्छिन्नपक्षकादिस्थलीयस्य किञ्चिद्विशिष्टतद्घटितस्यासंग्रहेण च पक्षतावच्छेदकांशेऽन्याप्रकारक-**

ननु विशेष्यताविशिष्टप्रकारतायां पक्षतावच्छेदकतावच्छेदकत्वानवच्छिन्नत्वस्य, अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववत्त्वस्य वा निवेशे नोक्ताऽतिव्याप्तिरत आह–**अविशेषितधर्मावच्छिन्नपक्षकादीति**। अविशेषितो यो धर्मः "विशेष्यताशून्यो यो धर्मः"–तच्च ह्रदत्व–वन्हित्वादिः, तदवच्छिन्नपक्षकेत्यर्थः। **किञ्चिद्विशिष्टं**–ह्रदत्वत्वादिविशिष्टं ह्रदत्वादि। **तद्घटितस्य**–ह्रदत्वत्वविशिष्टह्रदत्वघटितस्य दोषस्य, ह्रदो वन्हिमान् ह्रदत्वादित्यादौ वन्ह्यभाववद्वृत्तिह्रदत्वस्य तत्र ह्रदत्वजातेरुल्लिख्यमानतया ह्रदत्वत्वेनैव भानात्। **असंग्रहेणेति**। वन्ह्यभाववद्वृत्तिह्रदत्वात्मकव्यभिचारेऽव्याप्त्येरित्यर्थः। वन्ह्यभाववद्वृत्तिह्रदत्वमिति व्यभिचारनिश्चये पक्षतावच्छेदकीभूतह्रदत्वनिष्ठाविशेष्यतानिरूपितप्रकारत्वानिरूपकत्वविरहादिति भावः। इदमुपलक्षणम्। ह्रदो जात्यभाववानित्यादौ जातिमद्ह्रदरूपबाधस्याऽप्यसङ्ग्रहो बोध्यः।

ननु लक्षणघटक "अनाहार्याऽप्रामाण्यज्ञानानास्कन्दित" निश्चये दोषाऽघटकपदार्थाऽविषयकत्वं निवेशनीयम्, एवं नोक्ताऽसम्भवः, जातिमान् वन्ह्यभाववानितिनिश्चये वन्ह्यभाववद्ह्रदात्मकदोषाऽघटकं यज्जातित्वं तद्विषयकत्वस्यैव सत्त्वात्। नापि वन्ह्यभाववज्जलवति वन्ह्यभाववद्वृत्तिह्रदत्वे वाऽव्याप्तिः, जलत्व–ह्रदत्वत्वादेः तादृशदोषघटकतया तादृशदोषाघ-

---

एतेन जातित्वेन वन्हित्वावगाहिजातिमद्वान् ह्रद इति ज्ञानस्य जातित्वेन वन्हित्वावगाहिधूमाभाववद्वृत्तिजातिमद्विषयकज्ञानस्य च वारणाय साध्यतावच्छेदकांशे अन्याऽप्रकारकत्वं, हेतुतावच्छेदकांशे अन्याऽप्रकारकत्वं च निवेशनीयमिति निरस्तम्। उक्तानुगतरूपेण निवेशादेव सर्वदोषवारणसम्भवात्।

मान्यास्तु अनुगतरूपेण निवेशे पर्वतपक्षकवन्ह्यभावसाध्यकस्थले वन्हिमत्पर्वतरूपबाधेऽव्याप्तिः, जातित्वेन वन्हित्वावगाहिजातिमद्वान्पर्वत इति निश्चयस्याऽवारणात्, तादृशज्ञाने वन्हित्वनिष्ठविशेष्यतानिरूपितत्वसत्त्वेऽपि वन्हित्वनिष्ठविशेष्यत्वावच्छिन्नावच्छेदकतानिरूपकविशेष्यत्वाप्रसिद्ध्या द्वितीयसम्बन्धाभावात्। अतः पक्षतावच्छेदकांशे इत्यादिपदग्राह्यसाध्यतावच्छेदकांशे अन्याऽप्रकारकत्वादिकमपि निवेश्यम्, तथा च पक्षतावच्छेदकनिष्ठविशेष्यताविशिष्टत्वादिरीत्या भिन्नरूपेणाऽनुगमो वाच्यः, न तूक्तरीत्या एकरूपेण।

अथ साध्यतावच्छेदकांशे अन्याऽप्रकारकत्वनिवेशेनाऽपि कथमुक्ताऽव्याप्तिवारणम्, वन्हित्वस्य साध्यतावच्छेदकत्वाभावात्। न च साध्यतावच्छेदकघटकत्वेन साध्यतावच्छेदकत्वमक्षतमेवेति वाच्यम्। एवमपि साध्यतावच्छेदकांशे अन्याप्रकारकत्वमित्यस्य स्वनिरूपितत्व–स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितप्रकारत्वाऽनवच्छिन्नत्वोभयसम्बन्धेन "साध्यतावच्छेदकनिष्ठ" विशेष्यताविशिष्टप्रकारत्वानिरूपकं वाच्यम्, अन्यथा तार्णवन्हिसाध्यकस्थले तार्णवन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्तिः, तार्णत्वस्य धार्मिपारतन्त्र्येण वन्हित्वेऽपि प्रकारतया यथाश्रुतसाध्यतावच्छेदकांशे अन्याप्रकारकत्वस्याकिञ्चित्करत्वात्। एवं च स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितप्रकारत्वाप्रसिद्ध्या जातित्वनिष्ठप्रकारतायाः साध्यतावच्छेदकनिष्ठविशेष्यताविशिष्टत्वाऽसम्भवादव्याप्तिर्दुर्वारैवेति चेन्न।

स्वावच्छेद्यावच्छेदकतानिरूपितविषयतानिरूपितविषयत्वानवच्छेद्यत्वस्यैव संसर्गत्वात्। स्वावच्छेद्यावच्छेदकतानिरूपितप्रकारतानिरूपितसांसर्गिकविषयत्वस्य प्रसिद्धत्वेन जातिमद्वान् पर्वत इति ज्ञानवारणसम्भवात्। न चाऽनुगतरूपेण निवेशपक्षेऽपि स एवास्तु संसर्ग इति वाच्यम्। वन्ह्यभाववान् ह्रद इति ज्ञानस्याव्यसङ्ग्रहापातात्, वन्हिनिष्ठविशेष्यत्वावच्छेद्याऽवच्छेदकतानिरूपितप्रकारतानिरूपितसांसर्गिकविषयत्वस्य प्रसिद्धत्वात्तदनवच्छिन्नत्वस्य वन्हित्वनिष्ठप्रकारतायां सत्त्वात्। तस्माद्विशिष्यैव निवेशः कार्य इति प्राहुः।

**त्वादिनिवेशस्याशक्यत्वात्, तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य ज्ञान-विशेषणत्वोपगमे सर्वमाकाशवदित्यादिस्थलीयबाधादौ तदघटकाप्रसिद्ध्या अव्याप्तिः ।**

**यद्यद्रूपावच्छिन्नस्य यस्य यस्य तादृशविशिष्टघटकता तत्तद्रूपावच्छि-**

टकपदार्थाऽविषयकत्वस्य तादृशाव्यभिचारनिश्चयाः सत्त्वादित्यत आह—**तादृशविशिष्टाऽघटकपदार्थाऽविषयकत्वस्येति** । **तादृशविशिष्टेति** । बाधादिरूपदोषेत्यर्थः । तत्त्वं च तादृशविशिष्टाऽविषयकप्रतीत्यविषयकत्वम् । **ज्ञानविशेषणत्वोपगमे इति** । **सर्वमाकाशवदित्यादिस्थलीयबाधादाविति** । सर्वमाकाशवदित्यनुमितौ आकाशाभाववत्सर्वात्मकबाधे इत्यर्थः । **तदघटकाऽप्रसिद्ध्येति** । आकाशाऽभाववत्सर्वरूपबाधाऽघटकाऽप्रसिद्धेरित्यर्थः । तथाच व्यासज्यवृत्तिधर्मप्रकारकबोधे तदाश्रययावद्धर्मिभाननियमेनाऽऽकाशाभाववत्सर्वत्वाश्रयाऽविषयकप्रतीतिविषयपदार्थाऽप्रसिद्ध्याऽव्याप्तिरिति भावः ।

अथात्र किं तावत्तादृशविशिष्टाऽघटकपदार्थाऽविषयकत्वम्, यदि तादृशविशिष्ट"यद्रूपावच्छिन्न"विषयकप्रतीतिविषयपदार्थाऽविषयकत्वं, तदा वन्ह्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयताश्रयवन्हि—"वन्हि"त्वादिपदार्थाविषयकत्वाभावादसम्भव इति चेन्न । तादृशविशिष्टनिरूपितविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकीभूतपदार्थाऽविषयकत्वस्य विवक्षितत्वात्(१) । अवच्छेदकत्वं च स्वनिष्ठनिरूपकतानिरूपितविषयित्वसम्बन्धावच्छिन्नं ग्राह्यम् । तथाच नाऽसम्भवः । वन्हि—वन्हित्व—अभावह्रदादीनां स्वनिरूपितविषयितासम्बन्धेन बाधज्ञाने सत्वात् । आकाशाभाववत्सर्वात्मकबाधेऽव्याप्तिरस्त्येव, सर्वेषां स्वनिरूपितविषयितासम्बन्धेन तादृशबाधज्ञाने सत्वात्(२) । न चाऽत्राऽवच्छिन्ननिरूपकताकविषयित्वसम्बन्धावच्छिन्नत्वस्याऽवच्छेदकतायां निवेशेनैव घटपटत्वादिपदार्थानां तत्प्रसिद्धिरिति वाच्यम् । यद्यद्रूपावच्छिन्नस्येत्याद्युत्तरकल्पेनैक्यप्रसङ्गात् ।

आकाशाभाववत्सर्वरूपबाधेऽव्याप्तिं वारयति—**यद्यद्रूपावच्छिन्नस्येति** । ह्रदो वन्हिमान् धूमादित्यादौ वन्ह्यभाववद्ध्रदे लक्षणसमन्वयः तथाहि—**यद्यद्रूपावच्छिन्नस्य यस्य यस्य**—वन्हित्वावच्छिन्नस्य वन्हेः—अभावत्वावच्छिन्नस्य अभावस्य—ह्रदत्वावच्छिन्नस्य ह्रदस्य, **तादृशविशिष्टघटकता**—वन्ह्यभाववद्ध्रदात्मकदोषघटकता, **तत्तद्रूपावच्छि-**

(१) संसर्गविधया अनुगमस्तु—प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वम् । वृत्तित्वं च रूपे स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन । वै० स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावत्त्व— स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकीभूतधर्मनिष्ठविषयिताशून्यत्वोभयसम्बन्धेन । भेदश्च विषयित्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताको ग्राह्यः ।

प्रकारमुद्रया निवेशस्तु—प्रकृतानुमितिवृत्त्यभावीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावद्रूपावच्छिन्नत्वम् । अभावप्रत्ययाकारश्च यत्किञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावद्वृत्तिभेदप्रतियोगितावच्छेदकतावत्पदार्थविषयिताशून्यत्वव्याक्ति तद्व्यक्तित्वेनोपादाय तद्व्यक्तिमद्यद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति ।

(२) केचित्तु तादृशविशिष्टविषयिताव्यापकविषयिताकान्यत्वं तादृशविशिष्टाघटकत्वम् । सर्वत्व—आकाशाभावाद्यवच्छिन्नविषयितायाः व्यापकतया तदवच्छिन्नान्यत्वाप्रसिद्धेरित्यर्थ इत्याहुः । तच्चिन्त्यम् ।

न्नतत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वं ज्ञाने निवेश्यम्। जातित्वाद्यवच्छिन्नस्य ह्रदत्वादेर्न वह्न्यभाववद्ह्रदत्वावच्छिन्नात्मकदोषघटकतेति जातित्वाद्यवच्छिन्नह्रदत्वादिविषयता तादृशविषयताभिन्नैव तच्छून्यत्वञ्च नोक्तज्ञानस्येति न दोषः, इत्यपि न सत्। तथासति ह्रदो जात्यभाववानित्यादिस्थलीयबाधादेरेव दुःसंग्रहत्वात्। जातित्वादिना ह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनो जातिमान् जातिमानित्यादिज्ञानस्य जातित्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयताया निरुक्तविषयताभिन्नत्वविरहेण तादृशज्ञानस्यानुमित्यप्रतिबन्धकस्य शून्यत्वान्तेनावारणात्।

---

न्ना या तत्तन्निष्ठाविषयता—वन्हित्वावच्छिन्ना वन्हिनिष्ठा विषयता—अभावत्वावच्छिन्ना अभावनिष्ठा विषयता—ह्रदत्वावच्छिन्ना ह्रदनिष्ठा विषयता तद्भिन्ना या किञ्चिदवच्छिन्नविषयता जातित्वावच्छिन्ना ह्रदत्वनिष्ठा विषयता तच्छून्यत्वस्य वन्ह्यभाववान् ह्रद इति निश्चये सत्त्वात्। असम्भवं वारयति—जातित्वाद्यवच्छिन्नस्येति। न वन्ह्यभाववद्ह्रदत्वावच्छिन्नात्मकदोषघटकतेति। तत्र ह्रदत्वस्य स्वरूपतो भानात्। तादृशविषयतेति। दोषघटकविषयतेत्यर्थः। तच्छून्यत्वं जातित्वावच्छिन्नह्रदत्वविषयताशून्यत्वम्। नोक्तज्ञानस्य—न जातिमान् वन्ह्यभाववानिति ज्ञानस्य। न दोषः—नाऽसम्भवः। नापि आकाशाभाववत्सर्वरूपबाधे ऽव्याप्तिः, आकाशत्वावच्छिन्नस्य आकाशस्य अभावत्वावच्छिन्नस्याऽभावस्य—सर्वत्वावच्छिन्नस्य सर्वस्य दोषघटकतया तत्तद्विषयताभिन्ना या किञ्चिदवच्छिन्नविषयता "घटत्वावच्छिन्नविषयता" तच्छून्यत्वस्य तादृशबाधनिश्चये सत्त्वात्। निराकरोति—इत्यपि न सदिति। तथासति—तादृशविषयताशून्यत्वनिवेशे सति। दुःसंग्रहत्वादिति। ह्रदो जात्यभाववानित्यनुमितौ जातिमद्ह्रदरूपबाधेऽव्याप्तेरित्यर्थः।

अव्याप्तिं योजयति—जातित्वादिनेत्यादिना। जातिमान् जातिमानित्यादि ज्ञानस्येति। निरूपितत्वं षष्ठ्यर्थः। अन्वयश्चाऽस्य विषयतायाम्। निरुक्तेति। यद्यद्रूपावच्छिन्नस्य यस्य यस्य विशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठेत्यर्थः। तादृशज्ञानस्य—जातिमान् जातिमानितिज्ञानस्य। शून्यत्वान्तेन—यद्यद्रूपावच्छिन्नस्य यस्य यस्य विशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वान्तेन, तथाच जातित्वावच्छिन्नह्रदत्वस्य जातिमद्ह्रदात्मकविशिष्टघटकतया जातित्वावच्छिन्नह्रदत्वविषयताभिन्ना जातित्वावच्छिन्नह्रदत्वविषयता नैव भवितुमर्हति, स्वस्मिन् स्वभेदाऽसत्त्वात्, किन्तु घटत्वाद्यवच्छिन्नविषयतैव तच्छून्यत्वस्य "ह्रदो जातिमानिति ज्ञाने इव" जातिमान् जातिमानितिज्ञानेऽपि सत्त्वात, तत्र च ह्रदो जातिमानित्यनुमितिप्रतिबन्धकताविरहेण जातिमद्ह्रदत्वावच्छिन्नविषयिताव्यापकत्वस्य प्रतिबन्धकतायां विरहाद्यद्रूपपदेन जातिमद्ह्रदत्वस्योपादातुमशक्यतयाऽव्याप्तिरिति परमार्थः।

अत्रेदं बोध्यम्। सर्वं गगनवद्वाच्यत्वादित्यादौ गगनाऽभाववत्सर्वरूपबाधेऽव्याप्तिः, सर्वस्यैव विशिष्टघटकतया तद्विषयताभिन्नविषयत्वाऽप्रसिद्धेरत उक्तम्—यद्रूपावच्छिन्न-

स्येति । तथाच सर्वत्वावच्छिन्नानामेव घटादीनां दोषघटकतया तद्रूपावच्छिन्नविषयताभेदस्य घटत्वावच्छिन्नविषयतायां सत्त्वान्नाव्याप्तिः । यद्यदिति वीप्साकरणान्नासम्भवः, अन्यथा भेदकूटादिवेशेन वन्हित्वावच्छिन्नवन्हिनिष्ठविषयताभेदस्य ह्रदत्वावच्छिन्नविषयतायां सत्त्वेन तत्कूटशून्यत्वस्य वन्ह्यभाववान् ह्रद इति निश्चये विरहादसम्भवः स्यात् ।

यस्य यस्येत्युपादानं किमर्थमिति चेद् ।

अत्र केचित्—वन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्तिः, अभावत्वेन ह्रदत्वावगाहि-अभाववान् वन्ह्यभाववानितिज्ञानाऽवारणात्, अभावत्वावच्छिन्नस्य विशिष्टघटकतया अभावत्वावच्छिन्नविषयताभिन्नाकिंचिदवच्छिन्नविषयताशून्यत्वस्य तज्ज्ञाने सत्त्वात् । यस्य यस्येत्युपादाने तु अभावत्वावच्छिन्नस्याभावस्य विशिष्टघटकत्वेऽपि अभावत्वेन ह्रदत्वस्य विशिष्टाऽघटकतया तद्रूपावच्छिन्नतन्निष्ठविषयतानिरूपकत्वात्तज्ज्ञानवारणम् ।

तथाच यद्रूपावच्छिन्नविषयिताव्यापकरूपविशिष्टविषयताभिन्न किञ्चिदवच्छिन्नविषयत्वाऽनिरूपकत्वं तदर्थः । व्यापकत्वं च रूपे स्वविशिष्टविषयतावत्त्वसम्बन्धेन । स्ववै० स्वावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन । रूपवै० उक्तोभयसम्बन्धेन । अभावत्वावच्छिन्नह्रदत्वविषयता च न तादृशरूपविशिष्टा, अभावत्वसामानाधिकरण्याभावादतो न तत्सङ्ग्रह इति वदन्ति(१) ।

वस्तुतो ह्रदः प्रमेयवह्नित्ववद्वा(२)नित्यादिस्थलीयबाधेऽव्याप्तिः, तत्र प्रमेयत्वेन ह्रदत्वावगाहिज्ञानाऽवारणादतो यस्य यस्येत्युपात्तम् , तथाच तादृशविशिष्टावच्छिन्नभेद(३)प्रतियोगितावच्छेदकताविशिष्टविषयताभिन्नविषयत्वानिरूपकत्वं तदर्थः, वै० स्वावच्छेदकावच्छिन्नत्व-स्वसामानाधिकरण्योभय(४)सं० । उक्तस्थले प्रमेयत्वावच्छिन्नह्रदत्वनिष्ठविषयता च न

(१) वदन्तीत्यस्वरसः ह्रदो वन्ह्यभाववानितिज्ञानीयविलक्षणविषयितायाः अभाववान् वन्ह्यभाववानितिज्ञानेऽसत्त्वात । अन्यथा तादृशज्ञानानन्तरं वन्ह्यभावव ह्रदं जानामीत्यनुव्यवसायापत्तेः ।

न च जातिमान् वन्ह्यभाववानिति ज्ञानानन्तरमपि तादृशानुव्यवसायाभावात्तत्रापि तादृशविषयिताया अभावप्रसङ्गः, तथाच तादृशज्ञानमादाय दोषकथनाऽसङ्गतिरिति वाच्यम् । जातिमान् वन्ह्यभाववानिति ज्ञाने जातित्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयिताया एवाऽधिकन्यूनवारकपर्याप्तिघटितायास्तत्र सत्त्वात जातित्वाऽघटितह्रदत्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयिताया वन्ह्यभाववद्ह्रदं जानामीति विशिष्टबुद्धिनियामिकायास्तत्राऽसत्त्वान्न जातिमान् वन्ह्यभाववानितिज्ञानानन्तरं तादृशानुव्यवसायप्रसङ्गः, इतरन्यूनवारकपर्याप्तिघटितनिरूपकताकविषयिताया एव विशिष्टबुद्धिनियामकत्वस्वीकारात्, इतरवारकपर्याप्त्यघटितह्रदत्वादिघटितसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताया जातिमान् वन्ह्यभाववानिति ज्ञानेऽपि सत्त्वात्तदादाय दोषाभिधानसङ्गतिः । अभाववान् वन्ह्यभाववानिति ज्ञाने अभावत्वस्य ह्रदत्वनिष्ठनिरूपकताव्यधिकरणतया तादृशज्ञानवृत्तिविषयितानिरूपकतावच्छेदकसमुदायेऽप्रवेशेनाऽभावत्वाघटितह्रदत्वादिघटितसमुदाय एव निरूपकतावच्छेदकतापर्याप्तेस्तादृशज्ञानावगाहितादृशानुव्यवसायापत्तिरतस्तादृशविषयिता तादृशज्ञाने नास्त्येवेति ।

(२) ननु प्रमेयवह्निसाध्यकस्थलपरित्यागे बीजाभाव इति चेन्न । गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन वन्ह्यभाववद्ह्रदस्य बाधत्वेनेष्टासिद्धेः । न च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमन्यत्र साधितमिति वाच्यम् । प्रमेयवन्ह्यभाववद्ह्रदस्य शुद्धवन्ह्यभाववद्ह्रदघटितत्वेन बाधत्वाऽसम्भवात्तत्परित्याग इति ध्येयम् ।

(३) भेदश्च दोषतावच्छेदकीभूतवन्ह्यभाववद्ह्रदत्वविशिष्टवान्नेति प्रतीतिसिद्धो ग्राह्यः ।

(४) अनुगमस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिता-

**मैवं, यद्रूपावच्छिन्नविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वस्य ज्ञाने विशेषणतया सामञ्जस्यात् । अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशेषितह्रदत्वादिघटिततत्तद्रूपावच्छिन्नविषयितात्वावच्छिन्नाभावस्य दोषात्मकविशिष्टविषयितासमानाधिकरणत्वात् तज्ज्ञानव्यावृत्तिरिति ।**

---

तादृशप्रतियोगितावच्छेदकताविशिष्टेति तदसङ्ग्रहः । अवच्छेदकतावैशिष्ट्यघटकावच्छेदकता च साक्षात्, अतो ह्रदत्वनिष्ठाऽवच्छेदकतायां प्रमेयत्वस्य परम्परयाऽवच्छेदकत्वेऽपि न क्षतिरिति ध्येयम् ।

वन्ह्यभाववद्ह्रदादिरूपविशिष्टशरीरे ह्रदत्वस्य स्वरूपत एव घटकतया घटकतावच्छेदकावच्छिन्नविषयताभिन्नह्रदत्वनिष्ठनिरवच्छिन्नविषयताशून्यत्वस्य तादृशविशिष्टरूपबाधज्ञानेऽसत्त्वात्तादृशबाधे व्याप्तिरतः **किञ्चिदवच्छिन्नेति** ।

अथैवमित्यादिनाऽऽशङ्क्य समाधत्ते **मैवमिति** । **तादृशविशिष्टेति** । दोषात्मकविशिष्टेत्यर्थः । दोषतावच्छेदकावच्छिन्नेति यावत् । **ज्ञाने**–तादृशनिश्चये, तथाचाऽव्यापकीभूतविषयिताशून्यत्वं निवेशनीयमिति भावः । असम्भवं निराकरोति—**अप्रतिबन्धकज्ञानेति** । जातिमान् वह्न्यभाववानितिज्ञानेत्यर्थः । **तद्रूपावच्छिन्नेति** । वह्न्यभाववज्जातिमत्त्वावच्छिन्नेत्यर्थः । **दोषात्मकेति** । वह्न्यभाववद्ह्रदात्मकेत्यर्थः । **तज्ज्ञानव्यावृत्तिः**–जातिमान् वह्न्यभाववानितिज्ञानव्यावृत्तिः, तथाच जातित्वावच्छिन्नह्रदत्वविषयितात्वं, वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयितात्वं वा वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकं भवति जातित्वावच्छिन्नह्रदत्वविषयिताशून्यत्वस्य वन्ह्यभाववज्जातिमत्त्वावच्छिन्नविषयिताशून्यत्वस्य वा जातिमान् वह्न्यभाववानिति निश्चये विरहात्तज्ज्ञानव्यावृत्तिः, तादृशविषयताशून्यत्वस्य वह्न्यभाववान् ह्रद इति निश्चये सत्त्वात्तादृशनिश्चयीयवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापकत्वस्य च प्रतिबन्धकतायां सत्त्वाद् वह्न्यभाववद्ह्रदे लक्षणसमन्वयः । ह्रदो जात्यभाववानित्यत्रापि जातिमज्जातिमत्त्वावच्छिन्नविषयितात्वं जातिमद्ह्रदत्वावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वस्य जातिमान् जातिमानितिनिश्चये विरहेण तज्ज्ञानवारणम्, किन्तु तद्रूपावच्छिन्नविषयिताशून्यजातिमान् ह्रद इति ज्ञानमादाय लक्षणसमन्वयो बोध्यः ।

अत्र यन्निष्ठविषयितात्वमित्युक्तौ सर्वमाकाशवदित्यादौ बाधविषयितासमानाधिकरणाभाव-

---

कपर्याप्तिकावच्छेदकताकानिरूपकतावत्त्वम् । प्रतिबन्धकतावृत्तित्वं च रूपे स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन । स्ववै० स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकानिरूपकताकविषयितावत्त्व–स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वावच्छिन्नभेदप्रतियोगितावच्छेदकताविशिष्टविषयिताभिन्नावच्छिन्नविषयिताशून्यत्वोभयसम्बन्धेन । अवच्छेदकतावै० स्वसामानाधिकरण्य–स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेनेति ।

प्रतियोगितावच्छेदकधर्मनिष्ठविषयितात्वस्याऽप्रसिद्ध्याऽव्याप्तिरतो यद्रूपावच्छिन्नेति । विषयितायां यत्वतत्त्वे निवेश्य यद्विषयितात्वं तादृशाभावप्रतियोगितावच्छेदकमित्युक्तौ वह्न्यभाववद्ध्रदेऽव्याप्तिः, वह्न्यभाववान् ह्रद इति ज्ञाने जातिमान् वह्न्यभाववानितिज्ञानीयविषयित्वाभावस्य, जातिमान् वह्न्यभाववानितिज्ञाने वह्न्यभाववान् ह्रद इति ज्ञानीयविषयित्वाभावस्य सत्त्वात्, अतो विषयितायां यद्रूपावच्छिन्नत्वं निवेशितम् । यद्रूपावच्छिन्नविषयित्वं तादृशविशिष्टविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वनिवेशे ह्रदो वह्न्यभाववानितिज्ञानीयविषयिताया अपि ह्रदरूपविषयभेदेन भिन्नत्वमते सर्वासामेव विषयितानां चालनीन्यायेन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतया तच्छून्यत्वस्य वह्न्यभाववान् ह्रद इति ज्ञाने विरहाद्वह्न्यभाववद्ध्रदेऽव्याप्तिरतो यद्रूपावच्छिन्नविषयितात्वे स्वावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिवेशः । एवं च कस्मिंश्चिदपि वह्न्यभाववान् ह्रद इति ज्ञाने वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्याभावस्याऽसत्त्वाद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वे स्वावच्छिन्नविषयकत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वविरहेण न वह्न्यभाववान् ह्रद इति ज्ञानेऽव्यापकीभूतविषयिताशून्यत्वहानिः ।

तथा च यद्रूपावच्छिन्नविषयितावत्त्वमित्यर्थः ।किंचिद्रूपावच्छिन्नविषयता नास्तीतिप्रतीतिसिद्धः "किंचिद्रूपनिष्ठावच्छेदकताभिन्नाऽवच्छिन्नतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकतानिरूपकावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नविषयितात्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताको"ऽभावः तत्प्रतियोगिविषयिता नास्तीति प्रतीतिसिद्धाभावं तद्व्यक्तित्वेनोपादाय तन्निष्ठावच्छेदकताभिन्ना सती यद्रूपावच्छिन्नविषयितानिष्ठावच्छेदकताभिन्ना तादृशनिश्चयत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकेत्यादिरीत्या निश्चयनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाऽभावः प्रतिबन्धकतायां निवेशनीय इति ।

अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिधर्मवत्त्वम् । वृत्तित्वं च स्वविशिष्टनिश्चयत्वव्यापकत्वसंबन्धेन, स्ववै० स्वावच्छिन्नविषयकत्वस्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकधर्मावच्छिन्नविषयिताशून्यत्वोभयसंबन्धेन, प्रतियोगितावच्छेदकता च स्वावच्छिन्नविषयित्वसंबन्धावच्छिन्ना ग्राह्या ।

प्रकारविधया अनुगमस्तु–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वे सति तादृशनिश्चयनिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानि-

रूपिताऽवच्छिन्नस्वसंबन्धावच्छिन्नावच्छेदकतावद्यद्रूपं तद्रूपवत्त्वम् । अभावश्च यद्रूपावच्छिन्नविषयित्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो ग्राह्यः ।

अथैवमपि ह्रदो जात्यभाववानित्यादौ जातित्वादिना ह्रदत्वावगाहि–जातिमान् जातिमानितिज्ञानस्य कथं व्यावृत्तिः ? जातित्वावच्छिन्नविषयितायाः जातिमत्त्वावच्छिन्नविषयितायाश्च जातिमद्ह्रदरूपविशिष्टविषयकत्वाऽव्यापकत्वाभावात्, जातिमज्जातिमत्त्वावच्छिन्नविषयताया अव्यापकत्वोक्तिरपि न साधीयसी, जातिमज्जातिमत्त्वस्य जातिमत्त्वाऽनतिरेकात्, न ह्येकस्य द्विरुक्तिमात्रेण वा वस्तु भिद्यते(१) इति चेन्न ।

यद्रूपावच्छिन्नविषयितात्वमित्यस्य यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकताकविषयितात्वं यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकताकविषयिताकशून्यत्वमित्यर्थकरणेनाऽदोषात् ।

अनुगमस्तु–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकतावत्त्वम्। वृत्तित्वं च रूपे स्वविशिष्टाऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वव्यापकत्वसंबन्धेन, निश्चये रूपवै० स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयितावत्त्व–स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयितासमानाधिकरणतद्व्यक्तिभिन्ननिरूपितप्रतियोगितावच्छेदकतावद्विषयिताशून्यत्वोभयसंबन्धेन(२), अत्र तद्व्यक्तिश्च यत्किंचिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयित्वावच्छिन्नप्रतियोगिताकत्वरूपा ।

---

(१) एवं पर्याप्त्यनिवेशे ह्रदपक्षकप्रमेयवह्निसाध्यकबाधेऽव्याप्तिः, प्रमेयत्वेन ह्रदत्वावगाहिज्ञानाऽवारणात् ।

(२) तथाच प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्त्वम् । धर्मे प्रतिबन्धकतावृत्तित्वं च स्वविशिष्टनिश्चयत्वव्यापकत्वसं० । निश्चये स्ववै० स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितावत्त्व–तादृशविषयित्वसमानाधिकरणाभावीयधर्मत्वसमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्न–अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकानुयोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकपर्याप्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वनिरूपकप्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकावच्छेदकत्वनिष्ठावच्छेदकताभिन्नविषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयितात्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितपर्याप्तिनिष्ठावच्छेदकतानिरूपितानुयोगितानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताऽवच्छेदकतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकाऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकानुयोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकपर्याप्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकावच्छेदकत्वनिष्ठावच्छेदकताभिन्नविषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपक ( एवं धर्मत्वसमानाधिकरणाऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकावच्छेदकतात्वनिष्ठा-

ननु यद्रूपावच्छिन्नज्ञाने "संशयान्यत्वरूप"निश्चयत्वनिवेशो व्यर्थः, अव्यापकीभूतविषयिताशून्यत्वनिवेशनेनैव संशयस्य वारणात् ह्रदो वन्हिमान्नवेति संशयीयसंयोगसंबन्धावच्छिन्नवन्हित्वावच्छिन्नविषयितायाः वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाऽव्यापकत्वादिति चेन्न ।

यत्र भाविज्ञानमप्रमेति ज्ञानं ततो ह्रदो वन्ह्यभाववानिति ज्ञानं ततः पूर्वज्ञानमप्रमेति ज्ञानं तत्राऽप्रामाण्यज्ञानद्वयसंपुटितस्य वन्ह्यभाववान् ह्रद इति निश्चयस्याऽव्यापकीभूतविषयिताशून्यत्वेन तत्र प्रतिबन्धकताविरहेण चाऽसंभवभियाऽप्रामाण्यज्ञानानास्कंदितत्वस्य निवेशनीयतया तत्तदप्रामाण्यज्ञानाभावकूटनिवेशे गौरवम्, अतो ज्ञानेऽप्रामाण्यविशिष्टान्यत्वं निवेशनीयम्, वै०स्वाभाववत्त्व—स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयितावत्त्वोभयसंबन्धेन, स्वाभाववत्ता च स्वरूपविशेष्यत्वान्यतरसंबन्धेन, अत्राऽभावपदेनाऽऽहार्यत्वाभाव—अप्रामाण्यज्ञानाभाव—संशयत्वाभावानुपादायैवाऽऽहार्यादिज्ञानानां व्यावृत्तिः । एवं चाऽऽनाहार्यत्वनिश्चयत्वयोर्न पृथक् निवेश इति ध्येयम् ।

ननु यादृशसमुदायत्ववृत्तिनिरूपकताकविषयित्वं (१)प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टवत्त्वं हेत्वाभासत्वमिति पूर्वमुक्तम् । तत्र यादृशसमुदायत्वपदेन वह्न्यभाववद्ह्रदत्वगत 'वह्न्यभाववान् ह्रद इति ज्ञानीयविषयतारूप'विलक्षणसमुदायत्वं गृह्यते, तद्वृत्तिनिरूपकताकविषयित्वं वह्न्यभाववान् ह्रद इति ज्ञाने एव, वृत्तित्वं च स्वनिरूपिताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । निरूपितत्वं च साक्षात्परम्परासाधारणं ग्राह्यम् । तेन ह्रदनिष्ठनिरूपकतानिरूपितत्वस्य वह्नित्वाऽभावत्वादिनिष्ठावच्छेदकतायामपि सत्त्वनिर्वाहः । एवं चाऽव्यापकीभूतविषयिताशून्यत्वनिवेशो व्यर्थः, वह्न्यभाववद्ह्रदत्वगतसमुदायत्ववृत्तिनिरूपकताकविषयित-

---

वच्छेदकतानिरूपकानुयोगित्वनिष्ठावच्छेदकतानिरूपकपर्याप्तिनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकाविषयितात्वनिष्ठावच्छेदकतानिरूपक ) विषयित्वनिष्ठप्रतियोगिताकाभाववत्त्वोभयसम्बन्धेन, तादृशविषयित्वसमानाधिकरणाभावश्च धर्मावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताक"निरूपकताक"विषयित्वं नास्तीति प्रतीतिसिद्धः सामान्याभावः । द्वितीयाभावश्च तादृशधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक"निरूपकताक" विषयिता नास्तीतिप्रतीतिसिद्धः सामान्याभावः । तेन वन्ह्यभाववद्ह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक"निरूपकताक"विषयित्वाव्यापकीभूतानां वह्न्यभाववद्ह्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक"निरूपकताक"तज्ज्ञानवृत्तित्वविशिष्टविषयित्व—तत्क्षणवृत्तित्वविशिष्टतादृशसमुदायत्वनिष्ठावच्छेदकत्वादिघटितविषयित्व—वह्न्यभाववज्जातिमत्त्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक"निरूपकताक"तज्ज्ञानवृत्तित्वविशिष्टविषयित्व तत्क्षणवृत्तित्वविशिष्टतादृशसमुदायत्वनिष्ठावच्छेदकत्वादिघटितविषयित्वानां अभावस्य ( तत्तदभावस्य ) जातिमान् वह्न्यभाववानिति निश्चये सत्त्वेऽपि नाऽसम्भवः । यद्यपि यद्रूपावच्छिन्नविषयितासमानाधिकरणाः स्वावच्छिन्नविषयित्वाभावाः तादृशाभावकूटवत्त्वविवक्षणेनाऽपि जातिमान् वह्न्यभाववानितिज्ञानवारणं सम्भवति, तथापि अव्यापकीभूतविषयिता"सामान्य"शून्यत्वनिवेशे लाघवमिति तदुपेक्षितमिति ध्येयम् ।

( १ ) अथैतादृशविलक्षणसमुदायत्ववृत्तिनिरूपकताकविषयितास्वीकारे मानाभावः, वन्ह्यभाववान् ह्रद इति ज्ञाने वन्हित्वादिप्रत्येकधर्मावच्छिन्ननिरूपकताकविषयित्वस्वीकारेणैवोपपत्तेः । न च वन्ह्यभाववद्ह्रदमहं

याः जातिमान् वह्न्यभाववानिति ज्ञानेऽसत्त्वादिति चेन्न ।

---

जानामीत्यनुव्यवसायम्प्रति वन्ह्यभाववान् ह्रद इति यथार्थज्ञानस्य कार्य्यकारणभावानुरोधादेव तत्स्वीकारः, कार्यकारणभावश्च रूपवृत्तिविषयिताशालिज्ञानप्रत्यक्षत्वावच्छिन्नम्प्रति रूपवृत्तिविषयिताशालिज्ञानत्वेन हेतुत्वम्, उभयत्र रूपवृत्तित्वं च स्वनिरूपितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, कार्य्यतावच्छेदकसम्बन्धो विषयता, कारणतावच्छेदकसम्बन्धस्तादात्म्यमिति वाच्यम् । तादृशानुव्यवसायम्प्रति वन्ह्यभाववान् ह्रद इति यथार्थज्ञानस्य वन्हित्वावच्छिन्नवन्हिनिष्ठवह्नितरावृत्तिविषयतानिरूपितअभावनिष्ठविषयतानिरूपितह्रदत्वावच्छिन्नह्रदेतरावृत्तिह्रदनिष्ठविषयताशालिज्ञानत्वेन कारणताकल्पनात्, वन्हित्वावच्छिन्नत्वपदेन घटत्वादिना वन्ह्यवगाहि-घटाभाववान् ह्रद इति ज्ञानोत्तरं न तादृशानुव्यवसायः । वह्नीतरावृत्तित्वपदेन वन्हित्वेन वन्हिघटोभयावगाहिज्ञानव्युदासः, वन्हिनिष्ठेति फलितकथनम् । एवञ्च रूपवृत्तिविषयिताशालिज्ञानत्वेन कारणत्वानुपपत्तिरिति चेन्न ।

वन्ह्यभाववद्ध्रदमहं जानामीतिविशिष्टविषयकानुव्यवसायप्रामाण्यानुरोधाय तत्स्वीकारात् । तथाहि—वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिज्ञानवानहमित्याकारकानुव्यवसाये यदि भ्रमप्रमासाधारणवन्हित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकत्वं ज्ञानांशे भासते तदा वन्ह्यभावत्वेन घटावगाहिभ्रमानन्तरं वन्ह्यभाववद्ध्रदमहं नाज्ञासिषमिति बाधनिश्चयस्य को विषयः ? तज्ज्ञाने निरूप्यनिरूपकभावापन्नविषयित्वं तु अस्त्येव, अपि तु विलक्षणविषयिताया एवेत्यवश्यं स्वीकार्य्यम् , एवं च वन्ह्यभाववान् ह्रद इति प्रमात्मकज्ञाने विलक्षणविषयिता अवश्यमभ्युपेया, सा च यदि ह्रदत्वविशिष्टनिरूपिता तदा ह्रद इति ज्ञानानन्तरमपि तादृशानुव्यवसायः स्यात्, अतो ह्रदत्वावच्छिन्ननिरूपितविशेष्यितायां वन्ह्यभाववद्ध्रदत्वावच्छिन्नत्वं स्वीकार्य्यम् ।

केचित्तु तादृशविलक्षणविषयित्वास्वीकारे वह्न्यभाववद्ध्रदविषयकं ज्ञानं वह्न्यभाववद्ध्रदवदिति प्रतीत्यनुपपत्तेः, न हि तादृशप्रतीतिर्विषयतासम्बन्धेनोपपादयितुं शक्या, अन्यधर्मावच्छिन्नस्य संसर्गो नान्यधर्मावच्छिन्नस्येति नियमात् । वन्हित्वादिगतवृत्तिविषयितानां प्रत्येकवन्हित्वावच्छिन्नस्य सम्बन्धो न तु वह्न्यभाववद्ध्रदत्वावच्छिन्नस्य, अतस्तादृशज्ञाने अवच्छेदकताप्रकारताविशेष्यताभिन्ना वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयिता विलक्षणा स्वीकर्त्तव्येत्याहुः ।

न च जातिमान् वन्ह्यभाववानितिज्ञानानन्तरमपि तादृशानुव्यवसायाभावात्तत्रापि तादृशविषयिताया अभावप्रसङ्गः, तथाच तादृशज्ञानमादाय दोषकथनासङ्गतिरिति वाच्यम् । जातिमान् वन्ह्यभाववानितिज्ञाने जातित्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयिताया एवाधिकन्यूनवारकपर्य्याप्तिघटितायास्तत्र सत्त्वात्, जातित्वाघटितह्रदत्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयिताया वन्ह्यभाववद्ध्रदं जानामीतिविशिष्टबुद्धिनियामिकायास्तत्रासत्त्वान्न जातिमान् वन्ह्यभाववानिति ज्ञानान्तरं तादृशानुव्यवसायप्रसङ्गः, अधिकन्यूनवारकपर्य्याप्तिघटितनिरूपकताकविषयिताया एव विशिष्टबुद्धिनियामकत्वस्वीकारात् । अधिकवारकपर्य्याप्त्यघटितसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयिताया अपि जातिमान् वन्ह्यभाववानितिज्ञानेऽपि सत्त्वात्तदादाय दोषाभिधानसङ्गतिः प्रकृते उक्तातिव्याप्तिवारणायेतरवारकपर्य्याप्तिनिवेशात् । न चैवं वन्ह्यभाववद्ध्रदात्मकबाधासङ्गहः, तादृशविलक्षणविषयितायाः इतरवारकपर्य्याप्त्यघटिताया अभाववान् वन्ह्यभाववानितिज्ञानेऽपि सत्त्वात् तत्र च प्रतिबन्धकताविरहादिति वाच्यम् । अभाववान् वन्ह्यभाववानितिज्ञाने अभावत्वस्य ह्रदत्वनिष्ठनिरूपकताव्यधिकरणतया तादृशज्ञानवृत्तिविषयितानिरूपकतावच्छेदकसमुदायेऽभावत्वस्याप्रवेशेनाभावत्वाघटितह्रदत्वादिघटितसमुदाय एव निरूपकतावच्छेदकतापर्य्याप्तेस्तादृशज्ञानावगाहितादृशानुव्यवसायापत्तिरतस्तादृशविषयिता तादृशज्ञाने नास्त्येवेति नासङ्गह इति ध्येयम् ।

अथ विषयितायाः प्रतिबन्धकतावच्छेदकत्वे किम्मानमिति चेन्न ।

विनिगमनाविरहेण विषयितायां तत्स्वीकारात् । न च कथं विनिगमनाविरहः, विषयतायाः स्वरूपेण

विषयवृत्तित्वेन प्रतिबन्धकताव्यधिकरणतया कथमवच्छेदकत्वमिति वाच्यम् । निरूपकतासम्बन्धेन तत्समानाधिकरणत्वात् ।

स्वनिरूपितविषयितावत्त्वसम्बन्धेनेत्यपि केचित् । न च विषयतायामवच्छेदकत्वस्वीकारे ह्रदो वह्निमानिति बुद्धिम्प्रति साधच्छिन्नावच्छेदकताकप्रतियोगिताकवह्न्यभाववान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वाभावसम्पत्तये वह्नित्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वनिवेशः सुलभः, एवं च वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितेत्यादिक्रमेण प्रतिबन्धकता वाच्या, विषयितायाः प्रतिबन्धकतावच्छेदकत्वे केन रूपेण प्रतिबध्यप्रतिबन्धकभाव इति वाच्यम् । यादृशविषयतयोर्निरूप्यनिरूपकभावः तादृशविषयतानिरूपितविषयिनयोरवच्छेद्यावच्छेदकभावनियमेन यन्निरूपितत्वं यस्य तदाश्रयनिरूपितत्वमपि तस्येति नियमात् विषयनिरूपितत्वस्यापि विषयितायां लाभेन वह्न्यभाववान् ह्रद इति ज्ञानस्य निरवच्छिन्नसमवायत्वनिरूपितावच्छेदकत्वावच्छिन्नसंसर्गित्वावच्छिन्नवह्नित्वनिरूपितावच्छेदकत्वावच्छिन्नसंयोगत्वनिरूपितावच्छेदकत्वावच्छिन्नसंसर्गित्वावच्छिन्नप्रकारित्वावच्छिन्ननिरवच्छिन्नाभावत्वनिरूपितावच्छेदकत्वावच्छिन्नविशेष्यत्वावच्छिन्नायाः स्वरूपत्वनिरूपितनिरवच्छिन्नावच्छेदकत्वावच्छिन्नावच्छेदकत्वावच्छिन्नसंसर्गित्वावच्छिन्नाभावत्वनिरूपिताऽवच्छेदकत्वावच्छिन्नप्रकारित्वावच्छिन्नह्रदत्वनिरूपितनिरवच्छिन्नावच्छेदकत्वावच्छिन्नाविशेष्यितावज्ज्ञानत्वेन प्रतिबन्धकताकल्पनासौलभ्यात् । अत्र निरवच्छिन्नत्वं अवच्छेदकत्वानवच्छिन्नत्वं, तच्च स्वावच्छिन्नत्वस्वभिन्नावच्छेदकत्वावच्छिन्नत्वोभयसम्बन्धेन अवच्छेदकताविशिष्टान्यत्वम्, तथा च वह्नित्वत्वनिरूपितावच्छेदकत्वावच्छिन्नत्वस्य वह्निनिरूपितावच्छेदकत्वावच्छिन्नत्वस्य च वह्नित्वनिरूपितावच्छेदकतायां सत्त्वेऽपि न क्षतिः । एवं विषयतायां निरवच्छिन्नत्वं अवच्छेदकताविशिष्टान्यत्वम् वै० स्वनिरूपितत्व–स्वभिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन तथाच वह्नित्वत्वनिष्ठावच्छेदकतानिरूपितत्वस्य वह्निनिष्ठा या प्रतियोगित्वसम्बन्धावच्छिन्ना प्रकारतावच्छेदकता तन्निरूपितत्वस्य च वह्नित्वनिष्ठावच्छेदकत्वाख्यविषयतायां सत्त्वेऽपि न क्षतिरिति । वह्निमानिति बुद्धिं प्रति वह्नित्ववदभाववानिति निश्चयस्यनाविरोधित्वम् तथाच विषयितयोः परस्परनिरूप्यनिरूपकभावः । अथवा तादृशविलक्षणविषयितायां प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षैव, एवं विषयितायाः परस्परावच्छेद्यावच्छेदकभावस्वीकारेऽपि क्षत्यभावः। वह्नित्वनिष्ठावच्छेदकतानिरूपितत्वस्य वह्नित्वनिरूपितावच्छेदकत्वावच्छिन्नत्वस्य च तुल्यतया लाघवं समानम् । न च विषयतायाः प्रतिबन्धकतावच्छेदकत्वे तत्कुक्षौ संशयान्यत्वस्य निवेशे गौरवम्, संशये प्रतिबन्धकतावारणाय च ह्रदत्वावच्छिन्नविशेष्यतायां वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वनिवेशे गौरवात्, सामान्यतो विशेष्यतानवच्छिन्नत्वस्य न निवेशः, तथाहि वह्न्यभाववान् ह्रद इति ज्ञानस्यापि संग्रहानुपपत्तिः, अभावप्रकारतानिरूपितह्रदनिष्ठविशेष्यतायाः ह्रदत्वप्रकारतानिरूपितनिरवच्छिन्नह्रदनिष्ठविशेष्यत्वावच्छिन्नत्वात्, विषयितायाः प्रतिबन्धकतावच्छेदकत्वे संशयवारणन्तु अभावत्वावच्छिन्नप्रकारितायां प्रकारित्वानवच्छिन्नत्वविशेषणेनैव, संशयसमुच्चययोर्वैजात्यानुरोधेन कोटिताख्यविषयतानिरूपितविषयितायाः अवच्छेद्यावच्छेदकभावस्वीकारादिति वाच्यम् । संशयसमुच्चययोर्वैजात्यानुरोधेन विषयतायाः प्रतिबन्धकतावच्छेदकतावादिना कोटितानिरूपितह्रदत्वावच्छिन्नविशेष्यताद्वयनिरूपितह्रदत्वनिष्ठावच्छेदकताद्वयोरवच्छेद्यावच्छेदकभावं स्वीकृत्य तादृशावच्छेदकतायां अवच्छेदकत्वानवच्छिन्नत्वं देयमिति कल्पद्वययोः साम्यं स्पष्टम् । एवमनाहार्यत्वादीनामपि निवेशः समान इति विनिगमनाविरहेण विषयताऽपि प्रतिबन्धकतावच्छेदिकाभवत्येवेति । परन्तु वन्ह्यभाववान् ह्रद इति ज्ञाने ह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यिताव्यक्तावेव तादृशज्ञानावच्छेदेन विलक्षणनिरूपकतानिरूपितत्वं स्वीकार्यम्, तेन वह्नित्वादिना घटावगाहिवन्ह्यभाववान् ह्रद इति भ्रमात्मकज्ञाने तादृशविशेष्यितासत्त्वेन तादृशज्ञानानन्तरं वन्ह्यभाववद्ह्रदमहं जानामीत्यनुव्यवसायवारणाय तादृशज्ञानावच्छेदेन विलक्षणनिरूपकतानिरूपितत्वास्वीकारात् । यदि विषयतायाःविलक्षणनिरूपकतानिरूपितत्वस्वीकारः, तदा तादृशविषयतायाः स्वनिरूपकत्वसम्बन्धेन तादृशज्ञाने सत्त्वेऽपि तादृशसम्बन्धस्य वृत्त्यनियामकतयाऽधिकरणाऽप्रसिद्ध्या तादृशज्ञानस्य तादृशविषयताया अवच्छेदकत्वानुपपत्तिः, तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वनियमादिति तत्त्वम् ।

यत्र घट इत्याकारकं ज्ञानं वह्न्यभाववद्ह्रदविषयकमेव भवति, यदा च वह्न्यभाववद्-ह्रदं नावगाहते तदा पटकालीनो घट इति पटकालीनत्वावगाह्येव भवति(१) तत्र घटेऽति-व्याप्तिः, घटत्वगतैकत्ववृत्तिनिरूपकताकविषयितायाः समूहालम्बननिश्चये एव सत्त्वेन तत्र च प्रतिबन्धकतासत्त्वात्, अत इतरत्वारकपर्याप्तिमनिवेश्य यादृशसमुदायवृत्तिसमुदायत्वावच्छि-न्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरि-क्तवृत्ति तादृशसमुदायत्वविशिष्टवत्त्वमित्येव विवक्षणीयम्, तथाच घटे नातिव्याप्तिः, घटत्वग-तैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयितायाः पटकालीनो घट इति निश्चयेऽपि सत्त्वेन तत्र च प्रतिबन्धकताविरहात्, एवं च तुल्ययुक्त्या जातिमान् वन्ह्य-भाववानिति ज्ञानस्यापि तादृशतयाऽसम्भववारणायाऽव्यापकीभूतविषयताशून्यत्वनिवेशसार्थ-क्यमिति ध्येयम्।

नन्वेवमपि यत्र बाधविषयकं ज्ञानं घटविषयकं भवति, यदा घटाविषयकं भवति तदा-ऽप्रामाण्यज्ञानानास्कन्दितमेव भवति, तत्र निरुक्ताऽव्यापकविषयिताशून्याऽप्रामाण्यज्ञानानास्क-न्दितबाधविषयकनिश्चयाऽप्रसिद्ध्याऽव्याप्तिः। न च निरुक्ताऽव्यापकविषयताशून्यत्वं ज्ञानेऽनि-वेश्य निरुक्ताव्यापकविषयिताशून्यज्ञानीयत्वमुपलक्षणविधया यद्रूपावच्छिन्नविषयत्वे निवेश्यम् तथाच नोक्ताऽव्याप्तिरिति वाच्यम्। एवमपि यत्र बाधविषयकं ज्ञानं कदाचिद् घटविषयकं कदाचिच्च पटविषयकमेव भवति तत्राऽव्याप्तेर्दुर्वारत्वादिति चेन्न।

किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य ज्ञानविशेषणतयैव "किञ्चिद्रूपपदेन बाधकालीनघटत्वमादाय" उक्ताव्याप्तिवारणात्, तथाच यद्रूपावच्छिन्नविषयितात्वं किञ्चिद्रूपा-वच्छिन्नविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वं ज्ञानविशेषणम्। घटकालीनबाधेऽतिव्याप्तिस्तु विवक्षणीयावैशिष्ट्यान्तराऽघटितत्वनिवेशेनैव वारणीया, घटकालीनबाधत्वावच्छिन्नाविषयक "पटकालीनबाधत्वावच्छिन्नविषयक"प्रतीति-विषयतावच्छेदकबाधत्वघटितत्वात्।

अथ किंचिद्रूपावच्छिन्नविषयितासमानाधिकरणाभावव‌द्यद्रूपावच्छिन्नविषयिताशालिनि-श्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्यैव प्रतिबन्धकतायां निवेशो-नोपपत्तौ अव्यापकत्वघटकाऽभावप्रतियोगितावच्छेदकयद्रूपावच्छिन्नविषयितात्वावच्छिन्नाभाव-स्य प्रवेशो व्यर्थः, जातित्वावच्छिन्नविषयित्वाभावस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितास-मानाधिकरणतया तदभाववन्निश्चयवृत्तिभेद इत्यादिरूपाभावमेकैकमुपादाय लक्षणसमन्वया-दिति चेन्न।

किंचिद्रूपावच्छिन्नविषयितासमानाधिकरणाभावस्य यत्किंचित्त्वेन प्रवेशः उत यावत्त्वेन? नाद्यः, जातित्वावच्छिन्नविषयित्वाभावरूपस्यैकस्याभावाधिकरणे प्रमेयत्वेन ह्रदत्वावगाहिज्ञाने तादृशप्रतिबन्धकताया असत्त्वादसंभवतादवस्थ्यात्। नान्त्यः, तादृशविषयितासमानाधिकर-णाभावकूटस्याधिकरणं वन्ह्यभाववान् ह्रद इति ज्ञानमपि न भवितुमर्हति चालनीन्यायेन वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितासमानाधिकरणस्य तत्तज्ज्ञाननिष्ठतत्तद्व्यक्तित्वावच्छिन्ना-

(१) जगदीशेनैतादृशाङ्कुरविशेषो न स्वीकृतोतोऽव्यापकीभूतविषयिताशून्यत्वं न निवेशितमिति तत्त्वम्।

भावस्य कूटान्तर्गततया तदनधिकरणत्वात्, असम्भवतादवस्थ्यादिति ध्येयम् ।

अथाऽव्यापकीभूतविषयिताशून्यत्वनिवेशेऽपि अभावत्वेन ह्रदत्वावगाहि अभाववान् वह्न्यभाववानित्यादिज्ञानवारणमशक्यमेव, अभावत्वावच्छिन्नविषयितात्वस्य वह्न्यभाववद्ह्रदत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगिताऽनवच्छेदकत्वेन यद्रूपपदेनाऽभावत्वस्य धर्तुमशक्यत्वात् । वह्न्यभाववदभाववत्त्वस्य धर्तुं शक्यत्वेऽपि तद्रूपावच्छिन्नविषयिताशून्यत्वस्याऽभावत्वेन ह्रदत्वावगाहिनिरुक्तभ्रमेपि सत्त्वा(१)दिति चेन्न ।

---

(१) न च यद्रूपावच्छिन्नावच्छेदकताकविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नावच्छेदकताकविषयिताशून्यत्वस्य ज्ञानविशेषणत्वेनाऽदोषात्, तथाहि—ह्रदो वह्न्यभाववानिति ज्ञानेऽभावत्वावच्छिन्नविषयितासामान्याभावस्याऽसत्त्वेऽपि अभावत्वावच्छिन्नावच्छेदकताकविषयितासामान्याभावस्य सत्त्वादभाववान् वह्न्यभाववानिति ज्ञाने चाऽसत्त्वाद् वह्न्यभाववद्ह्रदे नाव्याप्तिरिति वाच्यम् । एवमपि जातिमद्वान् जातित्ववानित्यादौ जातित्वाभाववज्जातिमद्रूपबाधेऽव्याप्तिः, ह्रदत्वादिरूपजात्यवच्छिन्नाऽवच्छेदकताकविषयितायाश्चालनीन्यायेन जातित्वावच्छिन्नजातिमदवच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेन तादृशविषयिताशून्यत्वस्य जातिमद्वान् जातित्वाभाववानिति ज्ञाने विरहेणाऽव्यापकीभूतविषयिताशून्यत्वविरहात् ।

न च यद्रूपावच्छिन्नावच्छेदकताकविषयितानिरूपितयद्रूपावच्छिन्नविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नावच्छेदकताकविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं निवेशनीयमिति वाच्यम् ।

एवं सति घटो द्रव्यभिन्न इत्यत्र द्रव्यत्ववद्घटरूपबाधविषयिताया घटो जातिमानितिज्ञाने सत्त्वात्तत्र धर्मितावच्छेदकीभूतघटत्वस्य स्वरूपतो भानात् यद्रूपावच्छिन्नावच्छेदकताकविषयितानिरूपितयद्रूपावच्छिन्नविषयिता यादृशविषयित्वाव्यापिका तादृशविषयिताशून्यत्वस्य तादृशज्ञाने सत्त्वेन निरुक्ताऽव्यापकविषयिताशून्यत्वस्याऽक्षततया तत्र प्रकृतानुमितिप्रतिबन्धकताविरहेण तादृशबाधेऽव्याप्तेः ।

न च यद्रूपावच्छिन्नप्रकारताकविषयितानिरूपितयद्रूपावच्छिन्नविषयितात्वं तादृशभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नप्रकारताकविषयितानिरूपितद्रूपावच्छिन्नविषयिताशून्यत्वं ज्ञाने निवेशनीयम्, तथाच घटो द्रव्यभिन्न इत्यत्र द्रव्यत्ववद्घटरूपबाधविषयकं यद् घटो जातिमानिति ज्ञानं तत्र जातित्वत्वावच्छिन्नप्रकारताकजातिविषयितानिरूपितघटत्वावच्छिन्नविषयितायाः द्रव्यं घट इति ज्ञानान्तर्भावेण द्रव्यत्ववद्घटविषयित्वाव्यापकीभूतायाः सत्त्वात्तत्रानुमितिप्रतिबन्धकताविरहेऽपि न द्रव्यत्ववद्घटेऽव्याप्तिरिति वाच्यम् । यत्र स्वरूपतो जलत्वप्रकारेण द्रव्यत्वमवगाह्य घटो जलवानिति भ्रमो जातस्तत्र तादृशज्ञानीयद्रव्यत्ववद्घटविषयितायाः सत्त्वेऽपि जलत्वस्य स्वरूपतो भानेन यद्रूपावच्छिन्नप्रकारताकविषयितानिरूपितयद्रूपावच्छिन्नविषयिता न तत्राऽस्ति, जलत्वनिष्ठनिरवच्छिन्नावच्छेदकताकद्रव्यत्वविषयितानिरूपितघटत्वावच्छिन्नविषयितायाः सत्त्वेऽपि यद्रूपावच्छिन्नप्रकारताकविषयितानिरूपितयद्रूपावच्छिन्नविषयिताशून्यत्वस्य तत्र सत्त्वेन तत्राऽनुमितिप्रतिबन्धकताविरहेण तत्राऽव्याप्तेर्दुर्वारत्वात् ।

न च यद्रूपावच्छिन्नविषयिताकविषयितानिरूपितयद्रूपावच्छिन्नविषयितेत्यत्र सांसर्गिकविषयितासाधारणयद्रूपावच्छिन्नविषयिताकविषयितात्वेन विषयितायाः निवेशान्न दोषः—घटो जलवानिति निरुक्तभ्रमे जलत्वावच्छिन्नद्रव्यत्वनिष्ठप्रकारतानिरूपिता या संसर्गताख्याविषयता तन्निरूपितघटत्वावच्छिन्नविषयितायाः सत्त्वेन तादृशविषयितायाः घटो द्रव्यमिति ज्ञानेऽसत्त्वेन द्रव्यत्ववद्घटविषयित्वाव्यापकतया तच्छून्यत्वस्य तादृशज्ञानेऽसत्त्वादिति वाच्यम् । एवं सति संयोगः संयोगाभाववानित्यत्र संयोगः संयोगवानितिबाधभ्रमविषये संयोगेऽतिव्याप्तिविरहेण वक्ष्यमाणसामान्यपदव्यावृत्त्यसङ्गत्यापत्तेः । संयोगः संयोगवानिति बाधभ्रमस्यापि संयोगत्वावच्छिन्नविषयिताकसमवायनिष्ठा या संसर्गताख्या विषयता तन्निरूपितसंयोगत्वावच्छिन्नविषयितावत्त्वात्

अव्यापकीभूतविषयिताशून्यत्वमिव यद्यद्रूपावच्छिन्नस्य यस्य यस्य तादृशविशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वमपि निश्चये विशेषणीयम्, तथा चाऽभावत्वेन ह्रदत्वस्य न विशिष्टघटकतेति तच्छून्यत्वं नाभाववान् वन्ह्यभाववानिति ज्ञानस्येति न तादृशज्ञानमादायाऽव्याप्तिः।

केचित्तु यद्रूपावच्छिन्नविषयकनिश्चयाभावप्रतियोगितावच्छेदकीभूतविषयताशून्यत्वमेवाऽव्यापकीभूतविषयताशून्यत्वम् समनियताभावश्चैकः, तथाच वन्ह्यभाववद्ह्रदविषयकनिश्चयाभाव–वन्हित्वावच्छिन्नवन्हिनि(१)ष्ठविषयतानिरूपिताऽभावत्वावच्छिन्नाभावनिष्ठविषयतानिरूपितह्रदत्वावच्छिन्नह्रदनिष्ठविषयताशालिनिश्चयाऽभाव–ह्रदत्वावच्छिन्नह्रदनिष्ठविषयतानिरूपिताऽभावत्वावच्छिन्नाभावनिष्ठविषयतानिरूपितवन्हित्वावच्छिन्नवन्हिनिष्ठविषयताशालिनिश्चयाभावान.मैक्येन तादृशनिश्चयाभावप्रतियोगितावच्छेदकत्वं बाधविषयतान्तःपातिसर्वासामेव विषयतानां वर्तते, न तु जातिमान् वन्ह्यभाववानितिज्ञानीयजातित्वनिष्ठविषयतायाः, अभाववान् वन्ह्यभाववानितिज्ञानीयाऽभावत्वावच्छिन्नधर्मितावच्छेदकताख्यविषयताया वा वर्त्तते इति न वन्ह्यभाववद्ह्रदेऽसंभवः।

अथवा यद्रूपावच्छिन्नविषयकनिश्चयत्वसमनियता(२) या प्रतिबन्धकता तदनवच्छेदकविषयताशून्यत्वं तत्, वन्ह्यभाववद्ह्रदविषयकनिश्चयो जायतामितीच्छां प्रति वन्ह्यभाववद्ह्रदविषयकनिश्चयत्वेन वन्हित्वावच्छिन्नविषयतानिरूपितेत्यादिक्रमेण पूर्वोक्तविषयताशालिनिश्चयत्वेनाऽपि विनिगमनाविरहेण प्रतिबन्धकत्वमस्तीति बाधविषयतान्तःपातिसर्वासामेव विषयतानां प्रतिबन्धकतावच्छेदकत्वं, न तु जातिमान् वन्ह्यभाववानितिज्ञानीयजातित्वनिष्ठवि-

---

तादृशज्ञानीयसंयोगत्वावच्छिन्नविषयितायाः स्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेऽपि संयोगत्वावच्छिन्नेऽतिव्याप्तिविरहादिति।

केचित्तु घटो द्रव्यभिन्न इत्यत्र घटो द्रव्यमित्याकारकबाधज्ञानविषयीभूतघटत्वावच्छिन्नेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वनिवेशनं सामान्यपदं च सार्थकम्। तादृशज्ञाने द्रव्यत्वस्य च स्वरूपतो भानेन यद्रूपावच्छिन्नविषयिताकविषयितानिरूपितयद्रूपावच्छिन्नविषयिताया अप्रसत्त्वान्निरुक्ताऽव्यापकीभूतविषयिताशून्यत्वस्याऽक्षततया तज्ज्ञानीयघटत्वावच्छिन्नविषयतायाः स्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन यद्रूपपदेन घटत्वस्य धारणसम्भवात्। एवं च गुणो द्रव्यमित्यत्र द्रव्यभेदवद्गुणरूपबाधविषयक–गुणो द्रव्यं न वेत्याकारकसंशयस्य निरुक्ताव्यापकविषयिताशून्यतया तत्राऽनुमितिप्रतिबन्धकताया असत्त्वेन द्रव्यभेदवद्गुणरूपबाधेऽव्याप्तिवारणाय निश्चयत्वनिवेशनं सार्थकमिति प्राहुः।

(१) वन्ह्यादिनिष्ठत्वमपहाय वन्हित्वावच्छिन्नविषयतेत्यादिक्रमेण तादृशनिश्चयाभावस्तु न यद्रूपावच्छिन्नविषयकनिश्चयाभावसमनियतः, वन्हित्वेन गुञ्जावगाहिभ्रमकाले तादृशविशिष्टविषयकनिश्चयाभावस्य सत्त्वात्। न च ह्रदो दाहजनकतेजस्वीत्यत्र दाहजनकतेजस्त्वस्य वन्हित्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाऽप्रसिद्ध्या तदवच्छिन्नाभाववद्ह्रदस्य दोषत्वानुपपत्तिरिति वाच्यम्। एतन्मते गुरुधर्मस्य प्रतियोगितावच्छेदकत्वोपगमात्। एवं च वन्हित्वावच्छिन्नवन्हिनिष्ठविषयतेत्यादिक्रमेण तादृशविषयताशालिनिश्चयत्वस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकनिश्चयत्वापेक्षया गुरुत्वेऽपि न तदवच्छिन्नाभावाऽप्रसिद्धिः।

(२) तादृशनिश्चयत्वव्यापकत्वनिवेशे ह्रदो जात्यभाववानित्यादौ जातिमान् जातिमानितिज्ञानीयजातिनिष्ठधर्मितावच्छेदकताख्यविषयताया अपि जातिमद्विषयकनिश्चयो जायतामितीच्छानिरूपिता या प्रतिबन्धकता तदवच्छेदकत्वेन जातिमद्ह्रदत्वावच्छिन्नविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकीभूतविषयि-

षयताया इति नासंभव इत्याहुः(१) ।

कालीशङ्करतर्कवागीशास्तु—स्वाभाववन्निष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताकत्व—स्वाश्रयनिष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताकत्वोभयसंबन्धेन धर्मविशिष्टान्यत्वं [ स्वाश्रयाभाववद्वृत्तित्व—स्वनिरूपितत्वोभयसंबन्धेनाऽवच्छेदकताविशिष्टविषयताशालिज्ञानान्यत्वं वा ] यद्रूपावच्छिन्नविषयकनिश्चये विशेषणीयम्, एवं अभावत्वं अभावत्वनिष्ठावच्छेदकत्वं वेति प्राहुः ।

---

ताशून्यत्वस्य सत्त्वेन तादृशबाधेऽव्याप्त्यापत्तेरतः समनियतत्वघटकव्याप्यत्वनिवेशः, तथाच तादृशविशिष्टविषयकनिश्चयत्वाभाववति जातिमानितिज्ञाने तादृशप्रतिबन्धकतायाः सत्त्वेन प्रतिबन्धकतायां तादृशनिश्चयत्वव्याप्यत्वविरहान्न दोषः । तन्मात्रनिवेशे च वन्ह्यभाववज्जातित्वविशिष्टावच्छिन्नविषयकनिश्चयो जायतामितीच्छानिरूपितप्रतिबन्धकतावच्छेदकत्वस्य जातित्वनिष्ठविषयतायां सत्त्वेन बाधेऽव्याप्तिरतो व्यापकत्वनिवेशः । तथाच सति ह्रदो वन्ह्यभाववानिति ज्ञाने तादृशप्रतिबन्धकताया असत्त्वेन तादृशविषयताशालिनिश्चयत्वव्यापकत्वस्य तादृशप्रतिबन्धकतायामसत्त्वात्तादृशप्रतिबन्धकतावच्छेदकत्वस्य जातित्वावच्छिन्नविषयतायां सत्त्वेऽपि जातिमान् वन्ह्यभाववानितिज्ञाने निरुक्ताव्यापकीभूतविषयिताशून्यत्वविरहादिति ।

(१) अत्र च कल्पद्वये एव निश्चयत्वव्यावृत्तिर्न सम्भवति, ह्रदो वन्हिमान्नवेति संशये वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयकनिश्चयाभावप्रतियोगितानवच्छेदिकायाः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रकारतायाश्च सत्त्वात्तादृशसंशयस्य निरुक्ताऽव्यापकविषयिताशून्यत्वविरहात् । एवं घटो द्रव्यभिन्न इत्यत्र घटो द्रव्यमितिज्ञानविषये घटे, ह्रदो वन्हिमानित्यत्र वन्ह्यभाववान् ह्रद इतिज्ञानविषये ह्रदेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वविशेषणमपि व्यर्थम् । तादृशबाधज्ञाने घटत्वावच्छिन्नविषयकनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदिकायाश्च द्रव्यत्वादिप्रकारतायाः सत्त्वात् ।

ननु पर्वतो वन्हिमान् इत्यत्र पाषाणमयत्वावच्छेदेन वन्ह्यभावप्रकारकनिश्चयविशिष्टपर्वतधर्मिकपाषाणमयत्वप्रकारकनिश्चयनिष्ठा या प्रतिबन्धकता तदवच्छेदकत्वस्य पाषाणमयः पर्वत इति ज्ञानीयपाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितायां सत्त्वात् पाषाणमयः पर्वत इति ज्ञेपाषाणमयत्वविशिष्टपर्वतविषयकनिश्चयाभावप्रतियोगितानवच्छेदकविषयताशून्यत्वस्य च सत्त्वात् पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमवश्यं निवेशनीयमिति चेन्न ।

एवमपि यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वं हेत्वाभासत्वमित्याशंक्य समानाकारकज्ञानीयैकविषयतामते पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिर्भट्टाचार्येण दत्ता, तत्र सामान्यपदस्य वैयर्थ्यं दुर्वारमेव । तत्र ह्रदो वन्ह्यभाववानितिज्ञानं नैकदेशह्रदत्वावच्छिन्नविषयतायां निरुक्ताव्यापकविषयताशून्यत्ववत् किन्तु ह्रद इति ज्ञानमेव, तज्ज्ञानीयह्रदत्वावच्छिन्नविषयताया अनुमितिप्रतिबन्धकतावच्छेदकाविरहात् । न च जातिमान् ह्रद इति ज्ञानकालीनजातिमान् वन्ह्यभाववान् इतिज्ञानीयवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताया अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वमस्त्येवेत्यव्यापकीभूतविषयताशून्यत्वनिवेशनं निष्प्रयोजनमिति सामान्यपदव्यावृत्तिसङ्गतिरिति वाच्यम् । जातिसामानाधिकरण्येन वन्ह्यभाववत्ताज्ञानस्य ज्ञानविशिष्टज्ञानसत्त्वेन ह्रदो वन्ह्यभाववानित्यनुमित्यप्रतिबन्धकतया तादृशज्ञानीयवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताया अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण तत्कल्पे व्यापकीभूतविषयताशून्यत्वनिवेशस्यावश्यकत्वात् ।

ननु संयोगः संयोगाभाववानित्यत्रानुमितिप्रतिबन्धकीभूत—संयोगः संयोगवानिति बाधभ्रमविषये संयोगत्वावच्छिन्नेऽतिव्याप्तिः, तादृशज्ञानस्यापि संयोगत्वावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यत्वात् । न च यद्रूपावच्छिन्नविषयतात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति रीत्याऽव्यापकीभूतविषयिताशून्यत्वं वक्तव्यम् । यद्रूपावच्छिन्नविषयित्वं यद्रूपनिष्ठप्रकारतानिरूपितविषयित्वं—यथा स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयतेत्यत्र स्वव्यधिकरणप्रकारनिष्ठप्रकारतानिरूपितविषयित्वमेव

स्वव्यधिकरणप्रकारावच्छिन्नविषयत्वम्, एवं च संयोगत्वावच्छिन्नविषयकत्वाधिकरणसंयोग इति ज्ञाने संयोगनिष्ठप्रकारतानिरूपितविषयताया निरूपकत्वसम्बन्धेनाभावसत्त्वात् संयोगनिष्ठप्रकारतानिरूपितविषयत्वमपि संयोगत्वावच्छिन्नविषयकत्वाऽव्यापकं भवतीति तादृशविषयताशून्यत्वस्य संयोगः संयोगवानिति ज्ञानेऽसत्त्वात् तज्ज्ञानं न लक्षणघटकम्, किन्तु संयोग इति ज्ञानमेव, तज्ज्ञानीयसंयोगत्वावच्छिन्नविषयताया अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण न संयोगत्वावच्छिन्नेऽतिव्याप्तिरिति वाच्यम्। एवमपि संयोगाभावः संयोगाभाववानित्यत्र संयोगाभावः। संयोगवानितिभ्रमविषयीभूतसंयोगाभावत्वावच्छिन्नेऽतिव्याप्तिः, तादृशज्ञानस्य संयोगनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविषयतावत्त्वेन संयोगनिष्ठप्रकारतानिरूपितविषयतायाः संयोगाभावत्वावच्छिन्नविषयत्वाऽव्यापकत्वविरहात्। न च यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वं निवेशनीयम्, एवं च संयोगत्वावच्छिन्नविषयतानिरूपितसंयोगाभावत्वावच्छिन्नविषयतायाः संयोगाभावत्वावच्छिन्नविषयकत्वाव्यापकत्वात्तच्छून्यत्वस्य संयोगाभावः संयोगवानिति ज्ञानेऽसत्त्वात् संयोगाभावे नातिव्याप्तिरिति वाच्यम्। एवमपि संयोगवद्वृत्तिसंयोगः संयोगविशिष्टसंयोगाभाववानिति समवायसम्बन्धेन संयोगविशिष्टसंयोगस्य सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावसाध्यके संयोगांशं परित्यज्य सामानाधिकरण्यसम्बन्धेन संयोगविशिष्टसंयोगेऽतिव्याप्तेः। तत्र संयोगवद्वृत्तिसंयोगः संयोगवानिति ज्ञाने संयोगत्वावच्छिन्नविषयतानिरूपितसंयोगत्वावच्छिन्नविषयतायाः सत्त्वेन, एवं संयोगत्वावच्छिन्नविषयतानिरूपितसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयतायाः सत्त्वेन, एवं संयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयन्तान्तःपातिन्याः संयोगत्वावच्छिन्नविषयतानिरूपितसमवायत्वावच्छिन्नसांसर्गिकविषयतायाः सत्त्वेन, तादृशी कापि विषयता न संयोगविशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयकत्वाव्यापिका समवायेन संयोगविशिष्टसंयोगस्याप्रसिद्ध्या संयोगविशिष्टसंयोगत्वावच्छिन्नविषयतानिरूपितसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयताया अपि न संयोगविशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयताव्यापकत्वमिति निरुक्ताव्यापकीभूतविषयताशून्यज्ञानवृत्तिसामानाधिकरण्यसम्बन्धेन संयोगविशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयताया अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वात्। सामान्यपदनिवेशे च संयोगवद्वृत्तिसंयोगः संयोगवानितिज्ञानीयसामानाधिकरण्यसम्बन्धेन संयोगविशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयतायाः तादृशविषयतासामान्यान्तर्गतायाः तादृशप्रतिबन्धकतावच्छेदत्वविरहात् न तादृशविशिष्टेऽतिव्याप्तिः। न चात्र संयोगत्वावच्छिन्नविषयतानिरूपितसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयतायाः संयोगवद्वृत्तिसंयोगः संयोगवानितिज्ञानेऽसत्त्वात् संयोगविशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयकत्वाव्यापिका तादृशविषयता जाता तच्छून्यत्वस्य संयोगवद्वृत्तिसंयोगः संयोगविशिष्टसंयोगवानितिज्ञाने विरहात्तदीयविषयतायाः अनुमितिप्रतिबन्धकतावच्छेदकत्वेऽपि न संयोगविशिष्टसंयोगवद्वृत्तिसंयोगेऽतिव्याप्तिरिति वाच्यम्। एवमपि संयोगवद्वृत्तिसंयोगः संयोगविशिष्टसंयोगवदभाववान् इत्यत्र संयोगाश्रयविशिष्टसंयोगवद्वृत्तिसंयोगेऽतिव्याप्तेः, तादृशपक्षः संयोगविशिष्टसंयोगवद्वानितिज्ञाने संयोगावच्छिन्नविषयतानिरूपितसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयताया न संयोगाश्रयविशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयत्वाव्यापकत्वमिति संयोगवद्वृत्तिसंयोगः संयोगविशिष्टसंयोगवद्वानितिज्ञानस्याव्यापकीभूतविषयताशून्यतया तदीयविषयतायाः अनुमितिप्रतिबन्धकतावच्छेदकत्वात्। न च यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतात्वं तादृशाभावप्रतियोगितावच्छेदकं तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वस्य ज्ञाने विशेषणत्वे नैतादृशस्थलेऽतिव्याप्तिः, समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नविषयतानिरूपितसंयोगत्वावच्छिन्नविषयतायाः संयोगवद्विशिष्टसंयोगवद्वृत्तिसंयोगत्वावच्छिन्नविषयकत्वाव्यापकतया तच्छून्यत्वस्य तादृशभ्रमे सत्त्वादिति वाच्यम्। एवंसति यद्रूपपदेन घटत्वपटत्वादीनां बहूनां धारणसम्भवेन यद्रूपावच्छिन्नविषयत्वाभावकूटस्य असर्वज्ञदुर्ज्ञेयत्वापत्तेः, अस्माभिस्तु स्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकावच्छिन्नविषयताशून्यत्वं निवेश्यते, भेदप्रतियोगितावच्छेदकता च स्वावच्छिन्नविषयतावत्त्वसम्बन्धावच्छिन्ना, एवं चाभा-

वत्त्वेन ह्रदत्वावगाहि अभाववान् वन्ह्यभाववानिति ज्ञानं तत्रैतादृशाव्यापकीभूतविषयताशून्यत्वसत्त्वात् तत्रानुमितिप्रतिबन्धकताया असत्त्वादसम्भवोऽतः स्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं यत्तदवच्छिन्नविषयत्वावच्छिन्ना या प्रतिबन्धकता तच्छून्यत्वं निवेशनीयम्, तथा च वह्निधर्मिकसम्बन्धविशेषानियन्त्रिताभावाधिकरणवृत्त्यभावप्रतियोगितासामान्याभाववत्ताबुद्धिं प्रति सम्बन्धविशेषानियन्त्रिताभावधर्मितावच्छेदकताकवन्ह्यभावप्रकारकनिश्चयत्वेन प्रतिबन्धकतानुभवसिद्धेति स्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं यद् वन्ह्यभावविशिष्टाभावत्वावच्छिन्नमभावादि तदवच्छिन्नविषयित्वावच्छिन्ना याऽभावधर्मितावच्छेदककवन्ह्यभावप्रकारकबुद्धित्वावच्छिन्ननिरुक्तप्रतिबन्धकता तस्या अभावत्वेन ह्रदत्वं समवायेन धर्मितावच्छेदकीकृत्य वन्ह्यभावावगाहिज्ञाने सत्त्वान्न तादृशज्ञानमादायासम्भवः । एवमभावत्वावच्छिन्नावच्छेदकताकविशेष्यताकवन्ह्यभावप्रकारकज्ञानं जायतामितीच्छां प्रति अभावत्वावच्छिन्नावच्छेदकताकविशेष्यताकवन्ह्यभावप्रकारकज्ञानत्वेनाभावनिष्ठावच्छेदकतायां सम्बन्धविशेषमनिवेश्यैका प्रतिबन्धकताऽस्ति, तथा च तादृशविशिष्टविषयकत्वसमानाधिकरणनिरुक्तसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकतावान् यः तदवच्छिन्नविषयत्वावच्छिन्नेच्छात्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः तच्छून्यत्वस्य ज्ञानेऽसत्त्वान्नाभाववान् वन्ह्यभाववानिति ज्ञानमादाय दोषः । वन्ह्यभावविशिष्टो यः कालिकसम्बन्धेनाभावत्वविशिष्टस्तस्य स्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वात्तदवच्छिन्नविषयत्वावच्छिन्ना या निरुक्तेच्छानिरूपितप्रतिबन्धकता तच्छून्यत्वस्य स्वरूपसम्बन्धेनाभावत्वं ह्रदत्वेऽवगाह्य तदभावत्वावच्छिन्नधर्मितावच्छेदताकवन्ह्यभावप्रकारकं यज्ज्ञानं तत्रासत्त्वात् ।

वस्तुतस्तु स्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकत्वसम्बन्धावच्छिन्नं ग्राह्यमन्यथा जातिमान् जातित्ववान् इत्यत्र जातित्वाभाववज्जातिमति बाधे यथाश्रुतेऽव्याप्तेः । यद्रूपपदेन जातित्वाभाववदेतज्जातेरपि धारणं सम्भवति, जातित्वाभाववदेतज्जातिव्यक्त्यवच्छिन्नविषयताया अभावस्य जातित्वरूपेण जात्यन्तरावगाहि—जातिमान् जातित्वाभाववान् इति ज्ञानेऽसत्त्वात्, एवं जातित्वाभावविशिष्टजात्यन्तरस्यापि यद्रूपपदेन धर्तुं शक्यतया तदवच्छिन्नविषयित्वाभावकूटस्य जातिमान् जातित्वाभाववान् इतिज्ञानेऽसत्त्वात् तत्राव्याप्तेः । तादृशसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकतानिवेशे च जात्यन्तरावगाहि—जातिमान् जातित्वाभाववानिति ज्ञाने जातित्वाभाववज्जातेरपि स्वावच्छिन्नविषयकत्वावच्छिन्ना या जात्यवच्छिन्नावच्छेदकताकविशेष्यताकजातित्वाभावत्वावच्छिन्नप्रकारताकज्ञानं जायतामितीच्छानिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता तस्याः सत्त्वाज्जातित्वाभावविशिष्टा कापि जातिर्न जातित्वाभाववज्जातित्वविशिष्टावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितानिरूपितपरम्परासम्बन्धावच्छिन्नावच्छेदकतावतीति यद्रूपपदेन जातित्वाभाववज्जातेर्धारणं न सम्भवति । वन्ह्यभाववज्जातित्वविशिष्टस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासम्बन्धेन ह्रदो वन्ह्यभाववानितिज्ञानेऽसत्त्वाद् वन्ह्यभाववद्ह्रदत्वाविशिष्टविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं तत्राऽक्षतमेव, तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताशून्यत्वस्य जातिमान् वन्हिसामान्याभाववानितिज्ञानेऽसत्त्वान्न तादृशज्ञानमादाय वन्ह्यभाववद्ह्रदेऽसम्भवः । एवं च संयोगः संयोगाभाववानित्यत्र संयोगः संयोगवानितिबाधभ्रमस्य संयोगत्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकीभूततद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताशून्यत्वमस्ति, तथाहि—समवायसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन संयोगविशिष्टसंयोगत्वस्याऽप्रसिद्ध्या तस्य भेदप्रतियोगितावच्छेदकत्वं न सम्भवति, कालिकघटितसामानाधिकरण्यसम्बन्धेन संयोगविशिष्टसंयोगत्वस्य प्रसिद्धावपि तदवच्छिन्नविषयकत्वावच्छिन्ना या संयोगत्वावच्छिन्नविषयिताशालिनिश्चयो जायतामितीच्छानिरूपितप्रतिबन्धकता तस्यास्तत्र सत्त्वान्न स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासम्बन्धेन संयोगत्वावच्छिन्नविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं सम्भवति, किन्तु घटत्वादावेव, तदवच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताशून्यत्वस्य तत्र सम्भवादिति संयोगत्वावच्छिन्नविषयतायाः अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन तादृशभ्रमविषये संयोगत्वावच्छिन्नेऽतिव्याप्तिरतः सामान्य-

केचित्तु यद्रूपावच्छिन्ननिरूपितयत्किंचिद्विषयिताविशिष्टनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वं लक्षणम्, निश्चये विषयितावै० स्वनिरूपितनिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकविषयिताशून्यत्वसंबन्धेन। यत्किञ्चिद्विषयितायां यद्रूपावच्छिन्ननिरूपितत्वं च यद्रूपपर्याप्तावच्छेदकताकनिरूपकताकत्वमेव, तेन वन्ह्यभाववान् ह्रद इति ज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताया अपि ह्रदत्वावच्छिन्ननिरूपितत्वेन यत्किञ्चित्पदेन तादृशविषयित्वमादाय न शुद्धह्रदेऽतिव्याप्तिः। जातिमान् वन्ह्यभाववानितिज्ञानीयविषयित्वं च वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूपितयत्किञ्चिद्विषयितानिरूपितनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयिताशालिवन्ह्यभाववान् ह्रद इति ज्ञानवृत्तिभेदप्रतियोगितावच्छेदकमेवेति तच्छून्यत्वं न जातिमान् वन्ह्यभाववानितिज्ञाने, किन्तु वन्ह्यभाववान् ह्रद इति निश्चये एवेति तादृशनिश्चयत्वव्यापकत्वं प्रकृतानुमितिप्रतिबन्धकतायामक्षतमेवेति यत्किञ्चित्पदेन ह्रदो वन्ह्यभाववानितिज्ञानीयविषयितामादाय लक्षणसमन्वयः। एवमेवाऽभाववान् वन्ह्यभाववानितिज्ञानवारणमपीति।

अथवा यत्किञ्चिद्विषयिताविशिष्टयद्रूपावच्छिन्नविषयिता प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिः तद्रूपवत्त्वं हेत्वाभासत्वम्। यत्किञ्चिद्विषयितावै० स्वतादात्म्य(१)—स्वनिरूपकतावच्छेदकतापर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकमुख्यविशेष्यतासमानाधिकरणभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन, तथाच यत्किञ्चित्पदेन ह्रदो वन्ह्यभाववानिति—ज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिता-

पदम्। एवं ह्रदो वन्हिमान्धूमादित्यत्र ह्रदो वन्हिमान्नवेति संशयेऽपि वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताशून्यत्वमस्त्येव, तथाहि—संयोगघटितसामानाधिकरण्यसम्बन्धेन वन्हिविशिष्टह्रदत्वस्याऽप्रसिद्ध्या तस्य न वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं सम्भवति किन्तु घटत्वादेरेव, तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतायाश्च तत्राऽसत्त्वात्तत्र चाऽनुमितिप्रतिबन्धकताया असत्त्वादतो निश्चयपदम्। यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतानिवेशे चाननुगमो दुर्वार एवेति ध्येयम्।

(१) ह्रदो वन्ह्यभाववानित्यादिज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतायाः स्वनिरूपकतावच्छेदकधर्मपर्याप्तावच्छेदकताकनिरूपकताकविषयितासमानाधिकरणभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वसंबन्धेन वन्ह्यभावाद्येकदेशविषयितायामपि सत्त्वेन तादृशविषयिताविशिष्टवन्ह्यभावाद्येकदेशविषयिताव्यापकत्वस्य प्रतिबन्धकतायामक्षततया यत्किंचिद्विषयितापदेन ह्रदो वन्ह्यभाववानितिज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितामादायैकदेशेऽतिव्याप्तिरतः स्वतादात्म्यनिवेशः। तन्मात्रनिवेशेऽपि ह्रदो वन्ह्यभाववानितिज्ञानीयैकदेशविषयितामादाय तत्रैवाऽतिव्याप्तिरतो द्वितीयसंबन्धनिवेशः। तथाच ह्रदो वन्ह्यभाववानितिज्ञानीयैकदेशविषयितायां स्वतादात्म्यसत्त्वेऽपि स्वनिरूपकतावच्छेदकीभूतं यद्वन्ह्यभावत्वादिकं तत्पर्याप्तावच्छेदकताकनिरूपकताकं यत्केवलवन्ह्यभाव इति ज्ञानीयविषयित्वं तत्समानाधिकरणभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वाभावान्नातिव्याप्तिः। न च दोषाविषयकवन्ह्यभाव इत्यादिज्ञानीययत्किंचिद्विषयितायास्तादृशोभयसंबन्धेन विषयिताविशिष्टत्वात्तत्रातिव्याप्तितादवस्थ्यमिति वाच्यम्। प्रकृतानुमितिप्रतिबन्धकतायां तादृशविषयिताव्यापकत्वाभावादिति। ह्रदो वन्ह्यभाववानितिज्ञानीयमुख्यविशेष्यताया अपि वन्ह्यभाववद्ह्रदवान्देश इतिज्ञानीयस्वनिरूपकतावच्छेदकवन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूपकताकप्रकारितात्मकविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतया तादृशभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वाभावेन निरुक्तोभयसम्बन्धेन यत्किंचिद्विषयिताविशिष्टविषयित्वाप्रसिद्ध्याऽसंभवः, अतः संबन्धघटकतया मुख्यविशेष्यतानिवेशः।

मादाय बाधे लक्षणसमन्वय इति प्राहुः। तच्चिन्त्यम्(१)।

यद्विषयकत्वेनेत्यादिलक्षणे तृतीयार्थोऽवच्छेदकत्वम्, तच्च न स्वरूपसम्बन्धरूपम् तथासति पर्वतो वह्निमान् धूमादित्यत्र वन्ह्यभावेऽतिव्याप्तिः। तथाहि—यद्रूपावच्छिन्नविषयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छे-

---

ह्रदो वन्हभाववानितिज्ञानीयविषयितायां ह्रदत्वावच्छिन्नत्वस्यापि सत्त्वेन यत्किंचित्पदेन तादृशविषयितामादाय ह्रदत्वावच्छिन्ने "एकदेशेऽ"तिव्याप्तिरतो यद्रूपावच्छिन्नविषयितापदेन यद्रूपपर्याप्तावच्छेदकताकनिरूपकताकविषयिता वाच्या, ह्रदो वन्ह्यभाववानितिज्ञानीयविशयितायाः स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयिताशालिजातिमान् वन्ह्यभाववानितिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वेनाऽसम्भवः स्यादतः सम्बन्धघटकमुख्यविशेषतायां स्वनिरूपकतावच्छेदकधर्मपर्याप्तावच्छेदकताकनिरूपकताकत्वनिवेशः। एकत्र द्वयमितिरीत्या वन्ह्यभाववद्ह्रदविषयकज्ञानीयविषयितायां वन्ह्यभाववद्ह्रदत्वावच्छिन्ना या प्रतिबन्धकतावच्छेदकीभूतविषयिता तन्निरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकनिरूपकताकत्वाभावान्न तमादाय दोषः। न च विषयभेदेन विषयताभेदाद्वन्ह्यभाववद्ह्रदादावव्याप्तिः, ह्रदो वन्ह्यभाववानित्यादियत्किञ्चिद्ह्रदविषयकज्ञानीयविषयतायाः स्वनिरूपकतावच्छेदकीभूतधर्मावच्छिन्ननिरूपताकह्रदान्तरविषयताकतादृशज्ञानीयविषयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन तच्छून्यज्ञानीयत्वस्य स्वस्मिन्नसत्त्वादिति वाच्यम्। स्वतादात्म्यस्वविशिष्टमुख्यविशेष्यतासमानाधिकरणभेदप्रतियोगितावच्छेदकविषयताशून्यज्ञानीयत्वोभयसम्बन्धे यद्रूपपर्याप्तावच्छेदकताकविषयितायां यत्किञ्चिद्विषयतावैशिष्ट्यनिवेशात्, वै० स्वनिरूपकतावच्छेदकधर्मपर्याप्तावच्छेदकताकनिरूपकताकत्व-स्वनिरूपकनिरूपितत्वोभयसम्बन्धेन, तथाच यत्किञ्चिद्ह्रदविषयकज्ञानीया या विषयता तन्निरूपकनिरूपितत्वस्य ह्रदान्तरविषयकज्ञानीयविषयतायामसत्त्वान्नोक्तदोष इति ध्येयम्।

(१) स्वरूपसम्बन्धरूपावच्छेदकताकल्पे वक्ष्यमाणसामान्यपदव्यावृत्त्यसङ्गतिः, निश्चयत्वांशनिवेशवैयर्थ्यापत्तिश्चेति चिन्ताबीजम्।

नव्यास्तु यद्रूपावच्छिन्नविषयिताशालियत्किंचिज्ज्ञाननिष्ठभेदप्रतियोगितावच्छेदकीभूतविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां निवेश्यम्, तथाच यद्रूपावच्छिन्नविषयिताशालिज्ञानत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितेत्यादिरीत्या तद्व्यक्तिनिष्ठभेदप्रतियोगितावच्छेदकीभूतविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावं संगृह्य निवेशे तात्पर्यम्। ह्रदो वन्ह्यभाववानितिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकीभूतं यज्जातित्वावच्छिन्नविषयत्वं तच्छून्यत्वस्य ह्रदो वह्न्यभाववानित्याकारकज्ञाने सत्त्वाल्लक्षणसमन्वयः। इत्थं च सामान्यपदानुपादाने वह्न्यभावेऽतिव्याप्तिः, स्वावच्छिन्नविषयिताशालियत्किञ्चिज्ज्ञानपदेन वह्न्यभाववान् ह्रद इति ज्ञानमादाय तन्निष्ठभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यं वह्न्यभाववान् ह्रद इति ज्ञानं तद्वृत्तिवह्न्यभावत्वावच्छिन्नविषयितायां स्वरूपसम्बन्धरूपाऽवच्छेदकत्वसत्त्वात्। तन्निवेशे तु केवलं वन्ह्यभाववानिति ज्ञानस्यापि तादृशत्वात्तद्वृत्तिवन्ह्यभावविषयिताव्यापकत्वाभावान्न दोष इति प्राहुः।

वस्तुतस्तु अथैवं जातिमान् वन्ह्यभाववानित्यादिग्रन्थ एवाऽऽपततः विषयितासम्बन्धेन यादृशविशिष्टव्यापकं प्रतिबन्धकत्वं तादृशत्वमित्यस्यैव सम्यक्त्वात्। यत्र स्वरूपतोऽस्वरूपतो वा यादृशविशिष्टघटितयादृशविशिष्टस्य दोषत्वं तादृशविशिष्टनिरूपितविषयिताया एव तादृशविशिष्टसंसर्गता स्वीक्रियते न त्वन्यविधायाः इति जातिमान् वन्ह्यभाववानितिज्ञानीयविषयितायाः स्वरूपतो ह्रदत्वघटितविशिष्टसंसर्गताविरहेण जातिमान् वन्ह्यभाववानितिज्ञानमादायाऽसम्भवाऽभावात्। [परन्तु यादृशत्वमनुगतमिति] एतेन अभावत्वेन ह्रदत्वावगाहिज्ञानवारणाय यथार्थपदसार्थक्यसम्भवेन दीधितिकृतां यथार्थपदाघटितद्वितीयलक्षणानुधावनस्य विरोध इति परास्तम्।

**तेन विशिष्टस्याऽसत्वेऽपि भ्रमात्प्रतिबन्धेऽपि न क्षतिः ।**

---

विशिष्टस्य—**विशिष्टविषयकत्वस्य,** असत्वेऽपि—**वन्ह्यभावत्वादिना घटाद्यवगाहिभ्रमेऽसत्वेऽपि, तथाच विशिष्टविषयकत्वेन प्रतिबन्धकता न सम्भवतीति भावः ।** भ्रमात्प्रतिबन्धेऽपि—**तादृशभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि, न** क्षतिः—**नोक्तयुक्त्या पर्याप्तिनिवेशेऽसम्भवस्तदनिवेशे पूर्वोक्तातिप्रसङ्गो वा ।**

**ननु विशिष्टदोषघटकीभूततदेकदेशविषयतायां स्वरूपबन्धरूपावच्छेदकत्वसत्वेऽपि यादृशविशिष्टविषयतासामान्यस्य तादृशावच्छेदकत्वविवक्षया अतिप्रसङ्गवारणसम्भवात् तदेव कथं न विवक्षितमिति ।**

---

दकतावत्तद्रूपावच्छिन्नत्वमित्यर्थः, एवं च "पर्वतो वन्ह्यभाववानितिनिश्चयीय" वन्ह्यभावत्वावच्छिन्नविषयतायाः पर्वतो वन्हिमानित्यनुमितिप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत्वेन तद्रूपावच्छिन्नत्वस्य वन्ह्यभावे सत्वात्, अतोऽनतिरिक्तवृत्तित्वरूपमेव तन्निवेशितमित्युक्तप्रायम्, तत्र सामान्यपदनिवेशेनाऽतिव्याप्तेरभावात् स्वरूपसम्बन्धरूपावच्छेदकत्वं समर्थयति **नन्विति । विशिष्टदोषघटकीभूतेति ।** वन्ह्यभाववत्पर्वतरूपदोषघटकीभूतेत्यर्थः । **तदेकदेशविषयतायां**—वन्ह्यभावविषयतायाम् । **स्वरूपसम्बन्धरूपावच्छेदकत्वसत्वेऽपीति ।** तथाच पर्वतो वन्हिमान् धूमादित्यत्र वन्ह्यभावेऽतिप्रसंगेऽपीति भावः । **यादृशविशिष्टेति ।** यद्रूपावच्छिन्नेत्यर्थः । **तादृशावच्छेदकत्वविवक्षया**—स्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षया । **अतिप्रसङ्गवारणसम्भवादिति ।** वन्ह्यभावाद्येकदेशेऽतिप्रसङ्गवारणसम्भवादित्यर्थः । **तदेव**—स्वरूपसम्बन्धरूपाऽवच्छेदकत्वमेव । **कथं न विवक्षितमिति ।** तथाच यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्तद्रूपावच्छिन्नत्वमर्थः, पर्वतो वन्ह्यभाववानितिज्ञानीयवन्ह्यभावविषयतायाः पर्वतो वन्हिमानित्यनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्वेऽपि वन्ह्यभावः—वन्ह्यभाववान् घट इति ज्ञानीयवन्ह्यभावविषयतायाः तादृशावच्छेदकतावत्वविरहेण वन्ह्यभावत्वावच्छिन्नविषयतासामान्यस्य तादृशावच्छेदकतावत्वविरहाद् यद्रूपपदेन वन्ह्यभावत्वादेरुपादातुमशक्यतया नातिव्याप्तिरिति भावः ।

अथ यद्रूपावच्छिन्नविषयतासामान्येत्यत्र सामान्यपदं व्यर्थम्, जातिमान् वन्ह्यभाववानितिज्ञानमादायाऽसम्भववारणायाऽव्यापकीभूतविषयिताशून्यत्वनिवेशस्याऽऽवश्यकतया वन्ह्यभावत्वावच्छिन्नविषयित्वाऽव्यापकहृदत्वावच्छिन्नविषयिताशून्यत्वस्य वन्ह्यभाववान् हृद इति ज्ञाने विरहात्, तादृशविषयिताशून्यं वन्ह्यभाव इति ज्ञानमेव तदीय"वन्ह्यभावत्वावच्छिन्न"विषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण यद्रूपपदेन वन्ह्यभावत्वादेरुपादातुमशक्यतया एकदेशेऽतिव्याप्तिविरहात् । न च स्वरूपसम्बन्धरूपावच्छेदकताघटितकल्पेऽव्यापकीभूतविषयिताशून्यत्वं न निवेशनीयम्, जातिमान् वन्ह्यभाववानितिज्ञानीयवन्ह्यभा-

वबद्ह्रदत्वावच्छिन्नविषयताया अपि स्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वात्, जातिमान् वन्ह्यभाववानितिज्ञानकालीनस्य ह्रदो जातिमानितिज्ञानस्य ह्रदे वन्ह्यनुमितिविरोधित्वादिति वाच्यम् तावतापि ह्रदत्वावच्छेदेन वन्हेः साधने ह्रदत्वसामानाधिकरण्येन वन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्तेः, जातित्वादिना ह्रदत्वावगाहियज्जातिसामानाधिकरण्येन जातिमान् वन्ह्यभाववानिति ज्ञानं तदीयविषयितायाः यद्रूपावच्छिन्नविषयितासामान्यान्तर्गतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वविरहात्, जात्यवच्छेदेन वन्ह्यभावविषयिताया एव तथात्वात् ।

न च संयोगः संयोगाभाववानित्यादौ संयोगः संयोगवानितिभ्रमविषये संयोगेऽतिव्याप्तिः, संयोगत्वावच्छिन्नविषयित्वाऽव्यापिकायाः विषयितायाः प्रतिबन्धकज्ञानेऽसत्त्वादिति वाच्यम् । संयोगावच्छिन्नविषयितायाः अव्यापिकायाः प्रतिबन्धकज्ञाने सत्त्वादतिव्याप्तिविरहात् । नचैवं तत्रैव संयोगावच्छिन्नेऽतिव्याप्तिरिति वाच्यम् । पर्वतो वन्ह्यभाववानित्यादौ वन्हित्वेन वन्हित्वावगाहिनः वह्निमद्वान् पर्वत इत्यप्रतिबन्धकज्ञानस्य वारणाय यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयितात्वमिति रीत्याऽव्यापकविषयिताशून्यत्वस्य परिष्करणीयतया संयोगः संयोगवानितिज्ञाने संयोगावच्छिन्नविषयित्वाव्यापकीभूतायाः संयोगत्वावच्छिन्नविषयितानिरूपितसंयोगत्वावच्छिन्नविषयितायाः सत्त्वेन संयोगावच्छिन्ने संयोगत्वावच्छिन्ने वाऽतिव्याप्तिविरहात् ।

न च गोत्वाभावो गोत्वाभाववान् तद्व्यक्तित्वादित्यादिसद्धेतौ गोत्वाभावो गोत्ववानितिभ्रमविषयगोत्वाभावेऽतिव्याप्तिः, तज्ज्ञानीयगोत्वाभावविषयितायाः प्रतिबन्धकतावच्छेदकत्वात्, तत्र च भ्रमेऽव्यापकीभूतविषयिताशून्यत्वमप्यस्ति, गोत्वत्वावच्छिन्नविषयितायां गोत्वत्वावच्छिन्नविषयितानिरूपितगोत्वाभावत्वावच्छिन्नविषयितायां च गोत्वाभावत्वावच्छिन्नविषयित्वाव्यापकत्वविरहात्, गोत्ववद्गोत्वाभावत्वस्य चाऽप्रसिद्धत्वात्, अतः सामान्यपदम्, तदुपादाने च गोत्वाभाव इति ज्ञानीयतद्विषयितायां "सामान्यान्तर्गतायां" प्रतिबन्धकतावच्छेदकत्वविरहान्नातिव्याप्तिः, यद्रूपावच्छिन्नसंसर्गतानिरूपितयद्रूपावच्छिन्नविषयतात्वं तद्रूपावच्छिन्नविषयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नसंसर्गतानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वविवक्षणे समवायेन गोत्ववत्समानकालीनगोत्वाभावो गोत्वाभाववानित्यत्र बाधभ्रमविषये तादृशगोत्वाभावेऽतिव्याप्तिः समवायत्वावच्छिन्नसंसर्गतानिरूपितगोत्वत्वावच्छिन्नविषयत्वस्य गोत्ववत्समानकालीनगोत्वाभावत्वावच्छिन्नविषयत्वाव्यापकत्वविरहात्, ह्रदो जात्यभाववानित्यादौ जातिमज्जातिमत्त्वावच्छिन्नविषयितायाः विशेष्यितारूपत्वेन संसर्गानवच्छिन्नतया संसर्गनिवेशे जातिमान् जातिमानित्यादिज्ञानाऽवारणा(१)च्चेति वाच्यम् ।

---

(१) न चाऽनतिरिक्तवृत्तित्वकल्पे जातिमान् जातिमानित्यादिज्ञानस्यावश्यं वारणीयत्वेऽपि स्वरूपसम्बन्धरूपाऽवच्छेदकत्वकल्पे किमर्थं तद्वारणम्, जातिमान् ह्रद इति ज्ञानविशिष्टस्य तस्य ह्रदो जात्यभाववानित्यनुमितिप्रतिबन्धकत्वेन जातिमज्जातिमत्त्वावच्छिन्नविषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वादिति वाच्यम्। तत्रापि ह्रदत्वावच्छेदेन जात्यभावस्य साध्यत्वे ह्रदत्वे सामानाधिकरण्येन जातिमत्त्वं दोष इति जातिसामानाधिकरण्येन जातिमत्ताज्ञानस्याऽवश्यं वारणीयत्वाचद्वारणेन संसर्गविवक्षाया अशक्यत्वादिति ध्येयम् ।

यत्संबन्धावच्छिन्नयद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयितात्वमिति रीत्याऽव्यापकीभूतविषयिताशून्यत्वं निवेशनीयम्, तथाच समवायसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नविषयितानिरूपितगोत्वाभावत्वावच्छिन्नविषयितायाः गोत्वाभावविषयकत्वाऽव्यापकतया तच्छून्यत्वस्य प्रतिबन्धकीभूततादृशभ्रमेऽसत्त्वेन गोत्वाभावेऽतिव्याप्तिविरहेण सामान्यपदवैयर्थ्यं दुर्वारमेवेति चेद् ।

अत्राऽस्मद्गुरुचरणाः—गोत्वाभावत्वावच्छिन्नविषयितानिरूपितगोत्वविषयितायाः निरवच्छिन्नत्वेन यद्रूपावच्छिन्नविषयितेत्यनेनोपादानासम्भवात् गोत्वाभावे गोभेदसाध्यकसद्धेतौ गोत्वाभाववारणार्थं सामान्यपदमावश्यक(१)मिति । न च यद्रूपावच्छिन्नत्वं विहाय यन्निष्ठत्वनिवेशेनैवोक्तभ्रमवारणे सामान्यपदं व्यर्थं, तावन्मात्रेणैवाऽभावत्वेन ह्रदत्वावगाहि—अभाववान् वन्ह्यभाववानिति ज्ञानवारणं संभवति अभावत्वावच्छिन्नह्रदत्वनिष्ठविषयितानिरूपितह्रदनिष्ठविषयितायाः वन्ह्यभाववद्ह्रदविषयित्वाव्यापकतयोक्तभ्रमस्य तच्छून्यत्वाभावादिति वाच्यम् । तर्हि तद्वैयर्थ्यस्येष्टत्वादिति प्राहुः ।

कालीशंकरसिद्धान्तवागीशास्तु यत्र संयोगवत्संयोगवत्संयोगाभावस्य साध्यता संयोगवत्संयोगस्य(२) पक्षता तत्र संयोगवत्संयोगः संयोगवत्संयोगवत्संयोगवानित्यादिबाधभ्रमविषयीभूतसंयोगवत्संयोगवत्संयोगवत्संयोगरूपबाधैकदेशेऽतिव्याप्तिः ।

अत्र साध्यघटकीभूतप्रथमसंयोगस्य वैशिष्ट्यं संयोगसम्बन्धेन, द्वितीयस्य कालिकसम्बन्धेन । पक्षघटकसंयोगवैशिष्ट्यमपि कालिकसम्बन्धेन । साध्यघटकप्रतियोगित्वं च कालिकसम्बन्धावच्छिन्नं ग्राह्यम् । न च यद्रूपावच्छिन्नसांसर्गिकविषयितानिरूपितयद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपितयद्रूपावच्छिन्नविषयितात्वं विशिष्टविषयित्वाव्यापकं तद्रूपावच्छिन्नसांसर्गिकविषयितानिरूपिततद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वनिवेशे नोक्तातिव्याप्तिः, उक्तबाधभ्रमे तादृशाव्यापकीभूतसंयोगत्वावच्छिन्नसांसर्गिकविषयितानिरूपितसंयोगत्वावच्छिन्नविषयितात्वावच्छिन्ननिरूपितसंयोगत्वावच्छिन्नविषयिताशून्यत्वविरहादिति वाच्यम् । गगनाभाववत्संयोगवत्संयोगः संयोगवत्संयोगवत्संयोगाभावव-

(१) एतेन अभावत्वेन ह्रदत्वावगाहि—अभाववान् वह्न्यभाववानितिज्ञानमादायाऽसम्भववारणाय यद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपितयद्रूपावच्छिन्नविषयितात्वं तादृशाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं निवेशनीयम्, तथाच वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपितत्वं न वन्ह्यभाववान् ह्रद इति ज्ञानीयाऽभावत्वावच्छिन्नविषयितायां, किन्तु अभाववान् वन्ह्यभाववानितिज्ञानीयाऽभावत्वावच्छिन्नविषयितायामेवेति तज्ज्ञानवारणम् । एवं च गोत्वाभावत्वावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपितगोत्वत्वावच्छिन्नविषयितात्वस्य गोत्वाभावत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतया तादृशविषयिताशून्यत्वस्य गोत्वाभावो गोत्ववानिति ज्ञानेऽसत्त्वेन गोत्वाभावादावतिव्याप्तिविरहेण सामान्यपदं व्यर्थमिति निरस्तम् ।

(२) संयोगसम्बन्धावच्छिन्नावच्छेदकतानिरूपितसंयोगावच्छिन्नावच्छेदकतात्मकविषयतायाः संयोगावच्छिन्नविषयतानिरूपितसंयोगवत्संयोगत्वावच्छिन्नप्रकारतात्मकविषयतायाश्चाऽव्यापकत्ववारणाय पक्षांशे संयोगद्वयप्रवेशः । ननु निरवयवयोः परमाण्वोः कथं संयोगस्तस्य किञ्चिदवच्छिन्नवृत्तिकत्वनियमादिति चेन्न । विभिन्नादिश एवावच्छेदकत्वात्—यथेह पक्षी चरति नेह पक्षीति व्यवहारो विभिन्नदिगवच्छेदेनेति ध्येयम् ।

**न च सामान्यपदस्य व्यापकतार्थकतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयतात्वव्यापकत्वं प्रवेश्यं, तदपेक्षया प्रतिबन्धकतायां विशिष्टविषयताव्यापकत्वनिवेशनमेवोचितमिति वाच्यम्। यतो वह्न्यभावविशिष्टह्रदादिनिरूपितविषयताया अनुमित्यप्रतिबन्धकसंशयाहार्य्याप्रामाण्यज्ञानास्कन्दितज्ञानसाधारणतया नानुमितिप्रतिबन्धतायां तद्व्यापकत्वमित्यनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टाया विशिष्टविषयताया व्यापकत्वं प्रतिबन्धकतायां भवता विवक्षणीयं, तदपेक्षया लाघवेन च स्वरूपसम्बन्धरूपावच्छेदकतायां बाधादिरूपदोषविषयतात्वव्यापकत्वं वक्तुमुचितम्।**

---

नित्यादौ बाधभ्रममादाय तदेकदेशे साध्यघटकप्रथमसंयोगं परित्यज्य संयोगवत्संयोगवद्गगनाभाववत्संयोगवत्संयोगेऽतिव्याप्तिः। अत्र साध्यघटकप्रथमसंयोगवैशिष्ट्यं स्वरूपसम्बन्धेन, द्वितीयादिवैशिष्ट्यन्तु कालिकेन, तथाच स्वरूपत्वावच्छिन्नसांसर्गिकविषयितानिरूपितसंयोगत्वावच्छिन्नविषयितात्वावच्छिन्ननिरूपितसंयोगत्वावच्छिन्नविषयित्वमपि न विशिष्टविषयित्वाव्यापकमिति वदन्ति।

केचित्तु यत्र ह्रद इत्याकारकं ज्ञानं नियमतो वन्ह्यभाववद्ह्रदावगाहि भवति अर्थात् वन्ह्यभाववान् ह्रदो ह्रदश्चेति समूहालम्बनरूपं, वन्ह्यभावांशेऽप्रामाण्यज्ञानास्कन्दितमपि तत्र ह्रदेऽतिव्याप्तिवारणाय सामान्यपदमिति प्राहुः।

गोलोकभट्टाचार्यास्तु—यत्र स्वरूपे स्वरूपवद्भेदत्वं साध्यते तत्र स्वरूपवद्भेदत्ववद्भेदवत् स्वरूपं बाधः तत्र स्वरूपवद्भेदत्ववद्भेदवति अतिव्याप्तिः, तादृशभेदावच्छिन्नविषयित्वाव्यापिकायास्तादृशविषयितायाः प्रतिबन्धकीभूतदोषज्ञानेऽसत्त्वात्तज्ज्ञानीयतादृशभेदावच्छिन्नज्ञानीयविषयितायाः प्रतिबन्धकतावच्छेदकत्वात्, यद्रूपावच्छिन्नविषयता तादृशविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयिताशून्यत्वमपि निवेश्य तादृशभेदावच्छिन्नविषयित्वाव्यापकविशिष्टदोषविषयिताशून्यत्वस्य तादृशदोषज्ञानेऽभावेन तद्दोषवारणे तु गौरवमिति प्राहुरिति दिक्।

सामान्यपदस्य व्यापकत्वार्थकतया यद्रूपावच्छिन्नविषयतात्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकता तद्रूपवत्त्वमिति पर्यवसितार्थे गौरवमाशङ्कते **न चेत्यादिना। विशिष्टेति।** यद्रूपावच्छिन्नेत्यर्थः। **प्रवेश्यम्**—स्वरूपसम्बन्धरूपाऽवच्छेदकत्ववादिनेति शेषः। **तदपेक्षया**—प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयतात्वव्यापकत्वनिवेशापेक्षया, लाघवादिति शेषः। **उचितमिति।** प्रागुक्तरीत्याऽनतिरिक्तत्ववादिनेति शेषः।

अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशपक्षे गौरवं दर्शयति **यत इत्यादिना विवक्षणीयमित्यन्तेन। तद्व्यापकत्वम्**—विषयिताव्यापकत्वम्। **विशिष्टविषयितायाः**—यद्रूपावच्छिन्नविषयितायाः। **भवता**—अनतिरिक्तवृत्तित्ववादिना, **तदपेक्षया,** अत इत्यादिः, तादृशनिश्चयवृत्तित्वविशिष्टविषयिताव्यापकत्वापेक्षयेत्यर्थः। **लाघवेन च**—वक्ष्यमाणरीत्येति शेषः। बाधादिरूपदोषविषयतात्वव्यापकत्वमिति सावधारणम्।

बाधादिरूपदोषविषयतात्वव्यापकत्वमेवेत्यर्थः । एवकारेण अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्ववैशिष्ट्यस्य व्यवच्छेदः । यद्रूपावच्छिन्नविषयतात्वव्यापकत्वमेवेत्यर्थः । तथा च यद्रूपावच्छिन्नविषयितात्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकता तद्रूपवत्त्वं लक्षणम् ।

अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतावृत्तिरूपवत्त्वम् । प्रतिबन्धकतावच्छेदकतावृत्तित्वं च रूपे स्वावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वद्वयं रूपपरम् । तादृशं च रूपं वन्ह्यभाववद्ह्रदत्वादिकम् ।

प्रकारविधयाऽनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतावृत्त्यभावीयाऽवच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्वम् । अभावप्रतीतिस्तु रूपावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति ।

अथवा तादृशप्रतिबन्धकतावृत्तिरूपवत्त्वम् । प्रतिबन्धकतावृत्तित्वं रूपे पूर्ववत् । स्वावच्छिन्नविषयितावृत्तिभेदोऽवच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकः इति विशेषः।

अथाऽत्र प्रतिबन्धकतावच्छेदकतायां तादृशविशिष्टविषयितात्वव्यापकत्वनिवेशे तादृशविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावो निवेश्यः, प्रतिबन्धकतायां व्यापकत्वनिवेशपक्षे तु विशिष्टविषयितावन्निश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावो निवेश्यः, एवं च विषयिताव्यापकत्वनिवेशपक्षे एव गौरवम्, तत्प्रतियोगितावच्छेदककोटौ निश्चयस्याऽधिकस्य प्रवेशादिति "विषयिताव्यापकत्वनिवेशनमेवोचितमि"ति ग्रन्थोऽसङ्गतः । न च स्वरूपसम्बन्धरूपाऽवच्छेदकतावादिमतेऽपि विषयितायां निश्चयीयत्वमवश्यं निवेश्यम्, अन्यथा इच्छीययद्रूपावच्छिन्नविषयितायाः प्रतिबन्धकतानवच्छेदकतयाऽसम्भवापत्तेः, तथाच तन्मते निश्चयीययद्रूपावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्यैव निवेशनीयतयाऽनतिरिक्तवृत्तित्ववादिमते क्व गौरवम्, ज्ञानीयद्रूपावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य यद्रूपावच्छिन्नविषयितावन्निश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य च तुल्यत्वेऽपि प्रतिबन्धकतावच्छेदकतायां व्यापकत्वस्य निवेशे एव लक्षणशरीरं गुरु, तत्राऽवच्छेदकत्वस्याधिकस्य निवेशात्, प्रतिबन्धकतायामेव अवच्छेदकतासम्बन्धेन व्यापकत्वनिवेशेऽपि अनतिरिक्तवृत्तित्ववादिमते तादृशनिश्चयनिष्ठाऽत्यन्ताभावाऽप्रतियोगित्वरूपव्यापकत्वानिवेशनं सम्भवति, न तु तन्मते, वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वेनावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताऽत्यन्ताभावाऽप्रसिद्धेः, तादृशविषयितानिष्ठतत्सम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वस्यैव निवेशनीयतया तादृशव्यापकत्वरूपाऽभावप्रतियोगितायामपीति गौरवमतो न तद्ग्रन्थाऽसङ्गतिरिति वाच्यम् । तादृशाऽत्यन्ताभावाऽप्रतियोगित्वस्य कुत्राप्यसत्त्वात्, उभयाभावादिकमादाय प्रतियोगित्वस्यैव सर्वत्र सत्त्वात्, अतस्तादृशात्यन्ताभावप्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता—

नवच्छेदकैकत्ववदुभयावृत्ति(१)धर्मवत्त्वं विवक्षणीयम्, तथाच स्वमते एव गौरवम् । न च तन्मतेऽपि तादृशविषयितावृत्तितादृशप्रतिबन्धकतावद्घटोभयभेदं तादृशप्रतिबन्धकतावद्बुद्धित्वावच्छिन्नविषयित्वादिभेदं चाऽऽदायाऽसम्भववारणायोऽक्तविवक्षाऽऽवश्यकीति वाच्यम् । तथापि तादृशविषयितावृत्तिभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववत्त्वस्यैव विवक्षणीयत्वात्, तद्व्यक्तेः स्वरूपतो भानाङ्गीकारेण तद्व्यक्तिमान्नेत्याकारकभेदस्य(२) तादृशविषयितायामसत्त्वेन तादृशैकत्ववदुभयावृत्तिधर्मवत्त्वस्याऽविवक्षणीयतया लाघवस्याऽनपायादिति चेन्न ।

तद्व्यक्तेः स्वरूपतो भानानङ्गीकारे तादृशविवक्षायां विषयितावृत्तियत्किञ्चित्प्रतिबन्धकताव्यक्तिमद्भेदमादायाऽसम्भववारणाय तादृशविषयितावृत्तिभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववद्धर्मवत्त्वस्य विवक्षणीयतया तादृशधर्मे उभयावृत्तित्वानुपादाने तादृशप्रमेयत्ववत्त्वमादायोदासीनेऽतिव्याप्तेः, तथा च गौरवं दुष्परिहरमेवेति ।

अथवा स्वमते तादृशनिश्चयवृत्त्युभयावृत्तिधर्मेतरधर्मानवच्छिन्नप्रतियोगिताकात्यन्ताभावाऽप्रतियोगित्वं विवक्षणीयम् । तन्मते विषयितावृत्त्युभयावृत्तिधर्मेतरधर्मानवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वाभावो वक्तव्य इति गौरवमिति दिक् ।

वस्तुतो विषयिताव्यापकत्वपक्षे "व्यापकतायाः अत्यन्ताभावघटितत्वे" तज्ज्ञानवृत्तित्वविशिष्टप्रतिबन्धकत्वाभावमादायाऽसम्भववारणाय तादृशप्रतिबन्धकतात्वातिरिक्तप्रतिबन्धकतावृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावे निवेश्यम्, विषयितात्वव्यापकत्वपक्षे च तादृशप्रतिबन्धकतावच्छेदकतात्वातिरिक्ततादृशप्रतिबन्धकतावच्छेदकतावृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वं निवेश्यम् । व्यापकताया भेदघटितत्वे तु विषयिताव्यापकत्वपक्षे प्रतिबन्धकतावत्तज्ज्ञानव्यक्तिभेदमादायाऽसम्भववारणाय भेदीयप्रतियोगितायां प्रतिबन्धकत्वातिरिक्तप्रतिबन्धकज्ञानवृत्तिधर्मानवच्छिन्नत्वं निवेशनीयम्, एवं तज्ज्ञानवृत्तित्वविशिष्टप्रतिबन्धकतावान्नेतिभेदमादायाऽसम्भववारणाय भेदीयप्रतियोगितावच्छेदकतायां प्रतिबन्धकतात्वातिरिक्तप्रतिबन्धकतावृत्तिधर्मानवच्छिन्नत्वं निवेशनीयम् । विषयतात्वव्यापकत्वनिवेशपक्षे प्रतिबन्धकतावच्छेदकतावद्घटोभयन्नेति भेदमादायाऽसम्भववारणाय भेदीयप्रतियोगितायां प्रतिबन्धकतावच्छेदकतातिरिक्ततादृशविषयितावृत्तिधर्मानवच्छिन्नत्वं निवेशनीयम्, एवं तद्विषयितावृत्तिप्रतिबन्धकतावच्छेदकतावान्नेति भेदमादायाऽसम्भववारणाय प्रतिबन्धकतावच्छेदकतात्वातिरिक्तप्रतिबन्धकतावच्छेदकतावृत्तिधर्मानवच्छिन्नत्वं निवेशनीयम्, ईदृशरीत्यैवावच्छेदकतासम्बन्धेन विषयितात्वव्यापकत्वनिवेशपक्षेऽपि निवेशो बोध्यः । एवं च स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशपक्षे गौरवं स्फुटमेवेत्यस्मद्गुरुचरणाः ।

---

(१) धर्मे उभयावृत्तित्वानुपादाने तादृशैकत्ववत्प्रमेयत्ववत्त्वमादायोदासीनेऽतिव्याप्तेः ।

(२) प्रतिबध्यतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठानिरवच्छिन्नावच्छेदकतानिरूपितप्रतिबध्यत्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता सती प्रतिबन्धकतात्वनिष्ठावच्छेदकतानिरूपिता या प्रतिबन्धकतानिष्ठावच्छेदकता तन्निरूपकप्रतियोगिताकभेदस्येत्यर्थः ।

**तथासति निश्चयत्वाद्यनिवेशात् समानाकारकज्ञानस्य विषयिताया भेदस्याप्रामाणिकतया संशयादिज्ञानीयविषयिताया अपि निश्चयत्वादिविशिष्टीयतयैव प्रतिबन्धकतावच्छेदकतया बाधादिरूपदोषनिरूपितविषयतात्वव्यापकताया अक्षतत्वात् ।**

---

**तथासति**-स्वरूपसम्बन्धरूपावच्छेदकतायां यद्रूपावच्छिन्नविषयतात्वव्यापकत्वोक्तौ । **निश्चयत्वाद्यनिवेशादिति** । आदिनाऽऽनाहार्यत्व-अप्रामाण्यज्ञानानास्कन्दितत्वयोः परिग्रहः । ननु संशयनिश्चयविषयतभेदाद्दोषविषयतात्वव्यापकत्वमवच्छेदकतायां न सम्भवति अन्यथा संशयस्याऽपि प्रतिबन्धकत्वापत्तेरित्यत आह **समानाकारकेति**(१) । **संशयादिज्ञानीयेति** । ह्रदो वन्हिमान्नवेतिसंशयीयेत्यर्थः । आदिना आहार्यज्ञानीयविषयत्व-अप्रामाण्यज्ञानास्कन्दितविषयत्वयोः परिग्रहः । **निश्चयत्वादिविशिष्टीयतयेति** । निश्चयीयतयेत्यर्थः । तथाच संशयनिश्चयविषयतयोरैक्यतया संशयीयविषयताया अपि प्रतिबन्धकतावच्छेदकतयेति यावत् । **बाधादिरूपदोषनिरूपितविषयतात्वेति** । वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतात्वेत्यर्थः । तथाच स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशपक्षे तादृशनिश्चयत्वाद्यनिवेशाल्लाघवं बोध्यम् ।

ननु स्वविरोधिधर्मधर्मितावच्छेदकक-स्वप्रकारक "वन्ह्यभाववान् ह्रदो वन्हिमानित्याकारक" आहार्यज्ञानीयवन्ह्यभाववद्ह्रदविषयितायामनाहार्यविषयिताभेदो दुर्वारः, "आहार्य"तद्विषयितायाः वन्हिनिरूपितत्वात् , "अनाहार्य"तद्विषयितायास्तदनिरूपितत्वात् , तथाच वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतासामान्यान्तर्गतायां वन्ह्यभाववान् ह्रदो वन्हिमानित्याहार्यज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतायां ह्रदो वन्हिमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकताविरहाद्यद्रूपदेन वन्ह्याभाववद्ह्रदत्वादेरुपादातुमशक्यतयाऽसम्भववारणाय तादृशनिश्चयत्वादिनिवेश आवश्यक

---

(१) ज्ञाननिष्ठं समानाकारकत्वं च स्वीयमुख्यविशेष्यतावृत्तित्वम्, वृत्तित्वं च स्वीयमुख्यविशेष्यतावत्त्वसम्बन्धेन । स्वं समानाकारकत्वेनाभिमतं ज्ञानम् । मुख्यविशेष्यतावत्ता च स्वसमनियतत्व-स्वनिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन । रूपवृत्तित्वं च स्वनिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । निरूपितत्वं च साक्षात्परंपरासाधारणम् । वन्ह्यभाववान् ह्रद इतिज्ञानीयमुख्यविशेष्यतानिरूपितविषयतापर्याप्त्यनुयोगितावच्छेदको धर्मः वन्हि-वन्हित्व-अभाव-अभावत्वगतयावत्त्वमेव, तद्वृत्तित्वं वन्ह्यभाववान् ह्रद इति प्रमीयविशेष्यताया एव, नतु वन्ह्यभावत्वादिना घटाद्यवगाहिज्ञानीयनिरूपितविशेष्यतायाः, नहि यथार्थतादृशज्ञानसमानाकारकत्वं भ्रमस्य । अत एव स्वनिरूपितविषयतावच्छेदकतापर्याप्तिर्नोक्ता, तस्याः भ्रमसाधारण्यात् । महानसीयवन्हित्वावच्छिन्नविषयतावच्छेदकतात्वावच्छिन्नस्यैव वन्ह्यभाववान् ह्रद इति ज्ञानीयमुख्यविशेष्यतानिरूपितविषयतात्वावच्छिन्नस्यापि व्यासज्यवृत्तित्वात्तादृशयावत्त्वस्य तत्पर्याप्त्यनुयोगितावच्छेदकत्वस्याक्षतत्वात् ।

संशये कोटिद्वयप्रकारतानिरूपितविशेष्यताद्वयस्याऽभ्युपगततया तत्तत्कोटिप्रकारतानिरूपितविशेष्यतावृत्तित्वस्य तत्तत्कोटिप्रकारताकनिश्चये सत्त्वेन संशयनिश्चययोः समानप्रकारकत्वमुपपन्नम् ।

घटत्वेन घटावगाहिज्ञानस्य घटत्वेन पटावगाहिज्ञानस्य च समानाकारकत्ववारणाय स्वसमनियतत्वनिवेशः । सामानाधिकरण्यमात्रनिवेशेन तद्वारणेऽपि घटत्वेनैकघटावगाहिज्ञानस्य घटत्वेन नानाघटावगाहि-

न च वन्ह्यभाववान् ह्रदो वन्हिमानित्याहार्य्यज्ञानीयवन्ह्यभावविशिष्टह्रदादिविषयिता नाऽनाहार्य्यज्ञानसाधारणी तादृशाहार्य्यज्ञानसमाना·

इत्याशयेन शङ्कते नचेति । नाऽनाहार्यज्ञानसाधारणी-नाऽनाहार्यज्ञानवृत्तिः । विषयिताभिन्नैवेति यावत् । भेदकमाह तादृशेति(१) । वन्ह्यभाववान् ह्रदो वन्हिमानित्याकारकेत्यर्थः । आहार्यज्ञानसामग्री बाधकालीनेच्छाघटिता अनाहार्यसामग्री च विपरीतज्ञाना·

ज्ञानस्य च समानाकारकत्वापत्तिरतस्तदुपेक्षितम् । अत एव समनियतत्वघटकदलद्वयम् । घटत्वेन घटावगाहिज्ञानस्य पटत्वेन घटावगाहिज्ञानस्य च घटो रूपवान् घटो रसवानिति ज्ञानयोश्च समनियतत्ववारणाय स्वनिरूपितेत्यादिद्वितीयसम्बन्धानिवेशः । वह्न्यभाववान् ह्रदः, वह्न्यभाववद्ध्रदवान्देश इति ज्ञानयोः समानाकारकत्ववारणाय विशेष्यतायां मुख्यत्व(१)निवेशः ।

अत्रेदं बोध्यम् । वह्निमान् ह्रदो वह्न्यभाववानिति ज्ञानस्य न ह्रदो वन्ह्यभाववानित्यनाहार्यज्ञानसमानाकारकत्वम्, वन्ह्यभाववान् ह्रद इति ज्ञानीयह्रदनिष्ठविशेष्यतानिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकवन्ह्यभावविषयताह्रदत्वविषयतागतद्वित्वे उक्ताऽऽहार्यज्ञानीयह्रदविशेष्यताया वृत्तित्वविरहात्, तस्याः स्वनिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वन्ह्यभावविषयतावन्हिविषयताह्रदत्वविषयतागतत्रित्वे सत्वात् । न च स्वनिरूपितविषयतायां मुख्यविशेष्यतावच्छेदकतानात्मकत्वं निवेशनीयम्, तथाच स्वनिरूपितविषयतापदेन वन्हिनिष्ठधर्मितावच्छेदकतात्मकविषयता गृहीतुं न शक्यते इति वाच्यम् । एवमपि वन्ह्यभाववान् ह्रदो वन्हिमानित्याहार्यज्ञानस्य वन्ह्यभाववान् ह्रद इत्यनाहार्यसमानाकारकत्वानुपपत्तितादवस्थ्यात्, इष्टापत्तौ उभयोरेव न समानाकारकत्वमविशेषात्, एवं च धर्मितावच्छेदकतानात्मकत्वविशेषणमप्यनुपादेयमेवेति ध्येयम् ।

(१) न च तादृशपदं व्यर्थम्, सामान्यत आहार्यज्ञानसमानाकारकाऽनाहार्यज्ञानाऽप्रसिद्ध्यभिधानं न सम्भवति ह्रदो वन्हिमानितिज्ञानानन्तरमिच्छाजन्यह्रदो वन्ह्यभाववानित्याहार्यज्ञानस्य कैश्चिदभ्युपगमादतस्तादृशेति । पूर्वं ह्रदो वन्हिमानितिबाधज्ञानरूपस्य ह्रदांशे वन्ह्यभावधर्मितावच्छेदकतया वन्हिभासककारणस्य सत्त्वे निरुक्तरूपमेवाऽऽहार्यज्ञानं जायते इत्यभिप्रायः ।

(१) मुख्यत्वं च न प्रकारतानात्मकत्वम्, भट्टाचार्यमते समानाधिकरणविषयतयोर्नाभेदः किन्तु अवच्छेद्यावच्छेदकभाव इति गौणीयविशेष्यताया अपि प्रकारताभिन्नत्वात्तद्दोषतादवस्थ्यात् । नापि विषयत्वानवच्छिन्नत्वम्, विशेष्यतावच्छेदकनिष्ठनिरवच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नविशेष्यत्वावच्छिन्नत्वात्, किन्तु प्रकारत्वानवच्छिन्नत्वं तत् ।

केचित्तु अवच्छेदकत्वानवच्छिन्नप्रकारतानिरूपितत्वं तत् । तेन घटवद्भूतलवान्देश इति ज्ञानीयघटत्वावच्छिन्नप्रकारितानिरूपित"प्रकारतानात्मकं"भूतलत्वावच्छिन्नविशेष्यतामादाय घटवद्भूतलमित्यस्य न समानाकारकत्वापत्तिः, घटनिष्ठावच्छेदकत्वावच्छेद्यघटनिष्ठप्रकारतानिरूपितत्वादित्याहुः ।

इदमत्र तत्त्वम्-अन्तराभासमानपदार्थनिष्ठविशेष्यताप्रकारतयोर्भट्टाचार्यमतेऽवच्छेद्यावच्छेदकभावः । तेषामयमाशयः-पुरुषत्वावच्छिन्नाविशेष्यकदण्डाभावत्वावच्छिन्नप्रकारकबुद्धिं प्रति पुरुषत्वावच्छिन्नदण्डत्वावच्छिन्नप्रकारकनिश्चयस्य प्रतिबन्धकत्वम् तयोरभेदस्वीकारे तु सुन्दरपुरुषवद्दण्डवान्देश इत्यस्यापि प्रतिबन्धकत्वापत्तिः । अत्रापि सुन्दरत्वप्रकारतानिरूपिता या पुरुषे विशेष्यता सैव पुरुषत्वावच्छिन्नप्रकारता इति तस्यां दण्डत्वावच्छिन्नाविशेष्यतात्मकप्रकारतानिरूपितत्वसत्त्वात् । जगदीशस्तु दण्डत्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यत्ववत्पुरुषत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकतामभ्युपैति । तत्र जगदीशमते निरूपकतानिरूपितनिरूप्यतारूपाऽधिकपदार्थकल्पनापेक्षया भेदमङ्गीकृत्याऽवच्छेद्यावच्छेदकभावस्वीकार इति भट्टाचार्यतात्पर्यम् ।

कारकानाहार्य्यज्ञानाप्रसिद्धेः, ह्रदो वन्ह्यभाववानित्यनाहार्य्यज्ञानीयवन्ह्य-भावविशिष्टह्रदादिविषयतातश्च वन्ह्यादिप्रकारतानिरूपिततादृशाहार्य्यज्ञा-नीयविशिष्टह्रदादिविषयताया भिन्नत्वात्, तथाचानाहार्य्यज्ञानवृत्तित्ववि-शिष्टविषयताया एव प्रतिबन्धकतावच्छेदकतया न प्रतिबन्धकतावच्छेद-कतायां दर्शिताऽऽहार्य्यज्ञानीयविषयितासाधारणविशिष्टविषयितात्वव्या-पकत्वमिति वाच्यम्।

तथासति अनाहार्य्यज्ञानीयविशिष्टविषयितात्वव्यापकताया एव वि-वक्षणीयत्वात्, तावतापि संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वाप्र-वेशेन लाघवानपायात्।

मैवम्, स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे पाषाणमयत्वाद्यवच्छेदेन वन्ह्यभाववत्तानिश्चयविशिष्टस्य पाषाणमयत्वादिविशिष्टस्य पक्षादेर्ज्ञानस्य वन्ह्यनुमितिप्रतिबन्धकतया तदवच्छेदकविषयिताकपाषाणमयत्ववििशि-

भावघटिता, नह्येतादृशसामग्रीसम्बलनसम्भवः। अतोऽनाहार्यसामग्रीप्रयोज्यविषयिताया नाऽऽहार्यसाधारण्यसम्भवः, अहार्यसामग्रीप्रयोज्यविषयितायाः नाऽनाहार्यसाधारण्यसम्भव इति भावः। **तथाच**—आहार्यअनाहार्यज्ञानीयविषयितयोर्भिन्नत्वे च। **अनाहार्यज्ञानवृत्तित्वविशिष्टेति।** वै० स्वरूपसम्बन्धेन। **दर्शिताऽऽहार्येऽति।** वह्न्यभाववान् ह्रदो वह्निमानित्याकारकाऽऽहार्येत्यर्थः। **विशिष्टविषयितात्वेति।** वह्न्यभाववद्ह्रदत्वा-वच्छिन्नविषयितात्वेत्यर्थः। तथाचाऽसम्भव इति भावः। **तथासति**—आहार्यज्ञानीयअ-नाहार्यज्ञानीयविषयितयोर्भेदे सति। एवकारेण अप्रामाण्याज्ञानानास्कन्दितत्वस्य संशयान्य-त्वस्य च व्यवच्छेदः। **तावतापि**—अनाहार्यत्वानिवेशेनाऽपि। **लाघवाऽनपायादिति।** स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपक्षे इत्यादिः।

स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे दोषमाह **मैवमिति। पाषाणमयत्वाद्य-वच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टस्येति।** पाषाणमयो न वह्निमानितिनिश्चय-विशिष्टस्येत्यर्थः। पाषाणमयत्वव्यापको वह्न्यभाव इति निश्चयविशिष्टस्येति यावत्। **पाषा-णमयत्वादिविशिष्टस्येति।** पाषाणमयत्वप्रकारकस्येत्यर्थः। व्याप्यवत्तानिश्चयस्येति यावत्। **पक्षादेर्ज्ञानस्य**—पर्वतविशेष्यकज्ञानस्य। पर्वतः पाषाणमय इति ज्ञानस्येति या-वत्। **वन्ह्यनुमितिप्रतिबन्धकतया**—पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतया। **तद-वच्छेदकेति।** प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावदित्यर्थः। **पाषाणम-यत्वविशिष्टपक्षादाविति।** पाषाणमयत्ववत्पर्वत इत्यर्थः। **अतिव्याप्तिरिति।** तथाच पर्वतो वह्निमानित्यनुमितिं प्रति पाषाणमयो न वह्निमानितिनिश्चयविशिष्टस्य पर्वतः पाषाण-मय इति निश्चयस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम्, एवं च समानाकारकज्ञानी-यविषयितायाः ऐक्येन "पाषाणमयो न वह्निमानिति" ज्ञानकालीनस्य पर्वतः पाषाणमय इति ज्ञानस्य तादृशज्ञानाऽकालीनस्य पर्वतः पाषाणमय इति ज्ञानस्य च समानाकारकतया तदी-यपाषाणमयत्ववत्पर्वतविषयिताया ऐक्यात्, तादृशज्ञानकालीनतादृशज्ञानीयपाषाणमयत्वव-

दृपक्षादावतिव्याप्तिः । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे तादृशाविशिष्टविषयतायाः पाषाणमयत्वावच्छेदेन वन्ह्यभाववत्तानिश्चयाविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेनातिप्रसङ्गानवकाशात् । न चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽपि जलाद्यवच्छेदेन वन्ह्यभावाद्यवत्ताघटितस्य वन्ह्यभाववज्जलादिमद्वृत्तिजलादिविशिष्टस्य ह्रदादिरूपपक्षस्य जलवान् वन्ह्यभाववानित्यादिज्ञानसहितस्य जलवांश्च ह्रद इत्यादिज्ञानस्य तादृशज्ञानविशिष्टतादृशज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकताशून्यज्ञानाविषयस्य सत्प्रतिपक्षाद्यनात्मकस्य वारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायामवश्यं निवेशनी·

त्पर्वतविषयतायाः प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्वे पाषाणमयत्ववत्पर्वतविषयतासामा(१)न्यस्यैव तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन यद्रूपपदेन पाषाणमयत्ववत्पर्वतत्वस्य धारणसम्भवेन तद्रूपावच्छिन्नत्वस्य पाषाणमयत्ववत्पर्वते सत्वादतिव्याप्तिरिति भावः ।

अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु न तत्राऽतिव्याप्तिरित्याह **निवेशपक्षे इति । तादृशविशिष्टविषयताया इति** । पाषाणमयत्ववत्पर्वतविषयताया इत्यर्थः । **पाषाणमयत्वावच्छेदेन वन्ह्यभाववत्तानिश्चयाऽविशिष्टेति** । पाषाणमयो न वह्निमानितिनिश्चयाऽकालीनेत्यर्थः । **ज्ञानसाधारणतयेति** । पर्वतः पाषाणमय इति निश्चयवृत्तितयेत्यर्थः ।

वन्ह्यभाववत्पाषाणमयत्ववद्वृत्तिपाषाणमयत्ववत्पर्वतस्याऽप्रसिद्ध्याऽतिप्रसंगविरहेणाह । **जलावच्छेदेनेति । ह्रदादिरूपपक्षस्येति** । वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदस्येति यावत् । **तादृशप्रतिबन्धकताशून्यज्ञानाऽविषयस्येति** । ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकताशून्यज्ञानाविषयस्येत्यर्थः । तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयिताकस्येति यावत् । दोषान्तर्भावभ्रमं निरस्यति **सत्प्रतिपक्षाद्यनात्मकस्येति** । जलव्यापकवन्ह्यभावसामानाधिकरण्यविशिष्टजलाऽघटितत्वात् । **वारणायेति** । वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिवारणायेति भावः । **निवेशनीयतयेति** । तथा च वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदे नाति·

(१) ननु पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयतासामान्यान्तर्गता वन्हिमान्पर्वतः पाषाणमय इतिज्ञानीयपाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयतापि, सा च न प्रतिबन्धकतावच्छेदिका पाषाणमयो न वन्हिमानितिज्ञानकाले वन्हिमान्पर्वतः पाषाणमय इति ज्ञानस्याऽऽहार्यतयाऽप्रतिबन्धकत्वादिति चेन्न ।

यद्रूपावच्छिन्नविषयितायामव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्य विवक्षिततया वन्हिमत्पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितायाः पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयित्वाऽव्यापकतया तत्र तच्छून्यज्ञानीयत्वविरहेण रूज्ञानीयविषयिताया धर्तुमशक्यत्वात् ।

केचित्तु वन्हिमत्पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयिताऽपि प्रतिबन्धकतावच्छेदिका भवति पाषाणमयो वन्ह्यभाववानिति ज्ञानानन्तरं तादृशज्ञानस्यांऽशत आहार्यतया पाषाणमयत्ववत्पर्वतांशे अनाहार्यत्वादित्याहुः ।

यतया मन्मतेऽपि तत्र नातिप्रसङ्ग इति वाच्यम् ।

ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तेः । साध्याभावांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानसाधारण्यानुरोधेनावश्यकत्वप्रतिबन्धकतयैवोपपत्तेः तादृशविशिष्टज्ञानस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावादुक्तविशिष्टेतिऽप्रसङ्गस्तु विवक्षणीयविशिष्टा-

---

व्याप्तिः, वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदविषयकनिश्चयस्य जलवान् वन्ह्यभावान्, जलवांश्च ह्रद इत्याकारकस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया तत्प्रतिबन्धकताया ज्ञानवैशिष्ट्यावच्छिन्नत्वात् । **मन्मतेऽपि**—स्वरूपसम्बन्धरूपाऽवच्छेदकत्ववादिमतेऽपि । **तत्र**—पाषाणमयत्ववत्पर्वते । **नातिप्रसङ्ग इति** । ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशादेवेत्यादिः । पाषाणमयत्ववत्पर्वतविषयकनिश्चयस्याऽपि "पाषाणमयो न वह्निमान्" इति निश्चयविशिष्ट"पर्वतश्च पाषाणमय इति" निश्चयत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहात् । **प्रतिबन्धकताविशेषणत्वे**—वन्ह्यभावव उजलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिवारणेऽपीति शेषः । **प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षाऽव्याप्तेरिति** । तन्निश्चयप्रतिबन्धकत्वस्य ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहात् । अयं भावः । सत्प्रतिपक्षश्च साध्याभावव्याप्यहेतुमत्पक्षरूपः । साध्याभावव्याप्तिश्च साध्याभाववदवृत्तित्वरूपा, प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुरूपा च । तत्र साध्याभावाभाववदवृत्तिमत्पक्षरूपसत्प्रतिपक्षनिश्चयस्य "साध्याभावाभाववदवृत्तिमान्पक्ष इत्याकारकस्य" ज्ञानवैशिष्ट्यानवच्छिन्नमेव प्रतिबन्धकत्वम् । प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षनिश्चयस्य च ज्ञानवैशिष्ट्यावच्छिन्नमेव प्रतिबन्धकत्वम्, प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमान्पक्षः इति निश्चयस्येव हेतुव्यापकः साध्याभावः "हेतुमान् साध्याभाववान्" इति निश्चयविशिष्टस्य प्रतिहेतुमान् पक्ष इति निश्चयस्यापि प्रतिबन्धकत्वात् । तदेवाह **तद्व्यापकताग्रहविशिष्टेति** । हेतुव्यापकताग्रहविशिष्टेत्यर्थः । हेतुव्यापकः साध्याभावः "हेतुमान् साध्याभाववान्" इति ग्रहविशिष्टेत्यर्थः । **तद्वत्ताज्ञानत्वेनेति** । हेतुमत्ताज्ञानत्वेनेत्यर्थः । हेतुमान्पक्ष इति निश्चयत्वेनेत्यर्थः । ननु साध्याभावाभाववदवृत्तिपक्षविषयकनिश्चयत्वेनैव प्रतिबन्धकत्वम्, तच्च प्रतिबन्धकत्वं ज्ञानवैशिष्ट्यानवच्छिन्नमेवेति नाव्याप्तिरिति चेत्तत्राह **मानाभावादिति** । तच्चाऽनुपदं स्फुटीभविष्यति । तथा च ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशाऽसम्भवेन पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वमेव निवेशनीयमिति भावः ।

अत्रेदं बोध्यम् जलवान् वन्ह्यभाववान् जलवान् ह्रदः, शैवालवान् वन्ह्यभाववान् शैवालवान् ह्रद इत्यादिनिश्चयानामेकरूपेण प्रतिबन्धकत्वम् । तत्प्रकारश्च निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम् । निश्चये निश्चयवै० स्वसामानाधिकरण्य—स्वीयवन्ह्यभावत्वावच्छिन्नप्रकारतावृत्तिविशेष्यतावच्छेदकताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकत्वोभय

न्तराघटितत्वनिवेशनेनैव वारणीयः ।

न च ज्ञानद्वयसाधारणप्रतिबन्धकतायाः प्रत्येकज्ञानविषयविशिष्टविष-

---

सम्बन्धेन, विशेष्यतायां प्रकारतावृत्तित्वं च स्वावच्छेदकधर्मव्यापकवन्ह्यभावप्रतियोगिकत्ववि-शिष्टस्वरूपत्वावच्छिन्नसंसर्गतानिरूपितत्व—स्वनिरूपितत्वोभयसम्बन्धेन, प्रकारतायां विशेष्यता-वच्छेदकतावै० स्वावच्छेदकधर्मावच्छिन्नत्व—स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति।

ननु तदनिवेशे वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः कथं वारणीयेत्यत आह उक्तविशिष्टेऽतिप्रसङ्गस्त्विति । वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिप्रसङ्गस्त्वि-त्यर्थः । विवक्षणीयेति । मेयत्वादिविशिष्टबाधादावतिव्याप्तिवारणाय विवक्षणीयेत्यर्थः । विशिष्टान्तराऽघटितत्वनिवेशनैवेति । एवकारेण प्रतिबन्धकतायां ज्ञानवैशिष्ट्यान-वच्छिन्नत्वस्य व्यवच्छेदः ।

यद्रूपावच्छिन्नविषयिताव्यापिका प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्ध-कता तद्रूपावच्छिन्नत्वं हि प्रकृतलक्षणम् । मेयत्वविशिष्टे बाधादावतिव्याप्तिवारणाय चाऽत्र यद्रूपे विशिष्टान्तराघटितत्वं निवेशनीयम् । विशिष्टान्तराघटितत्वं च विशिष्टान्तरतावच्छे-दकं यद्रूपं तद्रूपावच्छिन्नाघटितत्वम् । विशिष्टान्तरतावच्छेदकत्वं च स्वावच्छिन्नाऽविषय-कप्रतीतिविषयतावच्छेदकत्वम् । एवं विशिष्टान्तरतावच्छेदके प्रकृताऽनुमितित्वव्यापकप्रति-बध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वमपि निवेश्यम् । तद्रूपावच्छिन्नाऽघटितत्वं च तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेकत्वम् । एवं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपि-तप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाऽविषयक-प्रतीतिविषयितानिरूपकतावच्छेदकत्वं यद्रूपे निवेश्यमित्यर्थः । एवं च ह्रदो वह्निमान् धूमादित्यत्र मेयत्वविशिष्टे वन्ह्यभाववद्ह्रदादौ नातिव्याप्तिः, स्वं मेयत्वविशिष्टव-न्ह्यभाववद्ह्रदत्वम्, तदवच्छिन्नाऽविषयकप्रतीतिः वन्ह्यभाववान् ह्रद इत्याकारिका प्रतीतिः तद्विषयतावच्छेदकं यत् वन्ह्यभाववद्ह्रदत्वं, अथ च प्रकृताऽनुमितिः ह्रदो वह्निमानित्या-कारिकाऽनुमितिः तादृशाऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति-विषयितानिरूपकतावच्छेदकमपि तत्, "वन्ह्यभाववद्ह्रदत्वं" तदवच्छिन्नाविषयकप्रतीतिर्न मेयत्वविशिष्टो वन्ह्यभाववान् ह्रदः इति प्रतीतिः किन्तु उदासीनघटवद्भूतलमितिप्रतीतिः, तादृशप्रतीतिविषयितानिरूपकतावच्छेदकत्वस्य मेयत्वविशिष्टवन्ह्यभाववद्ह्रदत्वे विरहेण यद्रू-पपदेन तस्योपादानाऽसंभवान्नातिव्याप्तिः । ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभाववद्ह्रदे लक्ष-णसमन्वयः, तथाहि—स्वं वन्ह्यभाववद्ह्रदत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं एवं प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूप-तावच्छेदकं ह्रदवृत्तिवन्ह्यभावत्वादिकं, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य व-न्ह्यभाववद्ह्रदत्वे सत्वात्, यद्रूपपदेन तस्योपादानादिति ध्येयम् ।

आक्षिपति नचेति । ज्ञानद्वयसाधारणप्रतिबन्धकताया इति । जलवान्

यकत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकतावत्, तथाच दर्शितविशिष्टघटकस्य प्रत्येकज्ञानविषयस्य न निरुक्तविशिष्टान्तरात्मकतेति निरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्टस्याक्षतमेवेति वाच्यम्। वक्ष्यमाणविशिष्टान्तराघटितत्वस्यैव यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषय-

---

वह्न्यभाववान् जलवांश्च ह्रद इति ज्ञानद्वयवृत्तिप्रतिबन्धकताया इत्यर्थः। निरूपितत्वं षष्ठ्यर्थः। तस्याऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वेऽन्वयः। तथाच प्रत्येकज्ञानविषयविशिष्टविषयकत्वं न ज्ञानद्वयसाधारणप्रतिबन्धकतानिरूपिताऽनतिरिक्तवृत्तित्वरूपावच्छेदकतावदिति समुदितार्थः। प्रत्येकज्ञानविषयविशिष्टविषयकत्वमित्यस्य च जलवान् वह्न्यभाववानितिज्ञानवृत्तिवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वं, जलवान् ह्रद इति ज्ञानवृत्तिजलवद्ह्रदत्वावच्छिन्नविषयत्वं चेत्यर्थः। **तथाचेति**। प्रत्येकज्ञानीयविशिष्टविषयकत्वस्य प्रतिबन्धकताऽनवच्छेदकत्वे चेत्यर्थः। **दर्शितविशिष्टघटकस्येति**। वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वरूपविशिष्टघटकस्येत्यर्थः। **प्रत्येकज्ञानविषयस्येति**। जलवान् वन्ह्यभाववानिति ज्ञानविषयस्य "वन्ह्यभाववज्जलवत्त्व"स्ये त्यर्थः। जलवान् ह्रद इति ज्ञानविषयस्य जलवद्ह्रदत्वस्येत्यर्थः। **न निरुक्तविशिष्टान्तरात्मकतेति**। तथाच वन्ह्यभाववज्जलवत्त्वस्य जलवद्ह्रदत्वस्य वा प्रत्येकं वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेऽपि ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वविरहान्न विशिष्टान्तरतावच्छेदकत्वमिति भावः। **निरुक्तविशिष्टान्तराऽघटितत्वमिति**। निरुक्तं यद्विशिष्टान्तरतावच्छेदकं बाधत्वादि तदघटितत्वमित्यर्थः। **उक्तविशिष्टस्येति**। वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वस्येत्यर्थः। **अक्षतमेवेति**। तथाच वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिर्दुर्वारैवेति भावः।

ननु वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकं, अथ च ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्वन्ह्यभाववज्जलवन्निरूपितवज्जलवद्ह्रदत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वे विरहेण तस्य यद्रूपपदेनोपादानाऽसम्भवात्कथमतिव्याप्तिरिति चेन्न।

एवंरीत्या जलव्यापकवन्ह्यभावाधिकरणनिरूपितवज्जलवद्ह्रदत्वस्यापि विशिष्टान्तरत्वाज्जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ह्रदेऽव्याप्तिः स्यादतो विशिष्टान्तरतावच्छेदकरूपे विशिष्टद्वयाऽघटितत्वं निवेशनीयम्। एवं च वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिर्दुर्वारैवेति।

केचित्तु वन्ह्यभाववज्जलवन्निरूपितवज्जलवद्ह्रदे एवातिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वसार्थक्यमिति प्राहुः।

यद्रूपे विशिष्टद्वयाऽघटितत्वं निवेश्याऽतिव्याप्तिं समाधत्ते **यादृशविशिष्टविषयकेति**। यद्रूपावच्छिन्नविषयिताशालीत्यर्थः। एवं द्वितीययादृशविशिष्टविषय-

**कनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्ति, तादृशविशिष्टद्वयाघटितत्वस्यापि निवेशनीयतया उक्तविशिष्टवारणसम्भवात् ।**

केत्यस्याऽपि स एवार्थः । **प्रतिबन्धकताऽनतिरिक्तवृत्तीति** । प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तीत्यर्थः । **निवेशनीयतयेति** । यद्रूपे इत्यादिः । **उक्तविशिष्टवारणसम्भवादिति** । वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदरूपविशि ष्टवारणसम्भवादिति । तथाच यद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टद्वयाऽघटितत्वं यद्रूपे निवेशनीयम् , वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदे नातिव्याप्तिः, वन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टजलवद्ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयत्वस्य ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तितया तादृशं विशिष्टद्वयं "वन्ह्यभाववज्जलवत्त्वं जलवद्ह्रदत्वं च" तदघटितत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वे विरहेण तस्य यद्रूपपदेन धारणाऽसम्भवान्नातिव्याप्तिरिति भावः ।

अत्र तादृशविशिष्टद्वयाऽघटितत्वं न तादृशविशिष्टविषयताद्वयशून्यप्रतीतिविषयत्वम् , ह्रदो वह्निमान् धूमादित्यत्र एकत्र द्वयमिति रीत्या ह्रदवृत्तित्व–वन्ह्यभावव्याप्ति–उभयवज्जलेऽतिव्याप्तिः, वन्ह्यभावव्याप्यं जलं जलवान् ह्रद इति ज्ञानयोरिव वन्ह्यभावव्याप्यं जलं ह्रदवृत्ति जलमिति ज्ञानयोरपि ज्ञानविशिष्टज्ञानत्वेन ह्रदे वन्ह्यनुमितिप्रतिबन्धकतया वन्ह्यभावव्याप्तिह्रदवृत्तित्वोभयमेकत्र द्वयमिति रीत्याऽवगाहमाने वन्ह्यभावव्याप्तिह्रदवृत्तित्ववज्जलमिति ज्ञाने विशेष्यताया ऐक्येन विषयिताद्वयशून्यत्वसत्त्वात् तथाच वन्ह्यभावव्याप्तिप्रकारतानिरूपितजलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविषयिताद्वयशून्यप्रतीतिविषयत्वस्य तत्राऽक्षतत्वात् । नापि तादृशविशिष्टविषयताशून्यत्वे सति तादृशविशिष्टविषयताशून्यप्रतीतिविषयत्वम् , असाधारण्येऽव्याप्तेः, असाधारण्यस्यापि निरुक्तविशिष्टद्वयान्तर्गततयाऽसाधारण्यविषयिताशून्यत्वविरहात् , एवं च तादृशविषयिताशून्यप्रतीतिविषयत्वस्याऽसाधारण्ये विरहात्, किन्तु तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयत्वमेव तत् । एवं च नोक्तापत्त्यनुपपत्ती, तथाच यद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्ट यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वं हेत्वाभाससामान्यलक्षणम् । निश्चये निश्चयवै० सामानाधिकरण्यसम्बन्धेन, सामानाधिकरण्यं च एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपम् । विषयितायां विषयितावै० स्वाश्रयसमानाधिकरणज्ञानवृत्तित्वसम्बन्धेन ।

अनुगमस्तु–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तियों "व्यापकतारूपो"ऽभावः तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताधि-

शिष्टप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकरूपवत्त्वम् । प्रतियोगितायामवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिश्चयवद्धर्मावच्छिन्नविषयितात्वावच्छिन्नत्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितावैशिष्ट्यावच्छिन्नत्वोभयसम्बन्धेन ।

नन्वत्र निश्चयविशिष्टान्तोपादानं व्यर्थम्, एकविशिष्टाऽघटितत्वनिवेशादेवोक्तातिव्याप्तिवारणसम्भवात् । तथाहि यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वम्(१) । तथाच नोक्तविशिष्टेऽतिव्याप्तिः, वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयताशून्यत्वस्योक्तविशिष्टज्ञानेऽसत्त्वादिति चेन्न ।

वन्ह्यभाववद्ध्रदादिरूपबाधाद्यसंग्रहापत्तेः, वन्ह्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशवन्ह्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयिताशून्यत्वस्य बाधादिज्ञानेऽसत्त्वात्(२) ।

---

(१) अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तियोंऽभाववत्तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकरूपवत्त्वम् । प्रतियोगितायामवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितात्वावच्छिन्नत्वसम्बन्धेनेति ।

अथवा प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावैशिष्टरूपवत्त्वम् । रूपे प्रतिबन्धकतावै० यद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसाक्षिकाभावनिरूपिताऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन, अभावश्च किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नविषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकः । तथाच वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वे द्वितीयसम्बन्धेन प्रतिबन्धकतावैशिष्ट्यविरहेणोक्तातिव्याप्तिविरहेऽपि तुल्ययुक्त्या बाधाद्यसङ्ग्रहो बोध्यः ।

(२) अथ यद्रूपावच्छिन्नविषयिता प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्तिस्तद्रूपावच्छिन्नविषयिताशून्यत्वं विवक्षणीयम् । तथाच बाधादिविषयिताया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्तित्वाभावात्, यद्रूपावच्छिन्नविषयितापदेन तस्या धर्तुमशक्यतया वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वाद्यवच्छिन्नविषयिता एव तादृशी तच्छून्यत्वस्य बाधादिज्ञाने सत्त्वात्, वन्ह्यभाववज्जलादिमद्वृत्तिजलादिमद्ध्रदविषयकज्ञाने चाऽसत्त्वान्नाऽव्याप्त्यतिव्याप्ती । नचैवमपि घटो गगनाभाववदभाववत्कालीनगगनवानित्यादौ तादृशगगनाभाववद्घटरूपबाधेऽव्याप्तिः, अत्र बाधनिश्चये प्रतिबन्धकताद्वयी, ज्ञानवैशिष्ट्यावच्छिन्नाऽन्या, सा च घटो गगनवानितिज्ञाननिरूपिता, अपरा च ज्ञानवैशिष्ट्या-

नवच्छिन्ना, सा च घटस्तादृशगगनवानितिबुद्धिनिरूपिता, एवं च तादृशबाधज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अपि सत्त्वेन तद्विषयितायास्तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयिता ज्ञानवैशिष्ट्यावच्छिन्न(१)प्रतिबन्धकताऽनतिरिक्तवृत्ति-ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताऽनवच्छेदिका तादृशविषयिताशून्यत्वस्य विवक्षणीयत्वात् , उक्तबाधविषयिताया ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायामप्यवच्छेदकतया तादृशविषयिता गगनाभाववदभाववत्कालीनतद्व्यक्तित्ववद्वृत्तितद्व्यक्तित्ववद्वृत्तिविषयितैवेति तच्छून्यत्वस्योक्तबाधज्ञाने सत्त्वादव्याप्तिविरहात् । न च गगनवत्प्रतियोगित्वं गगनाभाववद्वन्ह्यधिकरणवृत्त्यभावनिरूपितत्ववत्कालीनवान्हिमज्जलादिव्यत्र तादृशवन्हिव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, तादृशाऽसाधारण्यनिश्चयस्य वन्ह्यधिकरणवृत्त्यभावनिरूपितत्ववान् गगनाभाववानितिनिश्चयविशिष्टवन्ह्यधिकरणवृत्त्यभावनिरूपितत्ववत्प्रतियोगित्वमितिनिश्चयत्वेन गगनवत्प्रतियोगित्वमितिबुद्धिविरोधितया तादृशाऽसाधारण्यविषयितायाः तादृशानुमितित्वव्यापकविशिष्टपक्षप्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्तितया ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतया च तादृशाऽसाधारण्यस्य यादृशविशिष्टपदेन धर्तुं शक्यत्वेन तदघटितत्वस्य तत्राऽसत्त्वादिति वाच्यम् । स्वमते इवाऽत्रापि प्रतिबन्धकतैक्यस्य विवक्षणीयत्वात् ।

तथाच विशेष्यदलघटकीभूताया असाधारण्यविषयकनिश्चयत्वव्यापिकायाः पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः प्रकृताऽसाधारण्यघटकाऽवच्छेदकधर्मदर्शननिष्ठप्रतिबन्धकतायाः विशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितायाः गगनाभाववद्वन्ह्यधिकरणनिरूपितत्ववत्त्वविशिष्टविषयकनिश्चयविशिष्टवन्ह्यधिकरणवृत्त्यभावनिरूपितत्ववत्प्रतियोगितात्वविशिष्टविषयकनिश्चयत्वावच्छिन्नायाश्चैक्याभावेन न तत्राव्याप्तिः ।

तथाच प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम्, रूपे प्रतिबन्धकतावै० स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोग्यवच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावः तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टत्व-स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । रूपे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । अभावप्रतियोगितावच्छेदकसम्बन्धश्च—स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो योऽभावः तन्निरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूपः । विषयितायामवच्छेदकतावै० स्वविशिष्टरूपावच्छिन्नत्वसं० । रूपे स्ववै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकता निरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वावत्त्वोभयसम्बन्धेनेति ।

अथवा स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्त्यभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनि-

(१) अत्र प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वं न देयं, प्रयोजनविरहादिति ।

श्रयानिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मा-
वच्छिन्नविषयिता प्रतियोगितावच्छेदकसम्बन्धः, एतन्मते द्वितीयसम्बन्धघटकाऽभावो लघुशरीर इति लाघवम्।
एवं च गगनवत्प्रतियोगित्वं गगनाभाववद्वन्ह्यधिकरणनिष्ठाभावनिरूपितत्ववत्कालीनवन्हिमज्जलादित्य-
ग्राऽसाधारण्ये नाव्याप्तिः, प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपिताऽसाधारण्यविषयकत्वावच्छिन्नप्रति-
बन्धकताविशिष्टरूपं तादृशाऽसाधारण्यतावच्छेदकं, तादृशप्रतिबन्धकतावृत्तिर्यः पक्षे हेतुमत्ताज्ञानकालीनाऽ-
साधारण्यविषयकनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितया
परम्परया निरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्स्वरूपप्रथमसम्बन्धस्य तत्र सत्त्वात्, एवं स्व-
तादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वं स्वमेव तत्र च यादृशविशिष्टविषयकत्वाव्यापकविषयिताशू-
न्ययादृशविशिष्टविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्तादृशविशिष्टाऽप्र-
सिद्ध्या स्वभिन्नविशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितगगनाभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्व-
विशिष्टविषयकनिश्चयविशिष्टवन्ह्यधिकरणनिष्ठाभावनिरूपितत्ववत्प्रतियोगितात्वविशिष्टविषयकनिश्चयत्वावच्छि-
न्नप्रतिबन्धकत्वादौ गगनाभाववद्वन्ह्यधिकरणवृत्त्यभावनिरूपितत्ववद्वृत्तितादृशनिरूपितत्ववत्प्रतियोगितात्ववि-
शिष्टविषयकत्वाव्यापकविषयिताशून्यतादृशविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्र-
तीतिसिद्धाभावस्य सत्त्वात् स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावघटितसम्बन्धस्य
तस्य व्यधिकरणत्वेन द्वितीयसम्बन्धस्य च सत्त्वात्।
एवं घटो गगनाभाववदभाववत्कालीनगगनवानित्यत्र बाधे नाव्याप्तिः, तत्र ज्ञानवैशिष्ट्यानवच्छिन्नप्रति-
बन्धकताया द्वितीयसम्बन्धघटकविषयित्वस्य व्यधिकरणसम्बन्धत्वात्, तथाचैतन्मते गगनाभाववदभावव-
त्कालीनघटो गगनवानित्यत्राऽभाववत्तादृशघटे-रूपं नीलरूपवदित्यत्र नीलरूपाभाववन्नीले अभावो वन्हि-
मानित्यत्र वन्ह्यभाववद्वन्हिमति च नातिव्याप्तिः, तत्र ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादायैव लक्षणसत्त्व-
स्योपपादनीयतया अभाववत्तादृशघटत्वादौ तादृशप्रतिबन्धकतायाः प्रथमसम्बन्धस्य सत्त्वेऽपि द्वितीयसम्बन्ध-
स्याऽभावात्, तत्राऽभाववत्तादृशघटत्वावच्छिन्नविषयिताशाल्यव्यापकविषयिताशून्यनिश्चयनिष्ठभेदप्रतियोगि-
तावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावसत्त्वेन तन्निरूपितप्रतियोगिताघटितोक्तविषयित्वाभावस्य तादृशवि-
शिष्टविषयकप्रतीतावभावात्।
नचैवं तादृशविशिष्टघटपक्षकगगनसाध्यकस्थले गगनाभाववद्विशिष्टघटात्मकबाधेऽव्याप्तिः, तत्र ज्ञानवै-
शिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सत्त्वेन तादृशप्रतिबन्धकताया उक्तोभयसम्बन्धस्य तादृशघटत्वेऽस-
त्त्वात्, स्वमते तादृशबाधघटकगगनाभाववदभाववत्त्वविशिष्ट–बाधरूपविशिष्टयोः परस्पराऽघटितत्वाभावेन
तदुभयघटितत्वं नाव्याप्तिसम्पादकम्। एवमभावो गगनत्ववानाधेयत्वादित्यत्र गगनत्वव्यापकाभावप्रतियो-
ग्याधेयत्वरूपाऽसाधारण्येऽव्याप्तिः, तत्रापि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सत्त्वात्। एवं वन्ह्यभा-
ववद्वन्ह्यभावव्याप्यवत्कालीनह्रदो वन्हिमानित्यत्र वन्ह्यभावव्याप्यवद्वन्ह्यभाववद्वन्ह्यभावव्याप्यवत्कालीनह्रदरूप-
सत्प्रतिपक्षेऽव्याप्तिः। एवं धूमाभाववद्धूमाभावव्याप्यवत्कालीनह्रदो वह्निमान्धूमादित्यत्र धूमाभाव-
व्याप्यवत्तादृशह्रदरूपस्वरूपाऽसिद्धावव्याप्तिः। एवं धूमवान् धूमाभाववद्वृत्तित्ववद्धूमाभाववद्वृत्तित्वव्या-
प्यवत्कालीनवन्हेरित्यत्र धूमाभाववद्वृत्तित्वव्याप्यवत्तादृशवन्हिरूपव्यभिचारेऽव्याप्तिः। एवं विरोधेऽ-
प्यव्याप्तिः, सर्वत्र तादृशदोषज्ञानानां ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वात्। स्वमते तु तादृशदो-
षघटकविशिष्टद्वयस्य परस्पराऽघटितत्वाभावेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यतया
विशिष्टद्वयान्तराऽघटितत्वसत्त्वान्नाव्याप्तिरिति वाच्यम्। स्वमतेऽतिव्याप्तिवारणाय विशेष्यदलघटकविषयि-
तायां विषयिनाविशेषभेदो निवेश्यः। एतन्मते तु उक्ताऽव्याप्तिवारणाय विशेषणदलघटकविषयितायां
विषयिताविशेषभेदो निवेश्य इति समानम्। स्वमते लक्षणशरीरगौरवं परमतिरिच्यते इति चेन्न।
निश्चयविशिष्टनिश्चयानामेकरूपेण प्रतिबन्धकत्वमिति मते एतन्मते सर्वत्र प्रागुक्तदोषेष्वव्याप्तिः, ज्ञान-
वैशिष्ट्यावच्छिन्नप्रतिबन्धकताया उक्तोभयसम्बन्धेन दोषतावच्छेदकेऽसत्त्वात् तत्र प्रथमसम्बन्धस्य सत्त्वे-
ऽपि तादृशप्रतिबन्धकतावृत्तिविशिष्टदोषविषयकनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धा-

अथ यादृशविशिष्टविषयकज्ञानविशिष्टयादृशविशिष्टविषयकज्ञानत्वमित्येव कथं नोक्तं किं संशयान्यत्वरूपनिश्चयत्वनिवेशेन । तथाच यद्रूपावच्छिन्नविषयकत्वावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपिका यद्रूपावच्छिन्नविषयकत्वावच्छिन्नानुमितिप्रतिबन्धकता तादृशविशिष्टद्वयविषयिताशून्यप्रतीतिविषयत्वं फलितम् । एवं च वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदे नातिव्याप्तिः, ह्रदादिधर्मिकवह्निमत्ताबुद्धिं प्रति जलावच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टह्रदधर्मिकजलप्रकारकनिश्चयत्वेन प्रतिबन्धकतया वह्न्यभाववज्जलादिमद्विषयकत्वावच्छिन्ना या ज्ञाननिष्ठाऽवच्छेदकता तन्निरूपिका या जलवद्ध्रदविषयकत्वावच्छिन्ना प्रतिबन्धकता सापि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपिता भवतीति तादृशविशिष्टद्वयविषयिताशून्यप्रतीतिविषयत्वस्य निरुक्तविशिष्टेऽसत्त्वादिति चेन्न ।

---

भावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वाभावात् ।

एकरूपेण प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावत्वावच्छिन्नप्रकारताविशिष्टह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन, विशेष्यतायां प्रकारतावैशिष्ट्यञ्च स्वविशिष्टप्रकारतानिरूपितत्व-स्वनिरूपकनिश्चयसमानाधिकरणज्ञानीयत्वोभयसम्बन्धेन, प्रकारतायां स्ववै० स्वनिरूपितविशेष्यतावच्छेदकसम्बन्धावच्छिन्नत्वं-स्वविशिष्टरूपावच्छिन्नत्वोभयसम्बन्धेन, रूपे स्ववै० स्वनिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वस्वानिरूपितसंसर्गतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयनिष्ठावच्छेदकतानिरूपित "यत्किञ्चित्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धा"ऽभावनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताधेयत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति । तेषामेकरूपेण प्रतिबन्धकत्वाऽनङ्गीकर्तृमते नीलरूपाभाववन्नीलमित्यादिनिश्चयानां विशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वं-तादृशज्ञानस्य नियमतो रूपत्वविशिष्टे नीलत्वावगाहितया ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वे मानाभावात्, तथाच तन्मते तत्रातिव्याप्तिः, तत्प्रतिबन्धकतायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावघटितविषयितात्मकसम्बन्धस्य व्यधिकरणत्वात्, तथाच मतद्वयानुसारेण लक्षणकरणे उक्तस्थलेऽतिव्याप्तिवारणाय विशेष्यदले विषयितायामुक्तविषयिताभेदः-विशेषणदले विषयितायां प्रागुक्तसर्वविषयिताभेदो निवेशनीय इति गौरवम्, स्वमते एकरूपेण प्रतिबन्धकतास्वीकारेऽस्वीकारे वा "मतद्वयेऽपि" अतिव्याप्तिवारणाय विशेष्यदले विषयितायामेव विषयिताविशेषभेद एव निवेशनीय इति लाघवम् ।

परे तु यत्र बाधज्ञानं कदाचिद् घटकालीनजलवद्ध्रदविषयकं कदाचित्पटकालीनजलवद्ध्रदविषयकं तादृशजलवद्ध्रदविषयकज्ञानमपि बाधविषयकमेव, न तु कदाचिद्बाधघटकस्वघटकवस्तुज्ञानकालीनं तत्र बाधेऽव्याप्तिः । न च तत्र घटकालीनजलवद्ध्रदेऽतिव्याप्तिः, विशिष्टान्तरबाधघटितत्वादित्याहुः ।

यत्तु कैश्चिदुक्तं—ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतालाभायैव तदभिधानमिति । तदसत् । उक्तरीत्या तन्निवेशस्याऽऽवश्यकत्वात् ।

यत्तु एकविशिष्टाघटितत्वनिवेशे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयितावद्भेद-वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदविषयितावद्ध्रदादीनां निवेशनीयतया गौरवम्, विशिष्टद्वयाघटितत्वनिवेशे न तादृशगौरवं वह्न्यभाववज्जलवत्त्वविशिष्टविषयिताविशिष्टजलवद्ध्रदत्वविशिष्टविषयित्वाभावस्य निवेशादेव एकावच्छेदकधर्मघटितनानाविशिष्टवारणसम्भवादिति । तदपि न, उक्तप्रकारेणाऽनुगमे तादृशगौरवाऽप्रसक्तेरिति ।

प्रथमनिश्चयत्वानिवेशे जलवान् वह्न्यभाववान्नवेति ज्ञानविशिष्ट-जलवान् ह्रद इति निश्चये प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्तुमशक्यतया "विशिष्टद्वयान्तरस्यैव ग्राह्यतया" तादृशविशिष्टद्वयाविषयिताशून्यत्वस्योक्ताविशिष्टविषयकज्ञाने सत्त्वेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तितादवस्थ्यमतः प्रथमनिश्चयत्वनिवेशः।

एवं द्वितीयनिश्चयत्वाऽनिवेशे जलवान् वह्न्यभाववानिति निश्चयविशिष्ट-ह्रदो जलवान्नवेतिज्ञाने प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्तुमशक्यतया 'विशिष्टद्वयान्तरस्यैव ग्राह्यतया'' तादृशविशिष्टद्वयविषयिताशून्यत्वस्योक्तविशिष्टविषयकज्ञाने सत्त्वेन तद्दोषतादवस्थ्यमतो द्वितीयनिश्चयत्वनिवेशः।

न च तादृशविशिष्टद्वयाऽन्तरस्याप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम्। एवं सति तुल्ययुक्त्याऽसम्भवापत्तेः। यद्वा वह्न्यभाववज्जलवत्कालीनघट-जलवद्ह्रदकालीनघटादिकमेव तादृशविशिष्टद्वयं प्रसिद्धं, तत्रोभयत्र निश्चयत्वाऽनिवेशेऽपि विशिष्टवैशिष्ट्यबुद्धौ विशेषणांशे संशयाऽस्वीकारेण "वह्न्यभाववज्जलवत्कालीनो घटः" "जलवद्ह्रदकालीनो घट" इत्याकारकतादृशविशिष्टद्वयविषयकज्ञाने कालीनत्वांशे संशयात्मकेऽपि जलवत्त्वादिविशिष्टांशे वह्न्यभावादिसंशयात्मकत्वाभावेन प्रकृतानुमितिप्रतिबन्धकतासत्त्वात्। तदयं निष्कर्षः-विशेषणांशे संशयाऽस्वीकारेऽसम्भवः, तत्स्वीकारे त्वतिव्याप्तिरिति ध्येयम्।

नन्वत्र निश्चयत्वनिवेशेऽपि जातिमद्वान् वह्न्यभाववान्-जलवान् ह्रद इति निश्चययोः,-जलवान् वन्ह्यभाववान् जातिमद्वान् ह्रद इति निश्चययोश्च प्रकृतानुमित्यप्रतिबन्धकतया तादृशविशिष्टद्वयाऽप्रसिद्धिनिबन्धनाऽसम्भववारणायोभयत्र "निश्चये" ऽव्यापकीभूतविषयिताशून्यत्वनिवेश आवश्यकः। एवं च निश्चयत्वाऽनिवेशेऽपि जलवान् वह्न्यभाववान्नवा-ह्रदो जलवान्नवेति संशययोर्वन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकवन्ह्यभावाभावत्वावच्छिन्नविषयिता-जलवद्ह्रदत्वावच्छिन्नविषयित्वाऽव्यापकाऽभावत्वावच्छिन्नविषयिताश्रययोर्वारणसम्भवेन वन्ह्यभाववज्जलवद्-जलवद्ह्रदरूपविशिष्टद्वयस्य तादृशविशिष्टद्वयपदेन धर्तुं शक्यतयोक्तातिव्याप्तिविरहेणोभयत्र निश्चयत्वनिवेशो व्यर्थ इति चेन्न।

अव्यापकीभूतविषयिताशून्यत्वानिवेशेऽपि प्रथमनिश्चयत्वाऽनिवेशे वन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्य जलवान् वह्निमान्नवेतिसंशयस्याऽवारणात्तादृशसंशयविशिष्टजलवान् ह्रद इति निश्चयस्याप्रतिबन्धकतया यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यतयोक्तातिव्याप्त्यापत्तेः। एवं द्वितीयनिश्चयत्वाऽनिवेशे वन्ह्यभाववत्तेजोभाववद्वृत्तितेजोऽभाववद्ह्रदेऽतिव्याप्तिः, वन्ह्यभाववान् तेजोभाववानितिनिश्चयविशिष्टस्य ह्रदस्तेजस्वी नवेतिसंशयस्य तेजोभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्यानुमित्यप्रतिबन्धकतया यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यत्वात्(१)।

---

(१) न च यादृशविशिष्टविषयित्वाव्यापिका यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वमुभयत्राऽव्यापकीभूतविषयिताशून्यत्वमित्यनेन विवक्षणीयम्, तथाच जलवान् वह्निमान्नवेत्याकारकसंशये वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापिकायाः संयोगत्वावच्छिन्नविषयितानिरूपितवह्नित्वावच्छिन्नविषयितायाः सत्त्वेन-ह्रदस्तेजस्वी नवेति संशये

नन्वु तथापि यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमित्यत्र प्रथमनिश्चयत्वस्थाने ज्ञानत्वमेव निवेशनीयम्। निश्चये ज्ञानवै० तादात्म्यसम्बन्धेन। द्वितीयनिश्चयत्वं संशयान्यत्वरूपम्, एवं चैकांशे संशयात्मकाऽपरनिश्चयस्य व्यावृत्त्या न तादृशविशिष्टाऽप्रसिद्धिः। यद्वा यद्रूपावच्छिन्नविषयितावत्त्वे सति यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वमित्येव वक्तव्यम्। निश्चये विषयितावै० स्वरूपसम्बन्धेन। तथासति सामानाधिकरण्यांशस्य एवं निश्चयत्वाऽप्रामाण्यज्ञानाभावादीनां द्विधा निवेशे गौरवापत्तेः। न च जातिमद्वान् वन्ह्यभाववान् जलवान् ह्रदः, जलवान् वन्ह्यभाववान् जातिमद्वान् ह्रद इति ज्ञानयोरप्रतिबन्धकत्वेन तादृशविशिष्टद्वयाऽप्रसिद्ध्याऽसम्भवापत्त्याऽव्यापकीभूतविषयिताशून्यत्वमवश्यं निवेशनीयम्। एवं च खण्डशो ज्ञानस्याऽप्रसक्तत्वात्समूहालंबनज्ञानमादायैव तादृशविशिष्टद्वयविषयकनिश्चयत्वेऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वस्योपपादनीयतया समूहालंबनज्ञाने चाऽव्यापकीभूतविषयिताशून्यत्वस्याऽभावात्, समूहालम्बनज्ञाने वन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयितायाः जलवद्ह्रदत्वावच्छिन्नविषयितायाश्च परस्पराऽव्यापकत्वादिति तादृशविशिष्टद्वयाऽप्रसिद्धिर्दुर्वारैव। न च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तित्वोपलक्षितयद्रूपावच्छिन्नविषयितावत्त्वे सति यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तित्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वं यद्रूपं निवेशनीयम्। तादृशविषयितावत्त्वं च न खण्डशो ज्ञाने किन्तु समूहालम्बनज्ञाने एव, तथाच विशिष्टद्वयाऽप्रसिद्ध्या नोक्ताऽतिव्याप्तिः, वन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानवृत्तित्वोपलक्षितत्वस्य समूहालम्बनज्ञानीयविषयितायामेव सत्त्वादिति वाच्यम्।

यत्र समूहालम्बनज्ञानमेव न भवति किन्तु खण्डशो ज्ञानमेव भवति तत्रत्यबाधादौ तादृशविशिष्टद्वयाप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्। न च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वमेव तादृशज्ञाने निवेशनीयम्, तथाच वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवन्ह्यभाववज्जलवत्त्वविशिष्टविषयकज्ञानात्मकजलवद्ह्रदत्वविशिष्टविषयकनिश्चयत्वे तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तित्वसत्त्वान्न विशिष्टद्वयाऽप्रसिद्धिरिति वाच्यम्। तथासति वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकवि-

---

च तेजोभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापिकायाः संयोगत्वावच्छिन्नविषयितानिरूपिततेजस्त्वावच्छिन्नविषयितायाः सत्त्वेन चोक्तसंशययोर्वारणाद्यादृशपदेन तादृशविशिष्टद्वयस्य धर्त्तुं शक्यतया तयोरतिव्याप्तिविरहेणोभयत्र निश्चयत्वांशो व्यर्थ इति वाच्यम्। ह्रदो भेद इत्यत्र भेदभेदवदभावभेदवद्वृत्त्यभावभेदवद्ह्रदेऽतिव्याप्तेः, उक्ताऽव्यापकविषयिताशून्यत्वाविशेषणेनाऽभावभेदवान् भेदो नवेत्याकारकस्य स्वरूपतो भेदत्वभेदभेदकोटिकसंशयस्याऽवारणात्तत्र भेदभेदवदभावभेदवत्त्वावच्छिन्नविषयित्वाव्यापकीभूतायाः कस्या अपि तादृशविषयिताया अभावात्, एवं ह्रदोऽभावो नवेत्याकारकस्य स्वरूपतोऽभावत्वाभावभेदकोटिकसंशयस्य वारणं न सम्भवति तत्राभावभेदवद्ह्रदत्वावच्छिन्नविषयित्वाव्यापिकायास्तादृशविषयिताया असत्त्वात्, तथाचैतादृशैकतरसंशयाऽपरनिश्चययोर्ह्रदो भेद इत्यनुमित्यप्रतिबन्धकत्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्त्तुमशक्यत्वादत्र उभयत्र निश्चयत्वनिवेश आवश्यक इति ध्येयम्।

षयिताशून्यवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयिताशालिज्ञानात्मकतादृशविशिष्टविषयकनिश्चयत्वस्य तादृशप्रतिबन्धकतानातिरिक्तवृत्तितया तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यज्ञानविषयत्वरूपविशिष्टद्वयाऽघटितत्वस्याऽभावेन बाधादावव्याप्तिरिति वाच्यम्। ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतादृशविशिष्टद्वयविषयिताशून्यत्वस्य विवक्षणीयतयाऽव्याप्तिविरहादिति चेन्न ।

गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तेः, तत्र गगनाभाववद् गगनाभाववदभाववत्कालीनघटत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यगगनाऽभाववदभाववत्त्वविशिष्टविषयकज्ञानात्मकतादृशविशिष्टबाधरूपविशिष्टविषयकनिश्चयत्वस्य प्रतिबन्धकताऽनतिरिक्तवृत्तितया तादृशशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशविशिष्टविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वात्, तथाहि घटधर्मिकगगनवत्ताबुद्धिं प्रति अभावावच्छेदेन गगनाभावप्रकारकनिश्चयविशिष्टघटधर्मिकाऽभावप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वमावश्यकम्, अन्यथा अभाववान् गगनाभाववान् अभाववांश्च घट, इति ज्ञानोत्तरं घटो गगनवानितिबुद्धिप्रसङ्गः, तथाच गगनाभाववदभाववत्कालीनघटो गगनाभाववानितिनिश्चयस्यापि अभावावच्छेदेन गगनाभावप्रकारकनिश्चयाविशिष्टघटधार्मिकाभावप्रकारकनिश्चयत्वेनैव प्रतिबन्धकत्वम्, तदनन्तरं गगनाभाववदभाववत्कालीनघटो गगनवानितिबुद्धेरुत्पादाऽसम्भवात् गगनाभाववदभाववत्कालीनघटधर्मिकगगनवत्ताबुद्धिं प्रति तादृशघटधर्मिकगगनाभावप्रकारकनिश्चयत्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावात्, तथाच विशिष्टविषयिताशून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वात्। एवमभावो गगनत्ववानाधेयत्वादित्यत्राऽसाधारण्येऽव्याप्तिश्च, तस्य चाऽऽधेयत्ववदभाववत्त्वविशिष्टतादृशाऽसाधारण्यरूपविशिष्टद्वयघटितत्वात(१) ।

---

(१) न च स्वाभाववज्ज्ञाननिष्ठविषयितानिरूपकतावच्छेदकयद्रूपविशिष्टविषयकज्ञानविशिष्टतादृशयद्रूपविशिष्टविषयकनिश्चयत्वं प्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वस्य निवेशनीयतया नोक्तबाधाऽसाधारण्ययोरव्याप्तिः, तत्र यद्रूपपदग्राह्यबाधाऽसाधारण्यतावच्छेदकरूपयोस्तादृशप्रतिबन्धकताशून्यज्ञाननिष्ठविषयितानिरूपकतावच्छेदकत्वाभावेन तादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्तुमशक्यतया तद्व्यक्तित्ववान् गगनाभाववान् तद्व्यक्तित्ववान् तादृशघट इत्यादिज्ञानविशिष्टयोरेव धर्त्तव्यतया तदघटितत्वस्य तादृशबाधादौ सत्त्वादिति वाच्यम्। तादृशविशिष्टविषयित्वाव्यापकविषयिताशून्यत्वविवक्षणे ह्रदो जलवज्जातिमत्कालीनवह्निमानित्यत्र जलवज्जातिमत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तेः, तत्र जलवान् जलवज्जातिमत्कालीनवह्न्यभाववान् जलवान् जातिमानितिसमूहालम्बनेऽपि जलवज्जातिमत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वसत्त्वेन तादृशज्ञाने प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्त्तुमशक्यतया पङ्कजवान् जलवज्जातिमत्कालीनवह्न्यभाववान् पङ्कजवान् ह्रद इति ज्ञानविषयीभूतविशिष्टद्वयस्यैव यादृशविशिष्टपदेन धर्त्तव्यत्वात्तदघटितत्वस्य तत्र सत्त्वात्। न च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिज्ञानविशिष्टयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रतिबन्धकतानातिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वस्य विवक्षणान्नोक्तातिव्याप्तिः, असमूहालम्बनात्मकप्रत्येकज्ञानीयविषयितायाः समूहालम्बनात्मकज्ञानीयविषयितायाश्चैक्यात् जलवान् जलवज्जा-

तथाच यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिका प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वे सति प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वं लक्षणम् ।

अत्र ज्ञानगोचरेच्छां प्रति विषयस्यैव प्रतिबन्धकतया ज्ञानमात्रे एवेच्छानिरूपितप्रतिबन्धकतासत्त्वेन यादृशविशिष्टद्वयपदेन वह्नित्वह्रदत्वादिविशिष्टस्य धारणसम्भवेनाऽसम्भवः स्यादतः प्रतिबन्धकताऽनतिरिक्तवृत्तीत्येतावन्मात्रं नोक्तम् । न च तादृशनिश्चयत्वं यत्किञ्चिद्ज्ञानप्रतिबन्धकताऽनतिरिक्तवृत्तीत्येवोच्यतामुक्तप्रतिबध्यताप्रवेशो व्यर्थः इच्छाप्रतिबन्धकतायाः वारणादिति वाच्यम् । ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टवह्न्यभावत्वावच्छिन्नविषयिताशालिनिश्चयेऽपि अभावधर्मिकप्रतियोगितासम्बन्धेन वह्न्यभाववत्ताज्ञाननिरूपितप्रतिबन्धकतायाः सत्त्वेनाऽसम्भवापत्तेः । प्रकृतानुमितिनिष्ठप्रतिबध्यतानिवेशे तद्दोषतादवस्थ्यमतस्तादृशानुमितित्वव्यापकतानिवेशः ।

---

तिमत्कालीनवह्न्यभाववान् जातिमान् इत्याकारकसमूहालम्बने जलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यजलवान् ह्रद इति ज्ञानीयत्वोपलक्षितजलवद्ध्रदत्वावच्छिन्नविषयिताया अभावेन तत्र प्रतिबन्धकताया विरहेऽपि जलवान् तादृशवह्न्यभाववान् जलवान् ह्रद इति ज्ञाने तादृशविषयितावति प्रतिबन्धकतायाः सत्त्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्यापि धर्तुं शक्यतया तदघटितत्वस्य तत्राभावादिति वाच्यम् । पूर्वोक्तबाधादिसङ्ग्रहार्थं यद्रूपे स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वरूपविशेषणस्यावश्यकतया तद्घटकप्रतीतावनाहार्यत्वाऽप्रामाण्यज्ञानानास्कन्दितत्वानिश्चयत्वानां निवेशनीयतया गौरवात् ।

न च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वमेवोपलक्षणविधया विषयितायां निवेशनीयम् ।

अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वम् । रूपे प्रतिबन्धकतावै० पूर्वोक्तसम्बन्धेन, द्वितीयसम्बन्धघटकाऽभावप्रतियोगितावच्छेदकसम्बन्धश्च स्ववृत्त्यभा(१)वीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूपः।विषयितायामवच्छेदकतावैशिष्ट्यञ्च स्वविशिष्टरूपावच्छिन्नत्व—स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन । प्रथमरूपे स्ववैशिष्ट्यञ्च स्वनिरूपितविषयित्वनिष्ठावच्छेदकतावत्त्व—स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितादात्म्यत्वसम्बन्धावच्छिन्नावच्छेदकता

---

(१) अभावश्च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वोपलक्षितकिञ्चिद्रूपावच्छिन्नविषयिताशालिज्ञानविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वोपलक्षितकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धो ग्राह्यः ।

न च यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तीत्येव कथं नोक्तं किमनुमितौ प्रकृतत्वनिवेशेनेति वाच्यम् । प्रकृतपक्षकप्रकृतसाध्यकत्वलाभार्थं तदुपादानात्, अन्यथा ह्रदो गगनाभाववद्वन्ह्यधिकरणनिरूपितत्ववत्कालीनवह्निमान् जलादित्यत्र तादृशवह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः स्यात । तत्र व्यापकताशरीरे वृत्तित्वांशे वन्ह्यधिकरणनिरूपितत्वस्य प्रविष्टतया तादृशाऽसाधारण्यस्य गगनाभाववद्वन्ह्यधिकरणनिरूपितत्ववत्त्वविशिष्टवन्ह्यधिकरणनिरूपितत्ववद्वृत्तित्वविशिष्टद्वयघटिततया वन्ह्यधिकरणनिरूपितत्ववान् गगनाभाववानिति निश्चयविशिष्टवन्ह्यधिकरणनिरूपितत्ववद्वृत्तित्वमितिनिश्चयत्वस्य वृत्तित्वं गगनवदित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितया तदघटितत्वस्य तत्राभावात् । एवं ह्रदो वह्निमान् वन्ह्यभाववद्वह्निव्यापकतावत्कालीनजलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगितादृशजलरूपाऽसाधारण्येऽव्याप्तिः स्यात्, तत्र व्यापकतारूपाऽभावस्य अ-

---

वत्त्वोभयसम्बन्धेन । रूपेऽवच्छेदकतावत्त्वञ्च स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । द्वितीयरूपे स्ववै० स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतावत्त्व—स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । एतत्सम्बन्धघटकाऽवच्छेदकतावत्त्वं च रूपे प्रागुक्तोभयसम्बन्धेनेति ।

यद्यभावप्रतियोगितावच्छेदकशरीरे उपलक्षणविधया प्रवेशो नाङ्गीक्रियते तदा प्रतियोगितावच्छेदकसम्बन्धश्च स्ववृत्तिर्यस्तद्व्यक्तिविशिष्टज्ञानविशिष्टतद्व्यक्तिविशिष्टनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धोऽभावस्तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टावच्छेदकताविशिष्टविषयितारूपः, अवच्छेदकतायामवच्छेदकतावै० स्वतादात्म्य—स्वविशिष्टविषयितावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकत्व—स्वविशिष्टविषयितानिष्ठोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकतादात्म्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपकत्वैतत्त्रितयसम्बन्धेन । प्रथमविषयितायां स्ववै० स्वनिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्व—स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन । द्वितीयविषयितायां स्ववै० स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतानिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्व—स्वनिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन । विषयितायामवच्छेदकतावै० स्वनिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नत्व—स्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेनेति वाच्यम् । यादृशस्थलेऽसङ्ग्राह्यविशिष्टविषयकसमूहालम्बनमप्रसिद्धं तादृशविशिष्टेऽतिव्याप्तिवारणाय सामानाधिकरण्यरूपं वैशिष्ट्यमेव निवेशनीयम्, तथाचोभयत्र निश्चयत्वनिवेश आवश्यकः, यादृशस्थलेऽसङ्ग्राह्यविशिष्टघटकप्रत्येकविषयकसमूहालम्बनमप्रसिद्धं तत्रातिव्याप्तिरुभयमतेऽपि समानेति दिक् ।

भावांशे प्रविष्टतया तादृशाऽसाधारण्यस्य वन्ह्यभाववद्वह्निव्यापकत्ववत्त्वविशिष्टवह्निव्यापकत्ववदभाववत्त्वविशिष्टरूपाविशिष्टद्वयघटिततया वह्निव्यापकतावान् वन्ह्यभाववानिति निश्चयविशिष्टवह्निव्यापकतावानभाव इति निश्चयत्वस्य अभावो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तितया तदघटितत्वस्य तत्राऽभावात् । एवं प्रमेयपक्षकवह्निसाध्यकोक्तहेतुकस्थले वह्निव्यापकीभूताभावप्रतियोगितादृशजलरूपाऽसाधारण्येऽव्याप्तिश्चातः प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकत्वनिवेशः ।

एवं प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वाऽनिवेशे ह्रदो वह्निमान् गगनाभाववत्प्रतियोगित्ववत्कालीनह्रदादित्यत्र वह्निव्यापकीभूताभावप्रतियोगितादृशह्रदेऽव्याप्तिः, तत्र जलांशे तादृशप्रतियोगित्वस्य प्रविष्टतया तादृशाऽसाधारण्यस्य गगनाभाववत्प्रतियोगित्ववत्त्वविशिष्टतादृशप्रतियोगित्ववद्ह्रदत्वविशिष्टरूपाविशिष्टद्वयघटिततया प्रतियोगित्ववान् गगनाभाववानितिनिश्चयविशिष्टप्रतियोगित्ववज्जलमितिनिश्चयत्वस्य ह्रदो गगनवान् इत्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितया तदघटितत्वस्य तत्राभावात्, अतः प्रकृतसाध्यकत्वनिवेशः । एवमात्मा द्रव्यं गगनाभाववत्प्रतियोगित्ववत्कालीनाऽऽत्मन इत्यत्र द्रव्यव्यापकीभूताभावप्रतियोगितादृशात्मरूपासाधारण्येऽव्याप्तिवारणाय प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वनिवेशः । एवं ह्रदो वह्निमान् धूमादित्यत्र धूमाभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय साध्यव्याप्यहेतुमत्त्वावगाहित्वं पक्षे निवेशनीयम् । अन्यत् सर्वमूहनीयम् । समूहालम्बनानुमितिमादाय पूर्वोक्तदोषवारणाय प्रतिबध्यतायामनुमितित्वव्यापकत्वनिवेश इति ध्येयम् ।

अनुगमस्तु—प्रकृतपक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिर्योऽभावस्तदीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टरूपवत्त्वम् । रूपे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वविशिष्टप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकत्वैतत्त्रितयसम्बन्धेन, प्रतियोगितायां स्ववै० स्वविशिष्टविषयितात्वावच्छिन्नत्वसम्बन्धेन, विषयितायां स्ववै० स्वाविशिष्टरूपावच्छिन्नत्व—स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन । प्रथमसम्बन्धघटकरूपे स्ववै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठाऽवच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धा-

वच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन, द्वितीयरूपे स्ववै० स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतावत्त्वसम्बन्धेन। रूपे अवच्छेदकतावत्त्वं च स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन। पक्षतावच्छेदक वै० पूर्ववत्।

मान्यास्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतात्रयभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकरूपवत्त्वम्। प्रतियोगितायामवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितात्वावच्छिन्नत्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितावैशिष्ट्यावच्छिन्नत्व—स्वविशिष्टावच्छेदकत्वानिरूपकत्वैतत्त्रितयसम्बन्धेन। अवच्छेदकतायां स्ववै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितात्वनिष्ठावच्छेदकताभिन्नत्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितावैशिष्ट्यनिष्ठावच्छेदकताभिन्नत्वोभयसम्बन्धेनेति प्राहुः।

नन्वेवमपि गगनवानभावो गगनाभाववद्वन्ह्यधिकरणनिरूपितवृत्तित्ववत्कालीनवन्हिमान् जलादित्यत्राऽसाधारण्येऽव्याप्तिः वन्ह्यधिकरणनिरूपितवृत्तित्ववान् गगनाभाववानिति निश्चयविशिष्टवन्ह्यधिकरणनिरूपितवृत्तित्ववानभावः इति निश्चयत्वस्य प्रकृतानुमितित्वव्यापक"अभावत्वावच्छिन्नविशेष्यकगगनत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्न"प्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तितया गगनाभाववद्वन्ह्यधिकरणनिरूपितवृत्तित्ववत्त्वविशिष्टवह्न्यधिकरणनिरूपितवृत्तित्ववदभावत्वविशिष्टरूपविशिष्टद्वयाऽघटितत्वस्य तादृशाऽसाधारण्येऽभावात्, असाधारण्यघटकव्यापकताघटकाभावे वह्न्यधिकरणनिरूपितवृत्तित्वस्य प्रवेशादिति चेन्न।

विशेष्यदले यादृशप्रतिबन्धकता प्रविष्टा तादृशप्रतिबन्धकताया एव प्रवेशात्। तथाच किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्प्रतिबन्धकता तत्प्रतिबन्धकताऽनतिरिक्तवृत्तियद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपवत्त्वं लक्षणम्। पक्षधर्मिकहेतुमत्ताज्ञानकालीनाऽसाधारण्यविषयकनिश्चयत्वव्यापिका "प्रकृतानुमितित्वव्यापक"पक्षे साध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता,

अथ च प्रकृताऽसाधारण्यघटकविशिष्टद्वयविषयकनिश्चयत्वव्यापिका पक्षे पक्षतावच्छेदकप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतेति तयोर्भेदेन तत्राऽव्याप्तिविरहात्(१)

---

( १ ) नचैवं सति वह्न्यभाववद्ह्रदादिरूपबाधादावव्याप्तिः, बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकताया ज्ञानवैशिष्ट्यानवच्छिन्नतया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतातो भिन्नतया यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं बाधनिश्चयप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टद्वयाऽप्रसिद्धेरिति वाच्यम् । वक्ष्यमाणानुगमेन सर्वदोषभङ्गात् । तत्प्रकारश्च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वम् । रूपे प्रतिबन्धकतावै० स्वनिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टत्व–स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । रूपे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो योऽभावः तन्निरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूपः । विषयितायामवच्छेदकतावै० स्वविशिष्टरूपावच्छिन्नत्व–स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन । प्रथमसम्बन्धघटकरूपे स्ववै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । द्वितीयरूपे स्ववै० स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतावत्त्वसम्बन्धेन । रूपे तादृशावच्छेदकतावत्ता च स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन ।

प्रतियोगितावच्छेदकीभूतनिरुक्तविषयितासम्बन्धेन प्रतिबन्धकता निश्चयविशिष्टनिश्चये एव वर्त्तते, प्रतिबन्धकत्वाभाववती प्रतीतिस्तादृशविशिष्टाऽविषयकैव तन्निष्ठविषयितानिरूपकतावच्छेदकत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वे विरहेण नातिव्याप्तिः । बाधप्रतिबन्धकतायाश्च तादृशसम्बन्धो व्यधिकरण एवेति तेन सम्बन्धेन प्रतिबन्धकत्वाभाववान् बाधनिश्चय इति तन्निष्ठविषयितानिरूपकतावच्छेदकत्वस्य प्रथमसम्बन्धस्य च वन्ह्यभाववद्ह्रदत्वे सत्त्वाल्लक्षणसमन्वयः ।

अथैवमपि बाधाद्यसङ्ग्रहः, वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्य बाधबुद्धित्वावच्छिन्नप्रतिबन्धकतायां सत्त्वेन तादृशाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठाव-

च्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितायाः बाधविषयकज्ञाने सत्त्वेन तादृशसम्बन्धेन प्रतिबन्धकत्वाभाववती प्रतीतिर्बाधाविषयकैवेति तन्निष्ठविषयितानिरूपकतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वे विरहादिति चेन्न ।

द्वितीयसम्बन्धघटकस्वाभावस्य स्वविशिष्टावच्छेदकताविशिष्टविषयितासम्बन्धावच्छिन्नप्रतियोगिताकस्य विवक्षणात् । अवच्छेदकतायां स्ववै० स्ववृत्त्यभा(१)वीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्व–स्वातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतासमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नधर्मनिष्ठावच्छेदकतानिरूपक( निरूपकत्वसम्बन्धावच्छिन्न )विषयित्वनिष्ठावच्छेदकतानिरूपकत्व–स्वातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतासमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपक "निरूपकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपकत्वैतत्त्रितयसम्बन्धेन । शेषं पूर्ववत् ।

तथा च बाधप्रतिबन्धकतायां वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्य सत्त्वेऽपि तादृशाभावीयप्रतियोगितानिरूपितनिश्चयनिष्ठावच्छेदकता च न सम्बन्धत्रयेण प्रतिबन्धकताविशिष्टा तत्र प्रथमसम्बन्धसत्त्वेऽपि अन्यसम्बन्धयोरभावात्, निश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वनिष्ठस्य तादृशप्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासामानाधिकरण्याभावात् , एवं तादृशनिश्चयनिष्ठावच्छेदकतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्न "वन्ह्यभाववान् ह्रद इति निश्चयनिष्ठा"वच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नसम्बन्धावच्छिन्नावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वनिष्ठस्य तादृशप्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासामानाधिकरण्याभावाच्च ।

जलवान् वन्ह्यभाववान् जलवांश्च ह्रद इति निश्चयविशिष्टनिश्चयनिष्टप्रतिबन्धकतावैशिष्ट्यं जलवान् ह्रद इति निश्चयनिष्ठावच्छेदकतायामस्ति स्ववृत्तिर्यो निरुक्तोऽभावस्तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वस्य, तादृशप्रतिबन्धकत्वाभाववान् यो जलवान् ह्रद इति निश्चयः तद्वृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासमानाधिकरणजलवद्ह्रदत्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिरूपकत्वस्य, एवं तादृशप्रतिबन्धकत्वाभाववान् यो जलवान् वन्ह्यभाववानितिनिश्चयः तद्वृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतासमानाधिकरणवन्ह्यभाववज्जलवत्त्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानि रू ‥मानाधिकरण्यसम्बन्धावच्छिन्न "जलवान् ह्रद" इति निश्चयनिष्ठावच्छेदकतानिरूपकत्वस्य च सत्त्वात् । तथा च तादृशाऽवच्छेदकताविशिष्टविषयितासम्बन्धेन तादृशप्रतिबन्धकत्वाभाववान् बाधनिश्चय द्वृत्तिविषयितानिरूपकतावच्छेदकत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वे विरहेण नातिव्याप्तिः । तादृशा‥च्छेदकताविशिष्टविषयिता च बाधप्रतिबन्धकतायाः व्यधिकरणसम्बन्ध एवेति नाऽसम्भवः(२) ।

( १ ) स्ववृत्त्यभावश्च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो ग्राह्यः ।

( २ ) नन्वत्र संशयाहार्याद्यन्तर्भावेण प्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वेनाऽसम्भवस्तदवस्थ एव । न च स्वाभाववदनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तिविषयितानिरूपकतावच्छेदकत्वोपादाने नाऽसम्भव इति वाच्यम् । भाविज्ञानं वन्ह्यभावाभाववति वन्ह्यभावप्रकारताकमित्याकारकज्ञानद्वितीयक्षणे अपेक्षाबुद्ध्यात्मकबाधनिश्चयः, तत्र च पूर्वक्षणावच्छेदेन प्रतिबन्धकत्वाभावविशिष्टद्वितीयक्षणावच्छिन्ननिरुक्तविशेषणविशिष्टनिश्चयीयविषयितानिरूपकतावच्छेदकत्वादिति चेन्न ।

स्वाऽव्यापकतत्कत्वरूपस्य स्वातिरिक्तवृत्तित्वस्य निवेशात् । प्रकृते च अनाहार्याऽप्रामाण्यज्ञानाना-

वस्तुतो द्वितीयसम्बन्धघटकस्वाभावः स्ववृत्त्यभावी(१)याऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टविषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकः । विषयितायामवच्छेदकतावै० स्वविशिष्टरूपावच्छिन्नत्व–स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन । प्रथमरूपे स्ववै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वैतत्त्रितयसम्बन्धेन । द्वितीयरूपे स्ववै० स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । "द्वितीयसम्बन्धघटक"अवच्छेदकतावत्त्वं च स्वनिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति ।

एवं च बाधप्रतिबन्धकतायां वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टतादृशनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावो नास्त्येव, तादृशनिश्चयस्यैवाऽप्रसिद्धत्वात् । वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयनिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायास्तु वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यजलवद्ध्रदत्वावच्छिन्नविषयिताशून्यवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयिताशून्यजलवद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावो वर्त्तते इति तादृशाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टरूपमुक्तसम्बन्धत्रयेण जलवद्ध्रदत्वं वह्न्यभाववज्जलवत्त्वं चेति तादृशैकरूपावच्छिन्नविषयितासमानाधिकरणाऽपररूपावच्छिन्नविषयितायाः एव तादृशविशिष्टनिश्चये सत्त्वेन नाऽव्याप्त्यतिव्याप्ती ।

यदि वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितावच्छेदकत्वानङ्गीकारेण तादृशसम्बन्धावच्छिन्नप्रतियोगिताकप्रतिबन्धकत्वाभावाऽप्रसिद्धिरित्युच्यते, तदा स्वाभावः स्ववृत्तिनिरुक्ताभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितानिष्ठप्रकारतानिरूपितविशेष्यत्वनिष्ठप्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः ।

स्कन्दितनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः स्वपदेन धारणे स्वाऽव्यापकप्रतिबन्धकतारूपस्वातिरिक्तवृत्तित्वाऽभावात्, असङ्ग्रहस्थले च वह्न्यभाववज्जलवत्त्वादौ तत्सत्त्वात् सर्वं समञ्जसमिति ध्येयम् ।

(१) अभावश्च किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो ग्राह्यः ।

ननु तथापि अभावपक्षकवह्निसाध्यकवह्न्यभाववद्वह्निव्यापकत्ववत्कालीनजलहेतुकस्थले वह्निव्यापकीभूताभावप्रतियोगितादृशजलरूपाऽसाधारण्येऽव्याप्तिः, तत्र व्यापकतारूपाऽभावस्याऽभावांशे प्रविष्टतया तादृशाऽसाधारण्यस्य वह्न्यभाववद्वृत्तिव्यापकत्ववत्त्वविशिष्टवह्निव्यापकत्ववदभावत्वविशिष्टरूपविशिष्टद्वयघटिततया वह्निव्यापकतावान् वह्न्यभाववानितिनिश्चयविशिष्टवह्निव्यापकतावानभाव इति निश्चयत्वस्य अभावो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तितया तदघटितत्वस्य तत्राभावात्, अथ च प्रतिबन्धकतयोरैक्यादिति चेन्न।

---

तथाच ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तिनिरुक्ताभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टविषयितानकारकतादृशविशिष्टविषयकनिश्चयविशेष्यकबुद्धेः प्रमात्वेन तादृशप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धेन तादृशविशिष्टविषयकनिश्चये सत्त्वेन तदभाववती प्रतीतिस्तादृशविशिष्टाविषयिकैवेति नोक्ताव्याप्तिः। बाधप्रतिबन्धकतानिष्ठतादृशाभावाऽप्रसिद्धावपि तादृशप्रतिबन्धकतावृत्तित्वेन तादृशाभावावगाहितन्निष्ठतादृशाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितावद्वह्न्यभाववद्ह्रदविषयकं ज्ञानमितिभ्रमसम्भवात्तादृशभ्रमीयविषयितानिष्ठप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धस्य व्यधिकरणतया तेन सम्बन्धेन दोषज्ञानेऽसत्त्वेन लक्षणसमन्वयः।

यदि विशेषरूपेण संसर्गता न स्वीक्रियते तदा प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टरूपवत्त्वं लक्षणम्। रूपे प्रतिबध्यतावै० स्वनिरूपितप्रतिबन्धकतावृत्त्य(१)भावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टत्व–स्वावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्य(२)भावीयावच्छेदकतानिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयिता नास्तीतिप्रतीतिसिद्धाभाववत्प्रतीतिविषयितानिरूपितनिरूपकतावच्छेदकत्वोभयसम्बन्धेन। रूपे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितपरम्परीयाऽवच्छेदकतावत्त्वोभयसम्बन्धेन। विषयितायामवच्छेदकतावै० स्वविशिष्टरूपावच्छिन्नत्व–स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन। प्रथमरूपे स्ववै० उक्तान्यतमसम्बन्धेन। द्वितीयरूपे स्ववै० उक्तोभयसम्बन्धेन। द्वितीयरूपे स्ववैशिष्ट्यघटकद्वितीयसम्बन्धघटकावच्छेदकतावत्त्वं चोक्तोभयसम्बन्धेनेति।

एवं चेदानीं बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय द्वितीयसम्बन्धोऽपि दोषतावच्छेदकरूपेऽस्तीति न व्यधिकरणसम्बन्धावच्छिन्नाभावो वक्तव्यः। असंग्राह्यविशिष्टविषयकनिश्चये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितासामान्याभावस्यासत्त्वेन नातिव्याप्तिः।

---

(१) अभावश्च किञ्चिद्रूपावच्छिन्नविषयित्वव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो ग्राह्यः।

(२) अभावश्च किञ्चिद्रूपावच्छिन्नविषयित्वव्यापकविषयिताशून्याकिञ्चिद्रूपावच्छिन्नविषयिताशून्याकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वव्यापकविषयिताशून्याकिञ्चिद्रूपावच्छिन्नविषयिताशून्याकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीसिद्धो ग्राह्यः।

हेतुसाध्यभेदेन हेत्वाभासलक्षणस्य नानात्वेन तादृशस्थलीयलक्षणे तादृशविशिष्टद्वयविषयितायां तादृशाऽसाधारण्यविषयकज्ञानीयतादृशविशिष्टद्वयविषयिताभेदस्याऽगत्या निवेशनीयत्वात् ।

एतेन प्रतियोगित्वं वन्हिमद् वन्ह्यभाववद्वन्ह्यधिकरणनिष्ठाभावनिरूपितत्ववत्कालीनजलादित्यत्र वन्हिव्याप्यकीभूताभावप्रतियोगितादृशजलरूपाऽसाधारण्येऽव्याप्तिः, यथा प्रतियोगितात्वविशिष्टे वन्हिवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति पक्षे हेतुमत्ताज्ञानकालीनाऽसाधारण्यविषयकनिश्चयस्य प्रतिबन्धकत्वं तथा तदवच्छिन्नं प्रत्येव वन्ह्यधिकरणनिष्ठाभावनिरूपितत्ववद् वह्न्यभाववद् वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववच्च प्रतियोगित्वमिति निश्चयविशिष्टनिश्चयस्य प्रतिबन्धकत्वम् । एवं च तादृशाऽसाधारण्यविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः प्रथमसम्बन्धस्याऽसाधारण्यतावच्छेदकरूपे सत्त्वेऽपि द्वितीयसम्बन्धो नास्त्येव, तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदक–पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता या उक्तनिश्चयविशिष्टनिश्चयनिष्ठप्रतिबन्धकता तद्वृत्तिनिरुक्ताभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परीयानिश्चयनिष्ठावच्छेदकताविशिष्टैकविषयिताविशिष्टाऽपरविषयितायास्तादृशाऽसाधारण्यविषयकनिश्चये सत्त्वादिति निरस्तम् ।

असाधारण्यविषयकनिश्चयस्य सामानाधिकरण्येनानुमितिं प्रति अवच्छेदकावच्छेदेनाऽनुमितिं प्रति च प्रतिबन्धकत्वं, यादृशं पक्षे हेतुमत्ताज्ञानं तादृशानुमितिं प्रत्येव तस्य प्रतिबन्धकत्वात्, उक्तनिश्चयविशिष्टनिश्चयस्य तु अवच्छेदकावच्छेदेनाऽनुमितिं प्रत्येव प्रतिबन्धकत्वम् । असाधारण्यशरीरे व्यापकताघटकतया प्रतियोगित्वसामानाधिकरण्येनैव वन्ह्यधिकरणनिष्ठाभावनिरूपितत्वस्य प्रविष्टत्वात्(१) । प्रतियोगितात्वावच्छेदेन तस्य प्रवेशे तादृशधर्मविशिष्टप्रतियोगित्वाऽप्रसिद्ध्या(२)विशिष्टदोषाऽप्रसिद्ध्या क्वाऽव्याप्तिः । एवं चाऽसाधारण्यविषयकनिश्चयनिष्ठसामानाधिकरण्येनाऽनुमितिप्रतिबन्धकतामादाय लक्षणसमन्वयात् तादृशप्रतिबन्धकतानिरूपित प्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणशुद्धसंयोगेन वन्हिमत्प्रतियोगित्वबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां तादृशाऽसाधारण्यघटकविशिष्टद्वयविषयिताशालिनिश्चयत्वव्यापकत्वाभावेनाऽन्यविशिष्टद्वयस्यैव तादृशत्वात्तद्विषयिताशून्यत्वस्योक्ताऽसाधारण्यनिश्चये सत्त्वादिति तु न सम्यक् । सामानाधिकरण्येन तन्निश्चयस्यापि सामानाधिकरण्येनाऽनुमितिप्रतिबन्धक-

(१) असाधारण्यनिश्चयस्य बाधनिश्चयवत्तुल्ययोगक्षेमत्वम् ।

(२) ननु वन्ह्यधिकरणवृत्त्यभावनिरूपितत्वस्य संयोगेन प्रमेयाभावनिरूपितप्रतियोगितायां बाधात् व्यापकत्वभङ्गो निश्चितव्य इति भ्रमः प्रमेयाभावस्यापि संयोगेन वन्ह्यधिकरणे कालिकेन वर्त्तमानत्वात् । न च वन्ह्यधिकरणनिरूपितवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वं निविष्टमिति वाच्यम् । अननुगमात्, किञ्च कालपक्षककालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावसाध्यकस्थले निरुक्तप्रमाविशेष्यत्वाभावाभाववन्निरुक्तप्रमाविशेष्यत्वाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितानिरूपकत्ववद्वृत्तिनिरुक्तनिरूपकत्ववत्कालेऽतिव्याप्तेः, तत्र च स्वरूपसम्बन्धघटितविशिष्टद्वयाघटितत्वस्य प्रकृतविशिष्टद्वयघटितसमुदाये सत्त्वादिति चेन्न ।

किञ्चित्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतानियामकसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वादिति ॥

त्वात् । अत एव "ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतास्थले सामानाधिकरण्येन ज्ञानमपि सामानाधिकरण्येन ज्ञानं प्रतिबध्नातीति तर्के मथुरानाथेनोक्तम् ।

न च प्रतिबन्धकतैक्यविवक्षायामपि अभावो गगनत्ववान् आधेयत्वादित्यत्र गगनत्वव्यापकीभूताभावप्रतियोग्याधेयत्वरूपाऽसाधारण्ये हेतुमत्पक्षघटितेऽव्याप्तिर्दुर्वारैवेति वाच्यम् । तादृशाऽसाधारण्यस्य हेतुमत्पक्ष—तादृशासाधारण्यरूप—विशिष्टद्वयघटितत्वेऽपि असाधारण्ये हेतुमत्पक्षविषयिताशून्यत्वाभावेन तादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्तुमशक्यत्वात्, परस्परविषयिताशून्य(१)यादृशविशिष्टद्वयविषयकनिश्चयत्वं तादृशप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टद्वयविषयिताशून्यत्वस्य तादृशाऽसाधारण्यनिश्चयेऽक्षतत्वात्(२) ।

ननु यादृशविशिष्टविषयकनिश्चयीयविशिष्ट्यादृशविशिष्टविषयकनिश्चयत्वमनुमित्यवृत्ति तादृशविशिष्टद्वयाऽघटितत्वनिवेशेनैवोपपत्तौ अलमनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वान्तोपादानेनेति चेन्न ।

ह्रदो वह्निमान् मीनादित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः, यत्रादौ ह्रदो वह्निमान् जलवांश्चेति समूहालम्बनानुमितिः तदुत्तरक्षणे जलवान् वह्न्यभाववानिति ज्ञानं तत्र

(१) परस्परविषयिताशून्ययादृशविशिष्टद्वयविषयकनिश्चयत्वमित्यस्य चरमनिश्चयीयविषयितानिरूपकतावच्छेदकयद्रूपावच्छिन्ननिरूपकताकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयीविशिष्टप्रथमनिश्चयीयविषयितानिरूपकतावच्छेदकयद्रूपावच्छिन्ननिरूपकताकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नत्वमर्थः ।

नन्वत्र सर्वत्रासम्भवः, जलवान् ह्रद इति चरमनिश्चयीयजलत्वनिष्ठनिरूपकतावच्छेदकताकजलविषयितायाः जलवान् वन्ह्यभाववानितिज्ञानेऽपि सत्त्वात् । न च पर्याप्तिनिवेशे नायं दोष इति वाच्यम् । अभावो गगनत्ववान् आधेयत्वादित्यत्राव्याप्तेर्वज्रलेपत्वात्, तथाहि आधेयत्ववदभावत्वपर्याप्तावच्छेदकताकनिरूपकताकविषयिताशून्यत्वमसाधारण्यविषयकनिश्चयेऽसाधारणनिश्चयीयविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकविषयिताशून्यत्वं च केवलहेतुमत्पक्षविषयकज्ञाने चेति चेन्न ।

परस्परविषयिताशून्यत्वमित्यनेन विशिष्टद्वयीयविशेष्यतानिरूपितविशेष्यत्वीयनिरूपकतावच्छेदकरूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षितत्वात्, तथाच साधारण्यघटकव्यापकत्वशरीरे गगनत्वाधिकरणवृत्तितावानभाव इत्यंशीयविशेष्यताया अपि ग्रहणात्तच्छून्यत्वस्यासाधारण्यज्ञानेऽसत्त्वेन निरुक्तविशिष्टद्वयपदेनैतद्विशिष्टद्वयस्य धर्तुमशक्यत्वाद्विशिष्टद्वयान्तराघटितत्वान्नाव्याप्तिः, एवमेव जलत्ववद्ध्रदत्ववन्ह्यभाववज्जलवत्त्वरूपनिरुक्तरूपावच्छिन्नविषयिताशून्यत्वसत्त्वात् सर्वं समञ्जसमिति ध्येयम् ।

(२) यद्यपि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्राऽभाववत्तादृशघटेऽतिव्याप्तिः, तद्घटकीभूतविशिष्टद्वयस्य परस्पराऽघटितत्वाभावेन यादृशविशिष्टपदेन धर्तुमशक्यतया तादृशविशिष्टद्वयाऽघटितत्वस्याऽक्षतत्वात् । एवं रूपं नीलरूपवादित्यत्र नीलरूपाभाववन्नीलेऽतिव्याप्तिः(१) । एवमभावो वन्हिमानित्यत्र वन्ह्यभाववद्वन्हिमति अतिव्याप्तिः(२) । तत्रोभयत्र तद्घटकीभूतविशिष्टद्वयस्य परस्पराऽघटितत्वाभावात् । तथापि वक्ष्यमाणविशिष्टान्तराऽघटितत्वस्यैव परिष्कारस्तेनैव वारणीयतया न दोषः । यदि अत्रापि तादृशदोषोद्धार आवश्यकस्तदा विशेष्यदलघटकविषयितायां तत्तद्विषयिताभिन्नत्वं देयम् ।

(१) समवायसम्बन्धेन नीलावच्छेदेन नीलरूपाभावविषयकनिश्चयविशिष्टरूपधर्मिकनीलनिश्चयत्वेन प्रतिबन्धकत्वात् ।

(२) प्रतियोगितासम्बन्धेन वन्हिमान् वन्ह्यभाववान् वन्हिमांश्चाऽभाव इति निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वात् ।

जलावच्छेदेन वन्ह्यभावप्रकारकज्ञानस्यैकक्षणावच्छेदेनैकात्मवृत्तित्वरूपवैशिष्ट्यं जलवद्ह्रद-विषयकनिश्चयात्मकपूर्वानुमितौ वर्त्तते, इत्येकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन जलावच्छेदेन वन्ह्यभाववत्तानिश्चयविशिष्टजलवद्ह्रदविषयकनिश्चयत्वस्य प्रकृतानुमित्यवृत्तित्वविरहा त्तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धारणाऽसम्भवात्, एवं यत्रादौ जलवान् वन्ह्यभाववान् ह्रदश्च वह्निमानितिसमूहालम्बनानुमितिः ततश्च जलवान् ह्रद इति ज्ञानं तत्र निरुक्तसम्बन्धेन जलवद्ह्रदविषयकनिश्चयविशिष्टजलावच्छेदेन वन्ह्यभावविषयकनिश्चयत्वस्यापि धारणाऽसम्भवात्, किन्तु मीनवद्ह्रदविषयकनिश्चयविशिष्टमीनावच्छेदेन वन्ह्यभावविषयकनिश्चयत्वस्यैव, तादृशस्थलीयसमूहालम्बनानुमितेः ह्रदो वह्निमान् वह्निव्याप्यमीनवांश्चेत्याकारकतया तादृशानुमितेर्मीनावच्छेदेन वन्ह्यभावविषयकत्वे ह्रदधर्मिकवह्निप्रकारकत्वानुपपत्तिः, ह्रदधर्मिकवह्निमत्ताबुद्धिम्प्रति मीनावच्छेदेन वन्ह्यभाववत्तानिश्चयविशिष्टह्रदधर्मिकमीनप्रकारकनिश्चयस्याऽभावः कार्यसहवृत्तितया हेतुरिति तादृशविशिष्टद्वयोपात्तमीनवद्ह्रद—मीनावच्छेदेन वन्ह्यभाव—विषयिताशून्यं यद्ज्ञानं तद्विषयत्वस्य वन्ह्यभाववज्जलादिमद्वृत्तिजलवद्ह्रदे सत्त्वादतो यादृशविशिष्टविषयकनिश्चयविशिष्टविषयकनिश्चयत्वेऽनुमित्यवृत्तित्वमुपेक्ष्याऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वं निवेशितम् । तथाच जलावच्छेदेन वन्ह्यभावप्रकारकनिश्चयविशिष्टजलवद्ह्रदविषयकनिश्चयत्वस्य, एवं जलवद्ह्रदविषयकनिश्चयविशिष्ट-जलावच्छेदेन वन्ह्यभाववत्तानिश्चयत्वस्यानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तितया तादृशविशिष्टद्वयपदेन तादृशविशिष्टद्वयोपादानसम्भवान्नोक्तातिव्याप्तिः ।

न च यादृशविशिष्टविषयकनिश्चयस्य वैशिष्ट्यं एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपसामानाधिकरण्यसम्बन्धेन न निवेश्यते किन्तु यादृशविशिष्टविषयकत्वस्यैव वैशिष्ट्यं स्वरूपसम्बन्धेन निवेश्यते, एवं च जलवान् वन्ह्यभाववान् जलवांश्च ह्रद इतिज्ञाने ह्रदो वह्निमानित्यनुमितित्वं न सम्भवति । तथाहि—ह्रदधर्मिकवह्निप्रकारकबुद्धिं प्रति जलावच्छेदेन वन्ह्यभावप्रकारकनिश्चयविशिष्टह्रदधर्मिकजलवत्तानिश्चयाभावस्य कार्यसद्भावेन हेतुतया जलावच्छेदेन वन्ह्यभाववत्ताविषयकत्वविशिष्टह्रदधर्मिकजलवत्तानिश्चयत्वमनुमित्यवृत्ति भवतीति तादृशविशिष्टद्वयाघटितत्वस्योक्तविशिष्टेऽसत्त्वादतिव्याप्तिवारणसम्भवे द्विधा निश्चयत्वं निवेश्य एकक्षणावच्छिन्नैकात्मवृत्तित्वं निवेश्याऽनतिरिक्तवृत्तित्वनिवेशोऽनुचित इति वाच्यम् । यादृशविशिष्टविषयकत्वविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमित्यवृत्तीत्यत्र यादृशयादृशविशिष्टविषयकत्वविशिष्टयादृशयादृशविशिष्टविषयकनिश्चयत्वमवश्यं वाच्यम्; अन्यथा मीनावच्छेदेन वन्ह्यभावविषयकत्वविशिष्टमीनवद्ह्रदविषयकनिश्चयत्वस्यापि प्रकृतानुमित्यवृत्तितया तादृशविशिष्टद्वयाऽघटितत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदे सत्त्वादतिव्याप्तेर्दुर्वारतापत्तेः ।

एवं च यत्र पाषाणमयत्वावच्छेदेन वन्ह्यभावस्य साध्यता तत्र पाषाणमयत्वविशिष्ट-पर्वतविषयकनिश्चयत्वविशिष्टवह्निमत्पर्वतविषयकनिश्चयत्वं यादृशविशिष्टेत्यादिनोपादातुं शक्यते पर्वतो वह्निमानितिबुद्धिं प्रति पाषाणमयत्वावच्छेदेन वन्ह्यभावप्रकारकनिश्चयविशिष्ट-पर्वतधर्मिकपाषाणमयत्वप्रकारकनिश्चयाभावस्य कार्यसहभावेन हेतुतया पाषाणमयो न वह्नि-

मान् पर्वतश्च पाषाणमयः पर्वतो वह्निमांश्चेत्याकारकसमूहालम्बनानुमितेरप्रसिद्धेः। एवं च तादृशस्थले पाषाणमयत्वविशिष्टपर्वत–वह्निमत्पर्वतरूपविशिष्टद्वयाऽघटितत्वनिवेशे गौरवम्। यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वेऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वविवक्षणे च पाषाणमयत्वावच्छेदेन वन्ह्यभावबुद्धिं प्रति पर्वतधर्मिकवह्निमत्तानिश्चयत्वेनाऽप्रतिबन्धकत्वात्, यादृशविशिष्टपदेन तयोरुपादानाऽसम्भवात्तादृशविशिष्टद्वयाऽघटितत्वस्य तत्राऽनिवेशाल्लाघवमिति ध्येयम्।

एवं वन्ह्यधिकरणवृत्तित्वाभाववत्प्रमेयकालीनह्रदः प्रमेयत्ववदभावकालीनवह्निमान् जलादित्यत्र प्रमेयत्ववदभावकालीनवन्ह्यधिकरणवृत्त्यभावाऽप्रतियोग्यभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, अभावधर्मिकवन्ह्यधिकरणवृत्तित्ववत्ताबुद्धिं प्रति प्रमेयत्वावच्छेदेन वन्ह्यधिकरणवृत्तित्वाभावावगाहिनिश्चयविशिष्टाऽभावधर्मिकप्रमेयत्वप्रकारकनिश्चयाऽभावस्य कार्यसहभावेन हेतुतया प्रमेयत्वविशिष्टाभावविषयकत्वविशिष्टवन्ह्यधिकरणवृत्तित्वविशिष्टाभावविषयकनिश्चयत्वस्यापि प्रमेयत्वावच्छेदेन वन्ह्यधिकरणवृत्तित्वाभावावगाहिप्रकृतानुमित्यवृत्तितया तादृशविशिष्टद्वयाऽघटितत्वस्य निरुक्ताऽसाधारण्ये विरहात्। प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वघटितनिरुक्तविशिष्टद्वयाऽघटितत्वस्य निवेशे च प्रमेयत्वावच्छेदेन वन्ह्यधिकरणवृत्तित्वाभाववत्ताबुद्धिं प्रति अभावधर्मिकप्रमेयत्वप्रकारकनिश्चयविशिष्टाऽभावधर्मिकवन्ह्यधिकरणवृत्तित्वप्रकारकनिश्चयत्वेनाऽप्रतिबन्धकत्वात्तादृशविशिष्टद्वयपदेनाऽसाधारण्यघटकयोर्निरुक्तविशिष्टयोरुपादानाऽसम्भवान्न तादृशाऽसाधारण्येऽव्याप्तिः।

वन्ह्यभाववज्जलवद्वृत्तिजलाभाववद्ह्रदपक्षकवन्हिसाध्यकस्थले तादृशजलवद्ह्रदरूपाऽऽश्रयासिद्धाव्याप्तिरिति मान्याः।

केचित्तु पर्वतपक्षवन्ह्यभावव्याप्यसाध्यकपर्वतीयवन्ह्यभावहेतुकस्थले पर्वतीयवन्हिमत्पर्वतेऽव्याप्तिः, पर्वतीयवन्हित्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टवन्हिमत्पर्वतत्वावच्छिन्नविषयिताशालिनिश्चयत्वस्य प्रकृतानुमित्यवृत्तित्वात्, प्रकृतपक्षे प्रकृतसाध्यहेत्ववगाहिज्ञानस्य तादृशनिश्चयात्मकस्याहार्यत्वेनाऽनुमितित्वविरहादित्याहुः।

अथ तादृशानुमित्यव्यवहितपूर्वक्षणवृत्तिज्ञानाऽवृत्तित्वं निवेश्यं तावतैवोक्तदोषवारणादिति चेन्न।

वन्ह्यभाववद्धूमवत्कालीनवन्हिसाध्यकाऽभावपक्षधूमहेतुकस्थले धूमाभाववदभावरूपस्वरूपाऽसिद्धावव्याप्तेः, प्रतियोगितासम्बन्धेन धूमवन्निश्चयोत्तरं प्रकृतानुमित्युत्पादाऽसम्भवादनुमितेरभावे वन्ह्यवगाहित्वाद्वन्हिमत्ताबुद्धेश्च प्रतिबन्धकसद्भावात्।

वस्तुतः पर्वतपक्षकवन्ह्यभावव्याप्यसाध्यकस्थले वन्हिमत्पर्वते, वन्ह्यभाववज्जलवत्कालीनधूमहेतुकह्रदपक्षकवन्हिसाध्यकस्थले च जलवद्ह्रदेऽतिव्याप्तिः स्यादिति विशेष्यदले प्रकृतानुमित्यवृत्तित्वस्य प्रकृतानुमित्यव्यवहितपूर्वक्षणवृत्तिज्ञानावृत्तित्वस्य यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वे विवक्षितुमशक्यतया प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वप्रवेशस्यावश्यकतया विशेष्यदलघटकविशिष्टद्वयाघटितत्वघटकप्रतिबन्धकत्वैक्यस्योक्ततया द्विधा प्रकृतानुमितित्वव्यापकत्वादेरप्रविष्टतया तत्प्रयोजनानुसन्धानं वायसदशनानुसन्धानशीलमेवेति बोध्यम्।

अथ यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावदित्येव कथं नोक्तम्, तथाच प्रकृतानुमितिप्रतिबन्धकतायां यद्रूपावच्छिन्नविषयित्वावच्छिन्नसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्वे सति यद्रूपावच्छिन्नविषयकत्वावच्छिन्नत्वं, यद्रूपे तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकत्वं निवेश्यम्, तथाच संशयान्यत्वाऽनाहार्यत्वाऽप्रामाण्यज्ञानाभावव्यापकत्वादीनामप्रवेशाल्लाघवम् । न च वन्हित्वावच्छिन्नविषयताशालिनिश्चयविशिष्टह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वादेर्बाधादिनिश्चयनिष्ठप्रतिबन्धकतायामवच्छेदकत्वेनाऽसम्भवापत्तिरिति वाच्यम् । प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य यद्रूपे विवक्षणीयत्वात् । विषयतायां प्रतिबन्धकतावै० स्वावच्छेदकविषयतावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकतानिरूपितविषयतानिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयतासामानाधिकरण्योभयसम्बन्धेन, तथा च बाधनिश्चयप्रतिबन्धकतायां सामानाधिकरण्यसम्बन्धेन निश्चयस्याऽवच्छेदकत्वविरहेण द्वितीयसम्बन्धविरहेण नाऽसम्भवः । न च वन्हित्वह्रदत्वाद्यवच्छिन्नविषयताया निश्चयविशिष्टनिश्चयनिष्ठप्रतिबन्धकतायामवच्छेदकतया तादृशविषयताशून्यत्वस्य बाधनिश्चयेऽसत्त्वादसम्भवता(१)दवस्थ्यमिति वाच्यम् । स्वावच्छेदकत्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकविषयतासामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यस्य वाच्यत्वादिति चेन्न ।

ह्रदो वह्निमान् जलादित्यादौ वन्हिव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, तत्र ह्रदधर्मिकजलप्रकारकनिश्चयवैशिष्ट्यावच्छिन्ना या वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकवह्निव्यापकीभूताभावप्रतियोगिजलविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकता तस्या अपि जलत्वावच्छिन्नविषयकत्वावच्छिन्नज्ञाननिष्ठावच्छेदकताकवह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्यविषयकत्वावच्छिन्नतया प्रथमयादृशपदेन जलत्वावच्छिन्नस्य द्वितीययादृशपदेन वन्हिव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्यस्य च धारणसम्भवात्, तादृशजलत्वावच्छिन्नविषयिताविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयत्वस्य वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्ये विरहात् । अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकतानिवेशे तु वह्निव्यापकीभूताभावप्रतियोगि जलमिति निश्चयविशिष्टजलमिति निश्चये प्रतिबन्धकत्वासत्त्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयं धर्तुं न शक्यते इति नाव्याप्तिः ।

नन्वत्राऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वानिवेशेऽपि तादृशनिश्चयद्वयेऽप्यव्यापकीभूतविषयिताशून्यत्वं निवेशनीयम्, अन्यथा तादृशविशिष्टद्वयाऽप्रसिद्ध्या प्रागुक्तरीत्याऽसम्भ-

---

(१) वस्तुतस्तु अव्यापकीभूतविषयिताशून्यज्ञानीयविषयत्वे एव प्रतिबन्धकतावच्छेदकत्वस्य विवक्षिततया तथाविधवह्नित्वह्रदत्वावच्छिन्नविषयतायाः प्रतिबन्धकतानवच्छेदकत्वान्नाऽसम्भवः । एवं च प्रथमकल्प एव समीचीनः स एव यथाश्रुतग्रन्थलभ्य इति ध्येयम् ।

वापत्तेः । एवं च सति स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशेऽपि वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकनिश्चयविशिष्टस्य जलवान् ह्रद इत्याकारकनिश्चयस्य प्रतिबन्धकत्वेऽपि जलवान् ह्रद इति निश्चये जलत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभावेन तादृशाऽव्यापकविषयिताशून्यस्य शुद्धजलमित्याकारकनिश्चयस्याऽसाधारण्यविषयकनिश्चयविशिष्टस्यानुमित्यप्रतिबन्धकतया न तादृशविशिष्टद्वयमादायाऽव्याप्तिः (१) ।

अथवा यद्रूपावच्छिन्नविषयतासामान्यावच्छिन्नत्वस्य ज्ञाननिष्ठावच्छेदकतायां निवेशे जलत्वावच्छिन्नविषयतासामान्यान्तर्गतायां जलमित्याकारकज्ञानीयविषयतायां निरुक्ताऽसाधा-

(१) न च जलं वह्निमज्जलादित्यत्राऽसाधारण्येऽव्याप्तिः, तत्र तादृशाऽसाधारण्यविषयकनिश्चयाविशि-
ष्टजलवज्जलमिति निश्चयत्वे प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकत्वसत्त्वात्, तत्र च जल-
त्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्यापि सत्त्वात्, जलवज्जलत्वावच्छिन्नविषयिताया अव्यापक-
त्वेऽपि जलशून्यजलधर्मिकनिश्चये तदसत्त्वात्, "जलवत्त्वं चात्र समवायेन" अनतिरिक्तवृत्तित्वनिवेशेऽ-
साधारण्यनिश्चयविशिष्टजलमिति निश्चये प्रतिबन्धकताविरहान्न दोष इति वाच्यम् । यद्रूपावच्छिन्नविषयिता-
निरूपितयद्रूपावच्छिन्नविषयिता यादृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छि-
न्नविषयिताशून्ययादृशविशिष्टविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता या-
दृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्ययादृशविषयकनिश्च-
यत्वमनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टद्वयाघटितत्वनिवेशे नोक्तदोषः, तत्राऽसाधारण्यनिश्चयविशि-
ष्टजलं जलवदित्याकारकनिश्चये जलत्वावच्छिन्नविषयित्वाव्यापकीभूतजलत्वावच्छिन्नविषयितानिरूपितजल-
त्वावच्छिन्नविषयितायाः सत्त्वात्, तच्छून्यजलमितिनिश्चयस्यानुमित्यप्रतिबन्धकत्वात् । न च जल(१)वज्ज-
लं स्वरूपवज्जलवज्जलकालीनवह्निमत् स्वरूपवज्जलादित्यत्राऽसाधारण्येऽव्याप्तिस्तादृशनिवक्षायामपि दुर्नि-
वारा, तादृशाऽसाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलत्वविशिष्टविषयिताशालिस्वरूपवज्जलवज्जलव-
ज्जलमितिनिश्चयत्वस्याऽनुमितिप्रतिबन्धकतावच्छेदकतया तादृशाऽसाधारण्यात्मकविशिष्ट-स्वरूपवज्जलव-
ज्जलत्वविशिष्टयोर्यादृशपदेन धर्तुं शक्यतया तादृशविशिष्टद्वयाघटितत्वस्याऽसाधारण्ये विरहात् । अनति-
रिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे तु तादृशाऽसाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलवज्जलमित्या-
कारकनिश्चये तादृशप्रतिबन्धकत्वाभावेन तादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्तुमशक्यतया नाव्याप्ति-
रिति वाच्यम् । स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपक्षेऽपि यादृशविशिष्टविषयित्वाव्यापिका यादृशसमुदाय-
त्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितानिरूपितयादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्ति-
कावच्छेदकताकविषयिता तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितानिरूपिततादृश-
समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताशून्यत्वस्य विवक्षणीयतयोक्ताव्याप्तेरभावात् ।
विशिष्टपक्षतावच्छेदकस्य प्रकृतेऽप्रसिद्धत्वेऽपि तादृशाऽसाधारण्यविषयकनिश्चयाविशिष्टस्वरूपवज्जलवज्ज-
लवज्जलमितिनिश्चयेऽनुमितिप्रतिबन्धके स्वरूपवज्जलवज्जलत्वावच्छिन्नविषयित्वाऽव्यापिकायाः जलत्वज-
लस्वरूपजलत्वगतसमुदायत्वस्य प्रसिद्धत्वेन जलवज्जलत्वनिष्ठधीविशेषविषयस्वरूपसमुदायत्वावच्छिन्नानु-
योगिताकपर्याप्तिकावच्छेदकताकजलवज्जलत्वावच्छिन्नविशेष्यतानिरूपितस्वरूपवज्जलत्वनिष्ठधीविशेषविषय-
त्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रकारतायाः सत्त्वेन तच्छून्यस्वरूपवज्जलवज्जलमित्याकारक-
निश्चये प्रतिबन्धकताविरहेण तादृशविशिष्टस्य यादृशविशिष्टपदेन धर्तुमशक्यत्वात् ।

(१) अत्र पक्षे जलं स्वरूपसम्बन्धेन । असाधारण्यनिश्चये स्वरूपवज्जलवज्जलत्वावच्छिन्नविषयक-त्वसम्पादनाय कालीनान्तं साध्यविशेषणम् । स्वरूपत्वावच्छिन्नविषयितानिरूपितजलत्वावच्छिन्नविषयताया व्यापकत्वसम्पादनाय सर्वत्र स्वरूपवदिति ।

रण्यविषयकज्ञानप्रतिबन्धकतावच्छेदकत्वविरहान्न प्रथमयादृशपदेन जलत्वावच्छिन्नस्य धारणं सम्भवति, एवं प्रतिबन्धकतायां यद्रूपावच्छिन्नविषयितासामान्यावच्छिन्नत्वं निवेशनीयम् अन्यथा जलधर्मिकवह्निव्यापकीभूताभावप्रतियोगित्वप्रकारकनिश्चयवैशिष्ट्यावच्छिन्ना या ह्रदधर्मिकजलप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता तस्या अपि निरुक्ताऽसाधारण्यविषयकत्वसामान्यावच्छिन्नज्ञाननिष्ठावच्छेदकताकजलत्वावच्छिन्नविषयकत्वावच्छिन्नतया तादृशविशिष्टद्वयाऽघटितत्वस्य विरुक्ताऽसाधारण्ये विरहेणाऽव्याप्तितादवस्थ्यात् ।

अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकरूपवत्त्वम् । वै० स्वविशिष्टविषयितात्वावच्छिन्नत्व—स्वविशिष्टविषयितावैशिष्ट्यावच्छिन्नत्वोभयसम्बन्धेन, विषयितायां स्ववै० स्ववृत्तिर्योऽभावः तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वसम्बन्धेन । द्वितीयस्ववै० स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकतावृत्तिर्योऽभावः तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वसम्बन्धेनेति । एवं च स्वरूपसम्बन्धरूपावच्छेदकत्वं कथं न निविष्टमिति चेन्न ।

अनुमितित्वावच्छिन्नं प्रति चिकीर्षासामग्र्याः प्रतिबन्धकत्वमते पाको मत्कृतिसाध्यो भवतु इतीच्छां प्रति कारणीभूतस्य पाकधर्मिककृतिसाध्यत्वप्रकारकज्ञानविशिष्टपाकधर्मिकेष्टसाधनत्वप्रकारकज्ञानस्य पाकधर्मिकसिद्धत्वज्ञानाभावादि(१)विशिष्टपाकधर्मिककृतिसाध्यत्वप्रकारकज्ञानविशिष्टपाकधर्मिकेष्टसाधनत्वप्रकारकज्ञानत्वादिना अनुमितिं प्रति प्रतिबन्धकत्वं वक्तव्यम् । तथाच पाकधर्मिककृतिसाध्यत्वप्रकारकनिश्चयविशिष्टपाकधर्मिकेष्टसाधनत्वप्रकारकनिश्चयत्वे स्वरूपसम्बन्धरूपावच्छेदत्वसत्त्वात् कृतिसाध्यत्वविशिष्टपाक—इष्टसाधनत्वविशिष्टपाकरूपविशिष्टद्वयाऽघटितत्वस्यापि निवेशे गौरवम् ।

एवं ह्रदो वह्निमान् इष्टसाधनतावत्कृतिसाध्यतावत्पाककालीनजलादित्यत्राऽसाधारण्येऽव्याप्तिः, तादृशस्थलीयाऽनुमितिनिरूपितचिकीर्षासामग्रीनिष्ठप्रतिबन्धकतावच्छेदककुक्षौ तादृशनिश्चययोरप्यवश्यं निवेशनीयत्वात्, अन्यथा तादृशनिश्चयाऽभावकाले फलेच्छादिसत्त्वे लिङ्गान्तरपरामर्शादपि अनुमित्यनुपपत्तेः ।

सामग्रीत्वं च एकविशिष्टापरत्वमिति तदवच्छिन्नप्रतिबन्धकतानिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकत्वस्य प्रसिद्धिः, तथाच कृतिसाध्यतावत्पाकस्य—इष्टसाधनतावत्पाकस्य च यादृशविशिष्टपदेन धर्तुं शक्यतया तदघटितत्वस्योक्तहेतुघटिताऽसाधारण्येऽसत्त्वात् । अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु तादृशनिश्चयत्ववति फलेच्छादि(२)विगमकालीननिश्चये सामग्रीप्रतिबन्धकताविरहेण कृतिसाध्यतावत्पाकादेर्यादृशपदेनो-

---

(१) आदिना फलेच्छापरिग्रहः ।

(२) आदिना सिद्धत्वज्ञानाभावपरिग्रहः ।

पादानाऽसम्भवान्नाव्याप्तिरिति(१)।

---

(१) इदमुपलक्षणम् ह्रदो वह्निमान् धूमादित्यत्र नीलपर्वतोऽरुणवह्निमानिति प्रत्यक्षेच्छाविशिष्टताद्दृशप्रत्यक्षसामग्र्यां विशेष्यतावच्छेदकप्रकारकज्ञानविधया नीलत्वविशिष्टपर्वतविशेष्यकनिश्चयस्य विशेषणतावच्छेदकप्रकारकज्ञानविधयाऽरुणत्वविशिष्टवह्निविशेष्यकनिश्चयस्य प्रवेशान्नीलपर्वतत्वविशिष्टविषयकत्वसामान्यवच्छिन्नज्ञाननिष्ठावच्छेदकताकाऽरुणवह्नित्वविशिष्टविषयकत्वसामान्यावच्छिन्नप्रतिबन्धकतापि "ह्रदो वह्निमानित्यनुमितिनिरूपितप्रत्यक्षसामग्रीनिष्ठा" इति तादृशविशिष्टद्वयाऽघटितत्वनिवेशे गौरवमतोऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशः। तन्निवेशे च प्रत्यक्षेच्छाशून्यकालीनज्ञानेऽपि नीलपर्वतत्वविशिष्टविषयकनिश्चयविशिष्टाऽरुणवह्नित्वविशिष्टविषयकनिश्चयत्वस्य सत्त्वात्तत्र चानुमितिप्रतिबन्धकताया असत्त्वान्न यादृशविशिष्टपदेन तयोरुपादानसम्भवः।

यत्तु स्वरूपसम्बन्धरूपाऽवच्छेदकत्वप्रवेशे नीलोत्पलवान् ह्रदो रक्तदण्डवानित्यत्र रक्तदण्डाभाववन्नीलोत्पलवद्ध्रदात्मकबाधेऽव्याप्तिः, समानविषयकप्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकतया नीलोत्पलवान् ह्रदो रक्तदण्डवानिति प्रत्यक्षसामग्र्यास्तादृशानुमितिप्रतिबन्धकत्वेन तादृशप्रत्यक्षस्य च ह्रदांशे नीलत्वविशिष्टोत्पलस्य रक्तविशिष्टदण्डस्य च वैशिष्ट्यावगाहितया तत्सामग्रीकुक्षौ नीलमुत्पलं—रक्तो दण्ड इत्याकारकनिश्चययोर्विशेषणतावच्छेदकप्रकारकनिश्चयमुद्रया प्रवेशात्सामग्र्या अपि एकविशिष्टापरत्वेनैव प्रतिबन्धकत्वस्य वक्तव्यतया नीलोत्पलत्वविशिष्टविषयकनिश्चयविशिष्टरक्तदण्डत्वविशिष्टविषयकनिश्चयत्वस्य तादृशानुमितिप्रतिबन्धकतावच्छेदकतया तादृशविशिष्टद्वयाऽघटितत्वस्योक्तबाधेऽसत्त्वात्। अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु चक्षुःसंयोगाऽकालीनतादृशनिश्चययोः प्रतिबन्धकत्वाभावेन तादृशविशिष्टयोर्यादृशविशिष्टपदेन धर्त्तुमशक्यत्वान्न दोष इति।

तदसत्। विशिष्येच्छोत्तेजकत्वानुरोधेन विशिष्य प्रतिबध्यप्रतिबन्धकभावस्य वक्तव्यत्वेन प्रकृतानुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे सामग्रीकोटौ तादृशनिश्चयद्वयप्रवेशस्याऽनावश्यकतया तादृशनिश्चयत्वे प्रतिबन्धकतावच्छेदकत्वाभावात्। न च सामग्रीप्रतिबन्धकतायां तादृशनिश्चयाऽनिवेशे तादृशनिश्चयाभावदशायामपरप्रत्यक्षकारणसत्त्वेऽनुमितिर्न स्यादिति वाच्यम्। तादृशानुमितं प्रत्यपि विशेषणतावच्छेदकनिर्णयविधया तादृशनिश्चययोरपि कारणत्वेन तदभावेऽनुमित्यनुत्पादस्येष्टत्वात्।

यदपि चिकीर्षासामग्र्या अनुमितिप्रतिबन्धकतामते ह्रदः कृतिसाध्यताविष्टसाधनतावत्पाककालीनवह्निमान् धूमादित्यत्र तादृशवह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तिः, तत्र तादृशचिकीर्षासामग्रीनिष्ठानुमितिप्रतिबन्धकतावच्छेदक(१)कोटौ कृतिसाध्यतावत्पाक—इष्टसाधनतावत्पाकविषयकनिश्चययोः प्रवेशेन तादृशविशिष्टद्वयाऽघटितत्वस्य तत्रत्यबाधेऽभावात्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे तु फलेच्छाविगमकालीनतादृशनिश्चययोः प्रतिबन्धकताविरहेण न दोष इति।

तदपि न, प्रागुक्तरीत्यैव तादृशानुमितिप्रतिबन्धकतावच्छेदककुक्षौ तादृशनिश्चययोरप्रवेशादिति।

स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशपक्षे प्रतिबन्धकतैक्यविवक्षायामनुगमः—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम्। रूपे प्रतिबन्धकतावै० स्वनिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानिश्चयनिष्ठावच्छेदकताविशिष्टत्व—स्वाभाववत्प्रतीति-

---

(१) ननु साक्षादनुमितिप्रतिबन्धकस्य निरुक्तनिश्चयद्वयस्य प्रतिबन्धकतावच्छेदककुक्ष्यन्तर्गतत्ववर्णनमसङ्गतमिति चेन्न।

सामग्रीत्वस्यैकविशिष्टापरत्वरूपत्वेन तत्र च निरुक्तनिश्चयद्वयस्य विशिष्टसामग्रीशरीरे विशेषणत्वात्। न च विशेषणत्वे प्रतिबन्धकत्वाभावाद्विशिष्टद्वयपदेन धर्त्तुमशक्यत्वं तस्येति वाच्यम्। सामग्र्यन्तरापेक्षया तस्य विशेष्यत्वादिति ध्येयम्।

गुरुचरणास्तु—यत्र स्थलविशेषे जलवान् वन्ह्यभाववान् जलवांश्च ह्रद इति ज्ञानं भ्रमात्मकमेव जायते तत्र विषयितासम्बन्धेन विषयविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वं कल्प्यते इति तत्राऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेश इति प्राहुः ।

अथ घटो गगनाभाववदभाववत्कालीनगगनवानित्यादौ गगनाभाववदभाववत्कालीनगगनाभाववद्घटरूपबाधेऽव्याप्तिः, तादृशबाधज्ञानस्य शुद्धगगनवत्ताबुद्धिं प्रति अभाववान् गगनाभाववान् अभाववांश्च घट इत्याकारकनिश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकताया आवश्यकत्वेन तत एवोपपत्तौ गगनाभाववदभाववत्कालीनगगनवत्ताबुद्धिं प्रति तादृशगगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वान्तरे मानाभावेनाऽभाववान् गगनाभाववानिति निश्चयविशिष्टाऽभाववांश्च घट इति निश्चयत्वस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्तितया गगनाभाववदभाववत्कालीनघटत्वस्य तादृशविशिष्टद्वयविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वाभावात् ।

यद्यपि अत्र ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वान्तरमावश्यकम् , तथाहि—यदा घटे

---

विषयितानिरूपितनिरूपकतावच्छेदकत्वोभयसम्बन्धेन । रूपे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । द्वितीयसम्बन्धघटकाऽभावप्रतियोगितावच्छेदकसम्बन्धश्च स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताविशिष्टकिञ्चिद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपिताऽधिकरणतावत्त्वरूपः । तादृशनिरूपकतायाः स्ववृत्तित्वं च स्वविशिष्टनिश्चयीयविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकत्वसम्बन्धेन । निश्चये स्ववै० स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिताशून्यत्व-स्वविशिष्टनिश्चयसामानाधिकरण्यैतत्त्रितयसम्बन्धेन । निश्चये स्ववै० स्वनिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिताशून्यत्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्वोभयसम्बन्धेन । निश्चयद्वये रूपवत्ता च स्वावच्छिन्नविषयितावत्त्व—स्वावच्छिन्नविषयित्वाधिकरणवृत्तिकिञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविषयितानिरूपितकिञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिता नास्तीति प्रतीतिसिद्धाभावप्रतियोगिविषयिताशून्यत्वोभयसम्बन्धेनेति ।

वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे तु स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताविशिष्टकिञ्चिद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतानिष्ठप्रकारतानिरूपितविशेष्यतायाः यः प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धेनाऽभावस्तद्वत्प्रतीतिविषयितानिरूपकतावच्छेदकतावत्त्वं द्वितीयसम्बन्धः ।

विशेषरूपेण स्वरूपादीनां संसर्गत्वानङ्गीकारे तु प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टरूपवत्त्वं लक्षणम् । वैशिष्ट्यघटकप्रथमसम्बन्धः प्रागुक्त एव । द्वितीयसम्बन्धश्च स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताविशिष्टकिञ्चिद्रूपावच्छिन्नविषयितात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वरूपः । अभावे प्रतिबन्धकतावृत्तित्वं च स्वप्रतियोगिताविशिष्टनिश्चयीयविषयित्वावच्छिन्नत्वसम्बन्धेन । निश्चये प्रतियोगितावैशिष्ट्यादिकं निरूपकतावैशिष्ट्यवदिति ।

**नचैवं तादृशविशिष्टद्वयघटितोक्तसत्प्रतिपक्षेऽव्याप्तिस्तस्य प्रतिहेतुव्यापकताविशिष्टसाध्याभाव-प्रतिहेतुविशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादिति वाच्यम् । सत्प्रतिपक्षघटकतादृशविशिष्टद्वयविषयताभिन्ननिरुक्तविशिष्टद्वयविषयताशून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितत्वार्थत्वात् ।**

---

तादृशगगनाभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानं बाधनिश्चयश्च वर्तेते तदा विशिष्टगगनवत्ताबुद्धिर्भवति, शुद्धगगनवत्ताबुद्धिस्तु न भवति तादृशाऽव्याप्यवृत्तित्वज्ञानस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामनुत्तेजकत्वात्, अपि तु अभाववति गगनाभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानस्यैवोत्तेजकत्वात् । तथापि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटेऽव्याप्तिरिति चेन्न ।

यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति प्रतिबध्यताविशिष्टान्यतादृशविशिष्टद्वयविषयिताशून्यत्वस्य विवक्षणीयत्वात् । प्रतिबध्यतावै० स्वावच्छेदकत्व—स्वनिरूपितप्रतिबन्धकतानवच्छेदकविषयिताशून्यज्ञानवृत्तितादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन । तथा च तादृशघटो गगनवानिति बुद्धिं प्रति तादृशघटो गगनाभाववानितिनिश्चयस्य प्रतिबन्धकत्वेन प्रतिबध्यत्वेन च तदीयविषयितायास्तदुभयाऽवच्छेदकत्वान्नाव्याप्तिः ।

**एवं**—विशिष्टद्वयाऽघटितत्वनिवेशे । **तादृशविशिष्टद्वयघटितेति** । प्रतिहेतुव्यापकताविशिष्टसाध्याभावप्रतिहेतुविशिष्टपक्षात्मकविशिष्टद्वयघटितेत्यर्थः । **उक्तसत्प्रतिपक्षे**—प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षे इत्यर्थः । **तस्य**—उक्तसत्प्रतिपक्षस्य । तथा च हेतुव्यापकः साध्याभाव इति निश्चयविशिष्टहेतुमान्पक्ष इति निश्चयत्वमनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयत्वस्योक्तसत्प्रतिपक्षे विरहादव्याप्तिरिति भावः । **तादृशविशिष्टद्वयेति** । प्रतिहेतुव्यापकताविशिष्टसाध्याभाव—प्रतिहेतुविशिष्टपक्षात्मकविशिष्टद्वयेत्यर्थः । **विशिष्टद्वयघटितत्वार्थत्वादिति** । तथाच यद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति सत्प्रतिपक्षघटकतद्द्वयविषयिताभिन्ना या तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिता तच्छून्यप्रतीतिविषयितानिरूपकतावच्छेदकत्वं यद्रूपे विवक्षणीयमिति भावः ।

अत्र प्रतिहेतुव्यापकताविशिष्टसाध्याभावत्वावच्छिन्नविषयिताभिन्नत्वस्य प्रतिहेतुमत्पक्षविषयिताभिन्नत्वस्य च विशिष्टद्वयविषयितायां प्रवेशे ह्रदो वन्हिमान् जलादित्यत्र वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः, जलव्यापकताविशिष्टवन्ह्यभावत्वावच्छिन्नविषयितायां जलवद्ह्रदत्वावच्छिन्नविषयितायां च तादृशविशिष्टद्वयविषयिताभिन्नत्वविरहात् । तादृशविशिष्टद्वयविषयितापदेनोक्तविशिष्टद्वयविषयिताया अग्राह्यत्वादत उक्तं **सत्प्रतिपक्षघटकेति** ।

न च सत्प्रतिपक्षघटकत्वं यदि सत्प्रतिपक्षविषयताव्यापकविषयतावत्त्वं तच्च तादृशविशिष्टद्वयविशेषणम्, तदा जलव्यापकवन्ह्यभावकालीनजलवद्ह्रदेऽतिव्याप्तिः, जलव्यापकव-

न्ह्यभाव-जलवद्ह्रदात्मकविशिष्टद्वयस्य सत्प्रतिपक्षविषयताव्यापकविषयतावत्त्वेन तादृशविशिष्टद्वयविषयिताभिन्नविषयिताशून्यप्रतीतिविषयत्वस्य तत्र सत्त्वादिति वाच्यम् । तादृशातिव्याप्तेर्ग्रन्थकृतैव वक्ष्यमाणत्वात् । न च तथापि वन्ह्यभावो वह्निमान् जलादित्यत्र वन्ह्यभाववज्जलव्यापकतावद्वृत्तिजलव्यापकतावद्वन्ह्यभावेऽतिव्याप्तिः, वन्ह्यभावस्य सत्प्रतिपक्षघटकतया तद्विषयिताभिन्नत्वस्योक्तविशिष्टद्वयविषयितायामसत्त्वादिति वाच्यम् । सत्प्रतिपक्षघटकत्वं विशिष्टद्वये न निवेश्यम्, किन्तु विशिष्टविषयितायामेव, एवं च नोक्तदोष इति ।

अथ विषयितायां सत्प्रतिपक्षघटकत्वं यदि विरोध्यनुमितिजनकतावच्छेदकत्वरूपं तदा "यत्र सत्प्रतिपक्षाऽप्रसिद्धि"रिति ग्रन्थानुत्थितिप्रसङ्गात्, तत्रापि भ्रमात्मकविरोधिपरामर्शीयविषयितायामेवाऽनुमितिजनकतावच्छेदकत्वसम्भवात् । अत एव न निरूप्यनिरूपकभावापन्नसत्प्रतिपक्षविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वं तत् । प्रतिहेतुमत्पक्षविषयकत्व-प्रतिहेतुव्यापकसाध्याभावविषयकत्वयो"र्विषयित्वरूपयो"रुक्तभेदप्रतियोगितानवच्छेदकत्वेन सत्प्रतिपक्षाऽव्याप्तेश्च । नापि सत्प्रतिपक्षविषयिताव्यापकत्वम्, असम्भवात्, सत्प्रतिपक्षविषयितायास्तत्तद्विषयिताव्यभिचारित्वात् । यद्रूपावच्छिन्नविषयिता सत्प्रतिपक्षविषयिताव्यापिका तद्रूपावच्छिन्नत्वमित्युक्तौ तु प्रागुक्तातिव्याप्तिर्दुर्वारैवेति चेन्न ।

सत्प्रतिपक्षविषयिताशून्यज्ञानाऽवृत्तित्वमेव तत् । नचैवं सति वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः, सत्प्रतिपक्षकालीनवन्ह्यभाववज्जलवद्वृत्तिजलवान् ह्रद इति ज्ञाने सत्प्रतिपक्षविषयिताशून्यज्ञानावृत्तिविषयिताभिन्ननिरुक्तविशिष्टद्वयविषयिताशून्यत्वसत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चये निरुक्तविशिष्टद्वयविषयिताशून्यत्वस्य निवेशनीयतया उक्तनिश्चये निरुक्तविशिष्टद्वयविषयिताशून्यत्वसत्त्वेऽपि यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वविरहेणोक्तातिव्याप्त्यनवकाशात् ।

अथवा प्रतिहेतुव्यापकसाध्याभावत्वावच्छिन्नविषयताविशिष्टा या प्रतिहेतुमत्पक्षविषयता तदवच्छिन्नभेदप्रतियोगितावच्छेदकत्वमेव निवेश्यम् । वै० स्वनिरूपितसामानाधिकरण्यविषयतानिरूपितहेतुविषयतानिरूपितविषयत्वावच्छिन्नत्वसम्बन्धेन । तथाच नोक्तग्रन्थाऽसङ्गतिर्नाप्युक्तातिव्याप्तिरिति ।

मान्यास्तु सत्प्रतिपक्षघटकविषयिताभिन्नत्वं च यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं सत्प्रतिपक्षतावच्छेदकरूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयिताभिन्नत्वं विशिष्टद्वयविषयितायां(१) निवेशनीयम्,

(१) तादृशविशिष्टद्वयविषयितागतद्वित्वावच्छिन्ने सत्प्रतिपक्षघटकदलद्वयविषयितागतद्वित्वावच्छिन्नभेदो निवेश्यः, तथाच तादृशविशिष्टद्वयविषयितागतद्वित्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकसत्प्रतिपक्षविषयतागतद्वित्विका या विशिष्टद्वयविषयिता तच्छून्यप्रतीतिविषयत्वं पर्यवसितम् । एतेन निरुक्ततादृशविशिष्टद्वयविषयितयोः प्रत्येकं सत्प्रतिपक्षघटकदलद्वयविषयितानिष्ठद्वित्वावच्छिन्नभेदनिवेशे सत्प्रतिपक्षघटकदलद्वयविषयितयोः प्रत्येकं तादृशविषयितानिष्ठद्वित्वावच्छिन्नभेदसत्त्वात्सत्प्रतिपक्षाऽसंग्रहः । यदि च तादृशविषयितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदद्वयं निवेश्यते तदा जलवद्ह्रदस्य सत्प्रतिपक्षघटकतया तद्विषयितायां तादृशभेदद्वयाऽसत्त्वेन तादृशविषयिताकविशिष्टद्वयाघटितत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे सत्त्वात्तत्रातिव्याप्तिरिति निरस्तम् ।

**यत्र तादृशसत्प्रतिपक्षाप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव साध्यादिभेदेन लक्षणभेदात्। भ्रमात्मकज्ञानीयतादृशविषयतासाधारणरूपेणैव वा प्रतिहेतुव्यापकताविशिष्टसाध्याभावादिविषयतापेया।**

---

अत एव यत्र सत्प्रतिपक्षाऽप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेवेति ग्रन्थः सङ्गच्छते इति प्राहुः।

ननु पर्वतो धूमवान् वह्नेरित्यत्र प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षाऽप्रसिद्ध्या तत्स्थलीयव्यभिचारेऽव्याप्तिः। न च तत्रत्यदोषलक्षणे विशिष्टद्वयाऽघटितत्वं न देयमिति वाच्यम्। धूमाभाववद्वृत्तिर्वह्निरिति ज्ञानं प्रति अयोगोलकीयतेजस्त्ववान् धूमाभाववद्वृत्तिरितिनिश्चयविशिष्टस्य अयोगोलकीयतेजस्त्ववान्वह्निरिति निश्चयस्य प्रतिबन्धकतया धूमाभाववद्वृत्तित्ववदयोगोलकीयतेजस्त्ववद्वृत्तिअयोगोलकीयतेजस्त्ववद्वह्नित्वावच्छिन्नेऽतिव्याप्तिवारणाय तद्दावश्यकत्वादित्यत आह **यत्र सत्प्रतिपक्षाप्रसिद्धिरिति।** एकोक्त्यभिप्रायेणाह **भ्रमात्मकज्ञानीयविषयतासाधारणरूपेणेति।** प्रतिहेतुविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितभेदविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताऽवच्छेदकत्वविषयतानिरूपिताऽभावविषयतानिरूपितसाध्याभावत्वावच्छिन्नविषयतात्वेनेत्यर्थः। **प्रतिहेतुव्यापकताविशिष्टसाध्याभावादिविषयतेति।** आदिना प्रतिहेतुमत्पक्षविषयतापरिग्रहः। तथाच प्रतिहेतुविषयतानिरूपितपक्षविषयतात्वेन प्रतिहेतुमत्पक्षविषयता निवेश्येति भावः।

तथाच साध्याभावानुमितिजनकतावच्छेदकविषयतात्वेन भेदो विशिष्टद्वयविषयतायां निवेश्यः। अथवा प्रतिहेतुविषयतानिरूपितेत्यादिक्रमेण "निरूप्यनिरूपकभावापन्न"साध्याभावत्वावच्छिन्नविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितप्रतिहेतुविषयतानिरूपितपक्षविषयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकविषयताविशिष्टान्यत्वं वा विशिष्टद्वयविषयतायां निवेशनीयम्। वै० स्वतादात्म्य—स्वावच्छिन्नत्वान्यतरसम्बन्धेन। तेन नोक्तव्यभिचारेऽव्याप्तिर्न वा कूटादिनिवेशेन गौरवमिति ध्येयम्।

तथाच यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिबन्धकताऽनतिरिक्तवृत्ति सत्प्रतिपक्षघटकदलद्वयविषयिताभिन्नतादृशविशिष्टद्वयविषयिताशून्यत्वं निश्चयविशेषणम्।

नन्वेवमपि "प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूप"निरुक्तसत्प्रतिपक्षे कथं लक्षणसमन्वयः, तत्र विशिष्टान्तराऽघटितत्वस्याऽभावात्, तथाहि—तादृशसत्प्रतिपक्षज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रद इतिज्ञानस्येव जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवान् ह्रद इतिज्ञानस्याप्रतिबन्धकत्वात्। एवञ्च जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यज्जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवद्ह्रदत्वं तद्घटितत्वस्यैव तत्र सत्त्वात्। न च सत्प्रतिपक्षविषयताभिन्नत्वं विशिष्टान्तराविषयितायां विशेषणं देयम्, तथाच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविष-

**न च दर्शितविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियतेऽपि तु हेतुतावच्छेदकाघटितसाध्याभावाभाववदवृत्तिमत्पक्षात्मकविशिष्टस्यैव, व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टस्य उक्तरीत्या संग्रहे तद्धर्मव्यापकसाध्याभावकालीनतद्धर्मविशिष्टपक्षादिव्यावृत्तिरेव दुरुक्या स्यादि-**

---

यितानिरूपकतावच्छेदकं सत्प्रतिपक्षविषयताभिन्नतद्रूपावच्छिन्नविषयताशून्यत्वं निश्चयविशेषणं तथाच नोक्ताव्याप्तिरिति वाच्यम् । मेयत्वविशिष्टतादृशसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः, शुद्धसत्प्रतिपक्षस्य विशिष्टान्तरत्वेऽपि तद्विषयताभिन्नत्वाभावादिति चेन्न ! सत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यज्ञानीयसत्प्रतिपक्षविषयिताभेदस्य विशिष्टान्तरविषयितायां विवक्षितत्वात्, मेयत्वविशिष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयितायां सत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यशुद्धतज्ज्ञानीयतद्विषयिताभेदस्य सत्त्वान्नातिव्याप्तिः । यद्वा विशिष्टान्तरविषयितायां साध्याभावानुमितिजनकताविशिष्टान्यत्वं निवेशनीयम् । वै० स्वानवच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेनेति दिक् ।

शङ्कते **नचेति** । **दर्शितविशिष्टस्य**—प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य । **हेतुतावच्छेदकाऽघटितेति** । तद्घटितस्य तत्त्वे तु प्रतिहेतुः साध्याभावाभाववदवृत्तिः—प्रतिहेतुमांश्च पक्षः इति ज्ञानद्वयसाधारणज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतयैव तज्ज्ञानस्य कार्यानुत्पादप्रयोजकत्वनिर्वाहाद् ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावात्तदसङ्ग्रहो दुर्वार इति ध्येयम् ।

**साध्याभावाभाववदवृत्तिमत्पक्षात्मकविशिष्टस्यैवेति** । हेतुतावच्छेदकाऽप्रवेशेन सत्प्रतिपक्षस्यैकरूपतया लाघवादिति शेषः । अथ साध्याभावाभाववदवृत्तिमत्पक्षस्य सत्प्रतिपक्षत्वे गगनवान् प्रमेयत्वादित्यादौ साध्याभावाभावस्य गगनरूपतास्वीकारेऽपि तदधिकरणाऽप्रसिद्ध्या तादृशहेतौ सत्प्रतिपक्षित इति व्यवहारानुपपत्तिरिति चेन्न ।

तत्र पक्षवृत्तित्वाभाववद्गगनस्याऽपि बाधतया तद्व्याप्यवद्गगनस्यैव सत्प्रतिपक्षतया तमादायैवोक्तव्यवहारोपपत्तेः, एवं च साध्याभावाभाववदवृत्तिमत्पक्षस्येत्यत्र साध्याभावपदं साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताश्रयपरं—पक्षपदं बाधज्ञानविशेष्यपरमिति नाऽसङ्गतिरिति ध्येयम् ।

**उक्तरीत्येति** । सत्प्रतिपक्षघटकदलद्वयविषयिताभिन्नत्वनिवेशेन । **तद्धर्मव्यापकेति** । प्रतिहेतुव्यापकेत्यर्थः । **तद्धर्मविशिष्टेति** । प्रतिहेतुविशिष्टेत्यर्थः । **अशक्या स्यादिति** । तन्निश्चयस्यापि निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वादिति भावः । ननु विरोध्यनुमितिजनकाऽन्वयव्याप्तिवैशिष्ट्य-पक्षधर्मत्वोभयावगाहिज्ञानविषयस्यैव सत्प्रतिपक्षतास्वीकारेण विरोधस्याऽनुमित्यप्रतिबन्धकतापक्षे सामानाधिकरण्यघटितस्यैव व्याप्तित्वात् सामानाधिकरण्यघटितव्याप्तिविशिष्टहेतुमत्पक्षस्यैव सत्प्रतिपक्षत्वं, न तु कालीनत्वघटितस्य । न च विरोधस्यानुमितिविरोधितापक्षे लाघवेन हेतुव्यापकसाध्यकालीनत्वस्यैव व्याप्तितया तद्घटितस्याऽपि सत्प्रतिपक्षत्वं दुर्वारमिति वाच्यम् । मतभेदेनोभयोस्तथात्वे इष्टापत्तेरिति चेन्न ।

त्वाविशेषेण व्यापकताघटितविशिष्टमात्रस्यालक्ष्यताया एव युक्तत्वात्, तथा चोक्तप्रयासमपेक्ष्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमेवोचितमिति वाच्यम्। एवमपि प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्य मतभेदेनासाधारण्यविरोधरूपस्य विषयतायाः पक्षधर्मिकप्रकृतहेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवाऽवच्छेदकत्वात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवात्। दर्शितातिप्रसङ्गवारणाय च निरुक्तविशिष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात्।

---

सत्प्रतिपक्षज्ञाने विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकत्वस्य दीधितिकृताऽग्रे निराकरणीयत्वेन विरोधिविषयकनिश्चयत्वेनैव तद्वाच्यं, विरोधित्वं च तत्तदभावयोरिव तत्तदभावव्याप्ययोरपि अनुभवसिद्धं, तत्र व्यापकसामानाधिकरण्यरूपव्याप्तिघटितविशिष्टज्ञानस्य प्रतिबन्धकतायां न सामानाधिकरण्यादिविषयकत्वं तन्त्रं तदविषयकज्ञानस्यापि साध्याभावशिहेतुव्यापकत्वावगाहिनो हेतुमत्पक्षविषयकत्वावगाहिज्ञानकालीनस्य प्रतिबन्धकत्वात्। यद्विषयकत्वस्य हि प्रतिबन्धकताप्रयोजकत्वं तद्घटितविशिष्टस्यैव दोषत्वम्। प्रतिबन्धकत्वाप्रयोजकसामानाधिकरण्यघटितविशिष्टस्य यदि सत्प्रतिपक्षता स्यात्तदा कालीनत्वाद्यनन्तपदार्थघटितस्यापि तत्त्वं स्यात्, एवं चाऽसर्वज्ञस्य दुर्ज्ञेयः सत्प्रतिपक्षः स्यादित्याशयेनाह **अविशेषेणेति**। विनिगमनाविरहादित्यर्थः। **तथाचेति**। व्यापकताघटितविशिष्टमात्रस्याऽलक्ष्यत्वे चेत्यर्थः। **उक्तप्रयासमपेक्ष्येति**। विशिष्टद्वयाऽघटितत्वादिनिवेशमपेक्ष्येत्यर्थः। **उचितमिति**। एवं च वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिवारणाय प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्यावश्यकत्वे तेनैव पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणसंभवात्स्वरूपसम्बन्धरूपावच्छेदकत्वमेव कथं न विवक्षितमिति पूर्वपक्षिणोऽभिप्रायः। ह्रदो वन्हिमान् जलादित्यत्र वन्हिव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्ये मतभेदेन विरोधे वाऽव्याप्तिः, वन्हिव्यापकीभूताभावप्रतियोगिजलमितिनिश्चयस्य जलवान् ह्रद इति निश्चयविशिष्टत्वेनैव प्रतिबन्धकतया प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहात्तन्निवेशोऽपि न युज्यते इत्याह **एवमपीति**। ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेऽपीत्यर्थः। **ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशाऽसम्भवादिति**। तथाच स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः स्यादेवेति भावः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिं वारयति **दर्शितातिप्रसङ्गवारणायेति**।

अथ यद्रूपावच्छिन्नविषयितासामान्यं प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्तद्रूपवत्त्वमिति लक्षणे प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयित्वाऽनवच्छिन्नत्वोभयाभाव एव "ज्ञानवैशिष्ट्यानवच्छिन्नत्वपदेन" विवक्षणीयः, एवं च पर्वतो वन्हिमानित्यत्र पाषाणमयत्वावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टपाषाणमयत्वप्रकारकनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तस्यां ज्ञानवै-

शिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयित्वाऽनवच्छिन्नत्वोभयोः सत्त्वान्न तादृशप्रतिबन्धकतामादाय पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः। एवं जलावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टजलवद्ह्रदविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां निरुक्तोभयोः सत्त्वान्न तादृशप्रतिबन्धकतामादाय वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः। ह्रदो वह्निमानित्यत्र बाधनिश्चयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वविरहाद् बाधे लक्षणसमन्वयः। ह्रदधर्मिकजलप्रकारकनिश्चयविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायामसाधारण्यविषयित्वानवच्छिन्नत्वविरहेण तादृशोभयाभावसत्त्वात्तादृशप्रतिबन्धकतामादायाऽसाधारण्ये लक्षणसमन्वयः। अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशपक्षे तु असाधारण्ये लक्षणसमन्वयार्थं प्रकृताऽनुमितिप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्तानिश्चयकालीनत्वोभयाभावे यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वं निवेशनीयम्, तदप्यत्र विफलम्। न च ह्रदो वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभावादित्यत्र तादृशजलवद्ह्रदरूपासिद्धावव्याप्तिः, तादृशनिश्चयनिष्ठप्रतिबन्धकतायां पक्षे साध्यवत्ताबुद्धिप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नत्वसत्त्वेन ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहादिति वाच्यम्। यद्रूपावच्छिन्नविषयितासामान्ये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वाऽसाधारण्यविषयिताभिन्नत्वोभयाभावस्तद्रूपवत्त्वमित्यर्थात्। न च ह्रदत्वादिप्रकारतायाः प्रतिबन्धकतानवच्छेदकतया तस्याः वह्न्यभाववद्ह्रदज्ञाने सत्त्वेनाऽसम्भव इति वाच्यम्। प्रतिबन्धकतानवच्छेदकत्वमित्यनेन प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वस्य विवक्षणात्। वै० स्वतादात्म्य—स्वावच्छेद्यत्वान्यतरसम्बन्धेनेति चेन्न।

जलं वह्निमज्जलादित्यत्र प्रतियोगिजलेऽतिव्याप्तिः, तथाहि—प्रतियोगित्वावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टप्रतियोगित्वप्रकारकजलविशेष्यकनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तस्याः प्रतियोगित्वप्रकारतानिरूपितजलत्वावच्छिन्नविशेष्यतात्वेन वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविशेष्यताया अपि अवच्छेदकत्वात्तत्प्रतिबन्धकतायामसाधारण्यविषयकत्वानवच्छिन्नविरहेण ज्ञानवैशिष्ट्यानवच्छिन्नत्वाऽसाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभावसत्त्वात्प्रतिबन्धकतावच्छेदकत्वस्य प्रतियोगिजलत्वावच्छिन्नविषयितासामान्ये सत्त्वात्(१)।

---

(१) अथाऽसाधारण्यविषयतात्वेनासाधारण्यविषयकत्वानवच्छिन्नत्वज्ञानवैशिष्ट्यावच्छिन्नत्वैतदुभयाभाववत्त्वं प्रतिबन्धकतायां विवक्षणीयम्, प्रतियोगित्वप्रकारतानिरूपितजलविशेष्यताकनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तस्या अवच्छेदकत्वं नासाधारण्यविषयतात्वेनेति न तत्प्रतिबन्धकतामादाय तत्रातिव्याप्तिरिति चेत्।

अत्रोच्यते—असाधारण्यविषयतात्वं यदि वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नं तदा वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयतात्वस्य वह्नित्वेन गुञ्जापुञ्जावगाहिभ्रमात्मकवह्निव्यापकीभूताभावप्रतियोगिजलमिति ज्ञानीयविषयतायामवर्त्तमानतया तस्य प्रतिबन्धकतानुपपत्तिः। यदि च वह्नित्वावच्छिन्नविषयतानिरूपितव्यापकत्वावच्छिन्नविषयतानिरूपितप्रतियोगित्वत्वावच्छिन्नविषयतानिरूपितजलत्वावच्छिन्नविषयतात्वं प्रतिबन्धकतावच्छेदकतावच्छेदकम्, तथापि वह्न्यभाववद्वृत्तिजलमिति ज्ञाननिष्ठा या वह्न्यभाववद्वृत्तिजलत्वावच्छिन्नविषयता तादृशविषयताशालिनिश्चयविशिष्टह्रदधर्मिकजलप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय वह्न्यभाववद्वृत्तिजलेऽप्यसाधारण्यं गदाधरसम्मतं तस्याऽसङ्ग्रहापत्तिः। एवं व्यापकत्वस्यापि अत्यन्ताभावान्योन्याभावभेदेन भिन्नतया एकरूपेण प्रवक्तुमशक्यत्वात्, एवं प्रतियोग्यसामाना-

न च पक्षवृत्तित्वविशेषितं प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यादिरूपं वाच्यम्, पक्षवृत्तित्वाघटितविशिष्टविषयताया अप्रतिबन्धकज्ञानसाधारणतया प्रतिबन्धकतानवच्छेदकत्वात् तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतु–साध्यव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतहेत्वादिरूपनिरुक्तविशिष्टद्वयघटिततया निरुक्तविशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवतीति वाच्यम्। पक्षवृत्तित्वाघटितविशिष्टस्यैवासाधारण्यादिरूपताया "विरोधोपि फलतः प्रतिरोध एव तद-

---

ननु प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वं नासाधारण्यं, तद्विषयिताया: प्रतिबन्धकताऽतिरिक्तवृत्तित्वेन तत्र लक्षणगमनाऽसम्भवात्, किन्तु पक्षवृत्तित्वविशिष्टप्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवाऽसाधारण्यं वाच्यं, तथा च विशिष्टद्वयाऽघटितत्वनिवेशोऽपि न सम्भवतीत्याशङ्कते **नचेति। अप्रतिबन्धकज्ञानसाधारणतयेति।** जलवान् ह्रद इति ज्ञानाऽसमानकालीनस्य वह्निव्यापकीभूताभावप्रतियोगिजलमिति निश्चयस्य ह्रदो वह्निमानित्यनुमित्यप्रतिबन्धकतया तादृशविषयताया:तत्रापि वृत्तितयेति यावत्। **पक्षवृत्तित्वाऽघटितविशिष्टस्यैवेति।** गोपक्षक–गोत्वसाध्यकाऽश्वत्वहेतुकस्थले पक्षवृत्तित्वघटितस्य तस्याऽसम्भवादिति भावः। **विरोधोऽपीति।** व्यभिचारत्वं यदि व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपं तदा साध्याऽसमानाधिकरणहेतुरूपविरोधेऽतिव्याप्तिरित्याशङ्कानिरासार्थं विरोधोपीति सव्यभिचारग्रन्थः। **प्रतिरोध एवेति।** सत्प्रतिपक्ष एवेत्यर्थः। तथाच विरोधः फलतः प्रतिरोध एव सत्प्रतिपक्षतुल्य एव, यथा सत्प्रतिपक्षस्य साध्याभावानुमापकविषया साध्यवत्ताग्रहविरोधित्वेन दूषकत्वं तथा विरोधस्यापीति। तथा

---

धिकरण्यघटितस्य प्रतियोगिसामानाधिकरण्यघटितस्य च भिन्नतयाऽसाधारण्यं नानाविधमित्येकाऽसाधारण्ये लक्षणसमन्वयकालेऽन्याऽसाधारण्येऽव्याप्तिः। अतः सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यविरोधि तादृशविषयकत्वानवच्छिन्नत्वमेव असाधारण्यविषयकत्वानवच्छिन्नत्वमित्यस्यार्थो वक्तव्यः। तथाच ह्रदो जलवान् इत्याकारकसधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकनिश्चयः स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककवन्ह्यनुमितिसामान्यविरोधी, एवं घटो जलवान् इति निश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयकनिश्चयोऽपि तत्कालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककवन्ह्यनुमितिसामान्यविरोधीति वह्निव्यापकीभूताभावप्रतियोगिजले, एव वन्ह्यभावान्वयजलादिरूपासाधारण्ये च लक्षणसमन्वयः। एवं च यद्रूपपदेनान्यथारणीयतया जलं वह्निमज्जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजल इव प्रतियोगिजले लक्षणगमनं सम्भवतीति तत्रातिव्याप्तिरत एतादृशोपेक्षा कृता॥

केचित्तु वृक्षः कपिसंयोगवानित्यत्र कपिसंयोगाभाववद्वृक्षो न लक्ष्यः, निरवच्छिन्नस्वरूपसम्बन्धेन कपिसंयोगाभावप्रकारकज्ञानविषयस्यैव दोषत्वात्। तथाचाऽव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वपक्षे स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे कपिसंयोगाभाववद्वृक्षविषयितासामान्यस्यापि प्रतिबन्धकतावच्छेदकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वेन कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशः। तथा चाऽव्याप्यवृत्तित्वभ्रमानास्कन्दितयद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वमित्युक्तमिति प्राहुः।

विशेषणीयश्च तादृशविशिष्टान्तराघटितत्वेन ।

---

न्यत्वेन वा विरोधि विशेषणीयमिति'' पंक्तिव्याख्यानावसरे सम्पादनीयत्वादिति निष्कर्षः ।

नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि व्यभिचारादिघटितपदार्थान्तरेतिव्याप्तिस्तद्विषयकत्वस्यापि प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह विशेषणीयश्चेति । तादृशलक्षणमिति शेषः । तादृशविशिष्टेति । अनुमितिप्रतिबन्धकतायां यद्रूपावच्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेत्यर्थः । व्यभिचारत्वाद्यवच्छिन्नस्य व्यभिचारत्वादिरूपतादृशरूपावच्छिन्ने घटितत्वादसम्भव इत्यतोऽन्तरेति । स्वावच्छिन्नाविषयकप्रतीतिविषयता-

---

च साध्यव्यापकीभूताभावप्रतियोगिहेतोरेव विरोधरूपता, साध्यासमानाधिकरणहेतोश्चाऽसाधारण्यरूपतेति भावः ।

विरोधस्य साध्यासमानाधिकरणहेतुरूपत्वे त्वाह तदन्यत्वेन वेति । साध्यासमानाधिकरणविषयताभिन्नत्वेन सव्यभिचारलक्षणघटकविरोधिविषयता विशेषणीयेत्यर्थः । सम्पादनीयत्वादिति । वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्यस्यानुमित्यविरोधित्वेन हेत्वाभासत्वानुपपत्तिशङ्कानिरासार्थं यद्रूपावच्छिन्नविषयिताशालिनिश्चये प्रकृताऽनुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावस्तद्रूपवत्त्वं हेत्वाभासत्वमिति वक्ष्यमाणत्वादिति भावः ।

व्यभिचारादिघटितपदार्थान्तरे—मेयत्वविशिष्टव्यभिचारे—व्यभिचारविशिष्टमेयत्वे वा । अतिव्याप्तौ हेतुमाह तद्विषयकत्वस्यापीति । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताया अपीत्यर्थः । अपिना व्यभिचारत्वावच्छिन्नविषयितायाः समुच्चयो दृष्टान्तार्थः । यथा व्यभिचारत्वावच्छिन्नविषयिता प्रतिबन्धकताऽनतिरिक्तवृत्तिः तथा मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितापीति भावः । तादृशेति । यद्रूपावच्छिन्नविषयित्वं प्रकृताऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वरूपलक्षणघटकयद्रूपमित्यर्थः । तद्रूपावच्छिन्नेत्यर्थ इति । अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकावच्छिन्नेति यावत् । तादृशरूपावच्छिन्नेति । अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकेत्यर्थः । घटितत्वादिति । स्वस्यापिस्वघटितत्वादिति यावत् । स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकमिति । स्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकावच्छिन्नेत्यर्थं इति यावत् । स्वपदं लक्ष्यतावच्छेदकीभूतव्यभिचारत्वादिपरम्, एवं च व्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयितानिरूपकतावच्छेदकावच्छिन्नत्वस्य व्यभिचारे विरहेण नोक्ताऽसम्भवः । ननु अन्यो विशिष्टो विशिष्टान्तरमिति व्युत्पत्त्या अन्तरपदार्थो भेदवानेव, तथा च स्वभिन्नो यो विशिष्टः ''अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकावच्छिन्नः'' तदघटितत्वमिति समुदितार्थः पर्यवसन्नः, स्वपदं चाऽत्र लक्ष्यतावच्छेदकाव-

वच्छेदकावच्छिन्नार्थकम्, अतः शुद्धव्यभिचारादेमेयत्वविशिष्टव्यभिचारा-द्यभिन्नत्वेपि न क्षतिः। तद्घटितत्वं तद्विषयकप्रतीतिविषयत्वम्, एवञ्चा-नुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं तादृशं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रती-तिविषयतावच्छेदकं यत् तदवच्छिन्नत्वं समुदितार्थः। यद्रूपावच्छिन्ने

च्छिन्नपरम्, एवं च व्यभिचारत्वावच्छिन्नभिन्नत्वस्य व्यभिचारे विरहात्पारिभाषिकार्थो निर्यु-क्तिक इत्यत आह। अत इति। स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नत्व-रूपपारिभाषिकार्थकरणादित्यर्थः। अभिन्नत्वेऽपीति। मेयत्वविशिष्टव्यभिचारभिन्नत्वस्य शुद्धव्यभिचारेऽसत्त्वेऽपीत्यर्थः। न क्षतिः—न मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिः। मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नत्वस्य तत्र सत्त्वा-दिति भावः। निष्कृष्टार्थमाह एवं चेति। तादृशमिति। अनुमितिप्रतिबन्धकताऽन-तिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकमित्यर्थः। तच्च स्वावच्छिन्नाविषयकप्रतीतिविषयता-वच्छेदके "विशिष्टान्तरतावच्छेदके" विशेषणमित्याह यदित्यादि। न च प्रकृतानुमिति-प्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकार्थकं तादृशपदं किमर्थं, स्वावच्छि-न्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तद्घटितत्वस्यैव सम्यक्त्वादिति वाच्यम्। व्यभिचारत्वा-वच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत्साध्यतावच्छेदकं अभावत्वं वा तद्घटितत्वस्य व्यभिचारत्वेऽसत्त्वादसम्भवापत्तेः। तत्रापि अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्ध-रूपाऽवच्छेदकतावद्विषयितानिवेशे तद्दोषतादवस्थ्यम्, धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नावि-षयकप्रतीतिविषयतावच्छेदकं यद् धूमाभावत्वं तदवच्छिन्नविषयितायाः "धूमाभाववद्वृत्तिर्व-ह्निरिति व्यभिचारज्ञानीयायाः" अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदक-तावत्तया तादृशविषयितानिरूपकतावच्छेदकधूमाभावत्वावच्छिन्नघटितत्वाद् अतोऽनतिरि-क्तवृत्तित्वरूपावच्छेदकत्वनिवेशः। तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छे-दकं अथ च प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं (१)यद्यद्रूपं

---

(१) मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयकप्रतीतिविषयितानिरूपकतावच्छेदकं अथ च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्बाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे सत्त्वान्मे-यत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय यद्यदिति वीप्सानुधावनम्।

वन्ह्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयकप्रतीतिविषयितानिरूपकतावच्छेदकं अथ च प्रकृतानु-मितिप्रतिबन्धकताऽनतिरिक्तविषयितानिरूपकतावच्छेदक यद् ह्रदवृत्तिवन्ह्यभावत्वं तस्य शुद्धवन्ह्यभावत्वाऽ-नतिरिक्ततया तदवच्छिन्नाविषयकप्रतीतिविषयितानिरूपतावच्छेदकत्वस्य वन्ह्यभाववद्ध्रदत्वे विरहेणाऽसम्भवः स्यात्, अतः स्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितावच्छेदकं अथ प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्यद्रूप तादृशरूपवृत्तिविषयिताशून्यप्रतीतिविषयितानिरूपकताव-च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं लक्ष्यतावच्छेदकगतसमुदायत्वे निवेश्यम्। न च विशेष्यदलं किमर्थं, तादृशसमुदायत्वविशिष्टवत्त्वस्यैव सम्यक्त्वादिति वाच्यम्। उदासीनघटादावतिव्या-प्तिवारणायैव तद्दलसार्थक्यादिति ध्येयम्।

**लक्षणं सङ्गमनीयं तदेव स्वपदार्थः । भवति हि व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूता ये बाधत्वादयस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसङ्गतिः। मेयत्वविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावान्न तदवच्छिन्नेऽतिव्याप्तिः ।**

---

तत्तद्रूपावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकं यत्त्वं तत्त्वं यद्रूपे विशेषणीयमिति भावः । स्वपदं लक्ष्यतावच्छेदकपरम्, तथाच व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकं यद्बाधत्वं तत्प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकमपि तदवच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकत्वस्य व्यभिचारत्वे सत्त्वाद् व्यभिचारे लक्षणसमन्वयः, तदेवाह **भवति हीत्यादिना । तदवच्छिन्नेति ।** बाधत्वावच्छिन्नेत्यर्थः। **तदवच्छिन्ने**—व्यभिचारत्वावच्छिन्ने । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिं वारयति **मेयत्वविशिष्टेति । स्वावच्छिन्नेति ।** मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नेत्यर्थः । **तदवच्छिन्ने**—मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ने ।

तथाच मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकं यद्व्यभिचारत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तविषयितानिरूपकतावच्छेदकमपि भवति तदवच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे विरहान्नातिव्याप्तिरिति भावः ।

यथाश्रुतविशिष्टान्तराऽघटितत्वस्याऽनुगमस्तु प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपविशिष्टरूपवत्त्वम् । प्रतिबन्धकतावृत्तित्वं च रूपे स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन, निश्चये स्ववै० स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन, रूपे रूपवै० स्वतादात्म्य—स्वविशिष्टरूपवदन्यत्वोभयसम्बन्धेन, रूपे स्ववै० स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व—स्वकालीनप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तित्वोभयसम्बन्धेन, रूपे प्रतिबन्धकतावृत्तित्वं च स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन, निश्चये स्ववै० स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन, रूपवत्ता च स्वावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वसम्बन्धेनेति(१) ।

---

(१) तथाच प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावीशिष्टरूपविशिष्टरूपवत्त्वं पर्यवसितम्, रूपे प्रतिबन्धकतावै० स्ववृत्तित्वं किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्या किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तदीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतावैशिष्ट्यसम्बन्धेन । रूपे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन । रूपे रूपवै० स्वताद्-

इदं तु बोध्यम् । अत्र स्वानवच्छिन्नप्रकारतावच्छेदकं अथ च प्रकृतानुमितिप्रतिबन्ध-
कताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्यद्रूपं तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य
विशिष्टान्तराऽघटितत्वार्थत्वेऽपि मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, मेयत्वविशिष्ट-
व्यभिचारत्वानवच्छिन्नशुद्धव्यभिचारवानितिज्ञानीयप्रकारतावच्छेदकव्यभिचारत्वानवच्छिन्न-
प्रकारतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वात् । तथापि व्यभिचारकालीनघटा-
दावतिव्याप्तिः, तादृशघटत्वावच्छिन्नप्रकारत्वस्य व्यभिचारत्वानवच्छिन्नत्वात् । स्वानवच्छि-
न्नप्रकारतावच्छेदकं यत्तादृशरूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षणे तद्वा-
रणेऽपि बाधाद्यसङ्ग्रहः, ह्रदो वन्ह्यभाववानिति ज्ञाने तुल्यवित्तिवेद्यतया ह्रदवृत्तिवन्ह्यभाव
त्वावच्छिन्नस्य विषयतया वन्ह्यभाववद्ह्रदत्वानवच्छिन्नप्रकारतावच्छेदकह्रदवृत्तिवन्ह्यभाव-
त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वेऽभावादतः स्वावच्छिन्ना-
विषयकप्रतीतिविषयतावच्छेदकत्वमेव विशिष्टान्तरतावच्छेदकत्वं बोध्यम् ।

वस्तुतस्तु ज्ञानीयप्रकारतावच्छेदकता-इच्छीयप्रकारतावच्छेदकतादिसाधारणैकावच्छेद-
कतात्वानुपगमे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तादृशविशिष्टान्तरतावच्छेदकं यद् व्य-
भिचारत्वं तन्निष्ठा या व्यभिचारवानितिज्ञानीयप्रकारतावच्छेदकता तदनिरूपिका या मेयत्व-
विशिष्टव्यभिचारत्वावच्छिन्ना इच्छीयप्रकारता तदवच्छेदकत्वस्य तत्र सत्त्वात् , अतो वि-
शिष्टान्तरतावच्छेदकं यद्रूपं तन्निष्ठा या ज्ञानीयविषयतावच्छेदकता तदनिरूपिका या ज्ञानी-
यविषयता तदवच्छेदकतालाभायैव तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशः ।

यादृशस्थले घट इति ज्ञानं नियमतो बाधविषयकमेव भवति बाधज्ञानं च स्वतन्त्रमपि
भवति तादृशस्थले घटेऽतिव्याप्तिः(१), घटत्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य प्रकृता-

---

त्वम्—स्वकालीनप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिर्योऽभावः किञ्चिद्रूपावच्छिन्नवि-
षयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तदीयाऽवच्छेदकत्वनिष्ठप्रति-
योगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानि-
रूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदक-
ताविशिष्टस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्ववद्धर्मावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वोभयस-
म्बन्धेनेति ।

( १ ) एतेन स्वानवच्छिन्नप्रकारतावच्छेदकं यत्तादृशरूपं तदनवच्छिन्नप्रकारतावच्छेदकत्वमेव निवेश-
नीयम् । व्यभिचारकालीनघटेऽतिव्याप्तिस्तु व्यभिचारकालीनत्वरूपविशिष्टान्तरतावच्छेदकमादाय तदनव-
च्छिन्नप्रकारतावच्छेदकत्वस्य व्यभिचारकालीनघटत्वे विरहाद्वारणीया । यद्वा साक्षात्परम्परासाधारणाऽवच्छे-
दकत्वमङ्गीकृत्यैवेदं लक्षणम्, अन्यथा ह्रदो वन्हिमानित्यत्र बाधादावसम्भवः, तादृशबाधज्ञानीयवन्ह्यभावव-
द्ह्रदविषयितानिरूपितसाक्षादवच्छेदकताया वन्ह्यभाव-ह्रदत्वमात्रपर्याप्ततया तत्तत्समुदायत्वावच्छिन्नानुयो-
गिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितायाः ह्रदोऽभाववानितिज्ञानेऽपि सत्त्वेन तत्र प्रति-
बन्धकताविरहात्, साक्षात्परम्परासाधारणावच्छेदकतास्वीकारे तु तादृशबाधविषयितानिरूपकतावच्छेद-
कतायां वन्हिवन्हित्वाद्यन्तर्भावेणैव पर्याप्ततया तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनि-
रूपकताकविषयितायाः ह्रदोऽभाववानितिज्ञानेऽसत्त्वेन तत्सङ्ग्रहः । एवं चोक्तविवक्षायामपि न व्यभिचारका-
लीनघटेऽतिव्याप्तिः तादृशघटत्वावच्छिन्नप्रकारतायाः व्यभिचारत्वावच्छिन्नत्वादित्यपि निरस्तम् । प्रतियोगि-
त्वाविषयित्वसाधारणैकावच्छेद्यत्वविरहेण मेयत्वविशिष्टव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकशुद्धव्यभिचार-

**मेयत्वविशिष्टव्यभिचारादेरपि मेयत्वादिना व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयत्वात्तद्दोषः स्यादतस्तादृशरूपाश्रयधर्म्मिणं तदवच्छिन्नाविषयकप्रतीतिविषयत्वेनाविशिष्य स्वमेव तादृशविषयतावच्छेदकत्वेन विशेषितम्। मेयत्वाविशिष्टव्यभिचारत्वाद्याश्रयाविषयकत्वस्य व्यभि-**

---

नुमितिप्रतिबन्धकतायां सत्त्वात्, अदत्वानवच्छिन्नप्रकारतावच्छेदकं यद्बाधत्वं तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य घटत्वे सत्त्वाच्च, अतस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशः । तथा च तादृशविशिष्टान्तरतावच्छेदकं यद्बाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य घटत्वे विरहान्नातिव्याप्तिः । एवं स्वानवच्छिन्नप्रकारतावच्छेदकं यत्तादृशरूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षणे यादृशस्थले बाधज्ञानं सत्प्रतिपक्षज्ञानं च समूहालम्बनात्मकमेव भवति तत्र बाधेऽव्याप्तिः, बाधत्वानवच्छिन्नप्रकारतावच्छेदकं यत्सत्प्रतिपक्षत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वेऽसत्त्वात्, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशः । तथा च बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य सत्प्रतिपक्षत्वे विरहेण तस्य विशिष्टान्तरतावच्छेदकत्वाभावान्नोक्ताव्याप्तिः । जगदीशतर्कालङ्कारास्तु तादृशाङ्कुरविशेषमनभ्युपगम्य तथैव निवेशयामासुरिति मान्याः ।

ननु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथच प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयद्रूपावच्छिन्नविषयिताव्यापिकैत्यावश्य लक्षणमस्तु, किं तादृशप्रतीतिविषयतावच्छेदकत्वनिवेशेनेत्यत आह **मेयत्वविशिष्टव्यभिचारादेरपीति** । **मेयत्वादिनेति** । मेयत्वप्रकारिका व्यभिचारत्वाद्यवच्छिन्नाऽविषयकप्रतीतिः प्रमेयमित्याकारिका तद्विषयत्वादित्यर्थः । **तद्दोषः स्यादिति** । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः स्यादित्यर्थः । विशिष्टान्तरतावच्छेदकं यद्रूपं तदवच्छिन्नाविषयकप्रतीतिविषयत्वस्य यद्रूपावच्छिन्ने विशेषणे मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यच्छुद्धव्यभिचारत्वं तदवच्छिन्नाऽविषयिका या प्रतीतिः प्रमेयमित्याकारिका तद्विषयत्वस्य प्रमेयमात्रे सत्त्वेन मेयत्वविशिष्टव्यभिचारेऽपि सत्त्वात् । अतः—अतिव्याप्तिवारणायेति यावत् । **तादृशरूपाश्रयधर्म्मिणं** यद्रूपावच्छिन्नमित्यर्थः । **स्वमेव**—यद्रूपमेव । **तादृशेति** । तदवच्छिन्नाविषयकप्रतीतीत्यर्थः । **विशेषितमिति** । तथाच मेयत्वविशिष्टव्यभिचारत्वे तादृशविशिष्टान्तरतावच्छेदकं यद्-

---

स्वनिरूपितप्रतियोगित्वनिष्ठावच्छेद्यत्वाभाववत्प्रकारतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे सत्त्वेनाऽतिव्याप्त्यापत्तिरतो विषयितानिष्ठावच्छेद्यत्वाभाव एव निवेशनीयः । एवं चाऽसम्भवः, वह्न्यभाववद्ह्रदत्वादिनिरूपितप्रतियोगितानिष्ठाऽवच्छेद्यत्वाभाववत्प्रकारतावच्छेदकतावत्तद्धर्मानवच्छिन्नप्रकारतावच्छेदकत्वस्य तत्राऽभावादिति प्रथममपि विषयतानिष्ठावच्छेद्यत्वाभाव एव निवेशनीयः, तत्रापि उक्तरीत्या ज्ञानीयविषयता निवेश्येति सूचनाय चोक्तविवक्षेति ध्येयम् ।

चारत्वाद्यवच्छिन्नाविषयकप्रतीतौ दुर्घटत्वात् दोषः स्यादतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेशः ।

व्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाविरहेण धूमपदेन धारणाऽसम्भवान्नातिव्याप्तिः(१) ।

स्वाश्रयाऽविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेशस्य कण्ठमाह मेयत्ववि-शिष्टेति । दुर्घटत्वादिति । तथाच विशिष्टान्तरतावच्छेदकं न व्यभिचारत्वम्, किन्तु विशिष्टान्तरतावच्छेदकं यत् ( बाधत्वादि ) तद्घटितत्वस्य मेयत्वविशिष्टव्यभिचारत्वे सत्त्वादतिव्याप्तितादवस्थ्यमिति भावः ।

ननु कथमत्र दुर्घटत्वम्, मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वेन घटावगाहिप्रतीतौ सुघटत्वात्, कथं वा तद्दोषतादवस्थ्यम्? तथाहि—मेयत्वविशिष्टव्यभि-चारत्वाश्रयाविषयकप्रतीतिः व्यभिचारत्वेन घटावगाहिप्रतीतिस्तादृशप्रतीतिविषयतावच्छे-दकं व्यभिचारत्वमपि तद्घटितत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वादिति चेन्न ।

एवं सति वन्ह्यभाववद्ध्रदत्वाश्रयाविषयकप्रतीतिर्वन्ह्यभाववद्ध्रदत्वेन घटावगाहिप्रतीति-स्तादृशप्रतीतिविषयतावच्छेदकं यद् वन्ह्यभाववद्ध्रदत्वं तद्घटितत्वस्य बाधेऽसत्त्वादसम्भवः, अतः स्वाश्रयाविषयकप्रतीतिविषयवृत्ति यत् तादृशरूपं तदवच्छिन्नाविषयकप्रतीतिविषयताव-च्छेदकत्वमेव वक्तव्यम्, नतु स्वाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वमपि, प्रमेयत्वेन व्यभिचारावगाहिप्रमेयमित्याकारकप्रतीतिविषयवृत्तित्वस्य व्यभिचारत्वे सत्त्वेऽपि तादृशप्रती-तौ व्यभिचारत्वाश्रयाविषयकत्वस्य विरहेणाऽसम्भवविरहात् । तथाच बाधत्वस्य बाधत्वेन घटविषयकप्रतीतिविषयतावच्छेदकत्वेऽपि तादृशप्रतीतिविषयवृत्तित्वाभावान्नासम्भवः । एवं च प्रकृते मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकप्रतीतिविषयवृत्तितादृशप्रतीतिविषयतावच्छे-दकं व्यभिचारत्वं न सम्भवतीति दुर्घटत्वं बोध्यम् ।

वस्तुतस्तु सामानाधिकरण्यसम्बन्धेन साध्याभाववद्वृत्तित्वविशिष्टहेतुतावच्छेदकस्यैव व्यभिचारपदार्थतया व्यभिचारत्वेन घटावगाहिप्रतीतावपि स्वाश्रयाविषयकत्वं नास्ति सामा-नाधिकरण्यघटकतया तादृशप्रतीतौ स्वाश्रयभानावश्यम्भावादुक्तमेव सम्यगिति ध्येयम् ।

---

( १ ) ननु ग्रन्थकृता चरमोपात्तस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यावृत्तिः प्राग-भिहिता न तु स्वावच्छिन्नाविषयकेत्यस्य इत्यसङ्गतम्, प्रथमोपस्थितस्यैव प्रथमं व्यावृत्त्यभिधानौचित्यात् इति चेन्न ।

तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वानिवेशे स्वावच्छिन्नाविषयकेत्यस्य व्यावृत्तिर्न सम्भवति स्वावच्छिन्नाविषयकेत्युक्तावपि मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचार-त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नाविषयकप्रमेयमितिप्रतीतिमादायातिव्याप्तिताद-वस्थ्यात् । नहि स्वावच्छिन्नाविषयकेत्यस्यासत्त्वे चरमोपात्तस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छे-दकत्वस्य व्यावृत्तिर्न सङ्गच्छते इति शक्यते वक्तुम्, व्यभिचारकालीनघटे एवातिव्याप्तिवारणाय तत्सार्थ-क्यात् । तथाहि—तादृशघटत्वाश्रयाविषयकप्रतीतिविषयतावच्छेदकं यद् व्यभिचारत्वं तदवच्छिन्नाविषयक-प्रतीतिविषयत्वात्तादृशघटत्वाश्रयस्य । स्वपदार्थे तादृशविषयतावच्छेदकत्वनिवेशे तु तादृशघटत्वस्य व्यभि-चारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावेन नातिव्याप्तिरिति भोगाः ।

विषयकप्रतीतिविषयतावच्छेदकं यद् ह्रदवृत्तिवन्ह्यभाववत्त्वं तदाश्रयनिष्ठमुख्यविशेष्यत्वानिरूप-कप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वे सत्त्वादिति वाच्यम्। तथापि बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसत्प्रतिपक्षतावच्छेदकधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वेऽसत्त्वेनाऽलक्ष्यत्वस्य दुर्वारत्वादिति चेन्न।

घटो गगनवानित्यत्र गगनाभाववद्घटो बाधः, गगनाभावव्याप्यवद्घटस्तु न सत्प्रतिपक्षः—गदाधरमते साध्याभावाभावप्रकारकस्यैव सत्प्रतिपक्षत्वात् तत्र गगनाभावाभाववतोऽप्रसिद्ध्या न तत्र सत्प्रतिपक्षप्रसिद्धिः। एवं च गगनाभाववद्घटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्विपरीतबाधत्वं तदाश्रयवृत्तिमुख्यविशेष्यत्वानिरूपकप्रतीतिविषयतावच्छेदकत्वस्य गगनाभाववद्घटत्वे सत्त्वाद् बाधे लक्षणसमन्वयादिति ध्येयम्(१)।

न च तथापि वन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् वन्ह्यभावव्याप्यवद्ह्रदत्वं तदाश्रयाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वेऽसत्त्वात्प्रसिद्धस्थलीयबाधेऽव्याप्तिसम्भवे स्वरूपान्तराऽनुधावनमनुचितमिति वाच्यम्। वन्ह्यभाववद्ह्रदत्वाश्रयाऽविषयकं यद् वन्ह्यभाववद्ह्रदत्वेन घटावगाहिज्ञानं तद्विषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वे सत्त्वेनाऽव्याप्तिविरहादिति ध्येयम्।

यत्तु वन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् ह्रदवृत्तिवन्ह्यभावविशिष्टमेयत्वं तदाश्रयमुख्यविशेष्यताशून्यप्रतीत्यप्रसिद्ध्या मुख्यविशेष्यतानिवेशेऽपि असम्भव एवेति।

तन्न, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं सत् अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकं यद्यत् तत्तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वमेव वक्त-

---

(१) न च घटो गगनवानित्यत्र यदि पटत्वादेर्हेतुता तदा पटत्वाभाववद्घटः स्वरूपासिद्धिः, तदा गगनाभाववद्घटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् पटत्वाभाववद्घटत्वं तदाश्रयनिष्ठमुख्यविशेष्यताशून्यप्रतीतिविषयतावच्छेदकत्वस्य तादृशबाधत्वेऽसत्त्वादव्याप्तिरस्त्येव, यदि च द्रव्यत्वादेर्हेतुता तदा गगनाभाववद्द्रव्यत्ववतो व्यभिचारत्वेन गगनाभाववद्घटत्वावच्छिन्नाविषयकप्रतीतिविषयकतावच्छेदकं यद् गगनाभाववद्द्रव्यत्ववत्त्वं तदाश्रयनिष्ठमुख्यविशेष्यताशून्यप्रतीतिविषयतावच्छेदकत्वस्य गगनाभाववद्घटत्वे विरहेण गगनाभाववद्घटे लक्षणसमन्वयो न सम्भवति, द्रव्यत्वधर्मिकगगनव्याप्तिमत्ताबुद्धिं प्रति द्रव्यत्वधर्मितावच्छेदककगगनाभावप्रकारकनिश्चयस्य विरोधितया अपि मणिकारैरुक्तत्वात्, अत एव वह्निमान् घटत्वादित्यत्र घटत्वावच्छेदेन वन्ह्यभावस्याभासत्वं स्वीकृतं जगदीशेनेति वाच्यम्। घटवान् गगनवान् घटादित्यत्र घटावच्छेदेन यत्र गगनस्य साध्यता तत्र सामानाधिकरण्येन गगनाभाववद्घटवति लक्षणगमनसम्भवात्। तत्र गगनाभाववद्घटवत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य गगनाभाववद्घटवत्त्वरूपव्यभिचारत्वे विरहात् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं न व्यभिचारत्वं किन्तु घटवति गगनाभाववत्त्वमेव, तदाश्रयनिष्ठमुख्यविशेष्यताशून्यप्रतीतिविषयतावच्छेदकत्वस्य गगनाभाववद्घटवत्त्वरूपबाधत्वे सत्त्वेन तत्र लक्षणसमन्वयसम्भवात्। यदि साधनधर्मितावच्छेदककसाध्याभावप्रकारकज्ञानं यथा समानाकारकतया व्याप्तिग्रहप्रतिबन्धकं तथा साध्याभावधर्मितावच्छेदककसाधनप्रकारकज्ञानमपि तुल्यन्यायेन व्याप्तिग्रहप्रतिबन्धकं भवति तदा गगनाभाववद्घटवत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तादृशं विशिष्टान्तरं घटवद्गगनाभाववत्त्वं तदाश्रयनिष्ठमुख्यविशेष्यताशून्यप्रतीतिविषयतावच्छेदकत्वस्य गगनाभाववद्घटत्वेऽसत्त्वात्तादृशेऽपि न लक्षणगमनं सम्भवतीति विभावनीयम्।

**ष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छेदकधर्मे विशेषणतापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टान्तराविषयकत्वनिवेश एवोचितः । एवञ्च निष्कृष्टवक्ष्यमाणकल्पे यद्विषयकनिश्चयस्येत्यत्र निश्चय एव तन्निवेश्यं लाघवादित्यवधेयम् ।**

---

ध्यम्, अन्यथा ह्रदो धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तेः, मेयत्वविशिष्टव्यभिचारत्वस्य बाधत्वरूपतादृशविशिष्टान्तराऽघटितत्वात्, एवं च तत्र व्यभिचारे लक्षणसमन्वयकाले यद्यत्पदेन बाधकालीनघटत्वपटत्वादेरपि धारणसम्भवात्तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वस्य निवेशे गौरवम्, अतः स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्व—स्वरूपसम्बन्धरूपत्वोभयवद्विषयितानिरूपकतावच्छेदकमेव निवेश्यम्, तथाच ह्रदवृत्तिवह्न्यभावविशिष्टमेयत्वस्य स्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितानिरूपकतानवच्छेदकत्वान्न तदाश्रयाऽविषयकप्रतीत्यप्रसिद्ध्या दोष(१) इति ।

**अत्र च**—एतल्लक्षणे च । **तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्येति** । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्येत्यर्थः । **दोषतावच्छेदकधर्मे**—यद्रूपे । **ज्ञानपदार्थे**—निश्चये । **तादृशविशिष्टान्तराविषयकत्वनिवेश इति** । तादृशतद्रूपावच्छिन्नाविषयकत्वनिवेश इत्यर्थः । **उचित इति** । आपाततः प्रतीतिविषयतावच्छेदकत्वाऽनिवेशेन लाघवादिति भावः । **निष्कृष्टवक्ष्यमाणकल्पे**—अग्रवदन्तिकल्पे ।

नन्वत्र ज्ञानपदार्थे तादृशविशिष्टान्तराऽविषयकत्वनिवेश एवाऽनुगमे गौरवम् इत्थम् ।

अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वम् । रूपे प्रतिबन्धकतावै० स्ववृत्तियोऽभाव(१)स्तन्निरूपिताऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरू-

---

(१) अथ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकत्वव्यापकमनुमितिप्रतिबन्धकत्वं तत्तद्रूपमेव यदि तादृशविशिष्टान्तरपदार्थः तदा तत्तद्रूपभेदेन तस्य भिन्नतया बाधकालीनघटत्वादेरपि प्रातिस्विकरूपेण निवेशे गौरवम्, अतो लाघवार्थं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशनम्, तदेव न किन्त्वनुमितिप्रतिबन्धकतावृत्तिभेदप्रतियोगितावच्छेदकत्वेनानुगतरूपेणैव तस्य निवेशः कर्तुं शक्यः, भेदप्रतियोगितावच्छेदकता च स्वावच्छिन्नविषयकत्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना । बाधत्वं चैतादृशं भवति, प्रकृतानुमितिनिरूपितबाधविषयकत्वावच्छिन्नप्रतिबन्धकतायां बाधत्वस्य स्वावच्छिन्नविषयकत्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकतासम्बन्धेनाऽवृत्तेस्तादृशबाधप्रतिबन्धकतायां तादृशबाधत्वावच्छेदस्य सत्त्वात्, अनुमितिप्रतिबन्धकतावृत्तितादृशभेदप्रतियोगितावच्छेदकत्वं बाधत्वेऽस्त्येवेति बाधकालीनप्रमेयत्वादेरपि तादृशभेदप्रतियोगितावच्छेदकत्वेन तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वेऽसत्त्वात्तादृशबाधेऽपि लक्षणगमनं न सम्भवतीति सुधीभिर्विभावनीयम् ।

(२) अभावश्च किञ्चिद्रूपावच्छिन्नविषयित्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो ग्राह्यः ।

पितनिश्चयनिष्ठावच्छेदकतावत्त्वसम्बन्धेन । अवच्छेदकतावत्त्वं च स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपिता "ऽवच्छिन्नत्वसम्बन्धावच्छिन्ना" ऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितप्रतीतिनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकतावत्त्वोभयसम्बन्धेन । अत्र प्रतिबन्धकतावृत्त्यभावोऽतिगुरुशरीरकः । रूपे तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशेऽनुगमस्तु–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्य(१)भावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपविशिष्टरूपवत्त्वम् । रूपे रूपवै० स्वतादात्म्य–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्य(२)भावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताविशिष्टत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्ववद्धर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । तथाचैतन्मते प्रतिबन्धकतावृत्त्यभावो लघुशरीरक इति चेन्न ।

तन्मतेऽपि प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्य(३)भावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टधर्मवत्त्वं लक्षणम् । धर्मे अवच्छेदकतावै० स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्ववृत्त्यभा(४)वीयविषयितात्वावच्छिन्नप्रतियोगितानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितप्रतीतिनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति लाघवसम्भवात् ।

ननु तथापि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वं

---

(१) अभावश्च किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धो ग्राह्यः ।

(२) अत्राप्युक्ताऽभाव एव ग्राह्यः । (३) अत्राऽप्यभाव उक्त एव ।

(४) स्वसमानाधिकरणो यः किञ्चिद्रूपावच्छिन्नविषयित्वाभाववत्प्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिता नास्तीतिप्रतीतिसिद्धाऽभावो ग्राह्यः ।

प्रकृतानुमित्यवृत्तितद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव यद्रूपे निवेश्यतां किं प्रतिबन्धकतानिवेशेन । न च विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानभ्युपगमेन ज्ञानत्वे प्रकृतानुमितिवृत्तित्वसत्त्वेन विशिष्टज्ञानत्वरूपनिश्चयत्वे सत्त्वादभावाऽप्रसिद्ध्याऽसम्भव इति वाच्यम् । एवमपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायां स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वनिवेशाऽपेक्षया लाघवेन तादृशयद्रूपावच्छिन्नविषयकनिश्चयत्वाभावः प्रकृतानुमितित्वव्यापकः तद्रूपावच्छिन्नाऽघटितत्वमेव निवेश्यतामिति चेन्न ।

पर्वतो वह्न्यभावव्याप्यवान् पर्वतीयवह्न्यभावादित्यत्र पर्वतीयवह्निमत्पर्वतत्वरूपाऽसिद्धावव्याप्तेः, वह्निमत्पर्वतरूपतादृशविशिष्टान्तरघटितत्वात्, मम तु सत्प्रतिपक्षनिश्चयस्य तद्वत्ताबुद्धेरप्रतिबध्यतया तादृशहेतुज्ञानस्य चाऽप्रतिबध्यतया नाव्याप्तिः । एवं श्येयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तेश्च सत्प्रतिपक्षनिश्चयस्य कार्यसहभावेनाऽनुमितावविरोधितया "यदि चेत्यादिना" सत्प्रतिपक्षग्रन्थे उक्तत्वेन सत्प्रतिपक्षविषयकप्रकृतानुमितेः सम्भवेन सत्प्रतिपक्षत्वस्य प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकत्वविरहादिति ध्येयम् ।

ननु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्त्यनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयावृत्ति 'स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं, अथ च प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्त्यनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयाऽवृत्तिविषयितानिरूपकतावच्छेदकं वा" तद्रूपावच्छिन्नाऽघटितत्वं निवेश्यतां तावतैवोक्तदोषविरहादिति चेन्न ।

ह्रदो वह्निमान् वन्ह्यभाववदभाववत्कालीनधूमादित्यत्र वन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्त्यापत्तेः, विशिष्टान्तरतावच्छेदकाऽभाववद्ह्रदत्वस्य तादृशत्वसम्भवात् । अभाववान् ह्रद इति निश्चयोत्तरं प्रकृतानुमित्यसम्भवादिति ध्येयम् ।

अथैवमपि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं, अथ च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाघटितत्वमेव निवेश्यतां किमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेन । न चैवमुक्तरीत्याऽसम्भव इति वाच्यम् । अनतिरिक्तवृत्तित्वकल्पेऽपि जातित्वादिना वह्नित्वाद्यवगाहि "धूमाभाववद्वृत्तिजातिमानित्याकारक" व्यभिचारज्ञाने प्रतिबन्धकताविरहेण विशिष्टान्तराऽप्रसिद्ध्याऽसम्भववारणाय विशिष्टान्तरविषयितायां विशिष्टान्तरविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं निवेशनीयम् । तथाच यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिता प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावती स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नाऽघटितत्वस्य विवक्षणे बाधार्थैकदेशविषयितायां बाधज्ञानीयायामव्यापकीभूतविषयिताशून्यज्ञानीयत्वविरहात्, "वह्निरित्यादि" ज्ञानान्तरीयविषयितायां च प्रतिबन्धकतावच्छेदकताविरहेण "वह्नित्वाद्यवच्छिन्नस्य" विशिष्टान्तरत्वाऽसम्भवादसम्भवविरहादनतिरिक्तवृत्तित्वं न निवेश्यमिति चेन्न ।

संयोगवज्जलं जलाभाववदित्यत्र जलवत्संयोगवज्जलरूपबाधेऽव्याप्तेः, तत्र जलत्वेन घटावगाहिजलवत्संयोगवज्जलमिति बाधज्ञानीयायाः संयोगवज्जलत्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकतया तादृशज्ञाने च संयोगवज्जलत्वावच्छिन्नविषयित्वाऽव्यापिकायाः कस्या अप्यभावात्, जलवत्संयोगवज्जलत्वावच्छिन्नविषयितया अव्यापकत्वेऽपि तच्छून्यत्वस्य जलत्वेन घटावगाहितादृशबाधज्ञाने सत्त्वात्, तथाच संयोगवज्जलत्वावच्छिन्नस्य विशिष्टान्तरतया तदघटितत्वस्य तादृशबाधेऽसत्त्वात्(१)। अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु संयोगवज्जलत्वावच्छिन्नविषयितायाः प्रतिबन्धकताऽतिरिक्तवृत्तित्वेन संयोगवज्जलत्वावच्छिन्नस्य विशिष्टान्तरत्वाऽभावान्नाव्याप्तिरिति ध्येयम् ।

---

(१) एवं संयोगः संयोगाभाववान् संयोगाभाववत्पर्वतकालीनधूमादित्यत्र संयोगवत्पर्वतरूपसाधनाऽप्रसिद्ध्यावव्याप्तिश्च संयोगत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्य–संयोगः संयोगवानिति ज्ञानीयसंयोगत्वावच्छिन्नविषयितायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वात्, संयोगवत्पर्वतत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकसंयोगत्वावच्छिन्नविषयताशून्यत्वस्य तादृशसाधनाऽप्रसिद्धित्वावच्छिन्नज्ञानेऽसत्त्वात् । न च यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता स्वावच्छिन्नविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिता तादृशानुमितिप्रतिबन्धकतावच्छेदिका स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षणान्नोक्तदोषः, संयोगत्वावच्छिन्नविषयिताव्यापकीभूतायाः संयोगत्वावच्छिन्नविषयितानिरूपितसंयोगत्वावच्छिन्नविषयिताया अभावस्य संयोगः संयोगवानिति ज्ञानेऽसत्त्वात, एवं संयोगवज्जलत्वावच्छिन्नविषयित्वाव्यापकीभूतायाः संयोगावच्छिन्नविषयितानिरूपितसंयोगवज्जलत्वावच्छिन्नविषयिताया अभावस्य जलत्वेन घटावगाहिनि जलवत्संयोगवज्जलमिति ज्ञानेऽसत्त्वाच्चेति वाच्यम् । तथापि गुणभिन्नम् इत्यत्र स्वरूपतो गुणत्ववद्रूपबाधेऽव्याप्तिः, तस्य रूपघटितत्वात् रूपत्वावच्छिन्नविषयित्वाव्यापिकायास्तादृशविषयिताया रूपं गुण इति ज्ञानेऽसत्त्वात्, तज्ज्ञानीयरूपत्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात्, एवं जलत्वावच्छेदेन जलवज्जलाभावसाधने जलवज्जलवज्जलरूपबाधेऽव्याप्तिः तस्य जलवज्जलघटितत्वात् जलवज्जलत्वावच्छिन्नविषयित्वाव्यापकीभूता यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यबाधज्ञानीयजलवज्जलत्वावच्छिन्नविषयितायास्तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वात् । न च यद्रूपावच्छिन्नविषयिता स्वावच्छिन्नविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयिताशून्यत्वस्यापि विवक्षणान्नोक्तदोषः, रूपत्वावच्छिन्नविषयित्वाव्यापिकाया रूपावच्छिन्नविषयताया रूपं गुण इति प्रतिबन्धकज्ञाने सत्त्वात्, एवं जलवज्जलत्वावच्छिन्नविषयिताव्यापकीभूताया जलवज्जलत्वावच्छिन्नविषयितायाः जलवज्जलवज्जलमिति प्रतिबन्धकज्ञाने सत्त्वाच्चेति वाच्यम् । जलं संयोगवज्जलाभाववदित्यत्र संयोगवज्जलवज्जलरूपबाधेऽव्याप्तेः तस्य संयोगवज्जलवदात्मकविशिष्टान्तरघटितत्वात् उक्तबाधज्ञानीयसंयोगवज्जलवत्त्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् तादृशविशिष्टविषयिताऽव्यापिका यद्रूपावच्छिन्नविषयता तस्याः तादृशप्रतिबन्धकज्ञाने च अभावात । न च यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता स्वावच्छिन्नविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वं विवक्षणीयं, तथाच संयोगवज्जलवत्त्वावच्छिन्नविषयिताऽव्यापकीभूतायां जलवत्त्वावच्छिन्नविषयतानिरूपितसंयोगवज्जलत्वावच्छिन्नविषयताया उक्तप्रतिबन्धकज्ञाने सत्त्वेन तच्छून्यसंयोगवज्जलवदितिज्ञानीयतद्विषयितायाः प्रतिबन्धकतानवच्छेदकतया नाव्याप्तिरिति वाच्यम् । स्वरूपं स्वरूपवद्भेदत्ववदित्यत्र स्वरूपवद्भेदत्ववद्भेदत्ववत्स्वरूपात्मकबाधेऽव्याप्तिः, स्वरूपवद्भेदत्ववद्भेदवत्त्वावच्छिन्नविषयित्वाव्यापकीभूता यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता तच्छून्यतादृशबाधज्ञानीयस्वरूपवद्भेदत्ववद्भेदवत्त्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् तादृशबाधस्य च तद्घटितत्वात् ।

ननु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयितासामान्यं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत् तद्रूपावच्छिन्नाऽघटितत्वमेव निवेश्यतां किमनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशेनेति चेन्न ।

ह्रदो वह्निमानित्यत्र वन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्तेः, अभाववान् वन्ह्यभाववान् अभाववांश्च ह्रद इति ज्ञानस्य प्रकृतानुमितिप्रतिबन्धकतया समानाकारकज्ञानीयविषयताया ऐक्येन अभाववद्ह्रदत्वावच्छिन्नविषयितासामान्यस्य तादृशानुमितिप्रतिबन्धकतावच्छेदकतया अभाववद्ह्रदत्वावच्छिन्नस्य तादृशविशिष्टान्तरतया बाधे तदघटितत्वाभावात् । अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु अभाववद्ह्रदत्वावच्छिन्नविषयितायाः अभाववान् वन्ह्यभाववानितिज्ञानाऽसमानकालीनज्ञानेऽपि सत्त्वेन प्रतिबन्धकताऽतिरिक्तवृत्तित्वात्(१) ।

---

(१) न च यद्रूपावच्छिन्नविषयितासामान्यं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽघटितत्वस्य विवक्षणान्नायं दोष इति वाच्यम् । तथासति मेयत्वविशिष्टाऽसाधारण्येऽतिव्याप्तेः, मेयत्वविशिष्टाऽसाधारण्यघटकतावच्छेदकशुद्धाऽसाधारण्यविषयितासामान्यस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवाऽवच्छेदकत्वेन शुद्धाऽसाधारण्यस्य विशिष्टान्तरत्वाऽसम्भवात् । न च यद्रूपावच्छिन्नविषयितासामान्यं ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वाऽनवच्छिन्नत्वोभयाभाववत्प्रतिबन्धकतावच्छेदकं तदवच्छिन्नाऽघटितत्वं विवक्षणीयं, तथाचाऽसाधारण्यनिश्चयप्रतिबन्धकतायामसाधारण्यविषयकत्वाऽनवच्छिन्नत्वाभावेनोभयाभावसत्त्वेनाऽसाधारण्यस्य विशिष्टान्तरत्वसम्भवेन मेयत्वविशिष्टासाधारण्ये नाऽतिव्याप्तिः । न वा बाधेऽव्याप्तिः, उक्तरीत्याऽभाववद्ह्रदविषयकनिश्चयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वाऽनवच्छिन्नत्वोभयस्यैव सत्त्वेनाऽभाववद्ह्रदस्य विशिष्टान्तरत्वाऽसम्भवादिति वाच्यम् । तथापि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र मेयत्वविशिष्टबाधेऽतिव्याप्त्यापत्तेः, गगनाभाववद्गगनाभाववदभाववत्कालीनघटात्मकबाधविषयितासामान्यस्य प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकतया तत्प्रतिबन्धकतायामुक्तोभयसत्त्वेनोभयाभाववत्प्रतिबन्धकतावच्छेदकत्वस्य दोषान्तरविषयितायामेव सत्त्वेन तदघटितत्वस्य मेयत्वविशिष्टबाधेऽक्षतत्वात् । न च यद्रूपावच्छिन्नविषयितासामान्यं ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयित्वानवच्छिन्नत्व-प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयित्वाऽनवच्छिन्नत्वैतत्त्रितयाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽघटितत्वं विवक्षणीयम्, विषयितायां प्रतिबन्धकतावै० स्वावच्छेदकत्व-स्वनिरूपितप्रतिबध्यतावच्छेदकविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन, तथाच तादृशबाधनिश्चयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वानवच्छिन्नत्वोभयसत्त्वेऽपि प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टा या गगनाभाववत्तादृशघटविषयिता तदनवच्छिन्नत्वविरहप्रयुक्तोक्तत्रितयाऽभावस्य बाधप्रतिबन्धकतायां सत्त्वेन शुद्धतादृशबाधस्य विशिष्टान्तरत्वसम्भवेन मेयत्वविशिष्टतादृशबाधे नातिव्याप्तिः, तादृशविषयितायां तादृशप्रतिबन्धकतावैशिष्ट्यमपि-तत्र तादृशप्रतिबन्धकतावच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकगगनाभाववदभाववत्कालीनघटत्वावच्छिन्नविशेष्यतानिरूपितगगनत्वावच्छिन्नप्रकारिताघटित"साध्यवत्ताबुद्धित्व"धर्मावच्छिन्नप्रतिबध्यतावच्छेदकत्वस्य च सत्त्वादिति वाच्यम् । वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तेः, वह्न्यभावव्याप्यवत्तादृशह्रदात्मकसत्प्रतिपक्षज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वाऽनवच्छिन्नत्व-तादृशप्रतिबन्धकताविशिष्टविषयित्वाऽनवच्छिन्नत्वैतत्त्रितयस्यैव सत्त्वेन तत्त्रितयाभाववत्प्रतिबन्धकतावच्छेदकविषयितासामान्यकदोषान्तराऽघटितत्वात् ।

यदि च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकपक्षविशेष्यतानिरूपितप्रकार-

वस्तुतो निरवच्छिन्नत्वरूपसम्बन्धेन वन्ह्यभाववद्ध्रदस्य बाधत्वमतेऽव्याप्यवृत्तित्वज्ञानस्याऽनुत्तेजकत्वेन शुद्धस्वरूपसम्बन्धेन वन्ह्यभाववद्ध्रदस्यापि विशिष्टान्तरतया तदघटितत्वस्योक्तबाधेऽभावादव्याप्तिरतोऽनतिरिक्तवृत्तित्वनिवेशः ।

अथैवमनतिरिक्तवृत्तित्वं स्वव्यापकताकत्वमेव, एवं च प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वमित्यस्य यद्रूपावच्छिन्नविषयिताव्यापिका प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यर्थः । विषयिताव्यापकत्वं च प्रतिबन्धकतायां—विषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावः । तथाच तद्रूपे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशापेक्षया निश्चये एव स्वावच्छिन्नाविषयकत्वं निवेश्यतां किं प्रतीतिविषयतावच्छेदकत्वनिवेशेनेति(१) चेन्न । यादृशस्थलेऽप्रामाण्यज्ञानानास्कन्दितव्यभिचारज्ञानं नियमतः प्रमेयत्वाविषयकं यदा च प्रमेयत्वाविषयकं तदाऽप्रामाण्यज्ञानास्कन्दितमेव तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकज्ञानीयव्यभिचारत्वावच्छिन्नविषयिताव्यापकत्वस्य प्रतिबन्धकतायामसत्त्वात्, तादृशव्यभिचारज्ञानस्य नियमेनाऽप्रामाण्यज्ञानास्कन्दितत्वेन प्रतिबन्धकताशून्यत्वेन व्यभिचारस्य विशिष्टान्तरत्वाभावात् । स्वमते तु नायं दोषः, व्यभिचारत्वेऽप्रामाण्यज्ञानास्कन्दितज्ञानान्तर्भावेण मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य सत्त्वात्, मेयत्वविविशिष्टव्यभिचारज्ञानान्तर्भावेण प्रतिबन्धकताया व्यभिचारविषयिताव्यापकत्वात् तदवच्छिन्नाऽघटितत्वस्य मेयत्वविशिष्टव्यभिचारेऽसत्त्वादिति दिक् ।

ननु जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, विशिष्टान्तरतावच्छेदकधर्मावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकाविषयित्वानवच्छिन्नत्वप्रागुक्तत्रितयतच्चतुष्टयाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयितासामान्यं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नाऽघटितत्वस्य निवेशनेन तादृशाऽतिव्याप्तिर्वार्यते तदाऽनतिरिक्तवृत्तित्वनिवेशापेक्षया न किमपि लाघवमिति ध्येयम् ।

---

(१) अनुगमस्तु प्रकृताऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वम् । रूपे प्रतिबन्धकतावै० स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतावत्त्वसम्बन्धेन । तादृशावच्छेदकतावत्त्वं च स्वनिरूपिताऽवच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वसमानाधिकरणो यः प्रकृतानुमितिप्रतिबन्धकतानिष्ठकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिसिद्धाभावीयाऽवच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितकिञ्चिद्रूपावच्छिन्नविषयित्वाभावसमानाधिकरणनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वं नास्तीतिप्रतीतिसिद्धाऽभावः तदीयविषयित्वनिष्ठप्रतियोगितानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नधर्मनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभयसम्बन्धेन ।

रतावच्छेदकं यज्जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवद्ह्रदत्वं तदवच्छिन्नघटितत्वात्। न च विशिष्टान्तरतावच्छेदकरूपे विशिष्टद्वयाऽघटितत्वं निवेश्यम्, एवं चोक्तरूपं विशिष्टद्वयघटितमेवेति नोक्तदोष इति वाच्यम्। तथासति मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः।

अत्र केचित् मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिवारणन्तु विशिष्टद्वयाऽघटितत्वनिवेशेनैव सम्भवति। शुद्धसत्प्रतिपक्षेऽतिव्याप्तिवारणाय विशिष्टद्वयविषयितायां सत्प्रतिपक्षविषयिताभिन्नत्वं "इतरविषयित्वानिरूपितनिरूप्यनिरूपकभावापन्नसत्प्रतिपक्षविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वरूपं" निवेश्यम्। न च जलव्यापकवह्न्यभावसमानाधिकरणह्रदवृत्तिजलस्यापि सत्प्रतिपक्षत्वात्तत्राऽव्याप्तिः, एवं तद्व्यक्तित्वव्यापकपक्षवृत्तित्वाभावसमानाधिकरणतद्व्यक्तित्ववत्साध्यस्य आधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षाभावव्याप्यवत्साध्यस्य पक्षनिष्ठाभावप्रतियोगित्वव्याप्यवत्साध्यस्य सत्प्रतिपक्षत्वात्तेषु चाऽव्याप्तिरिति वाच्यम्। निरुक्तनिखिलसत्प्रतिपक्षविषयित्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वाभावकूटस्यैव विशिष्टद्वयविषयित्वे निवेशात्।

अथवा प्रकृतानुमितिविरोध्यनुमितिजनकताविशिष्टान्यत्वं विशिष्टद्वयविषयित्वे निवेशनीयम्। वै० स्वानवच्छेदकविषयिताश्रयज्ञानीयत्वसम्बन्धेन। स्वानवच्छेदकत्वं चाऽवच्छेदकताविशिष्टान्यत्वम्। वै० स्वतादात्म्य—स्वावच्छेद्यत्वान्यतरसम्बन्धेन। तेन निरवच्छिन्नविषयिताया जनकतानवच्छेदकत्वेऽपि न क्षतिरिति ध्येयम्।

ननु ह्रदत्वावच्छेदेन वह्नेः साध्यत्वे ह्रदत्वावच्छेदेन वह्न्यभाववद्ह्रदात्मकबाधेऽव्याप्तिः, तस्य सामानाधिकरण्येन बाधघटितत्वादिति चेन्न।

विशिष्टान्तराऽघटितत्वघटकीभूतप्रतिबन्धकतायां यद्रूपाभाववत्त्वस्य निवेशात्। यद्रूपाभावश्च स्वावच्छिन्नविषयित्वावच्छिन्नत्व—स्वावच्छिन्नविषयित्वावच्छिन्नसामानाधिकरण्येन बुद्धिप्रतिबन्धकताभिन्नत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः। एवं च स्वपदेनाऽवच्छेदावच्छेदेन बाधस्योपादाने अवच्छेदावच्छेदेन बुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकतायां स्वाभाववत्त्वं नास्ति, अपि तु सामानाधिकरण्येन बुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकता एव धर्तुं शक्यते तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वं सामानाधिकरण्येन बाधत्वे नास्तीति नोक्तबाधेऽव्याप्तिः। स्वपदेन सामानाधिकरण्येन बाधत्वस्योपादाने च स्वावच्छिन्नविषयित्वावच्छिन्नसामानाधिकरण्यबुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकताया अप्रसिद्ध्या तादृशोभयसम्बन्धस्य व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वान्न कोऽपि दोषः।

एतेन विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ गुणाभाववान् घटो विशेषगुणाभाववानित्यत्रैव घटत्वावच्छेदेन विशेषगुणवद्घटरूपबाधे घटत्वसामानाधिकरण्येन गुणवद्घटरूपाऽऽश्रयासिद्धिघटितेऽव्याप्तिसम्भवे द्वितीयक्षणावच्छिन्नत्वस्य पक्षतावच्छेदककोटौ निवेशोऽनर्थक इति पूर्वपक्षोऽपि निरस्तः, उक्तनिवेशेनैव तद्वारणादिति ध्येयम्।

केचित्तु गुणाभावादीनामव्याप्यवृत्तित्वाद् वृक्षः कपिसंयोगीत्यादौ यथा कपिसंयोगाभाववद्वृक्षस्य न बाधत्वं तथैवात्रापि विशेषगुणवद्घटादीनां न बाधत्वमित्याहुः।

अथ धूमव्यभिचारिवह्निमान् धूमवान् वन्हेरित्यादौ बाधादेर्व्यभिचारादिघटिततया तत्राऽव्याप्तिः । न च यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपा-

अथेति । बाधादेः—धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपस्य । व्यभिचारादिघटिततयेति । धूमाभाववद्वृत्तिवह्निरूपव्यभिचारघटिततयेत्यर्थः । तत्र—धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधे । अव्याप्तिरिति । धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च प्रकृताऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद् धूमाभाववद्वृत्तिवह्नित्वं तदवच्छिन्नघटितत्वाद् यद्रूपपदेन धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वस्योपादानाऽसम्भवादिति भावः ।

अत्र धूमव्यभिचारिवह्नेः पक्षत्वे तादृशबाधघटकधूमव्यभिचारिवह्नित्वावच्छिन्नमादाय "तथाप्रतीत्यादिना" वक्ष्यमाणाऽव्याप्तिर्न सम्भवतीति तदर्थं तादृशवह्निमत्त्वावच्छिन्नस्य पक्षत्वानुसरणम्(१) ।

नन्वेति । स्वपदेन चाऽत्र लक्ष्यतावच्छेदकमुपादेयम् । अत्र कल्पे विशेष्यदलं नास्तिप्रतिबन्धकतायां स्वावच्छिन्नविषयकत्वावच्छिन्नत्वनिवेशादेव स्वपदेनोदासीनघटत्वादेर्धारणाऽसम्भवात् । तथाच तादृशस्ववत्त्वमेव लक्षणम् । अत्रापि अनुयोगिनि स्वत्वं निविष्टमित्यपि बोध्यम् ।

अत्र यद्रूपं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन विवक्षणीयम्, अन्यथा व्यभिचारत्वादेरपि यद्रूपपदेन धर्तुं शक्यत्वादसम्भवप्रसङ्गात् । मेयत्वविशिष्टव्यभिचारत्वादेरपि अभिधेयत्वविशिष्टव्यभिचारत्वाऽघटितत्वेनाऽतिव्याप्तिवारणाय यद्यद्रूपावच्छिन्नविषयकत्वमिति विवक्षाया आवश्यकत्वात् ।

तथाच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं यद्यद्रूपं तत्तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्वत्त्वं लक्षणार्थः ।

अनुगमस्तु धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य—स्वविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । स्ववै० स्वविशिष्टविषयिताव्यापकप्रतिबन्धकतात्वव्यापकत्व—स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, प्रतिबन्धकतात्वव्यापकता च धर्मे स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन । उभयत्र विषयितायां स्ववै० स्वावच्छिन्नत्वसम्बन्धेनेति ।

न च व्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं सत् व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकाऽप्रसिद्ध्याऽसम्भव इति वाच्यम् । ह्रदो वन्ह्यभाववान्–ह्रदे वन्ह्यभाव इति ज्ञानयोरेकरूपेण प्रतिबन्धकत्वमङ्गीकृत्यैतल्लक्षणकरणात् ।

(१) केचित्तु धूमव्यभिचारिवन्ह्यवच्छेदेनैव बाधसत्त्वादवच्छेदावच्छेदेन सामानाधिकरण्येन च बाधबुद्धेः संग्रहार्थं धर्मिपर्यन्तानुसरणम् । तादृशवन्हेः पक्षत्वे तु तादृशवन्हित्वावच्छेदेन धूमाभाववत्त्वबुद्धेर्भ्रमत्वेनैतत्स्थलेऽवच्छेदावच्छेदेन बाधस्य दोषता सम्भवतीत्याहुः ।

एकरूपेण प्रतिबध्यप्रतिबन्धकभावो यथा ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति स्वरूपसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नवन्ह्यभावत्वावच्छिन्नविषयतानिरूपिताऽऽधेयतासम्बन्धातिरिक्तसम्बन्धानवच्छिन्नह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन(१) प्रतिबन्धकत्वम्। नचैवं कालिकस्वरूपोभयसम्बन्धेन वन्ह्यभाववान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वानुपपत्तिः, तदीयवन्ह्यभावत्वावच्छिन्न "प्रकारताख्य" विषयतायाः स्वरूपाऽतिरिक्तेन कालिकेनाऽवच्छेदादिति वाच्यम्। तादृशबुद्धिं प्रति वन्ह्यभावत्वावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकत्वात्। सांसर्गिकविषयतायां वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टस्वरूपत्वानवच्छिन्नत्व—ह्रदत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टाऽऽधेयतात्वानवच्छिन्नत्वोभयाभावो निवेश्यः। एवं च वन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं वन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् ह्रदवृत्तिवन्ह्यभावत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वे सत्वाल्लक्षणसमन्वयः।

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यच्छुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे विरहान्न मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः। व्यभिचारघटितबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य शुद्धव्यभिचारत्वे सत्वेऽपि व्यभिचारत्वावच्छिन्नविषयितायाः व्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गताऽनुमितिप्रतिबन्धकतावच्छेदकत्वाभावात्, शुद्धव्यभिचारविषयितायाः तादृशप्रतिबन्धकताशून्यव्यभिचारमात्रनिश्चयेऽपि सत्वात्, किन्तु विपरीततादृशबाधत्वमेव तादृशरूपं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारघटितबाधत्वे सत्वात्तत्र लक्षणसमन्वयः।

अत्र स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतेत्यत्र "प्रतिबन्धकताविशेषणं" अवच्छिन्नत्वं व्यापकत्वरूपं ग्राह्यम्। स्वावच्छिन्नविषयकत्वनिष्ठ "स्वरूपसम्बन्धरूपा" वच्छेदकतानिरूपकत्वनिवेशे तु असम्भवः, वन्ह्यभाववान् ह्रद इति निश्चयस्य यथाऽनुमितिं प्रति विरोधित्वम्, तथा वन्ह्यभाववान् धूमाभाववान्, इति निश्चयविशिष्टस्य तस्य धूमवत्ताबुद्धिं प्रत्यपि विरोधित्वम्। तथाच वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता—पक्षे हेतुवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता च तदुभयाऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकाऽप्रसिद्धेः। अतोऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशः।

---

(१) स्वरूपत्वावच्छिन्नावच्छेदकत्वतरसंसर्गनिष्ठावच्छेदकत्वानिरूपकवन्ह्यभावत्वावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपिताऽधेयतात्वावच्छिन्नावच्छेदकत्वेतरसांसर्गिकाऽवच्छेदकत्वानिरूपकह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनेत्यर्थः।

स्वावच्छिन्नविषयिताव्यापिका प्रतिबन्धकतेत्यर्थः । एवं च वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापिका प्रतिबन्धकता पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतैवेति नाऽसम्भवः ।

एवं प्रतिबन्धकतासामान्यावच्छेदकमित्यत्रापि प्रतिबन्धकताऽनतिरिक्तवृत्तीत्यर्थो बोध्यः। अन्यथा वन्ह्यभाववद्ह्रदादिरूपबाधाऽसंग्रहः स्यात्, तादृशबाधैकदेशह्रदत्वावच्छिन्नविषयितायाः तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वेन तादृशविषयितानिरूपकतावच्छेदकं यद् ह्रदत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वे विरहात् ।

यद्यपि यद्रूपावच्छिन्नविषयितासामान्यं तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावदित्युक्तौ न दोषः, ह्रदत्वावच्छिन्नविषयितासामान्यस्य प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वविरहात्, तथापि जातित्वादिना वह्नित्वाद्यवगाहिव्यभिचारविषयितायाः तत्सामान्यान्तर्गतायाः प्रतिबन्धकतावच्छेदकत्वाभावेनाऽप्रसिद्धिभिया यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीय(१)यद्रूपावच्छिन्नविषयितासामान्यं विवक्षणीयम् । एवं च द्वितीयाऽवच्छेदकत्वं यदि स्वरूपसम्बन्धरूपमेवोच्यते तदा व्यभिचारघटितबाधेऽव्याप्तिः, तादृशबाधविषयिताव्यापिका विशिष्टबाधप्रतिबन्धकता शुद्धव्यभिचारप्रतिबन्धकता च "स्वरूपसम्बन्धरूपतदुभयाऽवच्छदकत्वं न बाधविषयितायां, शुद्धव्यभिचारनिश्चयप्रतिबन्धकतायामनवच्छेदकत्वात्, व्यभिचारविषयितायास्तदुभयाऽवच्छेदकत्वेऽपि व्यभिचारत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयव्यभिचारविषयितायाः बाधप्रतिबन्धकतायामनवच्छेदकत्वात्, तथाच तादृशरूपाऽप्रसिद्धेः । अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु विपरीततादृशबाधत्वादिकं प्रसिद्धमिति ध्येयम् ।

ननु उभयत्रैव स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशः कथं न कृतः। न चाऽसम्भवः। वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता पक्षे हेतुवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता च तदुभयनिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वेन तादृशविषयितानिरूपकतावच्छेदकस्य वन्ह्यभाववद्ह्रदत्वस्यैव प्रसिद्धत्वादिति चेत् ।

एवमपि वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकवन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाऽप्रसिद्धिरत उभयत्राऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वानिवेशः । तथाच विपरीतबाधत्वमेव तादृशं प्रसिद्धम् ।

उक्तव्यभिचारघटितबाधेऽव्याप्तिवारणाय प्रतिबन्धकतायां सामान्यपदानिवेशः । तदुपपा-

(१) न च स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमेव कथं न निवेशितं लाघवादिति वाच्यम् । जातिमद्वन्ह्यभाववद्ह्रदेऽतिव्याप्तेः, यद्रूपपदेन वन्ह्यभाववद्ह्रदत्वस्य धर्तुमशक्यत्वात्, वन्ह्यभाववज्जातिमत्त्वस्याऽपि स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वेन प्रतिबन्धकतायां वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाऽव्यापकत्वादिति ध्येयम् ।

न्तरावच्छिन्नाघटितत्वस्य विवक्षितत्वान्न दोषः, व्यभिचारस्य उक्तबाध-विषयकत्वान्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतासामान्यान्तर्गतानुमितिप्रति-बन्धकतावच्छेदकविषयिताकत्वविरहेण तादृशाघटितत्वस्याकिञ्चित्-करत्वादिति वाच्यम् ।

---

दयति **व्यभिचारस्येत्यादिना** । **व्यभिचारस्य**—धूमाभाववद्वृत्तिनिरूपकव्यभिचारस्य। **उक्तबाधाविषयकत्वाऽन्यूनवृत्तीति** । धूमाभाववद्धूमव्यभिचारिवह्नित्वावच्छिन्न-विषयिताव्यापकेत्यर्थः । अन्वयश्चाऽस्य प्रतिबन्धकतायां । **विषयिताकत्वेऽपि**—विषयि-तानिरूपकत्वेऽपीत्यर्थः । "उक्तबाधघटक"धूमाभाववद्वृत्तिवह्नित्वस्य धूमाभाववद्धूमव्य-भिचारिवह्नित्वावच्छिन्नविषयिताव्यापकव्याप्तिज्ञानप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरू-पकतावच्छेदकत्वेऽपीति यावत् । प्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपकता-वच्छेदकत्वाभावेनाव्याप्तिविरहात् । तादृशनिरूपकतावच्छेदकत्वाभावमुपपादयति **तादृ-शेति** । बाधविषयकत्वावच्छिन्नेत्यर्थः । **विरहेणेति** । तथाच धूमाभाववद्वृत्तिवह्नित्वस्य उक्तबाधविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गताऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति-विषयतानिरूपकतावच्छेदकत्वविरहेणेति यावत् । **तादृशघटितत्वस्य**—व्यभिचारघटित-त्वस्य । **अकिञ्चित्करत्वात्**—तथाच व्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छि-न्नप्रतिबन्धकतासामान्यावच्छेदकं न शुद्धव्यभिचारत्वावच्छिन्नविषयकत्वं तादृशप्रतिबन्धक-तासामान्यान्तर्गताऽनुमितिप्रतिबन्धकताशून्यव्यभिचारमात्रनिश्चयेऽपि तस्य सत्त्वात्, किन्तु विपरीततादृशबाधत्वावच्छिन्नविषयकत्वं विपरीततादृशघटितत्वस्योक्तबाधत्वेऽसत्त्वेनस्वपदेन तस्य धारणाद्व्याप्तिरिति परमार्थः ।

अथाऽत्र कल्पे वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिवारणाय विशिष्टद्वयाऽघटि-तत्वमवश्यं निवेशनीयम्, एवं च व्यभिचारघटितबाधेऽव्याप्तितादवस्थ्यम्। व्यभिचारविष यकनिश्चयविशिष्टबाधाविषयकनिश्चयत्वस्य प्रकृताऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तितया त-दुभयाऽघटितत्वस्य तत्राऽभावादिति चेन्न ।

व्यभिचारघटितबाधघटकव्यभिचारबाधाविषयित्वयोर्ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धक-ताऽनवच्छेदकत्वविरहेण तद्घटितविशिष्टद्वयाऽघटितत्वस्य तत्राऽबाधात् । यद्वा स्वावच्छिन्न-विषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतासामान्यं स्वावच्छिन्नविषयकयादृशविशिष्टविषय-कनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वव्यापकं तादृशविशिष्टद्वयघटितत्वाऽनवच्छेदकत्व-स्य स्वपदार्थे विवक्षितत्वान्न तत्राऽव्याप्तिः । भवति च वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वा-वच्छिन्नविषयकत्वव्यापकं वह्निमत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतासामान्यं उक्तजलवद्ह्रदाविषयकवन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयकनिश्चयविशिष्टजलवद्ह्रदत्वावच्छि-न्नविषयकनिश्चयत्वव्यापकं तदुभयघटितत्वानवच्छेदकं च न तादृशजलवद्वृत्तिजलवद्ह्रदत्व-मिति न तादृशजलवद्ह्रदत्वावच्छिन्नेऽतिव्याप्तिः ।

व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याप्रसिद्ध्याऽसम्भवात्, व्यभिचारत्वमेयत्वविशिष्टव्यभि-

---

दूषयति व्यभिचारत्वादिविशिष्टेति । व्यभिचारत्वावच्छिन्नेत्यर्थः । तदवच्छिन्नेति । व्यभिचारत्वावच्छिन्नेत्यर्थः । अप्रसिद्ध्येति । न च व्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वस्य व्यभिचारत्वे मेयत्वविशिष्टव्यभिचारत्वे च प्रसिद्धिरिति वाच्यम् । तत्र तस्य प्रसिद्धावपि व्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वाऽप्रसिद्धेः, एवं व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वादौ प्रसिद्धत्वेऽपि तत्र तादृशविषयितानिरूपकतावच्छेदकत्वविरहादिति ।

असम्भवादिति । ननु विपरीतबाधत्वादिकमादाय लक्षणसमन्वयसम्भवे कथमसम्भव इति चेत् ।

सत्यम् । तथा सति ह्रदो धूमवान् वह्नेरित्यादौ बाधविशिष्टव्यभिचारेऽतिव्याप्तेः । बाधविशिष्टव्यभिचारत्वावच्छिन्नाविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं न शुद्धव्यभिचारविषयकत्वं बाधविषयकत्वं वा किन्तु व्यभिचारविशिष्टबाधविषयकत्वमिति तद्घटितत्वस्य तत्र सत्त्वात्, अतः स्वावच्छिन्नविषयित्वव्यापकविषयिताशू(१)न्यत्वावच्छिन्नाविषय-

---

(१) एतेन एकरूपेण प्रतिबन्धकत्वाऽनङ्गीकारेऽपि सर्वं गगनवदित्यत्र गगनाभाववद्घटादिरूपबाधे लक्षणसमन्वयः, तादृशबाधविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकगगनाभाववत्पटत्वावच्छिन्नविषयितानिरूपकतावच्छेदकं तादृशपटत्वादिकं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं च तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वादित्यसम्भवाभिधानमसङ्गतमिति परास्तम् । बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वविवक्षाया आवश्यकतया गगनाभाववत्पटत्वादेर्विशिष्टान्तरतावच्छेदकत्वाऽसम्भवादिति ।

यत्तु यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताव्यापकप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत्तद्रूपवृत्तिनिरूपकताकविषयिताशून्यज्ञानवृत्तिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं "इतरवारकपर्याप्तिनिवेशय" तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपविशिष्टत्वं लक्षणम् । सर्वत्र दोषतावच्छेदकगतसमुदायत्वमादाय लक्षणसमन्वयः । तत्र विशिष्टान्तरं मेयत्वविशिष्टव्यभिचारादिकं तद्घटकसमुदायगतसमुदायत्वस्य व्यभिचारत्वगतसमुदायत्ववृत्तिनिरूपकताकशुद्धव्यभिचारविषयिताशून्यमेयत्वविशिष्टो व्यभिचार इति ज्ञानीयविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वात्, यद्रूपपदेन मेयत्वविशिष्टव्यभिचारत्वगतसमुदायत्वोपादाने विशिष्टान्तररूपं शुद्धव्यभिचारत्वगतसमुदायत्वमपीति तदवच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयकप्रतीतावभावान्नातिव्याप्तिः, इतरवारकपर्याप्त्यनिवेशादिति कथमसम्भव इति ।

तन्न, तथापि बाधविशिष्टव्यभिचारादावतिव्याप्तिवारणाय विशिष्टान्तरताघटकप्रतीतौ यद्रूपवृत्तिनिरूपकताकविषयित्वाव्यापकविषयिताशून्यत्वस्य निवेशनीयतया तादृशविशिष्टान्तराऽप्रसिद्ध्याऽसम्भवस्य दुष्परिहरत्वात् ।

व्यभिचारत्वादेरेव तथाविधविषयिताप्रतिबन्धकतावच्छेदकत्वात्, तस्य च व्य- भिचारत्वाद्यवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्।

---

कत्वमिति विशिष्टतावच्छेदकत्वमेव विशिष्टान्तरत्वे तात्पर्यम्, अत एव विपरीतव्याप्त्यादिकं न विशिष्टान्तरतावच्छेदकमिति तुल्यं ...मिति ध्येयम्।

अयमर्थमेव विवृणोति व्यभिचारत्वादेः—विपरीतविशिष्टव्यभिचारत्वादेरेवेति। एवकारेण बाधत्वादेः विपरीतव्यभिचारत्वस्य च व्यवच्छेदः। ननु विपरीतव्यभिचार- त्वस्य कथं व्यवच्छेदस्तस्य तथाविधप्रतिबन्धकतावच्छेदकत्वादिति वाच्यम्। इतो- त्तरत्वात्। तथाविधेति। स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदक- त्वेत्यर्थः। तस्य चेति। व्यभिचारत्वस्य च विपरीतविशिष्टव्यभिचारत्वस्य चेत्यर्थः।

अत्रेदं बोध्यम्। ह्रदे वह्न्यभावः ह्रदो वह्न्यभाववानिति निश्चययोरेकरूपेण प्रतिबन्धकत्व- मिति प्राचीनमताऽभिप्रायेण प्रकृत "अत" इत्यादिः। तर्हि विपरीतदोषस्य विशिष्टान्तरत्वं, तद्घटितत्वस्य दोषे सत्त्वाल्लक्षणसमन्वयः। प्राचीनमतानुसारेण प्रतिबन्धकत्वं न त्वेकरूपेणेति मतेनाऽसम्भवो दृढः परन्तु प्राचीनमतेऽसम्भवविरहेऽपि अव्याप्तिरस्त्येव। तथाहि घटो गुणकर्मान्यत्वविशिष्टसत्ताभाववानित्यनुमितौ विशिष्टसत्तावद्घटस्यैव बाधत्वं, न तु घटवृत्ति- विशिष्टसत्तादेः, तस्य गुणादिसाधारण्यात्, तथा च तत्र विशिष्टान्तराऽप्रसिद्ध्या विशिष्टस- त्तावद्घटरूपबाधेऽव्याप्तिरिति ध्येयम्(१)।

---

यद्यपि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं यद्रूपावच्छिन्नविषयकत्वमित्यस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकं यद्रूपावच्छिन्नविषयितान्यापकत्वमित्यर्थः। तथाच बाधविपरीतबाधयोरेकरूपेण प्रतिबन्धकत्वाभावेऽपि लक्षणसमन्वयः सम्भवति। तथाहि—स्वावच्छिन्नविष- यकत्वावच्छिन्नप्रतिबन्धकतायां विशिष्टान्तरत्वेनाऽभिमतविशिष्टविषयिताव्यापकत्वं न स्वरूपसम्बन्धेन किन्तु स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वसम्बन्धेन। एवं च ह्रदे वह्न्य- भाव इति निश्चयस्य ह्रदो वह्न्यभाववानितिनिश्चयस्य चैकरूपेण प्रतिबन्धकत्वाऽभावेऽपि एकधर्मावच्छिन्नं प्रत्येव प्रतिबन्धकतया ह्रदवृत्तिवह्न्यभाववत्त्वावच्छिन्नविषयकनिश्चये सर्वत्र वह्न्यभाववद्ह्रदत्वावच्छिन्नविषय- कत्वावच्छिन्नप्रतिबन्धकतायाः सत्त्वेन तादृशप्रतिबन्धकतात्वव्यापकत्वस्य ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयि- ताव्यापकत्वे सत्त्वेन तस्य विशिष्टान्तरत्वसम्भवात्, तद्घटितत्वस्य बाधे सत्त्वात्। एवं सर्वं गगनवदित्यत्रापि गगनाभाववद्घटत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतात्वव्यापकत्वस्य गगनाभाववद्घटत्वावच्छिन्नविष- यिताव्यापकत्वे सत्त्वेन तत्रापि लक्षणसमन्वयः। एवं व्यभिचारघटितबाधे न नाऽव्याप्तिः, तादृशबाधत्वाव- च्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताया उक्तसम्बन्धेन शुद्धव्यभिचारविषयकनिश्चयेऽभावेन तद्विषयिता- व्यापकत्वे तादृशप्रतिबन्धकतात्वव्यापकत्वाभावेन शुद्धव्यभिचारस्य विशिष्टान्तरत्वाभावात्, विपरीतव्यभि- चारघटितबाध एव तादृशविशिष्टान्तरमिति तद्घटितत्वस्य तत्र सत्त्वादिति।

तदपि न, उक्तातिव्याप्तेः। तथाचाऽसम्भवो दुर्वार एवेति ध्येयम्।

(१) केचित्तु ह्रदो वह्न्यभाववान्—ह्रदे वह्न्यभाव इतिनिश्चययोर्नैकरूपेण प्रतिबन्धकत्वम्। अप्रामा- ण्यज्ञानादीनामननुगतरूपेणोत्तेजकत्वात्। तथाहि—वह्न्यभावाभाववद्विशेष्यकत्वावच्छिन्नवह्न्यभावप्रकारक- त्वस्वरूपाऽप्रामाण्यग्रहस्य स्वरूपसम्बन्धावच्छिन्नविषयतासम्बन्धेन ह्रदाभाववद्विशेष्यकत्वावच्छिन्नं यत्तादृश- सम्बन्धेन ह्रदप्रकारकत्वं तदाऽऽत्मकाऽप्रामाण्यज्ञानस्याच प्रातिस्विकरूपेणोत्तेजकत्वादित्याहुः।

तन्न समीचीनम्। वह्न्यभावत्वावच्छिन्नविषयतायामप्रामाण्यज्ञानाभावस्याऽनुगतरूपेणैव निवेशात्।

ननु स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्व–स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वोभयाभावः "केवलान्वयी यस्य स्वस्य" तद्धर्मवत्त्वमेव विवक्ष्यताम् , एवं चैकरूपेण प्रतिबन्धकत्वाभावपक्षे नाऽव्याप्तिरतिव्याप्तिर्वेति चेन्न ।

स्वस्वस्याऽननुगततया प्रथमस्वपदेन बाधत्वस्य द्वितीयस्वपदेन व्यभिचारत्वादेरप्युपादातुं शक्यतयाऽसम्भवापत्तेः, व्यभिचारत्वादेर्बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन व्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वेन चोभयाभावमात्रस्य केवलान्वयित्वाऽसम्भवात् । यत्किञ्चिदुभयाभावस्य केवलान्वयित्वेन लक्षणसमन्वयसम्भवेऽपि वह्नित्वावच्छिन्नाद्येकदेशेऽतिप्रसङ्गात् । न च स्वतादात्म्य–निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वोभयसम्बन्धेन धर्मविशिष्टधर्मवत्त्वं विवक्षणीयम् , तथाच नोक्तदोष इति वाच्यम् । उक्तोभयसम्बन्धस्य घटत्वादेर्व्याभिकरणतया तेन सम्बन्धेन घटत्वाभावस्य घटत्वे सत्त्वेनाऽतिव्याप्तेः । न च विशेष्यदलविरहादेव घटत्वे नातिप्रसङ्ग इति वाच्यम् । यथाश्रुतस्य तस्याऽसम्भवग्रस्तत्वादिति ध्येयम् ।

नन्वत्र स्वावच्छिन्नविषयकत्वावच्छिन्नाः यावत्यः प्रतिबन्धकताः तत्प्रत्येकं यद्रूपघटकतावच्छेदकरूपावच्छिन्नविषयितात्वव्यापिकाः तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेवोच्यतां तावतैवाऽसंभवस्य वारणसंभवात् , घटकतावच्छेदकत्वं च तदवच्छिन्नाविषयकविषयकप्रतीतिविषयतावच्छेदकत्वम् । व्यापकता च स्वावच्छेदकत्वसंबन्धेन, तथाच वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्ना यावत्यः प्रतिबन्धकताः "तत्प्रत्येकं केवलबाधप्रतिबन्धकतैव" तदनतिरिक्तवृत्तिमेयत्वविशिष्टबाधादिविषयित्वमिति नाऽप्रसिद्धिः । एवं च तादृशबाधादिनिश्चयप्रतिबन्धकतायां मेयत्वविशिष्टबाधत्वादिरूपयद्रूपावच्छिन्नघटकशुद्धबाधादिविषयितात्वव्यापकत्वसत्त्वाद् बाधे तदघटितत्वसत्त्वाल्लक्षणसमन्वयः । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताव्यापकव्याप्तिज्ञाननिरूपितप्रतिबन्धकतायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नघटकशुद्धव्यभिचारविषयितात्वव्यापकत्वसत्त्वेन यद्रूपपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्तुं शक्यतया स्वस्य स्वाऽघटितत्वाभावान्नातिव्याप्तिः ।

एवं व्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, तादृशबाधत्वावच्छिन्नविषयित्वावच्छिन्नयावत्प्रतिबन्धकतान्तर्गता बाधप्रतिबन्धकता व्यभिचारप्रतिबन्धकता च, तत्प्रत्येकं तादृशबाधघटकव्यभिचारविषयिताव्यापकत्वं नास्ति तादृशबाधविषयिताव्यापकत्वस्य सत्त्वे

---

अप्रामाण्यज्ञानाभावश्च स्वविशेष्यीभूतज्ञाननिरूपितत्व–स्वविशिष्टधर्मावच्छिन्नप्रकारतात्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । "वन्ह्यभावत्वादिरूप"धर्मे स्ववै० स्वीय "वन्ह्यभाव"प्रकारकत्वनिष्ठप्रकारतानिरूपिता या "वह्न्यभावप्रकारतानिष्ठा"ऽवच्छेदकता तद्वत्त्वसम्बन्धेन, तद्वत्ता च स्वनिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्न "प्रकारतात्वनिष्ठाऽ"वच्छेदकतावत्त्व—स्वनिरूपितविशेष्यत्वनिष्ठाऽवच्छेदकतानिरूपितधर्मिनिष्ठावच्छेदकतानिरूपितवन्ह्यभावाभावनिष्ठा"वच्छेदकतावत्त्वोभयसम्बन्धेन । अवच्छेदकतावत्ता च स्वनिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेदकतावत्त्व—स्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वाऽन्यतरसम्बन्धेनेति ध्येयम् ।

ऽपि न तस्य तादृशबाधघटकत्वं (१)निरुक्तं, किन्तु मेयत्वविशिष्टतादृशबाधघटकताद्विषयिताव्यापकत्वमेवेति तस्य तदघटितत्वात् ।

एवं बाधविशिष्टव्यभिचारादौ नातिव्याप्तिः, तादृशव्यभिचारविषयिताव्यापकयावत्प्रतिबन्धकतान्तर्गता बाधप्रतिबन्धकता व्यभिचारप्रतिबन्धकता च, तत्प्रत्येकं बाधविशिष्टव्यभिचारघटक–शुद्धव्यभिचार–शुद्धव्यभिचारविषयितात्वव्यापकत्वसत्त्वात् ।

एवं च सति विशिष्टद्वयाऽघटितत्वमपि न निवेशनीयम् । वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयिताव्यापिका प्रकृताऽनुमितिप्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नैव, तत्र च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपोक्तविशिष्टघटकतावद्वन्ह्यभाववज्जलवद्ह्रदविषयितात्वव्यापकत्वस्य सत्त्वेन स्वस्य स्वाऽघटितत्वाभावेन तादृशविशिष्टेऽतिव्याप्तिविरहात् ।

एवं व्यापकत्वमपि स्वरूपसम्बन्धरूपाऽवच्छेदकतासम्बन्धेनैव विवक्षणीयम्, तेन रूपं नीलरूपवदित्यादौ नीलरूपाभाववन्नीले नातिव्याप्तिः, तत्र नीलरूपाभाववन्नीलत्वविशिष्टविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकता नीलरूपाभाववन्नीलत्वविशिष्टविषयकनिश्चयवैशिष्ट्यावच्छिन्ननीलत्ववद्रूपत्वावच्छिन्नविषयकनिश्चयप्रतिबन्धकतैव, तत्र नीलरूपाभाववन्नीलत्वविशिष्टघटकनीलत्ववद्रूपत्वविशिष्टविषयितात्वव्यापकत्वस्य स्वस्य स्वाऽघटितत्वाऽभावात् ।

अनुगमस्तु—पदार्थविशिष्टपदार्थवत्त्वम्, वै॰ स्वतादात्म्य–स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । रूपे प्रतिबन्धकतात्वव्यापकता च स्वविशिष्टरूपवत्वसम्बन्धेन, रूपे स्ववै॰ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन, तादृशरूपवत्त्वं च स्वावच्छिन्नविषयिताव्यापकत्वसम्बन्धेने(२)ति चेन्न ।

---

(१) स्वघटकत्वं स्वावच्छिन्नाविषयकप्रतीतिविषयत्वविशिष्टस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयतानिरूपकत्वम् ।

(२) नन्वेवं गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः, गगनाभाववत्तादृशघटत्वात्मकबाधतावच्छेदकरूपे स्वतादात्म्यसत्त्वेऽपि द्वितीयसम्बन्धाभावात्, तथाहि तादृशबाधविषयित्वाव्यापकप्रकृतानुमितिप्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतैव, तत्र च तादृशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकाऽभाववत्तादृशघटत्वावच्छिन्नविषयितात्वव्यापकत्वस्य सत्त्वात्, स्वस्य च स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्, एवं प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य लक्ष्यत्वे तत्राऽव्याप्तिः, तत्र तादृशसत्प्रतिपक्षनिश्चयप्रतिबन्धकतायां तादृशसत्प्रतिपक्षघटकप्रतिहेतुव्यापकसाध्याभावविषयितात्वव्यापकत्वस्य सत्त्वादिति वाच्यम् । स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्व–स्वावच्छिन्नविषयकत्वावच्छिन्नतादृशप्रतिबन्धकताविशिष्टविषयितानिरूपकताऽनवच्छेदकत्व–स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावच्छेदकधर्मावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताविशिष्टविषयितानिरूपकतानवच्छेदकत्वैतत्त्रितयाभाव–स्वतादात्म्योभयसम्बन्धेन पदार्थवैशिष्ट्यस्य विवक्षणीयत्वात् । विषयितायां प्रतिबन्धकतावै॰ स्वविशिष्टविषयितावदन्यत्व–स्वनिरूपितप्रति-

निरवच्छिन्नवन्ह्यभाववद्ह्रदत्वस्य दोषत्वमतेऽसंभवः, तादृशबाधनिश्चयप्रतिबन्धकतायां तादृशबाधघटकवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितात्वव्यापकत्वसत्वात्, स्वस्य स्वाऽघटितत्वाऽभावात् । यदि चोक्तदोषवारणाय तादृशप्रतिबन्धकतायां "स्वरूपसम्बन्धरूपाऽवच्छेदकत्वं परित्यज्य" स्वघटकविषयितात्वव्यापकत्वं विवक्ष्यते तदा नाऽसम्भवः, तादृशबाधादिज्ञानस्य न निरवच्छिन्नविषयिताशालित्वेन प्रतिबन्धकत्वं, किन्तु अव्याप्यवृत्तित्वज्ञानानन्तर्भाव्य विरोधिविषयकत्वेनैवेत्युच्यते, तदाऽसाधारण्यविशेषसङ्ग्रहार्थं विषयितायामसाधारण्यविषयिताभिन्नत्वघटिताभयाभावस्याऽनिवेशेऽपि मेयत्वविशिष्टाऽसाधारण्येऽतिव्याप्तिवारणार्थं पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वा-ऽसाधारण्यविषयिताशालित्वोभयाभाववत्त्वावच्छि-

---

बध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन । अथ प्रथमसम्बन्धघटकविषयितायां स्ववै० स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वसम्बन्धेन, तत्सम्बन्धघटकविषयितावत्त्वं च स्वव्याप्यत्व-स्वाव्यापकत्वोभयसम्बन्धेन, विषयितायां कारणतावै० स्वावच्छेदकत्व-स्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन. विषयितायां स्ववै० अवच्छेदकतासम्बन्धेन, विषयितावत्त्वं च स्वव्याप्यत्व-स्वाऽव्यापकत्वोभयसम्बन्धेन ।

अत्र प्रथमविशिष्टविषयितावदन्यत्वानिवेशाद् ह्रदो वह्निमानित्यत्र वन्ह्यभाववद्वन्ह्यभाववद्ह्रदे नातिव्याप्तिः, अन्यथा तादृशह्रदत्वे स्वतादात्म्यस्य-स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकह्रदो वह्निमानितिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितानिरूपकतावच्छेदकत्वप्रयुक्तत्रितयाऽभावस्य च सत्त्वेनाऽतिव्याप्तेः, तन्निवेशे च तादृशप्रतिबन्धकताविशिष्टवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्याप्यत्वस्य तदव्यापकत्वस्य च सत्त्वेन तादृशविषयिताविशिष्टान्यत्वाभावान्नातिव्याप्तिः, एवं द्वितीयस्य तस्य निवेशात् तत्रैव वन्ह्यभावव्याप्यवद्वन्ह्यभावव्याप्यवद्ह्रदे नातिव्याप्तिः ।

नचैवमसाधारण्येऽव्याप्तिः, असाधारण्यविषयिताव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतायामसत्त्वात्, असाधारण्यतावच्छेदकस्य स्वपदेन धर्तुमशक्यतया तादात्म्यघटितोभयसम्बन्धेन कस्यापि पदार्थस्य तादृशदोषतावच्छेदकेऽभावादिति वाच्यम् । द्वितीयसम्बन्धघटकप्रतिबन्धकतायां पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वाऽसाधारण्यविषयिताशालित्वोभयाभाववत्त्वावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वस्य विवक्षणात्, तथाच तादृशनिश्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकरूपं वह्निव्यापकीभूताभावप्रतियोगिजलवद्ह्रदत्वं तद्घटकाऽसाधारण्यत्वावच्छिन्नविषयितामात्रे तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकत्वस्य सत्त्वाल्लक्षणसमन्वयः ।

नचैवमपि अभावो गगनत्ववानाधेयत्वादित्यादौ हेतुमत्पक्षघटिताऽसाधारण्येऽव्याप्तिः, तत्र तादृशाऽसाधारण्यविषयितावच्छिन्नप्रतिबन्धकतात्वव्यापकत्वस्य तादृशाऽसाधारण्यतावच्छेदके सत्त्वात्, तादृशधर्मघटकतदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकाऽऽधेयत्ववदभाववत्त्वावच्छिन्नविषयितासामान्ये तादृशप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वात्, स्वस्य स्वावच्छिन्नाऽघटितत्वाभावादिति वाच्यम् । रूपनिष्ठप्रतिबन्धकतात्वव्यापकतावच्छेदकीभूतस्वविशिष्टरूपवत्त्वसम्बन्धघटकरूपवत्वघटकत्वावच्छिन्नविषयितात्वव्यापकत्वरूपसम्बन्धघटकरूपवत्वघटकत्वावच्छिन्नविषयितात्वव्यापकत्वरूपसम्बन्धघटकविषयितायामसाधारण्यविषयिताभिन्नत्वाऽसाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभावस्य विशेषणीयत्वात्, तथाच तादृशप्रतिबन्धकतात्वव्यापकं नाऽसाधारण्यतावच्छेदकं तद्घटकतावच्छेदकाऽऽधेयत्ववदभावत्वावच्छिन्नविषयितायामुभयाभावविरहात्, असाधारण्यतावच्छेदकं घटकतावच्छेदकं न भवत्यतो मेयत्वविशिष्टतादृशाऽसाधारण्यतावच्छेदकमेव तादृशमिति तदवच्छिन्नाऽघटितत्वस्य सत्त्वान्नाव्याप्तिरिति तत्त्वम् ।

**न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकोऽयस्य एवंभूतं यद्यत्त्वं "प्रमेयत्वविशिष्टव्यभिचारत्वादि" तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य विवक्षणीयतया न दोष इति वाच्यम् ।**

---

कविषयिताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन तादृशरूपाविशिष्टरूपवत्त्वं प्रतिबन्धकतायां निवेशनीयम् । एवं विशिष्टद्वयाऽघटितत्वमपि निवेशनीयम् । एवं रूपं नीलरूपवदित्यत्र नीलरूपाभाववन्नीलेऽतिव्याप्तिवारणाय तत्तद्विषयिताभेदोऽपि विवक्षणीयः, तथा च 'एतेन'कल्पापेक्षया गौरवमिति दिक् ।

स्वत्वं प्रतियोगिकोटौ निवेश्याऽसम्भवं परिहर्तुं शङ्कते **न चेति** । वाच्यमित्यनेनाऽन्वयः । अत्र प्रतियोगिनि स्वत्वं निविष्टम् । एवं चोदासीनघटादावतिव्याप्तिवारणाय विशेष्यदलमावश्यकम् । अत्र च स्वत्वं लक्ष्यतानवच्छेदकीभूतैकार्थपरम् । **प्रतिबन्धकतासामान्यावच्छेदकेति** । प्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तीत्यर्थः । **तदवच्छिन्नाविषयकेति** । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकेत्यर्थः । **विवक्षणीयतयेति** । यद्रूपे इत्यादिः । **न दोष इति** । नाऽसम्भव इत्यर्थः ।

तथा च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवंभूतं यद्यत्त्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितवर्तिप्रतिबन्धकता तद्रूपवत्त्वं समुदितलक्षणार्थः ।

ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ह्रदे लक्षणसमन्वयः, तथा हि—स्वं—मेयत्वविशिष्टबाधत्वं—तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकः अथ च [ स्वं—तदेव ] मेयत्वविशिष्टबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकः शुद्धबाधत्वादिरूपो धर्मः तत्कं यद्यत्त्वं मेयत्वविशिष्टबाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ह्रदत्वे सत्वेन यद्रूपपदेन तस्य धारणात् ।

तादृशप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टबाधत्वादौ विरहेण यद्रूपपदेन तस्य धारणाऽसम्भवान्मेयत्वविशिष्टबाधादौ च नातिव्याप्तिः ।

एवमुक्तव्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, स्वपदेनोक्तव्यभिचारघटितबाधत्वं धर्तुं न शक्यते, तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितानिरूपकतावच्छेदकस्य अथ च तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याऽप्रसिद्धेः, किन्तु मेयत्वविशिष्टतादृशबाधत्वमेव, तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं अथ च मेयत्वविशिष्टतादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धतादृशबाधत्वं तत्कं यद्यत्त्वं—मेयत्वविशिष्टतादृशबाधत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशबाधत्वे सत्वेन यद्रूपपदेन तस्योपादानसम्भवादिति ।

अनुगमस्तु धर्मवृत्तिधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वम् । वृत्तित्वं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व—स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताव्यापकत्वोभयसम्बन्धेन । व्यापकता च स्वावच्छिन्नविषयिताव्यापकत्वसम्बन्धेन ।

इदं तु बोध्यम् । स्वावच्छिन्नविषयकत्वावच्छिन्नत्वन्त्राऽवच्छिन्नत्वं व्यापकतारूपं ग्राह्यम्, स्वरूपसम्बन्धरूपाऽवच्छेदकत्वप्रवेशे वह्न्यभाववद्ध्रदादिरूपबाधायसङ्ग्रहः, मेयत्वविशिष्टतादृशबाधविषयितायाः बाधविषयितात्वेन पक्षे साध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां, पक्षे हेतुवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां चाऽवच्छेदकत्वेन तादृशप्रतिबन्धकताद्वयाऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकस्य तादृशस्याऽप्रसिद्धेः, तन्निवेशे च मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापिका प्रतिबन्धकता पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतैवेति नाऽसम्भवः ।

एवं द्वितीयाऽवच्छेदकत्वमपि अनतिरिक्तवृत्तित्वरूपं ग्राह्यम् । अन्यथा वह्न्यभाववद्ध्रदादिरूपबाधायसङ्ग्रहः, स्वपदेन बाधत्वादेर्धर्तुं शक्यतया तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्ध्रदत्वावच्छिन्नविषयितानिरूपकतावच्छेदकं अथ च वन्ह्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्ध्रदत्वं तत्कं यत्त्वं वन्ह्यभाववद्ध्रदत्वादिकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ध्रदत्वे विरहात्(१) ।

---

(१) एवं व्यभिचारघटितबाधाऽसङ्ग्रहश्च, स्वपदेन व्यभिचारघटितबाधत्वस्य धर्तुं शक्यत्वात्तादृशबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकताद्वयेऽपि तज्ज्ञानीयव्यभिचारविषयितायाः अवच्छेदकत्वात्, व्यभिचारत्वस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वात् । यद्रूपावच्छिन्नविषयितासामान्यं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकमिति विवक्षणेन व्यभिचारविषयितासामान्यान्तर्गतशुद्धव्यभिचारज्ञानीयतद्विषयितायास्तादृशबाधप्रतिबन्धकतावच्छेदकत्वाभावेन तद्दोषवारणे बाधायसङ्ग्रहः मेयत्वविशिष्टबाधत्वावच्छिन्नप्रतिबन्धकतायां जातिमान् वन्ह्यभाववान् इति ज्ञानीयतद्विषयितायास्सामान्यान्तर्गतायाः अवच्छेदकत्वाभावात्, अतः स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयितासामान्यमवच्छेदकमिति विवक्षणीयम् । एवं च मेयत्वविशिष्टव्यभिचारघटितबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाप्रसिद्धिः, उभयत्र तन्निवेशे धूमव्यभिचारी वन्हिर्धूमवान् वन्हेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः तत्र मेयत्वविशिष्टव्यभिचारविषयितासामान्यावच्छिन्ना प्रतिबन्धकताद्वयी एका व्याप्तिग्रहप्रतिबन्धकता अन्या साध्यवताग्रहनिरूपिता, मेयत्ववान् धूमाभाववान् मेयत्ववान् धूमव्यभिचारीवह्निरिति ज्ञानविशिष्टज्ञानत्वावच्छिन्ना, तयोः व्यभिचारविषयितासामान्यस्यावच्छेदकत्वाभावात् स्वपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्तुमशक्यतयाऽन्यस्यैव(२) तादृशतया तदवच्छिन्नाघटितत्वस्य तत्र सत्त्वात्, तथाच पूर्वत्रानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशावश्यकत्वे उत्तरत्रापि तदावश्यकतेति । अत्र स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितायां स्वपदग्राह्यधर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि विवक्षणीयम्, अन्यथा ह्रदे वन्ह्यभावः—ह्रदो वन्ह्यभाववानिति ज्ञानयोरेकरूपेण प्रतिबन्धकत्वे वन्ह्यभाववद्ध्रदे, सर्वं गगनवदित्यत्र "बाधनिश्चयस्याऽवच्छिन्न-

---

(२) मेयत्वविशिष्टं यद्धूमाभाववद्वृत्तित्वं तद्वद्वन्हित्वस्येत्यर्थः ।

नन्वत्र एवंभूतं यद्यत्त्वं तद्भिन्नत्वमेव कुतो न लक्ष्यतावच्छेदकरूपे निवेश्यते किं तदघटितत्वनिवेशेन । न च मेयत्वविशिष्टव्यभिचारत्वभिन्नत्वस्य शुद्धव्यभिचारत्वेऽसत्त्वादसम्भव इति वाच्यम् । यद्रूपपदेन यादृशसमुदायत्वपर्यन्तनिवेशस्याऽऽवश्यकतया निरुक्तसमुदायत्वभिन्नत्वस्य यद्रूपगतसमुदायत्वे निवेशेनैवाऽदोषात् । तथाच स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताव्यापकप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक—तादृशविषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्यत्त्वं तद्भिन्नप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टत्वं समुदितार्थः । एवं मेयत्वविशिष्टव्यभिचारत्वगतसमुदायत्वं स्वपदग्राह्यं तद्भिन्नं च शुद्धव्यभिचारत्वगतसमुदायत्वमिति व्यभिचारादौ लक्षणसमन्वयः ।

मेयत्वविशिष्टव्यभिचारादौ च नातिव्याप्तिः, स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वगतसमुदायत्वभिन्नत्वस्य स्वस्मिन्नसत्त्वात् ।

व्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, व्यभिचारघटितबाधत्वगतसमुदायत्वस्य धूमव्यभिचारिवह्निमत्त्वगतसमुदायत्वाभिन्नत्वादिति चेन्न ।

व्यभिचारविशिष्टबाधेऽतिव्याप्तेः, तत्र हि व्यभिचारविशिष्टबाधत्वगतसमुदायत्वं स्वपदेन न धर्तुं शक्यते तादृशबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकतादृशबाधत्वावच्छिन्नविषयित्वाव्यापक-विषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदक-तद्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाऽप्रसिद्धेः, स्वपदेन व्यभिचारवैशिष्ट्यगतसमुदायत्वस्य धारणे तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकतादृशविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक—तादृशविषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य शुद्धव्यभिचारत्वगतसमुदायत्वे प्रसिद्धावपि तादृशव्यभिचारवैशिष्ट्यगतसमुदायत्वभेदस्य व्यभिचारविशिष्टबाधत्वगतसमुदायत्वे सत्त्वात् । तदघटितत्वनिवेशे तु नायं दोषः,

---

विशेष्यतानिरूपितगगनाभावत्वावच्छिन्नप्रकारताकत्वेनैव प्रतिबन्धकतया" गगनाभाववद्घटत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यातातिरिक्तवृत्तिगगनाभाववत्पटत्वावच्छिन्नाविषयित्वाव्यापकविषयिताशून्य—ज्ञानीयविषयितानिरूपकतावच्छेदकतादृशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकगगनभाववद्घटत्वस्य प्रसिद्ध्या गगनाभाववद्घटरूपबाधेऽव्याप्तेश्च(१) । एवं यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वमपि निवेश्यम् । अन्यथा ह्रदो वन्हिमानित्यत्र जातिमद्वन्ह्यभाववद्ध्रदेऽतिव्याप्तेः ।

---

(१) अत्रेदं बोध्यम् । एवं निवेशे पर्वतो वन्ह्यभाववान् धूमाभावादित्यत्र वन्हिधूमवत्पर्वते "स्वरूपासिद्धिबाधानात्मके" ऽतिव्याप्तिः । स्वपदेन तादृशविशिष्टरूपस्य धर्तुमशक्यतया मेयत्वविशिष्टतादृशविशिष्टपर्वतत्वस्यैव धर्त्तव्यतया तदघटितत्वस्योक्तविशिष्टे सत्त्वात् । तदनिवेशे तु तादृशपर्वतत्वं स्वपदग्राह्यं भवति धूमवत्पर्वतकालीनवह्निमत्पर्वतस्यैव विशिष्टान्तरस्य प्रसिद्धेः । न च सर्वं गगनवदित्यत्र गगनाभाववद्घटेऽव्याप्तिरिति वाच्यम् । व्यभिचारघटितबाध इवात्राऽव्याप्तेरिष्टत्वात् ।

तथासति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधत्वाद्यव इतरवारकपर्याप्त्यनिवेशेन ताहशव्यभिचारवैशिष्ट्यगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यत्वस्य व्यभिचारविशिष्टबाधज्ञानेऽसत्त्वात् । अत एव "तथासतीत्यादिना" व्यभिचारघटितबाधेऽव्याप्तिरपि सङ्गच्छते इति ।

अत एव—ननु स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदकत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्किञ्चिद्रूपकं यद्यत्त्वं तदवच्छिन्नविषयितावत्त्व—तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयाभाववत्प्रतीतिविषयकत्वं यद्रूपे निवेश्यताम्, व्यभिचारादिदोषविषयकनिश्चये स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितावत्त्वविरहेणोभयाभावसत्त्वाद् व्यभिचारादौ लक्षणसमन्वयः ।

मेयत्वविशिष्टव्यभिचारनिश्चये चोभयसत्त्वान्नातिव्याप्तिः । व्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, तत्र धूमव्यभिचारिवह्निमत्त्वस्य स्वपदेन धर्त्तुं शक्यत्वेऽपि ताहशबाधनिश्चये धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयितासत्त्वेऽपि तदवच्छिन्नविषयित्वाव्यापकधूमाभावत्वावच्छिन्नविषयितायाः सत्त्वेनोभयाभावसत्त्वात् ।

नचैवं मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारघटोभयविषयकसमूहालम्बननिश्चये मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितासत्त्वेऽपि तदवच्छिन्नविषयित्वाव्यापकघटत्वावच्छिन्नविषयितायाः सत्त्वेनोभयाभावसत्त्वादिति वाच्यम् । निरुक्तोभयाभाववद्यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपितनिरूपकतावच्छेदकत्वस्य यद्रूपे निवेशेनैवोक्तातिव्याप्तिवारणसम्भवादिति—समाहितम् । उक्ताऽतिव्याप्तितादवस्थ्यापातात्, तत्र विशिष्टबाधत्वस्य स्वपदेन धर्त्तुमशक्यत्वात्, व्यभिचारवैशिष्ट्यस्य स्वपदेन धर्त्तुं शक्यत्वेऽपि तदवच्छिन्नविषयित्वाव्यापकबाधविषयितायास्तत्र सत्त्वेनोभयाभावसत्त्वादिति ध्येयम् ।

अथाऽत्र ताहशो यः कश्चित्स्वानवच्छिन्नविषयतावच्छेदको यस्य एवंभूतं यद्यत्त्वं तदनवच्छिन्नविषयतावच्छेदकत्वमेव निवेश्यतामिति चेन्न ।

याहशस्थले घटविषयकं ज्ञानं नियमतो व्यभिचारविशिष्टबाधविषयकं सत्प्रतिपक्षविषयकं च ताहशस्थले घटेऽतिव्याप्तिः, घटत्वावच्छिन्नाविषयिताव्यापिका प्रतिबन्धकता बाधप्रतिबन्धकता—सत्प्रतिपक्षप्रतिबन्धकता—व्यभिचारप्रतिबन्धकता च, ताहशप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं न बाधत्वादिकं किन्तु बाधविशिष्टव्यभिचारविशिष्टसत्प्रतिपक्षत्वादिकं तच्च न स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकमिति स्वपदेन घटत्वं धर्त्तुं न शक्यतेऽपि तु बाधवैशिष्ट्यमेव तदनवच्छिन्नविषयतावच्छेदकत्वस्य घटत्वे सत्त्वात्, अतस्तदवच्छिन्नाविषयकत्वनिवेशः । तथाच बाधवैशिष्ट्यमादायैव तत्राऽतिव्याप्तिवारणम् । एवं याहशस्थले बाधज्ञानं सत्प्रतिपक्षज्ञानं च नियमतः समूहालम्बनमेव भवति, तत्र बाधे सत्प्रतिपक्षे चाऽव्याप्तिवारणाय स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशः ।

दूषयति **तथासतीति** । ताहशविवक्षायामित्यर्थः ।

च्छिन्नघटकतावच्छेदकस्य धूमव्यभिचारिवह्निमत्त्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वकत्वादव्याप्तेर्दुर्वारत्वात् ।

---

अव्याप्तेर्दुर्वारत्वादिति । तथाच स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं अथ च धूमव्यभिचारिवह्निमत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं धूमव्यभिचारिवह्नित्वं तत्कं यद्यत्स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वे विरहेण यद्रूपपदेन तादृशबाधत्वस्योपादानाऽसम्भवादव्याप्तेर्दुर्वारत्वादिति भावः ।

नन्वत्र तदवच्छिन्नाऽघटितत्वं तदवच्छिन्नाऽपर्याप्तविषयतापर्याप्त्याश्रयत्वमेवाऽतो धूमव्यभिचारिवह्निमत्त्वमादाय न तत्राऽव्याप्तिरिति चेन्न ।

एवंसति स्वपदेन बाधवैशिष्ट्यमादाय बाधविशिष्टव्यभिचारेऽतिव्याप्तेरिति ध्येयम् ।

अथात्र तदघटितत्वं न तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं किन्तु तदवच्छिन्नविषयितावत्त्व—तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयाभाववत्प्रतीतिविषयतावच्छेदकत्वम्, तथाचोक्तव्यभिचारघटितबाधे नाव्याप्तिः, तथाहि धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयकप्रतीतौ तादृशं यत्स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नविषयितावत्वसत्त्वेऽपि तदवच्छिन्नविषयित्वाव्यापकं यद्धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयित्वं तच्छून्यत्वाभावेन तादृशोभयाभाववत्प्रतीतिविषयतावच्छेदकत्वस्य तादृशबाधत्वे सत्त्वात् । मेयत्वविशिष्टव्यभिचारादेर्मेयत्वविशिष्टव्यभिचारविषयकप्रतीतौ एवंभूतं यद्यत्स्वं मेयत्वविशिष्टव्यभिचारत्वं तदवच्छिन्नविषयितावत्त्व—तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसत्त्वेन तादृशोभयाभावाऽसत्त्वान्नातिव्याप्तिः । नच मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारोदासीनविषयकसमूहालम्बनप्रतीतौ तादृशविषयित्वाव्यापकं यद्घटादिविषयित्वं तच्छून्यत्वाभावेन तादृशोभयाभावसत्त्वादिति वाच्यम् । तदवच्छिन्नविषयितावत्त्वघटितोभयाभाववत्प्रतीतौ तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वनिवेशान्न कोऽपि दोषः, उक्तसमूहालम्बनप्रतीतौ तदसत्त्वात् । न च ह्रदे वन्ह्यभावः ह्रदो वन्ह्यभाववानितिज्ञानद्वयसाधारणैकप्रतिबन्धकत्वमते असम्भवः, स्वं वन्ह्यभाववद्ह्रदत्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं अथ च वन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकह्रदवृत्तिवन्ह्यभावत्वं एवंभूतं यद्यत्स्वं वन्ह्यभाववद्ह्रदत्वं तदवच्छिन्नविषयितावत्त्व—तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयस्यैव वन्ह्यभाववद्ह्रदविषयकप्रतीतौ सत्त्वात् । (१)एवं गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववद्गगनाभाववदभाववत्कालीनघटरूपबाधेऽव्याप्तिश्च, तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदक—तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितानि-

---

(१) एकरूपेण प्रतिबन्धकत्वास्वीकारे दोषमाह ।

रूपकतावच्छेदकगगनाभाववदभाववद्वृत्तिगगनाभाववद्घटत्वस्य तादृशबाधत्वे सत्वादिति वा-च्यम् । तद्वारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितावच्छेदकत्वं तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदके निवेशनीयत्वात् ।

तथाच पक्षे हेतुमत्ताज्ञानाकालीनत्व–असाधारण्यविषयितावत्वोभयाभावव(१)त्त्वाव-च्छिन्नविषयिताशालिनिश्चयत्वव्यापिका यावत्यः प्रतिबन्धकतास्तत्प्रत्येकप्रतिबन्धकतायां स्व-घटकीभूतयत्किञ्चिद्रूपावच्छिन्नाऽसाधारण्यविषयिताभिन्नत्व–असाधारण्यविषयकत्वावच्छिन्न-प्रतिबन्धकतावच्छेदकत्वोभयाभाववद्विषयितात्वव्यापकस्वरूपसम्बन्धरूपावच्छेदकताकत्वमस्ति, एवंभूतं यत्त्वं तदवच्छिन्नविषयितावत्व–तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभया भाववती या प्रतीतिः स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यतदीयविषयितानिरूपकताव-च्छेदकं यद्रूपमित्यादिलक्षणम् ।

एवं च मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, स्वपदग्राह्यं मेयत्वविशिष्टव्यभिचारत्वं तदवच्छिन्नविषयिताव्यापिका या व्याप्तिज्ञानप्रतिबन्धकता तस्यां तद्घटकीभूतशुद्धव्यभिचा-रत्वावच्छिन्ना या निरुक्तोभयाभाववती विषयिता तत्त्वव्यापकावच्छेदकताकत्वस्य सत्वेन एवंभूतं यत्त्वं मेयत्वविशिष्टव्यभिचारत्वं तदवच्छिन्नविषयितावत्वघटितोभयाभावस्य च मेयत्वविशिष्टव्यभिचारविषयकप्रतीतौ "तद्विषयित्वाव्यापकविषयिताशून्यायां" विरहात्, तदवच्छिन्नविषयित्वाभावादेवोभयाभावस्य शुद्धव्यभिचारविषयकप्रतीतौ सत्वाल्लक्षणसमन्वयः।

एवं व्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, तत्र धूमव्यभिचारिवह्निमत्त्वस्य धर्तुं शक्य-त्वेऽपि तदवच्छिन्नविषयित्वाव्यापकधूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयितायाः सत्वेनाऽव्यापकीभूतविषयिताशून्यत्वाभावप्रयुक्तोभयाभावस्य तादृशबाधनिश्चये सत्वात् ।

एवं व्यभिचारविशिष्टबाधे च नातिव्याप्तिः, तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्न-प्रतिबन्धकता व्यभिचारज्ञानप्रतिबन्धकता बाधनिश्चयप्रतिबन्धकता च तत्तत्प्रतिबन्धकताव्यक्तौ तादृशबाधत्वघटकीभूतव्यभिचारत्व–बाधत्वरूपयत्किञ्चिद्रूपावच्छिन्नविषयितात्वव्यापकावच्छे-दकताकत्वस्य सत्वात् स्वपदेन व्यभिचारविशिष्टबाधत्वस्य धर्तुं शक्यत्वात् ।

अनुगमस्तु–धर्मविशिष्टधर्मवदन्यप्रतीतिविशिष्टरूपवत्त्वम् । धर्मे धर्मवै० स्वतादात्म्य-स्वावच्छिन्नविषयिताशालिपक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्व-असाधारण्यविषयितावत्वोभयाभा-

---

(१) स्वावच्छिन्नविषयकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वघटितोभयाभावनिवेशादसाधारण्य-सङ्ग्रहः । स्वघटकीभूतयत्किञ्चिद्रूपावच्छिन्नविषयितायां असाधारण्यविषयिताभिन्नत्वघटितोभयाभावस्य निवे-शादसाधारण्यविशेषसङ्ग्रहः । स्वावच्छिन्नविषयितावत्वघटितोभयाभाववत्प्रतीतौ स्वावच्छिन्नविषयित्वाव्याप-कविषयिताशून्यत्वनिवेशान्मेयत्वविशिष्टव्यभिचारोदासीनविषयकसमूहालम्बनमादाय न तत्रातिव्याप्तिः । सर्वं गगनवदित्यत्र गगनाभाववद्घटपटादिसङ्ग्रहाय स्वघटकीभूतकिञ्चिद्रूपावच्छिन्नविषयितायां स्वावच्छिन्नविष-यित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य, ह्रदो वन्हिमानित्यादौ जातिमद्वन्ह्यभाववद्ह्रदेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य च निवेशः ।

स्वरूपसम्बन्धरूपावच्छेदकतानिवेशाद्विशिष्टद्वयाघटितत्वमपि न निवेशनीयम्, वन्ह्यभाववज्जलवद्वृत्ति-जलवद्ह्रदत्वघटकीभूतवन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयितायां तादृशविषयिताव्यापकज्ञानवैशिष्ट्यावच्छि-न्नप्रतिबन्धकतावच्छेदकताऽसत्वात् । एवं रूपं नीलरूपवदित्यादौ नीलरूपाभाववन्नीले च नातिव्याप्तिः ।

ववन्निश्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकत्वोभयसम्बन्धेन । प्रतिबन्धकतात्वव्यापकता च स्वविशिष्टरूपवत्त्वसम्बन्धेन । रूपे स्ववै० स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । रूपवत्ता च असाधारण्यविषयिताभिन्नत्व–असाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्स्वविशिष्टविषयितात्वव्यापकावच्छेदकताकत्वसम्बन्धेन । विषयितायां स्ववै० स्वावच्छिन्नत्व–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन । प्रतीतिविशेषणतापन्नभेदप्रतियोगिनि धर्मवत्ता च स्वावच्छिन्नविषयितावत्त्व–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेन । रूपे प्रतीतिवै० स्ववृत्तिविषयितानिरूपकतावच्छेदकत्व-स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिता नास्तीतिप्रतीतिसिद्धाभावीयप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन ।

न च गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः, बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकाऽभाववद्घटत्वावच्छिन्नविषयितासामान्यस्यैव तादृशबाधत्वाद्यवच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकत्वेन बाधत्वादेर्विशिष्टान्तरतावच्छेदकत्वसम्भवादिति वाच्यम् । तादृशप्रतीतिमदन्यत्व–प्रकृतानुमितिप्रतिबन्धकताविशिष्टविषयितानवच्छेदकत्वैतत्त्रितयाभाववत्त्वस्य लक्ष्यतावच्छेदके निवेशनीयत्वात् । विषयितायां प्रतिबन्धकतावै० स्वावच्छेदकत्व–स्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन । विषयितायां स्ववै० स्वानतिरिक्तवृत्तित्व—स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन । विषयितायां जनकतावै० पूर्ववत् इति चेन्न ।

वक्ष्यमाणैतेनकल्पापेक्षयाऽस्याऽतिगुरुत्वादिति ध्येयम् ।

नन्वेवमपि स्वत्वं प्रतियोगिकोटावनिवेश्यानुयोगिकोटावेव निवेश्यम् । एवं च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतासामान्यं यद्रूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयकत्वावच्छिन्नं तद्रूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्रूपवत्त्वं लक्षणार्थः ।

अनुगमस्तु–धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य–स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । प्रतिबन्धकतात्वव्यापकत्वं च स्वविशिष्टधर्मवत्त्वसम्बन्धेन । धर्मे स्ववै० स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्व–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । धर्मवत्ता च स्वावच्छिन्नविषयकत्वावच्छिन्नत्वसम्बन्धेनेति चेन्न ।

गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः, गगनाभाववत्तादृशघटत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकशुद्धाऽभाववत्तादृशघटत्वावच्छिन्नविषयकत्वावच्छिन्नत्वस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्ये सत्त्वात् । एवं जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ह्रदरूपसत्प्रतिपक्षे चाऽव्याप्तिः, निरू-

नच स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नाऽनिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्रूपावच्छिन्नत्वमेव समुदितार्थः ।

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतायाः शुद्धव्यभिचारत्वाद्यवच्छिन्ननिरूपितविषयितायां मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य च स्वस्मिन्नसत्त्वेन मेयत्वविशिष्टव्य-

---

क्तसत्प्रतिपक्षत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यज्जलव्यापकवन्ह्यभावाधिकरणनिरूपितवज्जलवद्ह्रदत्वं तदवच्छिन्नविषयकत्वावच्छिन्नत्वस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्ये सत्त्वात् (१) ।

नचेति । स्वपदं लक्ष्यतावच्छेदकीभूतवन्ह्यभाववद्ह्रदत्वादिपरम्। समुदितार्थं इति । तथाच विशेष्यदलं नास्तीति भावः । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिं वारयति मेयत्वविशिष्टेति । तदवच्छिन्नाविषयकेति । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकेत्यर्थः । स्वस्मिन्—मेयत्वविशिष्टव्यभिचारत्वे, तथाच मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यच्छुद्धव्यभिचारविषयित्वं मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे विरहेण तस्य स्वपदेनोपादानाऽसम्भवान्नातिव्याप्तिरित्यर्थः । व्यभिचारादौ लक्षणं

---

(१) अथ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नविषयित्वावच्छिन्नत्वं हि तादृशविषयिताशालिनिश्चयत्वव्यापकत्वरूपं वाच्यम्, तादृशनिश्चये च विशिष्टद्वयविषयिताशून्यत्वस्य निवेशेन अभाववान् तादृशघट इति निश्चये विशिष्टद्वयविषयिताशून्यत्वविरहादेव तस्य धर्तुमशक्यत्वात् । एवं सत्प्रतिपक्षेऽपि नाव्याप्तिः । नचैवं मेयत्वविशिष्टसत्प्रतिपक्षे मेयत्वविशिष्टोक्तबाधे चाऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् । स्वातन्त्र्येण यद्रूपे विशिष्टद्वयाघटितत्वनिवेशेनैवोक्तातिव्याप्त्युदासात । नचैवं तुल्ययुक्त्या उक्तबाधे सत्प्रतिपक्षे चाऽव्याप्तिर्दुर्वारा, विशिष्टद्वयाघटितत्वविरहादिति वाच्यम् । विशिष्टद्वयाघटितत्वशरीरे तद्रूपावच्छिन्नविषयकनिश्चयद्वये परस्परविषयिताशून्यत्वनिवेशेनैवोक्ताव्याप्त्युदाससम्भवात् ।

नचैवं मेयत्वविशिष्टनिरुक्तबाधेऽतिव्याप्तिः, तस्य विशिष्टद्वयाघटितत्वात्, विशिष्टद्वयाघटितं यद्विशिष्टान्तरतावच्छेदकरूपं तदवच्छिन्नाऽघटितत्वाच्च । यदि च विशिष्टान्तरतावच्छेदककोटिप्रविष्टविशिष्टद्वयाघटितत्वशरीरेऽपि निश्चयद्वये परस्परविषयिताशून्यत्वं दीयते तदा उक्तातिव्याप्त्युदासेऽपि निरुक्तबाधेऽव्याप्तिर्दुर्वारैवेति वाच्यम् । विशिष्टान्तरघटकीभूतविशिष्टद्वयाघटितत्वशरीरे विशिष्टद्वयविषयितायां यद्रूपवृत्तित्व—प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकताविशिष्टान्यत्वोभयाभाववत्त्वस्य निवेशात् । प्रतिबध्यतायां प्रतिबध्यतावै० स्वावच्छेदकप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रकारत्वावच्छिन्नत्व—स्वावच्छेदकविशेष्यतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वोभयसम्बन्धेन । अवच्छेदकतावै० स्वविशिष्टविशेष्यत्वावच्छिन्नत्वसम्बन्धेन । स्ववै० स्वनिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रकारताकत्व—स्वाश्रयप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, एवं च नोक्तदोष इति विभावनीयम् ।

भिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात्, व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदिकायाः कस्याश्चिदपि विषयितायाः व्यभिचारत्वादिविष्टानिरूपितत्वासम्भवात्, तादृशविषयितायाः यादृशधर्मविशिष्टानिरूपितत्वं घटत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तादृशत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतया व्यभिचारत्वादेः स्वपदेनोपादातुं शक्यत्वाच्च न कश्चिद्दोषः।

---

सङ्गमयति व्यभिचारत्वादिविशिष्टेति। कस्याश्चिदपि विषयितायाः इति। व्यभिचारत्वावच्छिन्नविषयितायाः इत्यर्थः। तादृशविषयितायाः—व्यभिचारत्वावच्छिन्नविषयितायाः। यादृशयादृशविशिष्टानिरूपितत्वमिति। मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपितत्वमित्यर्थः। तादृशत्वादिति। यादृशपदार्थत्वादिति भावः। तदवच्छिन्नाविषयकेति। मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकेत्यर्थः।

तथाच व्यभिचारत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यद्व्यभिचारविषयित्वं यादृशयादृशधर्मावच्छिन्नाऽनिरूपितं मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितं तादृशो यो धर्मः मेयत्वविशिष्टव्यभिचारत्वादिरूपो धर्मस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारत्वे सत्त्वाल्लक्षणसमन्वयः।

धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वं स्वपदेनोपादाय तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या धूमव्यभिचारिवह्निधर्मितावच्छेदकधूमाभावप्रकारकानिश्चयत्वावच्छिन्नप्रतिबन्धकता तदनातिरिक्तवृत्तित्वं शुद्धव्यभिचारविषयितायां नास्ति, किन्तु तादृशबाधत्वावच्छिन्नविषयितायामेव, तस्यां च न बाधत्वावच्छिन्नानिरूपितत्वं, किन्तु मेयत्वविशिष्टतादृशबाधत्वावच्छिन्नानिरूपितत्वमेव, तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वे सत्त्वान्नोक्तव्यभिचारघटितबाधेऽव्याप्तिः।

प्रतिबन्धकतायां स्वावच्छिन्नविषयकत्वावच्छिन्नत्वस्याऽनिवेशे पर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारेऽव्याप्तिः, अनुमितिप्रतिबन्धकतासामान्यान्तर्गतपर्वतधर्मिकधूमवत्ताबुद्धिप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्य व्यभिचारत्वावच्छिन्नविषयितायां विरहात्, पर्वतत्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यतायां पर्वतत्वावच्छेदेन धूमाभावाऽप्रसिद्ध्या तत्र बाधरूपदोषस्याऽसम्भवेन बाधविशिष्टव्यभिचारविषयितायाः अपि तादृशप्रतिबन्धकतावच्छेदकत्वाऽसम्भवात्।

स्वावच्छिन्नविषयकत्वावच्छिन्नेत्यत्र विषयकत्वावच्छिन्नत्वं विषयिताव्यापकत्वं न तु स्वरूपसम्बन्धरूपं, तथासति ह्रदो वह्निमान् द्रव्यत्वादित्यादौ ह्रदो धूमाभाव द्रव्यत्वाभाववानिति एकत्र द्वयमिति रीत्या यद् ज्ञानं तदीयधूमाभाववद्ह्रदत्वावच्छिन्नविषयताया अपि द्रव्यत्वाभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतात्वेन ह्रदधर्मिकद्रव्यत्ववत्ताबुद्धिं प्रति प्रतिबन्धकतावच्छेदकतया धूमाभाववद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वरूपाऽवच्छेदकताविद्विषयित्वाऽप्रसिद्धिः, स्वावच्छिन्नविषयितासामान्य-

निष्ठस्वरूपसम्बन्धरूपाऽवच्छेदकताकत्वस्य प्रतिबन्धकतायां निवेशेनैतद्दोषवारणेऽपि ह्रदो धूमवान् वह्नेरित्यत्र धूमाभाववद्ह्रदरूपबाधेऽव्याप्तिः, ह्रदधर्मिकधूमवत्ताबुद्धिं प्रति यथा ह्रद-धर्मिकधूमाभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वं, तथा ह्रदधर्मिकवह्निमत्ताबुद्धिं प्रत्यपि धूमाभा-वावच्छेदेन वन्ह्यभावप्रकारकनिश्चयविशिष्टह्रदधर्मिकधूमाभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वम् । एवं च धूमाभाववद्ह्रदत्वावच्छिन्नविषयितासामान्यनिष्ठावच्छेदकतानिरूपिका या प्रकृतानुमि-तिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तस्याः धूमाभाववान् वन्ह्यभाववानिति ज्ञाना कालीनधूमाभाववान् ह्रद इति ज्ञानान्तर्भावेण व्यभिचारस्य धूमाभाववद्ह्रदत्वावच्छिन्नविष-यितायां सत्वाद् धूमाभाववद्ह्रदत्वावच्छिन्नविषयितायामपि धूमाभाववद्ह्रदत्वावच्छिन्नविष-यितासामान्यनिष्ठावच्छेदकताकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वविरहात्, धूमाभावाव-च्छेदेन वन्ह्यभावाऽप्रसिद्ध्या वन्ह्यभाववद्धूमाभाववद्वृत्तिधूमाभाववद्ह्रदत्वस्याऽप्रसिद्ध्या तद-वच्छिन्नविषयितायामपि तादृशप्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वसम्भावनाविरहात् । उभयत्र स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशे उक्तस्थले धूमाभाववद्ह्रदे लक्षणसमन्वयसम्भ-वेऽपि पर्वतो वह्निमान् धूमादित्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, पाषाणमयत्ववत्पर्वत-त्वावच्छिन्नविषयितासामान्यनिष्ठस्वरूपसम्बन्धरूपाऽवच्छेदकताका या प्रकृतसमूहालम्बनानु-मितिनिरूपितपर्वतधर्मिकवह्निप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितपाषाणमयत्वावच्छेदे-न वन्ह्यभावप्रकारकनिश्चयविशिष्टपर्वतधर्मिकपाषाणमयत्वप्रकारकनिश्चयत्वावच्छिन्न"ज्ञानवै-शिष्ट्यावच्छिन्न"प्रतिबन्धकता तस्याः स्वरूपसम्बन्धरूपावच्छेदकताविद्विषयितायां यादृ-शयादृशधर्मावच्छिन्नानिरूपितत्वं घटत्वाद्यवच्छिन्नानिरूपितत्वं तादृशधर्मावच्छिन्नाविषय-कप्रतीतिविषयतावच्छेदकत्वस्य पाषाणमयत्ववत्पर्वतत्वे सत्वात् । व्यापकत्वानिवेशे च पाषा-णमयत्ववत्पर्वतत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकत्वाऽप्रसिद्ध्या स्वपदेन पाषाणमयत्व-वत्पर्वतत्वादेर्धारणाऽसम्भवान्न तत्राऽतिव्याप्तिः । एवं ह्रदो धूमवान् वह्नेरित्यत्राऽपि धूमा-भावावच्छेदेन वन्ह्यभावप्रकारकनिश्चयविशिष्टह्रदधर्मिकधूमाभावप्रकारकनिश्चयत्वावच्छिन्न-प्रतिबन्धकतायाः धूमाभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापकतया तादृशप्रतिबन्धकता न त्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यान्तर्गता, किन्तु ह्रदधर्मिकधूमप्रकारकबु-द्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतैव तत्प्रतिबन्धकताऽनतिरिक्तवृत्तिधूमाभाव-वद्ह्रदविषयितैव तस्यां च यादृशयादृशधर्मावच्छिन्नानिरूपितत्वं तादृशतादृशधर्मावच्छिन्ना-विषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमाभाववद्ह्रदत्वे सत्वाल्लक्षणसङ्गतिः ।

प्रथमत एव स्वरूपसम्बन्धरूपावच्छेदकत्वं निवेश्य स्वावच्छिन्ननिरूपितविषयितासा-मान्यनिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तियत्किञ्चिद्विषयि-त्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयताव-च्छेदकं यत्त्वं तद्वत्वमिति लक्षणे पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितायां प्रकृतानुमिति-प्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वविरहेण पाषाणमयत्ववत्पर्वतत्वस्य स्वपदाग्राह्यतया पर्व-तो वह्निमान् धूमादित्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिविरहेऽपि ह्रदो वह्निमान् धूमादि-त्यादौ वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या बाध-

निश्चयप्रतिबन्धकता या च पक्षे हेतुमत्ताज्ञाननिरूपिता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तदुभयाऽनतिरिक्तवृत्तिविषयित्वाप्रसिद्ध्या वन्ह्यभाववद्ह्रदत्वस्य स्वपदेन ग्रहीतुमशक्यतया वन्ह्यभावद्ह्रदरूपबाधेऽव्याप्तिः स्यादिति ।

सामान्यपदानुपादाने व्यभिचारघटितबाधेऽव्याप्तिः, तथाहि—धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयिताव्यापिका या उक्तसमूहालम्बनानुमितिनिष्ठवह्निधर्मिकधूमव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितवह्निधर्मिकधूमव्यभिचारप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता तस्या अवच्छेदिका धूमव्यभिचारी वह्निरिति-ज्ञानीया या धूमव्यभिचारिवह्नित्वावच्छिन्नविषयिता तस्या बाधत्वावच्छिन्नानिरूपितत्वेन तादृशबाधत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्य प्रकृतबाधत्वेऽसत्त्वात् । सामान्यपदोपादाने च धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यान्तर्गतधूमव्यभिचारिवह्निधर्मितावच्छेदककधूमाभावप्रकारकनिश्चयत्वावच्छिन्न "बाध"प्रतिबन्धकताया अवच्छेदकत्वं न केवलव्यभिचारत्वावच्छिन्ननिरूपितविषयितायामपितु धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयितायां तस्या बाधत्वावच्छिन्नानिरूपितत्वविरहेण न तादृशबाधेऽव्याप्तिः ।

प्रतिबन्धकतासामान्यावच्छेदकेत्यत्राऽवच्छेदकत्वं न स्वरूपसम्बन्धविशेषः—तथासति व्यभिचारघटितबाधेऽव्याप्तिः, तादृशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता बाधनिश्चयप्रतिबन्धकता व्यभिचारनिश्चयप्रतिबन्धकता च तदुभयावच्छेदकविषयित्वाऽप्रसिद्धेः(१) ।

---

(१) यद्यपि व्यभिचारघटितबाधज्ञानीयव्यभिचारविषयितायास्तदुभयाऽवच्छेदकत्वमस्ति बाधप्रतिबन्धकतायामपि धर्मितावच्छेदकतया तद्विषयिताया अवच्छेदकत्वात्, तथापि सर्वं गगनवदित्यत्र गगनाभाववद्घटपटादिरूपबाधसङ्ग्रहार्थं तादृशविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य, ह्रदो वह्निमानित्यत्र जातिमद्वन्ह्यभाववद्ह्रदवारणाय यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य च विवक्षणीयतया व्यभिचारत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यशुद्धव्यभिचारविषयकज्ञानीयव्यभिचारविषयितायास्तदुभयावच्छेदकत्वं न सम्भवतीत्यप्रसिद्धिः । तथा च स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतावृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयावृत्तिधर्मवान् यो यत्किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिष्ठो यः किञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितनिरूपितत्वनिष्ठप्रतियोगितानिरूपितनिरूपकतानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वं लक्षणार्थः ।

अनुगमस्तु—धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य—स्वविशिष्टविषयितानिष्ठकिञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितनिरूपितत्वनिष्ठप्रतियोगितानिरूपितनिरूपकतानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । विषयितायां स्ववै० स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्व—स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वाऽसाधारण्य विषयितावत्त्वोभयाभाववत्त्वावच्छिन्नविषयकनिश्चयत्वव्यापकप्रतिबन्धकतावृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिता-

नव्यास्तु—वन्ह्यभाववान् ह्रद इति निश्चयस्य वह्नित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नप्रतिबन्धकता यथा वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापिका तथा ह्रदत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतापि, तादृशप्रतिबन्धकतानां साक्षात्स्वरूपसम्बन्धरूपावच्छेदकत्वस्य कस्यांचिदपि विषयितायां विरहेण वन्ह्यभाववद्ह्रदादावसम्भवः । साक्षात्परंपरासाधारणस्वरूपसम्बन्धरूपाऽवच्छेदकत्वं निवेश्योक्तदोषवारणसम्भवेऽपि वह्नित्वेन गुञ्जापुञ्जावगाहि—अभावत्वेन घटावगाहिह्रदो वन्ह्यभाववानितिभ्रमात्मकज्ञानीयविषयिताया अपि तादृशप्रतिबन्धकतासामान्यावच्छेदकतया तस्यां च वन्ह्यभाववद्ह्रदत्वावच्छिन्नानिरूपितत्वेन यादृशधर्मावच्छिन्नानिरूपितमित्यत्र यादृशधर्मपदेन वन्ह्यभाववद्ह्रदत्वस्यापि धर्तुं शक्यतया तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वेऽसत्त्वादुक्तदोषतादवस्थ्यम् । अतः प्रतिबन्धकतासामान्यावच्छेदकमित्यत्राऽवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम्, तच्च न तदभाववदवृत्तित्वरूपं, तादृशभ्रमज्ञानीयविषयिताव्यक्तेरपि तादृशप्रतिबन्धकत्वाभाववदवृत्तितया तद्दोषतादवस्थ्यापातात्, किन्तु स्वव्यापकत्वत्कत्वम्, तथा च स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्यं यद्रूपावच्छिन्नविषयिताव्यापकं तद्रूपावच्छिन्नविषयितैव यत्किञ्चिद्विषयितान्तस्याऽर्थः । एवं च वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यान्तर्गतह्रदत्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताया अपि वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापकतया वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितैव यत्किञ्चिद्विषयितापदेन धर्तुं शक्यते इति तादृशविषयितायां वन्ह्यभाववद्ह्रदत्वावच्छिन्नानिरूपितत्वविरहान्न वन्ह्यभाववद्ह्रदादावसम्भव—इति प्राहुः ।

विषयितायां यत्किञ्चित्त्वनिवेशनं तादृशविषयितात्वसामानाधिकरण्येन यादृशयादृशधर्मावच्छिन्नानिरूपितत्वलाभाय, अन्यथा "तदवच्छेदेन यादृशयादृशधर्मावच्छिन्नानिरूपितत्वनिवेशे" मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूत-

रूपपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयावृत्तिधर्मवद्यत्किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययत्किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नत्वोभयसम्बन्धेन । तद्व्यक्तित्ववानभावश्चाऽसाधारण्यविषयिताशालित्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभाववद्यत्किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धो ग्राह्यः, तेन मेयत्वविशिष्टाऽसाधारण्ये नातिव्याप्तिः ।

अत्र विषयितायां स्ववै० स्वावच्छिन्नविषयिताभिन्नत्वघटितैतदुभयाभाववत्त्वसम्बन्धेन । एतेन एतादृशाभावानुपादाने असाधारण्ये लक्षणसमन्वय एव न सम्भवति वन्हिव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतावृत्त्यभावप्रतियोगितावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयवृत्तिधर्मवानभावः वन्हिव्यापकीभूताभावप्रतियोगिजलवद्ह्रदत्वावच्छिन्नविषयिताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्ध एव, तन्निरूपितप्रतियोगितानिरूपितपरम्परयाऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावान्धर्मस्तादृशह्रदत्वमेव तदवच्छिन्नत्वस्याऽसाधारण्यविषयितायामभावात् कथं वा मेयत्वविशिष्टासाधारण्येऽतिव्याप्तिरिति निरस्तम् ।

विषयित्वान्तर्गतामेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितापि तस्यां च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपितत्वविरहात् स्वपदेन मेयत्वविशिष्टव्यभिचारत्वस्यापि धारणसम्भवात्तत्रातिव्याप्तेरवारणात् । तथाच स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याऽनतिरिक्तवृत्तिविषयितात्वसामानाधिकरण्येन यद्यद्रूपावच्छिन्नानिरूपितत्वं तत्तद्रूपावच्छिन्नाघटितत्वं फलितम् ।

मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय याद्दशयाद्दशेति । न च तथापि वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयितायां वन्ह्यभाववद्ध्रदत्वावच्छिन्नाऽनिरूपितत्वविरहेऽपि वह्नित्वावच्छिन्नाऽनिरूपितत्वसत्वात्तद्धर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ध्रदत्वेऽसत्वादसम्भव इति वाच्यम् । यादृशयादृशधर्मावच्छिन्नानिरूपितत्वमित्यत्र साक्षात्परंपरासाधारणयादृशधर्मावच्छिन्नानिरूपितत्वस्य विवक्षणात् । यद्वा यादृशधर्मावच्छिन्नानिरूपितमित्यनेन यद्धर्मावच्छिन्नाविषयकज्ञानवृत्ति इत्येव विवक्षणीयम्, तथाच वन्ह्यभाववद्ध्रदत्वावच्छिन्नवह्नित्वावच्छिन्नाविषयकज्ञानवृत्तित्वविरहादेव नाऽसम्भवः ।

अनुगमस्तु–धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य–स्वविशिष्टविषयितावृत्तिधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । विषयितायां स्ववै० स्वविशिष्टविषयिताव्यापकप्रतिबन्धकतात्वव्यापकधर्मावच्छिन्नानिरूपितत्वसम्बन्धेन । धर्मे विषयितावृत्तित्वं च स्वावच्छिन्नानिरूपितत्वसम्बन्धावच्छिन्नत्वानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । धर्मे प्रतिबन्धकतात्वव्यापकत्वं च स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन, उभयत्र विषयितायां स्ववै० स्वावच्छिन्नत्वसम्बन्धेनेति ।

अत्र च प्रकृतानुमितिनिरूपिततत्तत्प्रतिबन्धकतानाश्रयत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वैतदुभयाभावे स्वावच्छिन्नविषयिताव्यापकत्वं तत्तत्प्रतिबन्धकतैव स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्येत्यनेन विवक्षणीया, अन्यथा ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्यविषयकत्वस्य जलवान् ह्रद इति ज्ञानाऽसमानकालीनज्ञानेऽपि सत्वात्, तत्रानुमितिप्रतिबन्धकताविरहेण स्वपदेन तादृशजलत्वरूपाऽसाधारण्यत्वस्य धर्तुमशक्यतया तत्राऽव्याप्तेः । उक्तविवक्षणे च हेतुमत्पक्षज्ञानकालीनतादृशासाधारण्यविषयकज्ञाने निरुक्तसमूहालम्बनानुमितिनिरूपिताऽसाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतानाश्रयत्वविरहात्, हेतुमत्पक्षज्ञानाकालीनतादृशाऽसाधारण्यविषयकज्ञाने च हेतुमत्पक्षज्ञानकालीनत्वविरहेण निरुक्तोभयाभावस्याऽसाधारण्यविषयकत्वव्यापकत्वात् तत्तत्प्रतिबन्धकतापदेनाऽसाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतैव धर्तुं शक्यतेऽतो नाव्याप्तिः ।

एवं तत्तत्प्रतिबन्धकतासामान्यं यद्रूपावच्छिन्नविषयकत्वव्यापकमित्यपहाय तत्तत्प्रतिबन्धकतानाश्रयत्व–पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वैतदुभयाभावे यद्रूपावच्छिन्नविषयिताव्यापकत्वं तद्रूपावच्छिन्नविषयितैव यत्किञ्चिद्विषयित्वान्तस्यार्थः । अन्यथोक्ताऽसाधारण्येऽव्याप्तितादवस्थ्यम्, तादृशाऽसाधारण्यविषयकत्वव्यापकनिरुक्तोभयाभावप्रतियोग्यन्तर्गताऽसाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकताया यद्रूपावच्छिन्नविषयिताव्यापकत्वं तद्रूपावच्छिन्नविषयिताया

एवाऽप्रसिद्धेरिति निरुक्तोभयाभावे यद्रूपावच्छिन्नविषयकत्वव्यापकतानिवेशः(१) ।

---

(१) अथ तत्तत्प्रतिबन्धकतानाश्रयत्वहेतुमत्पक्षज्ञानकालीनत्वैतदुभयाभावे यद्रूपावच्छिन्नविषयिताव्यापकत्वनिवेशापेक्षया तत्तत्प्रतिबन्धकत्वे यद्रूपावच्छिन्नविषयितासामान्यनिष्ठस्वरूपसम्बन्धरूपाऽवच्छेदकताकत्वं तद्रूपावच्छिन्नविषयित्वं यत्किञ्चिद्विषयित्वान्तस्यार्थोऽस्तु लाघवात्, एवं सत्यसाधारण्ये नाव्याप्तिः। तथाहि—असाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकताया असाधारण्यविषयिताव्यापकत्वविरहेऽपि समानाकारकज्ञानीयैकविषयिताभ्युपगन्तृमतेऽसाधारण्यविषयितासामान्यनिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकतया यद्रूपावच्छिन्नविषयितापदेनाऽसाधारण्यविषयितोपादातुं शक्यते तस्यां च यादृशधर्मावच्छिन्नाऽनिरूपितत्वं तद्धर्मावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्हिव्यापकीभूताभावप्रतियोगिजलत्वरूपदोषतावच्छेदके सत्वात् ।

नचैवं धूमव्यभिचारिवान्हिमान् धूमवान् वन्हेरित्यत्र धूमाभाववद्धूमव्यभिचारिवन्हिमत्वावच्छिन्नविषयकज्ञानत्वावच्छेदेन बाधप्रतिबन्धकतानाश्रयत्वविरहात् व्यभिचारप्रतिबन्धकताविरहस्याप्यसत्वात् व्यभिचारज्ञानत्वावच्छिन्नप्रतिबन्धकतानाश्रयत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वैतदुभयाभावस्यापि तादृशविषयकत्वव्यापकतया व्यभिचारज्ञानप्रतिबन्धकतापि तत्तत्प्रतिबन्धकतान्तर्गता तस्यां च धूमाभाववद्धूमव्यभिचारिवह्निमत्वावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकत्वविरहात्तादृशप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयत्वान्तर्गता न बाधत्वावच्छिन्नविषयता, तत्प्रतिबन्धकतान्तर्गतबाधप्रतिबन्धकतायां धूमव्यभिचारिमत्वावच्छिन्नविषयतासामान्यनिष्ठावच्छेदकताकत्वविरहात्तादृशप्रतिबन्धकतावच्छेदकीभूतविषयतापदेन व्यभिचारत्वावच्छिन्नविषयतापि धर्तुं शक्यते इति तत्रत्यबाधेऽव्याप्तिरिति वाच्यम्। असाधारण्यविषयकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वैतदुभयाभावविशिष्टानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताव्यापिका सती स्वावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकत्वानिरूपिका या प्रतिबन्धकता तादृशप्रतिबन्धकतात्वव्यापकं यद्रूपावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकत्वं तद्रूपावच्छिन्नविषयत्वस्यैव भट्टाचार्योक्तयत्किञ्चिद्विषयितान्तार्थत्वात्। तथाच धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारज्ञानत्वावच्छिन्नप्रतिबन्धकतायां तादृशबाधत्वावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकत्वविरहेण बाधे लक्षणसमन्वयकाले न व्यभिचारप्रतिबन्धकता लक्षणघटिका किन्तु बाधप्रतिबन्धकतैव, तस्याश्च बाधत्वावच्छिन्नविषयतासामान्यनिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकतया यादृशपदेन बाधत्वमेवोपादातुं शक्यते इति बाधे लक्षणसमन्वयः। नचैवं तादृशबाधे लक्षणसमन्वयकाले व्यभिचारज्ञानप्रतिबन्धकतायाः लक्षणाघटकत्वे प्रतिबन्धकतासामान्यमित्यत्र भट्टाचार्योक्तसामान्यपदमनर्थकमिति वाच्यम्। घटो विशेषगुणाभाववान् गुणसामान्याभाववान् इत्यादौ विशेषगुणवद्धटरूपबाधविषयकत्वव्यापिका सती विशेषगुणवद्घटविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपिका यथा घटविशेष्यकविशेषगुणाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितविशेषगुणप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकता तथा घटविशेष्यकगुणसामान्याभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित–घटो विशेषगुणवान् गुणवान् इति ज्ञानसाधारणगुणत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतापि तत्तत्प्रतिबन्धकताया गुणवद्घटत्वावच्छिन्नविषयतासामान्यावच्छिन्नत्वेन गुणवद्घटविषयतापि धर्तुं शक्यते तस्यां विशेषगुणवद्घटत्वावच्छिन्नानिरूपितत्वेन तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्य विशेषगुणवद्घटत्वेऽसत्त्वादव्याप्तिरिति ।

एवं चेदानीं विशिष्टद्वयाघटितत्वनिवेशोऽपि व्यर्थः, तं विनाऽपि उक्ताव्याप्तिवारणसम्भवात्। तथाहि वह्न्यभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता न तादृशप्रतिबन्धकतासामान्यान्तर्गता किन्तु जलावच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टजलप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतैव तत्तत्प्रतिबन्धकतायां च ज्ञानभेदेन विषयताभेदानभ्युपगन्तृभट्टाचार्यमते जलवद्ह्रदविषयिता तादृशप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयितापदेन धर्तुं शक्यते, तस्यां च वह्न्यभाववज्जलादिमद्वृत्तिजल-

**अथवा यद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याव-च्छेदकीभूतविषयितात्वं यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यं तद्धर्मवत्त्वमेव समुदितार्थ इति वाच्यम्।**

---

लाघवादाह **अथवेति** । यत्पदं लक्ष्यतावच्छेदकपरम् । **यद्धर्मावच्छिन्नेति** । व्य-भिचारत्वाद्यवच्छिन्नेत्यर्थः । **यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यमिति** । व्यभिचारत्वा-द्यवच्छिन्ननिरूपितत्वव्याप्यमित्यर्थः । तथाच व्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रति-बन्धकतासामान्यावच्छेदकीभूतविषयितात्वं व्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्यं, न तु मेय-त्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्यं, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपित-त्वाभाववति शुद्धव्यभिचारविषयितायां तादृशप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्व-स्य सत्त्वात्, यत्पदेन व्यभिचारत्वादेरुपादानात्तद्धर्मवत्त्वस्य व्यभिचारादौ सत्त्वाल्लक्षणसम-न्वयः । मेयत्वविशिष्टव्यभिचारत्वादेरुपादातुमशक्यतया च मेयत्वविशिष्टव्यभिचारादौ नाति-व्याप्तिः ।

अत्रापि अवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम् । व्याप्तिः पूर्ववद् । अनुगम-स्तु धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य—स्वविशिष्टविषयितात्ववृत्तित्वोभयसम्बन्धेन । विषयितायां स्ववै० स्वविशिष्टविषयिताव्यापकप्रतिबन्धकतात्वव्यापकधर्मावच्छिन्ननिरूपितत्व-सम्बन्धेन । विषयितात्ववृत्तित्वं च स्वावच्छिन्ननिरूपितत्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नत्वनि-ष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । धर्मे प्रतिबन्धकतात्वव्यापकत्वं च स्वविशिष्ट-विषयिताव्यापकत्वसम्बन्धेन । उभयत्र विषयितायां स्ववै० स्वावच्छिन्नत्वसम्बन्धेनेति(१)।

---

वद्ह्रदत्वावच्छिन्नानिरूपितत्वसत्त्वेन तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववज्ज-लादिमद्वृत्तिजलवद्ह्रदत्वेऽसत्त्वादिति ।

एतेन ह्रदो वह्निमानिति बुद्धिं प्रति ह्रदो वन्ह्यभाववानितिनिश्चयवत् ह्रदे वन्ह्यभाव इति निश्चयस्यापि स्वरूपसम्बन्धानवच्छिन्नप्रकारताभिन्नवन्ह्यभावत्वावच्छिन्नविषयतानिरूपितस्वरूपसम्बन्धावच्छिन्नाऽऽधेयत्वस-म्बन्धानवच्छिन्नप्रकारताभिन्नह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैकरूपेण प्रतिबन्धकतामतेऽनतिरिक्तवृत्ति-त्वरूपावच्छेदकताघटितयथाश्रुतलक्षणे वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताऽनतिरिक्तवृत्ति यद् ह्रदविशिष्टवन्ह्यभावत्वावच्छिन्नविषयित्वं यादृशवन्ह्यभाववद्ह्रदत्वावच्छिन्नानिरूपितं तादृशधर्मावच्छिन्ना-विषयकप्रतीतिविषयतावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वेऽसत्त्वादसम्भववारणार्थं यत्किञ्चिद्विषयितायां स्वाव-च्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्यापि निवेशनीयतया वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽति-व्याप्तिवारणार्थं विशिष्टद्वयाघटितत्वनिवेशनमावश्यकमिति परास्तम् ।

स्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकज्ञानद्वयसाधारणप्रतिबन्धकतानिरूपितस्वरूप-सम्बन्धरूपाऽवच्छेदकतायाः स्वस्मिन्नेव सत्त्वेनाव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्याऽनिवेशनीयतया त-त्प्रयुक्तविशिष्टद्वयाघटितत्वस्य विचाराऽसहत्वात् ।

(१) मान्यास्तु धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य—स्वविशिष्टविषयितात्वव्यापकत्वोभयसम्बन्धेन । व्यापकता च स्वावच्छिन्ननिरूपितत्वसम्बन्धेन । विषयितायां स्ववै० स्वविशिष्टविषयिताव्यापकप्रतिबन्धक-तात्वव्यापकधर्मावच्छिन्नत्व—स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन । प्रतिबन्धक-तात्वव्यापकत्वं च स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन । उभयत्र विषयितायां स्ववै० स्वावच्छिन्नत्व—स्वा-वच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेनेति प्राहुः ।

**बाधविशिष्टव्यभिचारत्वावच्छिन्नेऽतिप्रसङ्गात्, तादृशधर्मावच्छिन्नविषयकत्वावच्छिन्नबाधज्ञानप्रतिबन्धकतायां केवलव्यभिचारविषयिताया तादृशव्यभिचारज्ञानप्रतिबन्धकतायां च केवलबाधविषयिताया अनवच्छेदकत्वेन बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नविषयिताया एव तथाविधप्रतिबन्धकतासामान्यावच्छेदकत्वं, तस्यां च तादृशधर्मविशिष्टनिरूपितत्वस्यावश्यकत्वात् प्रथमकल्पे स्वपदेन चरमकल्पे च यत्पदेन तस्योपादानसम्भवात् ।**

कल्पद्वयेऽपि दोषमाह—**अतिप्रसङ्गादिति** । तथाच ह्रदो धूमवान् वह्नेरित्यत्र धूमाभाववद्ह्रदो बाधः, धूमाभाववद्वृत्तिवह्निर्व्यभिचारः, तथाच बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यद्बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वं मेयत्वविशिष्टतादृशव्यभिचारत्वाद्यवच्छिन्नानिरूपितं तदवच्छिन्नाघटितत्वस्य बाधविशिष्टव्यभिचारत्वे सत्त्वेनाऽतिप्रसङ्गादित्यर्थः ।

एवं द्वितीयकल्पेऽपि बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्वं तादृशव्यभिचारत्वावच्छिन्ननिरूपितत्वव्याप्यमस्ति तद्धर्मवत्त्वस्य तत्र सत्त्वादिति । तदेवाऽऽह **तादृशधर्मावच्छिन्नेति** । बाधविशिष्टव्यभिचारत्वावच्छिन्नेत्यर्थः । **केवलव्यभिचारविषयिताया इति** । अनवच्छेदकत्वेनेत्यनेनाऽन्वयः । **तस्याञ्च** बाधविशिष्टव्यभिचारविषयितायाञ्चेत्यर्थः । **तादृशेति** । बाधविशिष्टव्यभिचारत्वरूपेत्यर्थः । **प्रथमकल्पे**—नचेत्यादितृतीयकल्पे । **चरमकल्पे**—अथवेत्यादिकल्पे । **तस्य**—बाधविशिष्टव्यभिचारत्वस्य ।

ननु तादृशबाधविशिष्टव्यभिचारविषयकत्वव्यापिका प्रतिबन्धकता बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकता व्यभिचारनिश्चयत्वावच्छिन्नप्रतिबन्धकतापि जाता तादृशप्रतिबन्धकताद्वयाऽनतिरिक्तवृत्तित्वरूपावच्छेदकतावत्त्वं समानकालीनत्वसम्बन्धेन व्यभिचारविशिष्टबाधविषयितायामप्यस्ति ( एवं सम्बन्धान्तरेण बाधविशिष्टव्यभिचारविषयितायामप्यस्ति ) तस्यां च बाधविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितत्वसत्त्वात्, तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य निरुक्तबाधविशिष्टव्यभिचारत्वेऽसत्त्वान्नातिव्याप्ति(१)रिति चेद् ।

अत्र केचित् । सर्वमाकाशवदित्यत्राऽऽकाशाभाववद्घटो बाधः—आकाशाभाववत्पटोऽपि बाधः, तथाहि—सर्वं गगनवदित्याकारकबुद्धिं प्रति घटो गगनाभाववान् पटो गगनाभाववानित्यादिसकलज्ञानसाधारणसधर्मितावच्छेदकगगनाभावप्रकारकनिश्चयत्वेन "अवच्छिन्नविशेष्यतानिरूपितगगनाभावप्रकारताशालिनिश्चयत्वेन" एकरूपेण प्रतिबन्धकतया गगनाभाववद्घटादि-

(१) अथ बाधाभावविशिष्टबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताऽपि सामान्यान्तर्गतेति न व्यभिचारविशिष्टबाधत्वावच्छिन्नविषयिता तादृशप्रतिबन्धकतासामान्यावच्छेदिकेति नाऽसङ्गतिरिति चेन्न । मेयत्वविशिष्टव्यभिचारादौ तादृशरीत्या शुद्धव्यभिचारत्वावच्छिन्नविषयित्वमपि न तादृशयत्किञ्चिद्विषयितान्तर्गतं अपि तु मेयत्वविशिष्टव्यभिचारविषयित्वमित्यातिव्याप्तिभिया प्रकृतानुमितिप्रतिबन्धकतासामान्यानवच्छेदकत्वस्य निवेशनीयत्वात् ।

रूपबाधेऽव्याप्तिः, तथाहि—गगनाभाववद्घटत्वावच्छिन्नविषयिताव्यापिका या प्रकृतानुमिति-निरूपिता सधर्मितावच्छेदककगगनाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता तस्या अनति-रिक्तवृत्तित्वरूपावच्छेदकत्वं गगनाभाववत्पटत्वावच्छिन्नविषयितायामप्यस्ति, तस्यां च गगना-भाववद्घटत्वावच्छिन्नाऽनिरूपितत्वसत्त्वात् गगनाभाववद्घटत्वावच्छिन्नाविषयकप्रतीतिविषय-तावच्छेदकत्वस्य गगनाभाववद्घटत्वेऽसत्त्वात् ।

एवं ह्रदो वह्निमानित्यत्र वन्ह्यभाववद्ह्रदेऽव्याप्तिः, तथाहि—ह्रदधर्मिकवह्निमत्ताबुद्धिं प्रति ह्रदो वन्ह्यभाववान् ह्रदे वन्ह्यभाव इति ज्ञानयोरेकरूपेण प्रतिबन्धकत्वे(१) वन्ह्यभाव-वद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं ह्रदवृत्तिवन्ह्यभाव-त्वावच्छिन्नविषयित्वमपि, तस्यां च वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूपितत्वविरहेण यादृशधर्म-पदेन वन्ह्यभाववद्ह्रदत्वस्यापि धर्तुं शक्यतया तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयता-वच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वेऽसत्त्वात्(२)। अतो यत्किञ्चिद्विषयित्वे स्वावच्छिन्नविषयित्वा-

---

(१) न चैकरूपेण प्रतिबन्धकत्वे प्रथमनचकल्येऽसम्भवाऽभिधानासङ्गतिरिति वाच्यम् । यथाश्रुते बा-धविशिष्टव्यभिचारेऽतिव्याप्तिवारणार्थं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वज्ञानीयत्वस्य निवेशनीयतयाऽसम्भवाभिधानादिति ध्येयम् ।

(२) एवं वन्हिसामान्याभाववत्ताबुद्धिं प्रति वन्ह्यभाववद्वृत्तिधर्मवत्तानिश्चयत्वेन (सत्प्रतिपक्षनिश्चय-विधया) प्रतिबन्धकता, तत्र प्रतिबन्धकतावच्छेदकं वन्हित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नवि-षयतानिरूपिताऽधिकरणत्वावच्छिन्नविषयतानिरूपितवृत्तितात्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविष-यतानिरूपितसम्बन्धिविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिनिश्चयत्वम्, तत्र वन्हित्वावच्छिन्नत्वं व-न्हित्वनिष्ठावच्छेदकताकत्वमेव, न तु वन्हित्वपर्याप्तावच्छेदकताकत्वं, महानसीयवन्ह्यभाववद्वृत्तिधर्मवान्–व-न्ह्यभाववद्वृत्तिधर्मवानिति ज्ञानानामेकरूपेण प्रतिबन्धकत्वात् । एवं च भट्टाचार्यमते पर्वतो वन्ह्यभाववानित्यत्र वन्ह्यभाववद्वृत्तिमत्पर्वतो बाधः–पर्वतीयवन्ह्यभाववद्वृत्तिमत्पर्वतोऽपि बाधः । एवं च पर्वतीयवन्ह्यभाववद्वृत्तिम-त्पर्वतेऽव्याप्तिः, पर्वतीयवन्ह्यभाववद्वृत्तिधर्मवत्पर्वतविषयकत्वावच्छिन्ना या प्रतिबन्धकता तदवच्छेदकत्वं व-न्ह्यभाववद्वृत्तिमत्पर्वतत्वावच्छिन्नविषयितायामप्यस्ति, तस्यां च पर्वतीयवन्ह्यभाववद्वृत्तिमत्पर्वतत्वावच्छि-न्नानिरूपितत्वसत्त्वात्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तत्राऽसत्त्वात्, एवं यत्र महानसीयवन्ह्य-भाववद्वृत्तित्वस्य साध्यता, मीनादिः पक्षः, तत्र मीनधर्मिकमहानसीयवन्ह्यभाववद्वृत्तित्वप्रकारकबुद्धिं प्रति वन्हित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितत्वादिक्रमेण प्रतिबन्धकतायामपि वन्हि-त्वावच्छिन्नत्वं वन्हित्वनिष्ठावच्छेदकताकत्वं, न तु वन्हित्वपर्याप्तावच्छेदकताकत्वमिति महानसीयवन्ह्यभाववद्-वृत्तित्ववान् वन्ह्यभाववद्वृत्तित्ववानितिनिश्चययोः पूर्वोक्तदिशा निरूप्यनिरूपकभावापन्नविषयताशालिनिश्चय-त्वेन प्रतिबन्धकत्वात्(१) । एवं च तादृशस्थले वन्ह्यभाववद्वृत्तिमीनरूपबाधेऽव्याप्तिः, वन्ह्यभाववद्वृत्तिमी-नत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूता या महानसीयवन्ह्यभाववद्वृत्तित्वावच्छि-न्नविषयिता तस्या महानसीयवन्हिसामान्याभावस्य वन्हिसामान्याभावतो भिन्नतया वन्हिसामान्याभाववद्वृत्ति-मीनत्वावच्छिन्नानिरूपितत्वादिति ।

---

(१) अत एव काञ्चनमयधूमवान् वन्हेरित्यत्र वन्हिनिष्ठधूमाभाववद्वृत्तित्वे काञ्चनमयधूमाभाववद्वृत्ति-त्वरूपव्याप्तिग्रहविरोधितया साधारण्यम् । इयांस्तु विशेषः–तत्र प्रतिबध्यतावच्छेदककोटौ धूमत्वपर्याप्तावच्छे-दकताकत्वमनिवेश्य धूमत्वावच्छिन्नविषयितानिरूपिताभावत्वावच्छिन्नविषयितानिरूपितत्वादिक्रमेण प्रतिब-ध्यतावच्छेदकं निरुच्य धूमसामान्याभाववद्वृत्तित्वज्ञानस्य प्रतिबध्यीभूतं काञ्चनधूमाभाववद्वृत्तित्वज्ञानमपि, अत्र तु प्रतिबन्धकतावच्छेदककोटौ वह्नित्वपर्याप्तावच्छेदकताकत्वमनिवेश्य वह्निसामान्याभाववद्वृत्तित्ववत्ताबु-द्धिप्रतिबध्यं महानसीयवन्हिसामान्याभाववद्वृत्तित्वज्ञानमपीति ।

एवं वन्हिमान् जलादित्यत्र वन्हिव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, तथाहि—ह्रदधर्मिकवन्हिमत्ताबुद्धिं प्रति जलधर्मिकवन्हिव्यापकीभूताभावप्रतियोगित्वप्रकारकनिश्चयविशिष्टह्रदधर्मिकजलप्रकारकनिश्चयत्वेन न प्रतिबन्धकता किन्तु वन्हिव्यापकीभूताभावप्रतियोगिजलं जलवांश्च ह्रदः—वन्हिव्यापकीभूताभावप्रतियोगी शैवालः शैवालवान् ह्रद इत्यादिसकलज्ञानसाधारणवन्हिव्यापकीभूताभावप्रतियोगित्वप्रकारकनिश्चयविशिष्टह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन । निश्चयवै० स्वसामानाधिकरण्य–स्वीयसाध्यव्यापकीभूताभावप्रतियोगित्वप्रकारतानिरूपितविशेष्यतावृत्तिधर्मावच्छिन्नप्रकारताकत्वोभयसम्बन्धेन । धर्मे विशेष्यतावृत्तित्वं च स्वावच्छिन्नत्व-(१) स्वव्यापकतादृशप्रतियोगित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रकारताकत्वोभयसम्बन्धेन ।

तथाच वन्हिव्यापकीभूताभावप्रतियोगि जलमित्याकारकज्ञानस्य एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपसामानाधिकरण्यं जलवान् ह्रद इति ज्ञानेऽस्ति, एवं तज्ज्ञानीयवन्हिव्यापकीभूताभावप्रतियोगित्वप्रकारतानिरूपिता या विशेष्यता स्वावच्छिन्नत्व–स्वव्यापकीभूततादृशप्रतियोगित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रकारताकत्वैतदुभयसम्बन्धेन तद्वृत्ति यज्जलत्वं तदवच्छिन्नप्रकारकत्वमप्यस्ति, निरुक्तोभयसम्बन्धेन तादृशनिश्चयविशिष्टं जलवान् ह्रद इति ज्ञानं भवति ।

वन्हिव्यापकीभूताभावप्रतियोगि जलमिति ज्ञानसमानाधिकरणमीनवान् ह्रद इति ज्ञाने तादृशप्रतियोगित्वप्रकारकज्ञानीयविशेष्यतानिरूपितनिरुक्तसम्बन्धावच्छिन्नवृत्तिताविशिष्टं यज्जलत्वं तदवच्छिन्नप्रकारताकत्वस्य विरहान्निरुक्तोभयसम्बन्धेन तादृशप्रतियोगित्वप्रकारकज्ञानाविशिष्टं न मीनवान् ह्रद इति ज्ञानं, पुरुषान्तरीयजलवान् ह्रद इति ज्ञाने न तादृशप्रतियोगित्वप्रकारकज्ञानेन सामानाधिकरण्यमिति नैकधर्मावच्छिन्नविशेष्यकतादृशप्रतियोगित्वप्रकारकज्ञानकालीनाऽन्यधर्मावच्छिन्नप्रकारकह्रदत्वावच्छिन्नविशेष्यकज्ञानस्य प्रतिबन्धकत्वम्, न वा तद्धर्मावच्छिन्नविशेष्यकतादृशप्रतियोगित्वप्रकारकज्ञानकालीनपुरुषान्तरीयतादृशधर्मज्ञानस्य प्रतिबन्धकत्वम्, तथाचाऽसाधारण्येऽव्याप्तिरिति चेन्न ।

जलं वन्हिव्यापकीभूताभावप्रतियोगि नवेतिज्ञानकालीनजलवान् ह्रद इति निश्चयस्य, जलं तादृशाभावप्रतियोगि–ह्रदो जलवान्नवेति संशयस्य ह्रदो वन्हिमानितिबुद्धिं प्रति न प्रतिबन्धकत्वमतः प्रतिबन्धकज्ञाने विशेषणज्ञाने च निश्चयत्वं निवेशनीयम्, निश्चयत्वं च धर्मितावच्छेदकं विना दुर्वचम्, एवं च जलत्वावच्छिन्नधर्मिकतादृशप्रतियोगित्वाभावाप्रकारकत्वघटितनिश्चयत्वस्य प्रतिबन्धकतावच्छेदके ह्रदधर्मिकजलत्वावच्छिन्नाभावाप्रकारकत्वघटितनिश्चयत्वस्य, विशेषणज्ञाने च विशेष्यनिवेशस्यावश्यकत्वेन मीनः तादृशाभावप्रतियोगी–मीनवान् ह्रद इति ज्ञानसाधारणैकप्रतिबन्धकत्वाभावात् ।

यद्यपि निश्चयत्वमनुगमयितुं शक्यते, तथाहि—ह्रदधर्मिकवन्हिमत्ताबुद्धिं प्रति ज्ञानविशिष्टह्रदत्वावच्छिन्नधर्मिकज्ञानत्वेन प्रतिबन्धकता । ज्ञाने ज्ञानवै० स्वसामानाधिकरण्य–स्ववृत्तिधर्मवत्त्वोभयसम्बन्धेन । धर्मे स्ववृत्तित्वं च स्वावच्छिन्नविशेष्यतानिरूपिततादृशप्रतियोगित्वाभावप्रकारतानिरूपकान्यत्व–स्वविशिष्टतादृशप्रतियोगित्वप्रकारतानिरूपकत्वोभयसम्बन्धेन । प्रकारतायां स्ववै० स्वावच्छिन्नविशेष्यतानिरूपितत्व–स्वव्या-

(१) स्वावच्छिन्नत्वमित्यत्र स्वनिष्ठावच्छेदकता निरवच्छिन्ना ग्राह्या । एवं तादृशधर्मावच्छिन्नप्रकारताकत्वमित्यत्र धर्मनिष्ठावच्छेदकतापि, तेन स्नेहसमवायिकारणतावच्छेदकवत् वन्हिव्यापकीभूताभावप्रतियोगिजलवान् ह्रद इति, जलं तादृशभावप्रतियोगि–तादृशकारणतावच्छेदकावच्छिन्नवांश्च ह्रद इति ज्ञानयोर्न प्रतिबन्धकत्वम् । एवं स्वावच्छिन्नत्वमित्यत्र स्वनिष्ठावच्छेदकता यादृशसम्बन्धावच्छिन्ना तद्धर्मावच्छिन्नत्वमित्यत्रापि तद्धर्मनिष्ठावच्छेदकता तादृशसम्बन्धावच्छिन्ना ग्राह्या, नातः सम्बन्धभेदनिबन्धनो दोषः। जलत्वसामानाधिकरण्येन वन्हिव्यापकीभूताभावप्रतियोगिनिश्चयकालीनजलवान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वाभावोपपत्तये स्वव्यापकत्वविशिष्टतादृशप्रतियोगित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नत्वस्योभयसम्बन्धघटकतया निवेशः । एकधर्मितावच्छेदकज्ञानेऽपरधर्मव्यापकत्वविशिष्टप्रकारकप्रतियोगित्वस्य संसर्गतावच्छेदकतायाः प्रामाणिकत्वे मीनस्तादृशाभावप्रतियोगीति ज्ञाने एव यत्र जलत्वव्यापकतायाः संसर्गतया भानं तादृशज्ञानकालीनजलवान् ह्रद इति ज्ञानस्य प्रतिबन्धकत्वाभावोपपत्तये स्वावच्छिन्नत्वस्य संसर्गतया प्रवेशः ।

व्यापकविषयिताशून्यज्ञानीयत्वं निवेशनीयम्, एवं च बाधविशिष्टव्यभिचारेऽतिव्याप्तिः स्फुटैवेति वदन्ति।

नचात्र स्वावच्छिन्नविषयकत्वनिष्ठमवच्छेदकत्वं प्रतिबन्धकतासामान्यावच्छेदकत्वं च स्वरूपसम्बन्धरूपं वाच्यमतो न बाधविशिष्टव्यभिचारेऽतिव्याप्तिः, बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वनिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकतैव" तदवच्छेदकयत्किञ्चिद्विषयित्वं बाधत्वावच्छिन्नानिरूपितं बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधविशिष्टव्यभिचारत्वे विरहादिति वाच्यम्। स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, तत्र पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यत्पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयित्वं तद्यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य पाषाणमयत्ववत्पर्वतत्वे सत्त्वात्। न च पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतं यत्किञ्चिद्विषयित्वं वन्ह्यभाववत्पाषाणमयत्वावच्छिन्नविषयित्वं तच्च पाषाणमयत्ववत्पर्वतत्वावच्छिन्नानिरूपितं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य पाषाणमयत्ववत्पर्वतत्वेऽसत्त्वान्नातिव्याप्तिरिति वाच्यम्। पाषाणमयत्वसामानाधिकरण्येन वन्ह्यभावाऽप्रसिद्धेः, पाषाणमयत्वसामानाधिकरण्येन वन्ह्यभावविषयकत्वं न प्रतिबन्धकतावच्छेदकमित्यतिव्याप्तेर्वारणायोगात्। न च तथापि द्वितीयावच्छेदकत्वमेवाऽनतिरिक्तवृत्तित्वरूपं वाच्यं, प्रथमन्तु स्वरूपसम्बन्धरूपमेवेति वाच्यम्। तथा सति जलवद्ह्रदेऽतिव्याप्तेः, जलवान् वन्ह्यभाववानितिज्ञानकालीनजलवद्ह्रदत्वावच्छिन्नविषयकत्वस्यापि प्रतिबन्धकतावच्छेदकतया स्वपदेन गृहीतुं शक्यतया तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं यद्वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वाव-

---

पकत्वविशिष्टतादृशप्रतियोगित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। धर्मवत्ता च स्वावच्छिन्नाभावनिष्ठह्रदत्वव्यापकताविशिष्टस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकान्यत्व—स्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन।

एवं च जलं तादृशाभावप्रतियोगि नवेति संशये जलत्वावच्छिन्नविशेष्यताकतादृशप्रतियोगित्वाभावप्रकारतानिरूपकान्यत्वविरहेण तादृशसंशयवृत्ति न जलत्वम्, ह्रदो जलवान्नवेतिसंशये च जलत्वावच्छिन्नाभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकान्यत्वविरहेण न तादृशसम्बन्धेन जलत्ववत्त्वमिति तादृशसंशयद्वयोर्व्युदासः।

तथापि अप्रामाण्यज्ञानानामनुगतरूपेण निवेशो न सम्भवति, तथाहि—जलं तादृशाभावप्रतियोगीतिज्ञानं यत्र तादृशप्रतियोगित्वाभाववति जले तादृशप्रतियोगित्वप्रकारकमित्यप्रामाण्यज्ञानास्कन्दितं जातं तज्ज्ञाने प्रतिबन्धकत्वाभावोपपत्तये एतादृशाऽप्रामाण्यज्ञानस्य विशेष्यत्व—सामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावः प्रतिबन्धकेऽवश्यं निवेश्यः। एवं जलवान् ह्रद इति ज्ञानं यत्र जलाभाववति जलप्रकारकमित्यप्रामाण्यज्ञानाऽऽस्कन्दितं जातं तत्र ज्ञाने "प्रतिबन्धकतावच्छेदकत्वाभावोपपत्तये प्रतिबन्धकतावच्छेदकीभूतज्ञाने" निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाऽप्रामाण्यज्ञानाभावो निवेशनीयः। एवं च यत्र मीनस्तादृशाभावप्रतियोगीतिज्ञानमेव तादृशप्रतियोगित्वाभाववति जले तादृशप्रतियोगित्वप्रकारकमित्यप्रामाण्यज्ञानास्कन्दितं जातं तत्र तादृशज्ञानकालीनमीनवान् ह्रद इति ज्ञानस्याऽप्रतिबन्धकत्वापत्तेः। एवं मीनस्तादृशाभावप्रतियोगीतिज्ञानकालीनमीनवान् ह्रद इति ज्ञानमेव यत्र जलाभाववति जलप्रकारकमित्यप्रामाण्यज्ञानास्कन्दितं तत्रापि तादृशज्ञानस्य प्रतिबन्धकत्वानुपपत्तेरिति संक्षेपः।

च्छिन्नविषयित्वं तथादृशधर्मावच्छिन्नानिरूपितं तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयताव-च्छेदकत्वस्य जलवद्ह्रदत्वे सत्त्वात् । न च यत्किञ्चिद्विषयित्वं स्वावच्छिन्नविषयित्वाव्यापकविष-यिताशून्यज्ञानीयत्वेन विशेषणीयम् , अन्यथाऽसम्भवापत्तेः , तथाच जलवद्ह्रदे नातिव्या-प्तिः, जलवद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूत—जलव-द्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयित्वाप्रसिद्धेरिति वाच्यम् । वन्ह्य-भाववान् धूमाभाववानितिज्ञानकालीनवन्ह्यभाववान् ह्रद इति ज्ञानस्यापि ह्रदधर्मिकधूमवत्ता-ज्ञानविरोधितया वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छे-दकीभूत—वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयित्वाप्रसिद्ध्या वन्ह्यभाववद्ह्रदादावसम्भवापत्तेः । न च जलवद्ह्रदादावतिव्याप्तिभिया प्रथमावच्छेदकत्वमेवाऽ-नतिरिक्तवृत्तित्वरूपं वाच्यं, द्वितीयन्तु स्वरूपसम्बन्धरूपमेवेति वाच्यम् । व्यभिचारघटितवा-धेऽव्याप्तिरित्युक्तत्वात् ।

नन्वत्रापि स्वावच्छिन्नविषयिताव्यापिका यावत्यः प्रकृतानुमितिप्रतिबन्धकतास्तत्प्रत्येका-वच्छेदकतायां यादृशघटकयत्किञ्चिद्धर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तादृशविषयितायां यद्यद्रूपावच्छिन्नानिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाघटितं यत्स्वावच्छिन्नं तद्रूपावच्छिन्नत्वं समुदितार्थः (१) ।

ह्रदो वह्निमानित्यादौ वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयिताव्यापिका बाधप्रतिबन्धकता तदवच्छेदकतायां मेयत्वविशिष्टबाधघटकबाधत्वात्मकयत्किञ्चिद्धर्मावच्छिन्नविषयितात्वव्यापक-त्वमस्ति तद्रूपावच्छिन्नविषयितायां मेयत्वविशिष्टबाधत्व—घटत्वाद्यवच्छिन्नानिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाघटितत्वं बाधेऽस्तीति लक्षणसमन्वयः ।

एवं मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, तादृशव्यभिचारत्वावच्छिन्नविषयिताव्या-पकव्याप्तिज्ञानप्रतिबन्धकतायां मेयत्वविशिष्टव्यभिचारघटकशुद्धव्यभिचारत्वावच्छिन्नविषयिता-त्वव्यापकत्वस्य सत्त्वेन तत्र च विषयितायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितत्वस्य सत्त्वात् तदवच्छिन्नाघटितत्वस्य च स्वावच्छिन्नेऽभावात् ।

---

(१) अत्रायमनुगमः । धर्मविशिष्टधर्मवत्त्वम् । वै० स्वतादात्म्य—स्वावच्छिन्नविषयिताव्यापकप्रतिब-न्धकतात्वव्यापकधर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसं० । धर्मे प्रति-बन्धकतात्वव्यापकत्वं च स्वविशिष्टरूपवत्त्वसम्बन्धेन, रूपे स्ववै० स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छे-दकत्व—स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन । रू-पवत्ता च स्वविशिष्टविषयितात्वव्यापकावच्छेदकताकत्वसम्बन्धेन । विषयितायां स्ववै० स्वावच्छिन्नत्व—स्वा-वच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन, द्वितीयसम्बन्धघटकधर्मे धर्मवै० स्वविशि-ष्टरूपावच्छिन्नविषयितानिष्ठकिञ्चिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वं नास्तीतिप्रतीतिसिद्धाभावनिरूपितप्र-तियोगितानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वसम्बन्धेन । रूपे स्ववै० प्रागु-क्तोभयघटकद्वितीयसम्बन्धेन(१) । अन्यत्सर्वं प्रागुक्तरीत्या बोध्यम् ।

---

(१) अत्र मेयत्वविशिष्टबाधत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकताव-च्छेदकवन्हित्वाद्यवच्छिन्नविषयितायां स्वावच्छिन्नानिरूपितत्वसत्त्वाद्दोषवारणाय प्रागुक्तद्वितीयसम्बन्धः—स्वा-वच्छिन्नविषयिताव्यापकप्रतिबन्धकत्वावच्छिन्नविषयितासामान्यकत्वरूपस्तदुभयसम्बन्धेन धर्मवैशिष्ट्यं रूपे बोध्यम् ।

**अथ वन्ह्यभावादिधर्मितावच्छेदककवन्ह्यादिप्रकारकबुद्धेरिव धूमव्यभिचारविशिष्टवन्ह्यादिधर्मितावच्छेदककस्य धूमव्याप्यतया वह्न्यादिप्रकारकग्रहस्याऽनाहार्यस्याऽसम्भवेन तादृशपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालम्बनानुमितेरप्रसिद्ध्या तादृशानुमितिप्रतिबन्धकताघटितयथाश्रु-**

---

एवं बाधविशिष्टव्यभिचारे च नातिव्याप्तिः, तादृशव्यभिचारत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतयोः प्रत्येकमवच्छेदकतायां बाधविशिष्टव्यभिचारघटकबाधत्वावच्छिन्नविषयितात्वव्यापकत्वस्य व्यभिचारत्वावच्छिन्नविषयितात्वव्यापकत्वस्य च सत्त्वात् , स्वस्य च स्वाऽघटितत्वाभावात्। अत्र च स्वरूपसम्बन्धरूपावच्छेदकतायां यादृशविशिष्टघटकविषयितात्वव्यापकत्वस्य विवक्षणात् वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयिताव्यापकज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतायां तादृशविशिष्टघटकजलवद्ह्रदादिविषयितात्वव्यापकत्वस्य सत्त्वात् तस्य च तदवच्छिन्नाघटितत्वाभावात्तादृशविशिष्टेऽतिव्याप्तिविरहाद्विशिष्टद्वयाघटितत्वं न निवेशनीयम्। एवं नीलरूपाभाववन्नीलादावतिव्याप्तिविरहेणाऽत्र तत्तद्विषयिताभेदोऽपि न निवेश्यः।

यद्वा तादृशप्रतिबन्धकतावच्छेदकतायां यादृशयादृशधर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तादृशतादृशयत्किञ्चिद्धर्मावच्छिन्नविषयितायां यद्यद्रूपावच्छिन्नानिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाघटितत्वं समुदितार्थः(१) इति चेन्न।

प्रागुक्तरीत्या वक्ष्यमाणैतत्कल्पापेक्षया गौरवस्य दुष्परिहरत्वात्।

लक्षणेऽनुमितिपदस्य समूहालम्बनानुमितिपरतया धूमव्यभिचारिवह्निमान् धूमवान् धूमव्याप्यवह्निमांश्चेति समूहालम्बनस्याऽऽहार्यतया तादृशानुमित्यप्रसिद्ध्या तत्रत्यबाधेऽव्याप्तिवारणार्थमत्रवदन्तीविकल्पस्य वक्ष्यमाणतयाऽनुमितिप्रतिबन्धकतालक्षणेऽव्याप्तिवारणप्रयासो व्यर्थ एवेत्याशङ्कते **अथेति**। **वन्ह्यभावादिधर्मितावच्छेदककवन्ह्यादिप्रकारकबुद्धेरिव**–निर्वह्निः पर्वतो वह्निमानित्यादिबुद्धेरिव। **धूमव्याप्यतया वन्ह्यादिप्रकारकग्रहस्येति**। धूमव्यभिचारिवह्निमान् धूमव्याप्यवह्निमानित्याकारकग्रहस्येत्यर्थः। **अनाहार्यस्याऽसम्भवेनेति**। उक्तज्ञानस्य स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वेनाऽऽहार्यत्वादिति भावः। **तादृशपक्षतावच्छेदकावच्छिन्नपक्षकेति**। धूमव्यभिचारिवह्निमत्त्वावच्छिन्नपक्षकेत्यर्थः। **समूहालम्बनानुमितेरिति**। धूमव्यभिचारिवह्निमान्

---

(१) अनुगमस्तु–धर्मविशिष्टधर्मवत्त्वम्। वै० स्वतादात्म्य–स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाघटितत्वोभयसम्बन्धेन। रूपे प्रतिबन्धकतात्वव्यापकता च स्वविशिष्टरूपवत्वसम्बन्धेन, रूपे स्ववै० स्वावच्छिन्नानिरूपितविषयितावच्छेदकत्व(१)–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन। रूपवत्वं च स्वावच्छिन्नविषयितात्वव्यापकावच्छेदकताकत्वसम्बन्धेन।

---

(१) स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितावृत्तिर्योऽभावस्तत्तदभावकूटवती यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वं समुदितार्थः। कूटत्वस्यापि तादृशविषयितावृत्त्यभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकप्रतियोगित्वेन निवेशः। अत्राऽधिकरणभेदेनाऽभावभेदे लक्षणसमन्वयो न सम्भवति तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितायां यद्यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकानिरूपकत्वाभावः तत्तद्रूपभिन्नं यद्रूपं तद्रूपविशिष्टत्वम्।

तल्लक्षणस्य तद्रूपावच्छिन्नपक्षकवन्ह्यादिहेतुकदोषेऽव्याप्तिं स्वयमेव वक्ष्यतीति तद्वारणायाऽऽयासोऽयं वृथेति चेद् ।

भवतु तावदेवम्, तथापि विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादौ दर्शितसमूहालम्बनानुमितिप्रसिद्ध्या विशेषगुणवद्घटरूपाऽऽश्रयाऽसिद्धेर्गुणवद्घटरूपबाधघटितायाः संग्रह आवश्यकः ।

यदि च तत्र घटत्वावच्छेदेन गुणवत्त्वमेव बाधः, आश्रयासिद्धिश्च तत्सामानाधिकरण्येन तदवच्छेदेन वा विशेषगुणवत्त्वम्, तस्याञ्च गुणत्वरूपसामान्यधर्मावच्छिन्ने घटत्वव्यापकताघटितोक्तबाधस्य न प्रवेशः,

---

धूमवान् धूमव्याप्यवह्निमांश्चेति समूहालम्बनानुमितेरित्यर्थः । अप्रसिद्ध्येति । तादृशसमूहालम्बनज्ञानेऽनुमितित्वविरहेणेति यावत् । तादृशेति । प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालम्बनेत्यर्थः । यथाश्रुतलक्षणस्येति । यद्रूपावच्छिन्नविषयिताव्यापिका प्रकृताऽनुमितिप्रतिबन्धकता तद्रूपवत्त्वमिति लक्षणस्येत्यर्थः । विशिष्टान्तराऽघटितघटितत्वस्याऽपीत्यपि बोध्यम् । तद्रूपावच्छिन्नपक्षकेति । धूमव्यभिचारिवह्निमत्त्वावच्छिन्नपक्षकेत्यर्थः, धूमसाध्यकेति शेषः । दोषे—बाधे । धूमाभाववद्धूमव्यभिचारिवह्निमदात्मके इति यावत् । स्वयमेवेति । दीधितिकृदेवेत्यर्थः । वक्ष्यति—अथ पर्वतत्वेन पक्षत्वे इत्यादिनेत्यादिः । तद्वारणप्रयास इति । अव्याप्तिवारणप्रयास इत्यर्थः । नञ्चतुष्टयोक्तिरूप इति यावत् । एवं—उक्तरीत्या, तावद्भवत्वित्यन्वयः, प्रयासो वृथा भवतु इति समुदितार्थः । अनाहार्यस्थलीयबाधघटिताऽऽश्रयासिद्धावव्याप्तिं स्मारयति तथापीति । वैयर्थ्येऽपीति भावः । संग्रह आवश्यक इति । आश्रयासिद्धावव्याप्तिवारणमावश्यकमित्यर्थः । विशिष्टान्तरं यद्गुणवद्घटत्वरूपबाधत्वं तद्घटितत्वेन विशेषगुणवद्घटरूपाऽऽश्रयासिद्धौ प्रसक्ताया अव्याप्तेर्वारणार्थं प्रयासः कर्त्तव्य इति यावत् ।

विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्राऽऽश्रयाऽसिद्धितावच्छेदकस्य विशेषगुणवद्घटत्वस्य विशिष्टान्तराऽघटितत्वाभावान्नातिव्याप्तिः, गुणवद्घटत्वरूपस्य बाधत्वस्य विशिष्टान्तरत्वाभावादित्याक्षिपति यदि चेति । तत्र—विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्र । घटत्वावच्छेदेन गुणवत्त्वमेव बाध इति । न तु घटत्वसामानाधिकरण्येन गुणवत्त्वं बाध इति भावः । तथाच धर्मितावच्छेदकैकदेशव्यापकत्वावगाहनस्य धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धावनभ्युपगमेन विशेषगुणाभाव—घटत्वोभयावच्छेदेन गुणाभावावगाहिज्ञानस्य गुणाभावांशे तत्संसर्गांशे वा घटत्वमात्रव्यापकत्वावगाहित्वाभावेन "सामानाधिकरण्येनाऽनुमितिं प्रति सामानाधिकरण्येन बाधनिश्चयस्याऽप्रतिबन्धकतया" तादृशानुमित्यप्रतिबन्धकज्ञानविषयस्य घटत्वसामानाधिकरण्येन गुणवत्त्वस्य बाधत्वं न सम्भवतीति भावः । आश्रयासिद्धिश्चेति । तत्सामानाधिकरण्येन—घटत्वसामानाधिकरण्येन, विशेषगुणवत्त्वमित्युत्तरेणान्वयः । घटत्वावच्छेदेन विशेषगुणाभावस्य पक्षतावच्छेदकघटकत्वे तत्सामानाधिकरण्येन विशेषगुणवत्त्वमाश्रयासिद्धिरिति भावः । तदवच्छेदेन वेति । घटत्वावच्छेदेन वेत्यर्थः । विशेषगुणवत्त्वमिति । आश्रयासिद्धिरिति पूर्वेणा-

विशेषगुणत्वेन घटत्वव्यापकतायास्तत्र प्रवेशेऽपि सामान्यरूपेण व्यापकतायास्तदनन्तर्भावादिति न तादृशासिद्ध्यसंग्रहप्रसङ्ग इत्युच्यते। तदापि विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ द्वितीयक्षणावच्छिन्ने घटे विशेषगुणवत्त्वरूपाश्रयासिद्धौ तदवच्छिन्ने घटे गुणवत्त्वरूपबाधप्रवेशस्यावश्यकत्वात्, लक्षणे च तत्संग्रहस्यावश्यकतया उक्तविशेषणदानानुपपत्तिः।

वस्तुतस्तु 'अत्र वदन्ती'त्यादिनिष्कृष्टकल्पे मेयत्वविशिष्टव्यभिचारा-

---

ऽन्वयः। घटत्वसामानाधिकरण्येन विशेषगुणाभावस्य पक्षतावच्छेदकघटकत्वे घटत्वावच्छेदेन विशेषगुणवत्त्वमाश्रयासिद्धिरिति भावः, तथाचाऽऽश्रयासिद्धिस्तूभयथैव भविष्यतीति ध्येयम्। तस्यां च—घटत्वसामानाधिकरण्येन घटत्वावच्छेदेन वा विशेषगुणवद्घटरूपाऽऽश्रयासिद्धौ च। तत्र—आश्रयासिद्धौ। सामान्यरूपेण व्यापकतया इति। गुणत्वरूपसामान्यधर्मावच्छिन्नव्यापकतया इत्यर्थः। तदनन्तर्भावादिति। आश्रयासिद्ध्यनन्तर्भावादित्यर्थः। विशेषगुणत्वावच्छिन्ने घटत्वव्यापकत्वं च घटत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकविशेषगुणत्वतदितरोभयानवच्छिन्नप्रतियोगितानवच्छेदकविशेषगुणत्ववत्त्वम्। गुणत्वावच्छिन्ने घटत्वव्यापकता च घटत्वसमानाधिकरणाभावीयगुणत्वतादितरोभयानवच्छिन्नप्रतियोगितानवच्छेदकगुणत्ववत्त्वम्। नहि विशेषगुणत्वावच्छिन्ने घटत्वव्यापकता गुणत्वतदितरोभयानवच्छिन्नप्रतियोगिताघटिता, तथासति द्रव्यत्वावच्छेदेन विशेषगुणवत्ताबुद्धेरपि प्रमात्वापत्तेरिति ध्येयम्। एवं च द्वयोर्व्यापकतयोर्भेदाद्विशिष्टान्तरतावच्छेदकं यद् गुणत्वावच्छिन्ने घटत्वव्यापकताघटितबाधत्वं तदघटितत्वस्य विशेषगुणत्वावच्छिन्ने घटत्वव्यापकताघटिताऽऽश्रयासिद्धौ सत्त्वान्नाश्रयासिद्ध्यसंग्रह इति भावः। अत्र गुणसामान्याभाववान् घटो विशेषगुणाभाववानित्यत्र विशेषगुणवद्घटरूपबाधेऽव्याप्तिः, तस्य सामानाधिकरण्येन गुणवद्घटरूपाऽऽश्रयासिद्धिघटितत्वादिति कथं नोक्तमिति विभावनीयम्।

**तदापीति**। तत्स्थलीयबाधेऽव्याप्तिविरहेऽपीत्यर्थः। **द्वितीयक्षणावच्छिन्न इति**। अत्राप्यवच्छेदावच्छेदेनाऽऽश्रयासिद्धिबाधौ, किन्तु स्वरूपसम्बन्धरूपाऽवच्छेदकत्वं, न तु व्यापकत्वरूपं, यत्र देशस्य कालस्य वाऽवच्छेदकता तत्र स्वरूपसम्बन्धरूपमेव तत्। कालादिधर्मितावच्छेदककस्थले सामानाधिकरण्येनाऽपि बाधनिश्चयस्य सामानाधिकरण्येन तद्वत्ताबुद्धिविरोधित्वादिति भावः। **तत्संग्रहस्य**—बाधसंग्रहस्य। **उक्तविशेषणदानानुपपत्तिरिति**। विशिष्टान्तराऽघटितत्वविशेषणदानानुपपत्तिरित्यर्थः।

ननु अनुमितिप्रतिबन्धकताघटितलक्षणस्य दीधितिकृतैव परित्याज्यतया इयमव्याप्तिरपि तत्त्यागबीजमध्ये प्रवेश्येत्यत आह **वस्तुतस्त्विति**। **निवेशनीयतयेति**। यद्रूपे इत्यादिः। **दर्शितेति**। आश्रयासिद्धिघटितेत्यर्थः। व्यभिचारघटितेत्यपि बोध्यम्। **दोष एवेति**। दोषोऽस्त्येवेत्यर्थः।

अत्रेदं बोध्यम्। यद्रूपावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-साध्यव्याप्य-

द्विवारणाय विशिष्टान्तराऽघटितत्वस्य निवेशनीयतया दर्शितबाधाद्यसंग्रहो दोष एव ।

एतेन स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं समुदितलक्षणार्थः ।

मेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं, तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयिताकशुद्धव्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूपितत्वाऽव्याप्यत्वात् । उक्तस्थले विशेषगुणाविशिष्टघटादिरूपाऽऽश्रयासिद्ध्यादिविषयकत्वावच्छिन्नविशिष्टपक्षग्रहादिनिरूपितयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य

---

हेतुप्रकारताकत्वोभयाभावः विरोधिविषयिताप्रयुक्तः तद्रूपवत्त्वं लक्षणं 'अत्र वदन्ती'त्यादिना वक्ष्यति दीधितिकारः । वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिः ह्रदो वह्निमान् वह्निव्याप्यधूमवानितिसमूहालम्बनानुमितिर्नैव भवितुमर्हति विरोधिनिश्चयसत्त्वात्, किन्तु घटवद्भूतलमित्याद्यनुमितय एव, तादृशानुमितिसामान्ये ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्व—वह्निव्याप्यधूमप्रकारताकत्वोभयाभावसत्त्वात्तद्रूपवत्त्वस्य वन्ह्यभाववद्ह्रदे सत्त्वाल्लक्षणसमन्वयः । तादृशोभयाभावः विरोधिविषयिताप्रयुक्तोऽपि, तज्ज्ञानानन्तरज्ञाननिष्ठतादृशोभयाभावे पूर्वज्ञानीयविषयितायाः प्रयोजकत्वात्, यादृशपक्षे यादृशसाध्यवैशिष्ट्यावगाहित्वं निविष्टं तादृशपक्षे तादृशसाध्याभाव—तद्व्याप्याऽन्यतरविषयितायाः विरोधिविषयितापदार्थत्वाच्च । अत्र मेयत्वविशिष्टव्यभिचारेतिव्याप्तिः, तद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्येऽपि उभयाभावसत्त्वादतो यद्रूपे विशिष्टान्तराऽघटितत्वं निवेशनीयम्, तथाचोक्तबाधे आश्रयासिद्धौ वाऽव्याप्तिर्दुर्वारैवेति हृदयम् ।

एतेन—निष्कृष्टकल्पे प्रतिबन्धकताया अघटकत्वेन । अस्य परास्तमित्यनेनाऽन्वयः । स्वपदं लक्ष्यतावच्छेदकीभूतव्यभिचारत्व—बाधत्वादिपरम् । तथा च स्वं—वन्ह्यभाववद्ह्रदत्वादि, तदवच्छिन्ननिरूपितविषयित्वावच्छिन्नाऽनुमितिप्रतिबन्धकतावच्छेदकविषयिताको यो विशिष्टः वन्ह्यभाववद्ह्रदः तन्निरूपितविषयितात्वव्यापकत्वस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वेन तादृशनिरूप्यताको धर्मः—वन्ह्यभाववद्ह्रदत्वं तद्वत्त्वस्य वन्ह्यभाववद्ह्रदे सत्त्वाल्लक्षणसमन्वयः ।

मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिं निराकरोति **मेयत्वविशिष्टेति । तदवच्छिन्नेति ।** मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नेत्यर्थः । **तदवच्छिन्ननिरूपितत्वाऽव्याप्यत्वादिति ।** मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यत्वाव्याप्यत्वादित्यर्थः । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यतायाः शुद्धव्यभिचारविषयितात्वव्यापकत्वाभावादिति यावत् । विशेषगुणवद्घटरूपाऽऽश्रयासिद्धावव्याप्तिमुद्धरति **उक्तस्थले इति ।** विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्रेत्यर्थः । **विशिष्टपक्षग्रहेति ।** पक्षतावच्छेदकविशिष्टपक्षग्रहेत्यर्थः । विशेषगुणाभाववान् घट इत्याकारकग्रहेति यावत् । तादृशविषयिताको विशिष्टः

**तादृशाऽऽश्रयासिद्ध्यादिनिरूपितत्वव्याप्यत्वात्तत्र लक्षणसमन्वयः । प्रतिबन्धकतायां यावत्त्वानिवेशान्नोक्तरीत्या बाधविशिष्टव्यभिचारादावतिप्रसङ्गः ।**

---

विशेषगुणवद्‌घट एव, न तु गुणवद्‌घटरूपो बाधः, तस्य विशिष्टपक्षग्रहनिरूपितप्रतिबन्धकतावच्छेदकविषयिताकत्वाभावात् ।

बाधविशिष्टव्यभिचारेऽपि नातिव्याप्तिरित्याह **यावत्त्वानिवेशादिति । उक्तरीत्या—अथवेत्यादि** "चतुर्थनयो"क्तरीत्या इति । तथाच तादृशबाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्ना या व्याप्तिग्रहनिरूपिता प्रतिबन्धकता "अनुमितिनिरूपिता प्रतिबन्धकता वा" तवदच्छेदकविषयिताको विशिष्टाशुद्धव्यभिचारः "शुद्धबाधो वा" तादृशव्यभिचारविषयितात्वस्य "बाधविषयितात्वस्य वा" बाधविशिष्टव्यभिचारनिरूपितत्वाव्याप्यत्वान्नातिव्याप्तिरिति भावः ।

एवं व्यभिचारघटितबाधेऽपि नाव्याप्तिः, धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयकत्वावच्छिन्नग्रहनिरूपितयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताको विशिष्टः—व्यभिचारः, तादृशबाधविषयितात्वस्य तादृशबाधनिरूपितत्वव्याप्यत्वात् ।

यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताक"वन्ह्यभाववद्‌ह्रदादिरूप"विशिष्टनिरूपितविषयितात्वस्य ह्रदत्वाद्यवच्छिन्ननिरूप्यताव्याप्यत्वात् सर्वत्र ह्रदादिरूपबाधाद्येकदेशेऽतिव्याप्तिरतो यत्किञ्चित्प्रतिबन्धकतायां स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नत्वनिवेशः । तथाच प्रतिबन्धकतायां ह्रदत्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नत्वविरहात्स्वपदेन ह्रदत्वस्य धारणाऽसम्भवान्नातिव्याप्तिः ।

अत्र स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नेत्यत्र विषयित्वनिष्ठावच्छेदकता—प्रतिबन्धकतावच्छेदकविषयितेत्यत्राऽवच्छेदकता च यदि स्वरूपसम्बन्धरूपा उच्यते तदा कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाऽभाववद्वृक्षेऽतिव्याप्तिः,कपिसंयोगाभाववद्वृक्षत्वावच्छिन्ननिरूपितविषयितानिष्ठस्वरूपसम्बन्धरूपाऽवच्छेदकतानिरूपक"साध्यवत्ताग्रहनिरूपितप्रतिबन्धकतात्मक"यत्किञ्चित्प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयताको यो विशिष्टः कपिसंयोगाभाववद्वृक्षरूपः तन्निरूपितविषयितात्वव्यापकत्वस्य कपिसंयोगाभाववद्वृक्षत्वावच्छिन्ननिरूप्यतायां सत्त्वात् ।

न च स्वावच्छिन्ननिरूपितविषयित्वनिष्ठावच्छेदकत्वमेवानतिरिक्तवृत्तित्वं वाच्यं, तावतैव कपिसंयोगाभाववद्वृक्षेऽपि नातिव्याप्तिः, अव्याप्यवृत्तित्वभ्रमानास्कन्दिताऽऽनाहार्यत्वादिविशिष्टनिश्चयीयतद्विषयितात्वव्यापकत्वस्य प्रतिबन्धकतायामसत्त्वात् । एवं चेदानीं विशिष्टद्वयाघटितत्वमपि न निवेशनीयम्, वन्ह्यभाववज्जलवद्वृत्तिजलवद्‌ह्रदत्वावच्छिन्नविषयिताव्यापिका ज्ञानवैशिष्ट्यावच्छिन्ना या यत्किञ्चित्प्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितात्वस्य वन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयितायामपि तत्र वन्ह्यभाववज्जलवद्वृत्तिजलवद्‌ह्रदत्वावच्छिन्ननिरूप्यताविरहेणाऽतिव्याप्तिविरहात् ।

उक्तरत्यैवाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वानिवेशेऽपि कपिसंयोगाभाववद्वृक्षे नाति-

व्याप्तिः, तादृशप्रतिबन्धकताशून्याऽव्याप्यवृत्तित्वज्ञानकालीनाऽनाहार्यत्वविशिष्टकपिसंयोगाभा-
ववद्वृक्षाविषयकनिश्चये कपिसंयोगाभाववद्वृक्षत्वावच्छिन्नविषयितासत्त्वेन प्रतिबन्धकतायां
तादृशविषयिताव्यापकत्वविरहात्, परन्तु वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नवि-
षयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतानातिरिक्तवृत्तिविषयिता वन्ह्यभाववज्जलवद्वृत्तिजल-
वद्ह्रदत्वावच्छिन्नविषयितैवेति तत्त्वव्यापकत्वस्य तादृशजलवद्ह्रदत्वावच्छिन्ननिरूप्यतायां
सत्त्वेन वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिवारणार्थं विशिष्टद्वयाऽघटितत्वं निवेश-
नीयमिति गौरवम्। एवं च पूर्वमनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वम्, उत्तरत्र स्वरूपसम्बन्ध-
रूपं तदिति विवेकः।

मान्यास्तु सत्प्रतिपक्षेऽव्याप्तिवारणाय द्वितीयाऽवच्छेदकत्वमपि अनतिरिक्तवृत्तित्वरूपं
ग्राह्यम्, अन्यथा जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ह्रदत्वावच्छिन्नविषयित्वावच्छि-
न्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावज्जलवद्ह्रदत्वावच्छिन्नविषयितात्व–
व्यापकत्वस्य जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ह्रदत्वावच्छिन्ननिरूप्यतायां विरहा-
दव्याप्तिप्रसङ्गात्। एवमुक्तसत्प्रतिपक्षैकदेशेऽतिव्याप्तिवारणाय प्रथममवच्छेदकत्वमपि तथैव
ग्राह्यम्, अन्यथा जलवद्ह्रदत्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपाऽवच्छेदकतानिरूपक-
"सत्प्रतिपक्षनिश्चयनिष्ठ" प्रतिबन्धकताऽनतिरिक्तवृत्तिजलव्यापकवन्ह्यभावसमानाधिकरणजलव-
द्ह्रदत्वावच्छिन्नविषयितात्वव्यापकत्वस्य जलवद्ह्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वादतिव्याप्ति-
प्रसङ्गात्। स्वावच्छिन्ननिरूपितविषयितासामान्यावच्छिन्नत्वनिवेशे स एव दोषो बोध्यः। एवं
चात्र कल्पे विशिष्टद्वयाघटितत्वमपि निवेशनीयमिति प्राहुः।

स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितात्वव्यापक-
त्वोक्तौ भ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नविषयिताशालिनिश्चयीयविषयितायाः तादृश-
यत्किञ्चित्प्रतिबन्धकतावच्छेदकतया तादृशविषयितात्वव्यापकत्वस्य स्वावच्छिन्ननिरूप्यतायां
विरहेणाऽसम्भवः स्यादतो विशिष्टेति। तथाच विशिष्टनिरूपितविषयितायाः स्वावच्छिन्ननिरू-
प्यत्वान्नाऽसम्भव इति ध्येयम्।

मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय तादृशविषयितात्वसामानाधिकरण्यमपहा-
य व्यापकत्वनिवेशः।

अनुगमस्तु—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वम्।
रूपे प्रतिबन्धकतावै॰ स्ववृत्तित्व—स्ववृत्तिधर्मावच्छिन्नविषयतात्वव्यापकत्वोभयसम्बन्धेन।
प्रथमस्ववृत्तित्वं च रूपे स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन। धर्मे द्वितीयस्ववृत्तित्वं च स्व-
विशिष्टविषयिताव्यापकत्वसम्बन्धेन। द्वितीयसम्बन्धघटकव्यापकत्वं च स्वावच्छिन्ननिरूपि-
तत्वसम्बन्धेन। उभयत्र स्ववै॰ स्वावच्छिन्नत्वसम्बन्धेनेति ध्येयम्।

अत्र सर्वं गगनवदित्यत्र गगनाभाववत्सर्वरूपबाधेऽतिव्याप्तिः, गगनाभाववत्सर्वत्वावच्छिन्न-
विषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकगगनाभाववद्घटविषयितात्वव्या-
पकत्वस्य गगनाभाववत्सर्वत्वावच्छिन्ननिरूप्यतायामसत्त्वादतस्तादृशविशिष्टनिरूपितविषयि-
तायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं निवेशनीयम्, तथाच गगनाभा-

वत्त्वसर्वत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वविरहेण गगनाभाववद्घटाविषयि–
तायाः धर्तुमशक्यतया गगनाभाववत्सर्वत्वावच्छिन्नविषयिताया एव तादृशतया तत्त्वव्याप-
कत्वस्य गगनाभाववत्सर्वत्वावच्छिन्ननिरूप्यतायां सत्त्वाल्लक्षणसमन्वयः ।

एवं स्वावच्छिन्ननिरूपितविषयित्वेऽपि स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीय-
त्वं विवक्षणीयम् , अन्यथाऽसम्भवापत्तेः । वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः जाति-
मान् वन्ह्यभाववानित्यनुमित्यप्रतिबन्धकज्ञानेऽपि सत्वेन तादृशविषयिताव्यापकत्वस्य प्रति-
बन्धकतायां विरहात् ।

एवमनाहार्याऽप्रामाण्यज्ञानाऽव्याप्यवृत्तित्वभ्रमानास्कन्दितनिश्चयीयत्वमपि तत्र निवे-
श्यम् , अन्यथाऽऽहार्यज्ञानादिकमादाय पूर्वोक्तदोषात् ।

एवं यत्किञ्चित्प्रतिबन्धकतावच्छेदकेत्यत्र स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे यत्किञ्चित्प्र-
तिबन्धकतावच्छेदकविषयितापदेन विषयितासामान्यं विवक्षणीयम् , अन्यथा वन्ह्यभावव-
द्ह्रदेऽव्याप्त्यापत्तेः, निरुक्तप्रतिबन्धकतावच्छेदकत्वस्य ह्रदत्वावच्छिन्नविषयितायां सत्वेन
तादृशविषयितात्वव्यापकत्वस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूप्यत्वे विरहात् । सामान्यपद-
निवेशे च ह्रदत्वावच्छिन्नविषयितासामान्ये प्रतिबन्धकतावच्छेदकत्वविरहेण न सा यत्कि-
ञ्चित्प्रतिबन्धकतावच्छेदकविषयितापदेन धर्त्तुं शक्यते, किन्तु वन्ह्यभाववद्ह्रदत्वावच्छिन्नविष-
यितैव तत्त्वव्यापकत्वस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वाल्लक्षणसमन्वयः ।

एवं च ह्रदो वह्निमानित्यत्र जातिमद्वन्ह्यभाववद्ह्रदेऽतिव्याप्तिः, जातिमद्वन्ह्यभावव-
द्ह्रदत्वावच्छिन्नविषयिताव्यापकयत्किञ्चित्प्रतिबन्धकता साध्यवत्ताबुद्धिप्रतिबन्धकतैव, तदव-
च्छेदकत्वं च जातिमद्वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयवन्ह्य-
भाववद्ह्रदत्वावच्छिन्नविषयितासामान्ये नास्ति तत्सामान्यान्तर्गत–जातिमान् वन्ह्यभाववानिति-
ज्ञानीयविषयितायां तदभावात् , किन्तु जातिमद्वन्ह्यभाववद्ह्रदत्वविशिष्टविषयितायामेव, तत्त्व-
व्यापकत्वस्य तादृशविशिष्टनिरूप्यतायां सत्वादतो विशिष्टविषयितायां यद्रूपावच्छिन्नविषयि-
त्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेशनीयम् , एवं च तादृशयत्किञ्चित्प्रतिबन्धकता-
वच्छेदकत्वस्य जातिमद्वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीय–
वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीय–जातिमान् वन्ह्यभाववानिति-
ज्ञानव्यावृत्तवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितासामान्ये सत्वेन तत्र च जातिमद्वन्ह्यभाव-
द्ह्रदत्वावच्छिन्ननिरूप्यत्वाभावेन नातिव्याप्तिः ।

तथा च स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्याऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दि-
तनिश्चयीयस्वावच्छिन्नविषयिताव्यापकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्किञ्चित्प्रति-
बन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्य-
ज्ञानीय–यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितात्वव्यापकत्वावच्छिन्नि-
रूप्यताकधर्मवत्त्वं लक्षणं पर्यवसितम् ।

श्रीचरणास्तु स्वावच्छिन्नविषयित्वावच्छिन्नेत्यत्र स्वावच्छिन्नविषयित्वनिष्ठावच्छेदकत्वम-
नतिरिक्तवृत्तित्वमेव, स्वरूपसम्बन्धरूपाऽवच्छेदकतात्मकत्वे ह्रदेऽतिव्याप्त्यापत्तेः, ह्रदत्वाव-
च्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतविषयितात्वव्यापकत्वस्य ह्रदत्वावच्छिन्न-

निरूप्यत्वेऽसत्वात्।

संयोगवत्संयोगपक्षकसंयोगवत्संयोगवत्संयोगाभावस्य साध्यतायां चतुःसंयोगेऽतिव्याप्तेश्च, चतुःसंयोगत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यभ्रमात्मकज्ञानीयविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितात्वव्यापकत्वस्य चतुःसंयोगत्वावच्छिन्ननिरूप्यतायां सत्वात्।

एतेनाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशेऽपि अव्यापकीभूतविषयिताशून्यत्वनिवेशस्याऽऽवश्यकतया तेनैव ह्रदादिरूपैकदेशेऽतिव्याप्तिवारणसम्भवेऽनतिरिक्तवृत्तित्वरूपतन्निवेशे प्रयोजनाभाव इति निरस्तम्।

न च सामान्यपदनिवेशेनैवोक्तद्वितीयदोषस्य वारणं सम्भवतीति वाच्यम्। पाषाणमयत्ववत्पर्वतेऽतिव्याप्तेः।

एवं यत्किञ्चित्प्रतिबन्धकतावच्छेदकेऽत्राऽवच्छेदकत्वमपि न स्वरूपसम्बन्धरूपम्, तथासति वन्ह्यभाववद्ह्रदरूपबाधेऽव्याप्तिः, निरुक्तप्रतिबन्धकतावच्छेदकत्वस्य ह्रदत्वावच्छिन्नविषयितायां सत्वेन तत्वव्यापकत्वस्य वन्ह्यभाववद्ह्रदत्वावच्छिन्ननिरूप्यतायामभावात्। न चाऽनतिरिक्तवृत्तित्वनिवेशेऽपि अव्यापकीभूतविषयिताशून्यत्वनिवेशस्याऽऽवश्यकतया तेनैव निरुक्ताऽव्याप्तेर्वारणसम्भवेऽनतिरिक्तवृत्तित्वनिवेशो निष्प्रयोजनक इति वाच्यम्। निरुक्तपक्षसंयोगात्मकबाधेऽव्याप्त्यापत्तेः, निरुक्तप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकत्वस्य–चतुःसंयोगत्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यभ्रमात्मकज्ञानीयचतुःसंयोगत्वावच्छिन्नविषयितायां सत्वेन तत्वव्यापकत्वस्य निरुक्तलक्ष्यतावच्छेदकधर्मावच्छिन्ननिरूप्यत्वेऽभावात्। न च सामान्यपदं निवेशनीयमिति वाच्यम्। जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ह्रदरूपसत्प्रतिपक्षेऽव्याप्त्यापत्तेरिति प्राहुः।

ननु "प्रकृतानुमितिनिरूपित"यत्किञ्चित्प्रतिबन्धकतावच्छेदकीभूतविषयितात्वव्यापकत्वमित्येव निवेश्यतां किं स्वावच्छिन्नविषयकत्वनिवेशेनेति चेन्न।

उक्तरीत्याऽह्रदेऽतिव्याप्त्यापत्तेः। न च स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्य विशिष्टविषयितायां निवेशनीयतया नैकदेशेऽतिव्याप्तिरिति वाच्यम्। यत्राऽङ्कुरविशेषे जलवद्ह्रदविषयकं नियमतः सत्प्रतिपक्षविषयसमूहालम्बनमेव ज्ञानं जायते, कदाचिच्च सत्प्रतिपक्षांशेऽप्रामाण्यज्ञानास्कन्दितमपि तत्र जलवद्ह्रदेऽतिव्याप्तिः, तत्र सत्प्रतिपक्षविषयितायाः जलवद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकत्वविरहात्, तदव्यापकीभूता सत्प्रतिपक्षविषयितान्यविषयितैव तच्छून्यज्ञानीयत्वस्य सत्प्रतिपक्षविषयितायां सत्वात्। न च स्वावच्छिन्नविषयिताव्यापकत्वनिवेशेऽपि जलवद्ह्रदत्वावच्छिन्नविषयिताव्यापकत्वस्य प्रतिबन्धकतायां सत्वादतिव्याप्तितादवस्थ्यमिति वाच्यम्। स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयितावत्व–स्वाभाववत्वोभयसम्बन्धेनाऽभावविशिष्टान्यज्ञानीयत्वस्य स्वावच्छिन्नविषयितायां निवेशात्। स्वाभावश्च स्वरूप–विशेष्यतान्यतरसम्बन्धेन। एवं च तादृशजलवद्ह्रदत्वावच्छिन्नविषयितायाश्चाऽप्रामाण्यज्ञानास्कन्दितज्ञानेऽपि सत्वेन तत्र प्रतिबन्धकताया असत्वान्नातिव्याप्ति(१)रिति ध्येयम्।

---

(१) कालीशङ्करास्तु–विशिष्टविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वनिवेशे

नचाऽत्राऽसाधारण्येऽव्याप्तिः, असाधारण्यविषयिताऽव्यापकप्रतिबन्धकत्वाऽप्रसिद्धेरिति वाच्यम् । अनाहार्यत्वादिविशिष्टपक्षधर्मिकहेतुमत्ताज्ञानाऽऽकालीनत्वाऽसाधारण्यविषयकत्वोभयाभाववत्त्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायां विवक्षणीयत्वात्(१) ।

---

जातिमद्वह्न्यभाववद्ध्रदेऽतिव्याप्तिरतो यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं निवेश्यम्, तथाच स्वावच्छिन्नविषयित्वावच्छिन्नत्वाऽनिवेशे ह्रदादावतिव्याप्तितादवस्थ्यम् । न च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमिवोक्तातिव्याप्तिभिया स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेश्यम्, तावतापि व्यापकत्वानिवेशापेक्षया लाघवादिति वाच्यम् । तथासति वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तेः । न च विशिष्टद्वयाऽघटितत्वनिवेशान्न तत्राऽतिव्याप्तिरिति वाच्यम् । व्यापकत्वनिवेशापेक्षया विशिष्टद्वयाघटितत्वनिवेशस्यैव गुरुत्वात्, एतत्कल्पे विशिष्टद्वयाघटितत्वद्वयानिवेशादित्याहुः ।

अपरे तु द्वितीयादिशि स्वरूपसम्बन्धरूपाऽवच्छेदकत्वघटितोऽयं कल्पः, तत्र स्वावच्छिन्नविषयकत्वानुपादाने तु पाषाणमयत्ववत्पर्वतेऽतिव्याप्त्यापत्तेरिति वदन्ति ।

(१) नचैवमपि द्वितीयदिशि स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशस्य सिद्धान्ततया अभावो गगनत्ववानाधेयत्वादित्यत्राऽसाधारण्येऽव्याप्तिः, अनाहार्यत्वादिविशिष्टनिरुक्तोभयाभाववत्तादृशाऽसाधारण्यविषयिताकनिश्चयत्वव्यापकयत्किञ्चित्प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाच्छेदकतावति तादृशाऽसाधारण्यविषयित्वाव्यापकविषयिताशून्य – स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयाऽऽधेयत्वत्ववदभावत्वावच्छिन्ननिरूपितहेतुमत्पक्षविषयित्वे तादृशाऽसाधारण्यत्वावच्छिन्ननिरूप्यत्वाभावात् । न च तादृशयत्किञ्चित्प्रतिबन्धकतायाः साक्षान्निरूपिताऽवच्छेदकतावद्विषयितायामेव तन्निरूप्यत्वं विवक्षितं, हेतुमत्पक्षविषयिता च न तादृशीति वक्तव्यम् । ह्रदो जलवद्ध्रदकालीनवह्निमान् पङ्कजादित्यत्र जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तिः, जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयित्वव्यापकयत्किञ्चित्प्रतिबन्धकता जलवद्ध्रदविषयकनिश्चयविशिष्टतादृशजलत्वावच्छिन्नविषयकनिश्चयप्रतिबन्धकतैव तत्साक्षादवच्छेदिका च तादृशजलत्वावच्छिन्नविषयितैव, तत्र च तादृशजलत्वावच्छिन्ननिरूप्यत्वस्य सत्त्वादिति वाच्यम् । तादृशयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितायामसाधारण्यविषयिताभिन्नत्वाऽसाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात्, असाधारण्यघटकहेतुमत्पक्षविषयिता च नोभयाभाववती, किन्तु विशिष्टाऽसाधारण्यविषयितैव, तत्र च तादृशासाधारण्यत्वावच्छिन्ननिरूप्यत्वसत्त्वान्नाव्याप्तिः, ह्रदो जलवद्ध्रदकालीनवह्निमान्पङ्कजादित्यत्र निरुक्तजले नातिव्याप्तिः, असाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभावप्रयुक्तनिरुक्तोभयाभाववत्यां तादृशजलत्वावच्छिन्नविषयिताव्यापकयत्किञ्चित्प्रतिबन्धकतावच्छेदिकायां जलवद्ध्रदविषयितायां तादृशजलत्वावच्छिन्ननिरूप्यत्वाभावात्, एकरूपेण प्रतिबन्धकत्वे तु असाधारण्यरूपपङ्कजविषयितैव तादृशी । प्रथममवच्छिन्नान्तानुपादाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतानिरूपितावच्छेदकतावद्वह्न्यभावत्वावच्छिन्नविषयितायां बाधनिरूप्यत्वाभावादसम्भवः । यद्रूपावच्छिन्नविषयितासामान्यं तादृशप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नविषयितायां निरूप्यत्वोक्तौ पर्वतो वह्निमानित्यत्र पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिः, पाषाणमयत्वविशिष्टपर्वतविषयितासामान्यस्य तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नयत्किञ्चित्प्रतिबन्धकतायामवच्छेदकत्वात् । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभावविवक्षया तद्दोषवारणेऽपि कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः, तादृशानुमितित्वव्यापकसाध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां कपिसंयोगाभाववद्वृक्षविषयितासामान्यस्यावच्छेदकत्वात्, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे च वन्ह्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः, प्रकृतानुमितिनिरूपितयत्किञ्चित्प्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तदनतिरिक्तवृत्तिविषयिता च तादृशविशिष्टविषयकत्वाऽव्यापकविषयिताशून्यज्ञानीयतादृशविशिष्टविषयितैव तद्वारणाय विशिष्टद्वयाऽघटितत्वनिवेशे गौरवम्, अतो यथाश्रुतमेव साधु । अत्रायमनुगमः—पदार्थविशिष्टपदार्थत्वं द्वैविशिष्टद्वयाऽघटितत्वनिवेशे गौरवम्, अतो यथाश्रुतमेव साधु । अत्रायमनुगमः—पदार्थविशिष्टपदार्थत्वं च स्वतादात्म्य–स्वावच्छिन्ननिरूप्यतावृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वम्, पदार्थवैशिष्ट्यं च स्वतादात्म्य–स्वावच्छिन्ननिरूप्यतावृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वा-

**स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वानवच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताको धर्मस्तद्वत्त्वं समुदितलक्षणार्थः ।**

**प्रमेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं तदवच्छिन्नानिरूपितशुद्धव्यभिचारत्वाद्यवच्छिन्नविषयित्वावच्छिन्नायामेव प्रतिबन्धकतायां**

---

**स्वावच्छिन्नेति** । लक्ष्यतावच्छेदकपरं स्वपदम् । तथाच वन्ह्यभाववद्ध्रदत्वावच्छिन्नानिरूपिता या "विशिष्टविषयिता" व्यभिचारादिविषयिता तदनवच्छिन्नप्रतिबन्धकतावच्छेदिका या वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयिता तत्को यो धर्मो वन्ह्यभाववद्ध्रदत्वरूपो धर्मस्तद्वत्त्वस्य वन्ह्यभाववद्ध्रदे सत्वाल्लक्षणसमन्वयः । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिं वारयति—**प्रमेयत्वविशिष्टेति** । **नैतादृशं स्वमिति** । न मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितविशिष्टविषयित्वानवच्छिन्नप्रतिबन्धकतावच्छेदकमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताकमित्यर्थः । तत्र हेतुमाह **तदवच्छिन्नानिरूपितेति** । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितेत्यर्थः । **विषयित्वावच्छिन्नायामेवेति** । एवकारेण तादृश-

---

ऽव्यापकविषयिताशून्याऽनाहार्य्याऽप्रामाण्यज्ञानानास्कन्दिताऽव्याप्यवृत्तित्वभ्रमाऽनास्कन्दितपक्षधर्म्मिकहेतुमत्ताज्ञानाकालीनत्वाऽसाधारण्यविषयित्वोभयाऽभाववत्किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकयत्किञ्चित्प्रतिबन्धकतावच्छेदकत्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीययत्किञ्चिद्रूपावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नाकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानवृत्त्यसाधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वाऽवच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववद्विषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगितानिष्ठाऽवच्छेदकतानिरूपितभेदानिष्ठाऽवच्छेदकतानिरूपितवृत्तित्वानिष्ठाऽवच्छेदकतानिरूपितविषयितानिष्ठाऽवच्छेदकतावत्त्वोभयसम्बन्धेन, तादृशाऽवच्छेदकतावत्त्वं च—स्वनिरूपितवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपितज्ञाननिष्ठाऽवच्छेदकतानिरूपितशून्यत्वनिष्ठाऽवच्छेदकतानिरूपितविषयितानिष्ठाऽवच्छेदकतानिरूपितव्यापकत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्व—स्वनिरूपितावच्छिन्नत्वसम्बन्धाऽवच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठा ऽवच्छेदकतानिरूपितविषयितानिष्ठाऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिष्ठाऽवच्छेदकतानिरूपितभेदनिष्ठाऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितप्रतियोगित्वानिष्ठाऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठप्रतियोगित्वनिष्ठाऽ वच्छेदकत्वनिरूपिततादृशाभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतिबन्धकतावृत्त्युभयावृत्तिधर्म्मावच्छिन्ना ऽवच्छेदकतानिरूपिताभावनिष्ठावच्छेकतानिरूपितावच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितप्रतियोगित्वानिष्ठाऽवच्छेदकतानिरूपितभेदानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभयसम्बन्धेन । गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधस्य व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य लक्ष्यत्वे तत्संग्रहाय यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्व—प्रकृतानुमितिप्रतिबन्धकताविशिष्टविषयित्वाऽवृत्तित्व—विरोध्यनुमितिजनकताविशिष्टविषयित्वावृत्तित्वैतत्त्रित्वावच्छिन्नप्रतियोगिताकाभावो निरूप्यतायां वक्तव्यः, अनुगमे च द्वितीयसम्बन्धघटकत्वावच्छिन्ननिरूप्यतावृत्तिरभाव एतत्त्रित्वावच्छिन्नप्रतियोगिताको विवक्षणीय इति दिक् ।

**तदवच्छिन्नविषयिताया अवच्छेदकत्वात्। उक्तस्थले चाऽऽश्रयासिद्धिविषयकत्वस्य तदनिरूपितबाधविषयित्वानवच्छिन्ना या विशिष्टपक्षग्रहप्रतिबन्धकता तदवच्छेदकत्वाल्लक्षणसमन्वय इति परास्तम्।**

विषयित्वानवच्छिन्नत्वस्य व्यवच्छेदः। **तदवच्छिन्नविषयितायाः**—मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितायाः। अव्याप्तिमुद्धरति—**उक्तस्थले चेति**। विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्र चेत्यर्थः। **तदनिरूपितेति**। विशेषगुणवद्घटरूपाऽऽश्रयासिद्ध्यनिरूपितेत्यर्थः। **विशिष्टपक्षग्रहप्रतिबन्धकतेति**। पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहनिरूपितप्रतिबन्धकतेत्यर्थः।

तथाच यद्यद्रूपावच्छिन्नविषयिता स्वावच्छिन्नाऽनिरूपिता भवति तत्तद्रूपावच्छिन्नविषयिताव्यापकप्रतिबन्धकताभिन्नप्रकृतानुमितिप्रतिबन्धकता स्वावच्छिन्नविषयिताव्यापिका इत्यर्थः।

अत्र नञ्द्वयनिवेशोऽधिकः। लाघवन्तु व्यापकत्वानिवेशप्रयुक्तं बोध्यम्। व्यावृत्तिः पूर्ववद्।

अनुगमस्तु धर्मविशिष्टधर्मवत्त्वम्। वै० स्वतादात्म्य—स्वविशिष्टविषयितानिरूपकतावच्छेदकधर्मविशिष्टान्यप्रतिबन्धकतावृत्तित्वोभयसम्बन्धेन। विषयितायां स्ववै० स्वावच्छिन्नानिरूपितत्वसम्बन्धेन। भेदप्रतियोगिप्रतिबन्धकतायां धर्मवै० स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन। प्रतिबन्धकतावृत्तित्वं च स्वविशिष्टविषयिताव्यापकत्वसम्बन्धेन। विषयितायामुभयत्र स्ववै० स्वावच्छिन्नत्वसम्बन्धेनेति।

तथाच स्वावच्छिन्नाऽनिरूपितयत्किञ्चिद्विशिष्टविषयितावच्छेद्यतावदन्यप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्त्वं तद्वत्त्वं लक्षणं फलितम्।

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितशुद्धव्यभिचारविषयित्वावच्छेद्यतावदन्यप्रतिबन्धकता च न मेयत्वविशिष्टव्यभिचारप्रतिबन्धकता किन्त्वन्यैव तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य स्वस्मिन्नसत्वान्नातिव्याप्तिः।

व्यभिचारघटितबाधत्वावच्छिन्नाऽनिरूपितव्यभिचारविषयितासामान्यावच्छेद्यतावदन्या ताहशबाधप्रतिबन्धकता भवति तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य स्वस्मिन् "व्यभिचारघटितबाधत्वे" सत्वाल्लक्षणसमन्वयः।

व्यभिचारविशिष्टबाधत्वावच्छिन्नानिरूपितशुद्धबाधविषयिता—शुद्धव्यभिचारविषयताऽवच्छेद्यतावदन्यप्रतिबन्धकता न तदुभयप्रतिबन्धकता किन्त्वन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य व्यभिचारविशिष्टबाधत्वेऽसत्वान्नातिव्याप्तिः।

अत्र सर्वं गगनवदित्यत्र गगनाभाववत्सर्वत्वावच्छिन्नाऽनिरूपितगगनाभाववद्घटादिविषयित्वावच्छेद्यतावदन्यप्रतिबन्धकता च न ताहशप्रतिबन्धकता भवति किन्त्वन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य गगनाभाववत्सर्वत्वेऽसत्वादव्याप्तिरतः स्वावच्छिन्नानिरूपितविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं निवेशनीयम्।

तथाच ताहशबाधत्वावच्छिन्नानिरूपित—ताहशबाधत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयिता ताहशबाधैकदेशविषयिता तत्सामान्यावच्छेद्यतावदन्या च बाधप्रतिबन्धकता तदनतिरिक्तविषयितानिरूपकतावच्छेदकत्वस्य ताहशबाधत्वे सत्वाल्लक्षणसमन्वयः।

एवं ह्रदो वह्निमानित्यत्र जातिमद्वन्ह्यभाववद्ह्रदत्वावच्छिन्नानिरूपितजातिमद्वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितासामान्यावच्छेद्यतावदन्या तादृशबाधप्रतिबन्धकता भवति "जातिमान् वन्ह्यभाववानिति ज्ञानीयवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायां तादृशप्रतिबन्धकतावच्छेदकत्वाभावात्" तदवच्छेदकविषयितानिरूपकतावच्छेदकत्वस्य जातिमद्वन्ह्यभाववद्ह्रदत्वे सत्वाज्जातिमद्वन्ह्यभाववद्ह्रदेऽतिव्याप्तिरतः स्वावच्छिन्नानिरूपितविषयितायामेव यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि निवेश्यम्, तन्निवेशे तु वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयिता वन्ह्यभाववान् ह्रद इति ज्ञानीयविषयितैव तदवच्छेद्यतावदन्या प्रतिबन्धकता न बाधप्रतिबन्धकता किन्त्वन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य जातिमद्वन्ह्यभाववद्ह्रदत्वेऽसत्वान्नोक्तातिव्याप्तिः ।

तथाच विषयितायां स्ववै० स्वावच्छिन्नानिरूपितत्व–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन, विषयितायामुभयत्र स्ववै० स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेनेत्यनुगमे विशेषः ।

अत्र स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वानवच्छिन्नेत्यत्र विषयितानिष्ठमवच्छेदकत्वं स्वरूपसम्बन्धरूपं ग्राह्यम्, एवं चाऽत्र विशिष्टद्वयाऽघटितत्वं न निवेशनीयम्, वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नानिरूपितवन्ह्यभाववज्जलवत्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकाऽन्या प्रतिबन्धकता अन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वेऽसत्वेन वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिविरहात् । एवं नीलरूपाभाववन्नीलेऽपि नातिव्याप्तिरिति ध्येयम् ।

न चैवमपि हेतुमत्पक्षघटिताऽसाधारण्येऽव्याप्तिः, हेतुमत्पक्षघटिताऽसाधारण्यत्वावच्छिन्नानिरूपित–तद्विषयित्वाऽव्यापकविषयिताशून्यज्ञानीय–हेतुमत्पक्षविषयित्वाव्यापकविषयिताशून्यज्ञानीयहेतुमत्पक्षविषयितासामान्यावच्छेद्यतावदन्या प्रतिबन्धकता नासाधारण्यविषयकनिश्चयनिष्ठा प्रतिबन्धकता किन्त्वन्यैव तदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य तादृशाऽसाधारण्यत्वे विरहादिति वाच्यम् । स्वावच्छिन्नानिरूपितविषयितायामसाधारण्यविषयिताभिन्नत्वाऽसाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्वस्य विवक्षणीयत्वात् । तथाच हेतुमत्पक्षविषयिता नोभयाभाववती किन्त्वसाधारण्यघटकपदार्थान्तरविषयितैव, तादृशविशिष्टविषयितावच्छेद्यतावदन्यप्रतिबन्धकता चाऽसाधारण्यविषयकनिष्ठा प्रतिबंधकता तदनतिरिक्तवृत्तिविषयितावच्छेदकत्वस्य तत्र सत्वेनाऽतिव्याप्तिविरहात् ।

एवं प्रतिबन्धकतावच्छेदकविषयिताशालिनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वाऽसाधारण्यविषयकत्वोभयाभावो विवक्षणीयः, तेन ह्रदो वन्हिमान् जलादित्यादावसाधारण्यस्य नाऽसङ्गतिः । तथाच स्वावच्छिन्नाऽनिरूपित–स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीय–तादृशविशिष्टविषयित्वाव्यापकविषयिताशून्यज्ञानीयाऽ–साधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववद्विशिष्टविषयितासामान्यावच्छेद्यतावदन्यप्रतिबन्धकता—पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वाऽसाधारण्यविषयकत्वोभयाभाववद्-

यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त इत्यादिनिष्कृष्टकल्पे अनुमितिप्रतिबन्धकताया अघटकत्वात् प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वविशेषणदानस्याऽसम्भवेन यत्पदार्थस्यैव तादृशपदार्थान्तराऽघटितत्वेन विशेषणीयतयोक्तबाधाऽव्याप्तेरशक्यपरिहारत्वात्।

अत्र केचित्। स्वसजातीयविशिष्टान्तराऽघटितत्वमेव यत्पदार्थे देयम्। साजात्यं च हेत्वाभासविभाजकरूपेण। तच्च रूपं-बाधत्वव्यभिचारत्वादि, तेन च रूपेण व्यभिचारादेर्न बाधादिसाजात्यमिति व्यभिचारघटितनाहार्यत्वादिविशिष्टयद्रूपावच्छिन्नत्वं पर्यवसितलक्षणम्(१)।

'अत्रवदन्ति'कल्पे दर्शितबाधाद्यसङ्ग्रहो दोष एवेत्युक्तम्, तत्र हेतुमाह यद्विषयकनिश्चयस्येत्यादिना। अघटकत्वादिति। अयमसम्भवेनेत्यत्र हेतुः। असम्भवेनेत्यन्तं विशेषणीयतयेत्यत्र हेतुः। तादृशपदार्थान्तरेति। विशिष्टान्तरेत्यर्थः।

व्यभिचारघटितबाधेऽव्याप्तिं वारयतां मतमाह अत्र केचिदित्यादिना। स्वसजातीयविशिष्टान्तराऽघटितत्वमेवेति। एवकारेण शुद्धविशिष्टान्तराऽघटितत्वव्यवच्छेदः।

यत्पदार्थे—यद्विषयकत्वेनेत्यत्र यत्पदार्थे, यद्विषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये इत्यत्र यत्पदार्थे च, यद्रूपावच्छिन्ने इति यावत्। ननु व्यभिचारस्याऽपि हेत्वाभासत्वेन बाधादिसजातीयतया व्यभिचारघटितबाधेऽव्याप्तितादवस्थ्यमत आह साजात्यं चेति। ननु हेत्वाभासविभाजकत्वं हेत्वाभासत्वभिन्नत्वे सति हेत्वाभासत्वव्याप्यत्वम्, तथाचाऽऽत्माश्रय इत्यत आह तच्च रूपमिति। हेत्वाभासविभाजकरूपं चेत्यर्थः। तथाच बाधादीनां न हेत्वाभासविभाजकत्वेन प्रवेशः किन्तु बाधत्वादिनैवेति सूचयितुमुक्तं बाधत्वव्यभिचारत्वादीति। आदिनाऽसाधारणत्वाऽनुपसंहारित्व-विरोधत्वसत्प्रतिपक्षत्वाऽऽश्रयासिद्धित्व-साध्याप्रसिद्धित्व-साधनाऽप्रसिद्धित्व-व्याप्यत्वाऽसिद्धित्वानां परिग्रहः। तथाच स्ववृत्तिहेत्वाभासविभाजकविशिष्टो यः स्वाविषयकप्रतीतिविषयस्तदविषयकप्रतीतिविषयत्वं यथाश्रुतोऽर्थः, तच्च यत्पदार्थे विशेषणमिति भावः। स्वं लक्ष्यत्वेनाऽभिमतम्, तथाच वन्ह्यभाववद्ध्रदात्मकबाधवृत्ति"हेत्वाभासविभाजक"बाधत्वविशिष्टः अथ च वन्ह्यभावद्ध्रदाऽविषयकप्रतीतिविषयः ह्रदवृत्तिवन्ह्यभावस्तदविषयकप्रतीतिविषयत्वस्य वन्ह्यभाववद्ध्रदे सत्त्वाल्लक्षणसमन्वयः। उक्तव्यभिचारघटितबाधेऽव्याप्तिं वारयति तेन रूपेणेति।

(१) अनुगमस्तु धर्मविशिष्टधर्मवत्त्वम्। धर्मवै० स्वतादात्म्य-स्वविशिष्टविषयितावदन्यप्रतिबन्धकतावृत्तित्वोभयसम्बन्धेन। विषयितायां स्ववै० स्वावच्छिन्नानिरूपितत्व—स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन। विषयितावत्ता च स्वनिरूपकतावच्छेदकधर्मविशिष्टासाधारण्यविषयिताभिन्नत्वघटितोभयाभाववद्विषयितात्वव्यापकावच्छेदकताकत्वसम्बन्धेन। विषयितायां धर्मवै० स्वावच्छिन्ननिरूपकताकत्व—स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन। धर्मे प्रतिबन्धकतावृत्तित्वं च पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वाऽसाधारण्यविषयकत्वोभयाभाववदनाहार्यत्वादिविशिष्टस्वविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। निश्चये स्ववै० स्वावच्छिन्नविषयितावत्त्व—स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेनेति दिक्।

बाधादौ नाऽव्याप्तिः ।

बाधत्वेन रूपेणेत्यर्थः । व्यभिचारादेर्न बाधादिसाजात्यमिति । व्यभिचारे बाधत्वविरहादिति भावः । किन्तु विपरीततादृशबाधे तत्साजात्यमिति शेषः । नाऽव्याप्तिरिति । तथाच स्वं व्यभिचारघटितबाधः तद्वृत्तिबाधत्ववान् अथ च तादृशबाधाविषयकप्रतीतिविषयो न व्यभिचारः किन्तु विपरीततादृशबाध एव तदविषयकप्रतीतिविषयत्वस्य तादृशबाधे सत्वाल्लक्षणसमन्वय इति भावः ।

अत्राऽनुयोगिनि स्वत्वनिवेशाद्विशेष्यदलं नास्तीति ध्येयम् । न च तथापि स्ववृत्तिव्यभिचारत्वरूपेण स्वसजातीयं यद्धूमव्यभिचारिवह्निमद्रूपं विशिष्टान्तरं तदविषयकप्रतीतिविषयत्वाभावादव्याप्तितादवस्थ्यमिति वाच्यम् । तदविषयकेत्यादिना तद्रूपपर्याप्तावच्छेदकताकविषयिताशून्यत्वस्य प्रतीतौ विवक्षितत्वात् ।

ननु स्ववृत्तिबाधत्वाद्यन्यतमरूपवत्–अथ च स्वाविषयकप्रतीतिविषयो यस्तदविषयकप्रतीतिविषयत्वमिति समुदितलक्षणार्थः । एवं च मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, व्यभिचारादेर्मेयत्वविशिष्टव्यभिचाराऽनतिरिक्ततया मेयत्वविशिष्टव्यभिचारवृत्तिव्यभिचारत्ववतः शुद्धव्यभिचारस्य मेयत्वविशिष्टव्यभिचारात्मकस्वाविषयकप्रतीतिविषयत्वाभावेन विशिष्टान्तरत्वाभावादतो हेत्वाभासविभाजकरूपेणेत्यस्य हेत्वाभासविभाजकतावच्छेदकरूपेणेत्यर्थः । बाधत्व–व्यभिचारत्वादीत्यस्य बाधत्वत्व–व्यभिचारत्वत्वादीत्यर्थः ।

तथाच स्ववृत्ति यद्धेत्वाभासविभाजकतावच्छेदकं तद्वत् , अथ च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्वत्वं विशिष्टान्तराऽघटितत्वम् । स्वं लक्ष्यतावच्छेदकत्वेनाऽभिमतम् , बाधत्वं यथा वन्ह्यभाववद्ध्रदत्वम् । एवं च मेयत्वविशिष्टव्यभिचारत्ववृत्ति यद्धेत्वाभासविभाजकतावच्छेदकरूपवत् , अथ च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे विरहान्नातिव्याप्तिः ।

नन्वत्र स्वं–बाधत्वादि–वन्ह्यभाववद्ध्रदत्वादि तद्वृत्तिहेत्वाभासविभाजकरूपवत् , अथ च तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकाऽप्रसिद्धिः, बाधत्वविपरीतबाधत्वादौ तादृशैकैकस्याऽभावादिति चेन्न ।

पक्षे पक्षतावच्छेदकविशिष्टग्रहत्वाऽव्यापक–साध्ये साध्यतावच्छेदकविशिष्टग्रहत्वाव्यापकविशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताऽनतिरिक्तवृत्तित्वम् , अनुगतं बाधत्वत्वम् ( इदमेव वन्ह्यभाववद्ध्रदत्वगते पारिभाषिकं बाधत्वम् ) । वृत्तित्वं च स्वावच्छिन्ननिरूपितत्वसम्बन्धेन, तच्च विपरीतबाधत्वं प्रसिद्धम् । एवमत्यन्ताऽन्योन्याभावभेदेनाऽपि दोषस्य नानाविधत्वं बोध्यम् ।

न च वन्ह्यभाववान् ह्रदो वह्निमानित्यादौ वन्ह्यभाववद्ध्रदस्य बाधत्वानुपपत्तिः, पक्षे साध्यग्रहस्याऽऽहार्यतयाऽप्रतिबध्यत्वादिति वाच्यम् । यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारता विशिष्टपक्षे विशिष्टसाध्यग्रहत्वव्यापिका तद्रूपावच्छिन्नविशेष्यकतद्रूपाव-

च्छिन्नप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताऽनतिरिक्तवृत्तित्वस्य विवक्षितत्वात् ।

एवं व्यभिचारस्थलं विशिष्टहेतौ 'विशिष्टसाध्यव्याप्तिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताऽनतिरिक्तवृत्तित्वम्, वृत्तिता चोक्तसंबन्धावच्छिन्नेति ध्येयम् ।

न च शुद्धवह्नित्वपर्वतीयवह्नित्वावच्छिन्नप्रकारकनिश्चययोः स्वतन्त्रप्रतिबन्धकतामते प्रतिबन्धकताभेदात् स्थलविशेषे व्यभिचारघटितबाधवत् पर्वतो वह्न्यभाववान् धूमादित्यादौ पर्वतीयवह्निमत्पर्वतस्यापि बाधतया तत्राऽव्याप्तिः, स्वसजातीयेन पर्वतीयवह्निना वह्निमत्पर्वतेन च घटितत्वादिति वाच्यम् । स्वविषयकज्ञानप्रतिबध्यं यद्यत्तत्प्रतिबन्धकतावच्छेदकविषयिताकत्वविशिष्टबाधत्वादिना साजात्यस्य विवक्षणीयत्वात्, प्रकृते पर्वतः पर्वतीयवह्निमानितिज्ञानप्रतिबध्यं पर्वतः पर्वतीयवह्न्यभाववानितिज्ञानमपि तत्प्रतिबन्धकं च न वह्निमान्पर्वत इति ज्ञानमिति नाऽव्याप्तिः ।

स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वविशिष्टप्रतिबन्धकतानिष्ठभेदप्रतियोगितावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं स्वसजातीयविशिष्टान्तराऽघटितत्वस्यार्थः, तच्च यद्रूपे निवेशनीयम्, प्रतिबन्धकतायां स्ववै० स्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसंबन्धेन, प्रतिबन्धकतानिष्ठभेदप्रतियोगितावच्छेदकता च स्वावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्ना । प्रतिबन्धकता च ह्रदो वह्न्यभाववान्–ह्रदे वह्न्यभाव इति ज्ञानयोरेकरूपेणैव (१) । तथाच वह्न्यभाववद्-

---

(१) ननु एकरूपेण प्रतिबन्धकत्वं ह्रदत्वावच्छिन्नविषयतानिरूपितवन्ह्यभावत्वावच्छिन्नविषयताकत्वेन न सम्भवति, सम्बन्धान्तरावच्छिन्नवन्ह्यभावत्वावच्छिन्नप्रकारताकज्ञानवारणाय स्वरूपसम्बन्धावच्छिन्नवन्ह्यभावत्वावच्छिन्नविषयतायाः निवेशनीयतया ह्रदे वन्ह्यभाव इति ज्ञाने तादृशविषयताविरहात् । न च स्वरूपसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नवन्ह्यभावत्वावच्छिन्नविषयतानिरूपितं आधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नह्रदत्वावच्छिन्नविषयताकनिश्चयत्वेन प्रतिबन्धकत्वमिति वाच्यम् । तथापीदं ज्ञानं वन्ह्यभावाभाववति वन्ह्यभावप्रकारकमित्यप्रामाण्यज्ञानसत्त्वे ह्रदो वन्ह्यभाववानिति ज्ञानं न प्रतिबन्धकमतस्तदनुरोधेन तादृशाऽप्रामाण्यज्ञानसत्वे ह्रदे वन्ह्यभाव इत्येतादृशबाधनिश्चयस्याप्यप्रतिबन्धकत्वापत्तेरिति चेन्न ।

त्रितयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावविशिष्टवन्ह्यभावत्वावच्छिन्नविषयतानिरूपितात्रितयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावविशिष्टह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकत्वात् । त्रितयसम्बन्धश्च स्वविशेष्यज्ञाननिष्ठविशेष्यतानिरूपितप्रकारित्वविषयतानिरूपितानिरूपितत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकावच्छिन्नप्रकारतात्वं—स्वविशेष्यज्ञाननिष्ठविशेष्यतानिरूपितप्रकारित्वविषयतानिरूपिताऽवच्छिन्नत्वविषयतानिरूपितविशेष्यत्वविषयतानिरूपिताऽधिकरणविषयतानिरूपिताऽभावविषयतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकावच्छिन्नत्वं—स्वविशेष्यज्ञाननिरूपितत्वं च, विषयतायामभाववै० स्वरूपसम्बन्धेन ।

न च वह्निमति वन्ह्यभावप्रकारकमित्यप्रामाण्यज्ञानसत्वे ह्रदो वन्ह्यभाववानिति ज्ञानं वह्निमत्ताबुद्धिप्रतिबन्धकं स्यात्, तादृशज्ञानकाले उक्तत्रितयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावविशिष्टवन्ह्यभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतासत्वादिति वाच्यम् । यतो वन्ह्यभावविषयतायां "उक्तत्रितयसम्बन्धान्य"त्रितयसम्बन्धान्तरेण ज्ञानाभावस्यापि निवेशात् । स च त्रितयसम्बन्धः—स्वविशेष्यज्ञाननिरूपितत्वं— स्वविशेष्यज्ञाननिष्ठविशेष्यतानिरूपितप्रकारित्वविषयतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्नविषयतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वं—स्व-

ह्रदत्वादिविशिष्टप्रतिबन्धकतावृत्तिभेदप्रतियोगितावच्छेदकं ह्रदवृत्तिवह्न्यभाववत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वे सत्वाल्लक्षणसमन्वयः ।

एकरूपेण प्रतिबन्धकत्वाऽस्वीकारे स्वसजातीयविशिष्टान्तराऽघटितत्वस्यायमर्थः—स्वविशिष्टप्रतिबन्धकतानिरूपितप्रतिबध्यतासमनियतप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिभेदप्रतियोगितावच्छेदकं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वम् । भट्टाचार्यमते अनतिरिक्तवृत्तित्वस्य स्वव्यापकतत्कत्वरूपतया एतादृशार्थस्यापि स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकताव्यापकविषयितावच्छेदकत्वे एव पर्यवसानात्, एतादृशार्थतात्पर्यग्राहकत्वाच्च ।

न च विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादौ विशेषगुणवद्घटरूपाऽऽश्रयासिद्धावव्याप्तिः, बाधप्रतिबन्धकतायामपि तादृशसंबन्धेन विशेषगुणवद्घटत्वसत्वादिति वाच्यम् । व्यभिचारघटितबाधादावपि विशिष्टान्तराऽघटितत्वेनाऽघटितव्यभिचारत्वसत्वेनेत्यादिना ग्रन्थेन विशेषगुणवद्घटाऽव्याप्तितुल्याव्याप्तेः स्वयमेवाऽग्रे वक्ष्यमाणत्वादित्यास्तां विस्तरः ।

केचित्तु स्वसजातीयविशिष्टान्तराऽघटितत्वं स्वावच्छिन्नानुयोगिताकहेत्वाभासविभाजकानुयोगितावच्छेदकं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वम् । हेत्वाभासविभाजके व्यभिचारत्वादिलक्षणे चाऽनतिरिक्तवृत्तित्वं न स्वव्यापकतत्कत्वम्, अपि तु तदभाववदवृत्तित्वमेव, तथाच वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् ह्रदवृत्तिवह्न्यभाववत्वं विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावाङ्गीकारेण तस्य वह्न्यभाववद्ध्रदत्वावच्छिन्नानुयोगिताकसाध्यवत्ताग्रहप्रतिबन्धकत्वाभाववदवृत्तित्वबाधत्वानुयोगितावच्छेदकतया वह्न्यभाववद्ध्रदे लक्षणसमन्वय इत्याहुः । तच्चिन्त्यम् ( १ ) ।

अथाऽस्तु प्रतिबन्धकताघटितलक्षणे उक्तरीत्या स्वसजातीयविशिष्टान्तराऽघटितत्वम् ।

---

विशेष्यज्ञाननिष्ठविशेष्यतानिरूपितप्रकारित्वविषयतानिरूपितविशेष्यित्वविषयतानिरूपिताऽधिकरणविषयतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वम् ।

( १ ) चिन्ताबीजन्तु विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानङ्गीकारेण स्वावच्छिन्नानुयोगिताकहेत्वाभासविभाजकाऽप्रसिद्ध्याऽसम्भवापत्तिरिति ।

यत्तु उक्तरीत्या हेत्वाभासविभाजकव्यभिचारत्वनिर्वचने धूमवान् अभाववदवृत्तिवह्नेरित्यादौ अभाववदवृत्तिवह्निरूपसाधनाऽप्रसिद्धिघटितधूमाभाववदवृत्तिवह्निरूपव्यभिचारेऽव्याप्तिवारणाय अभाववदवृत्तिधूमस्य संयोगेन साध्यतायां कालिकेन धूमस्य हेतुतायां अभाववदवृत्तिधूमरूपसाध्याप्रसिद्धिघटितधूमाभाववदवृत्तिधूमरूपव्यभिचारेऽव्याप्तिवारणाय च साध्याप्रसिद्धिसाधनाप्रसिद्धिवारकस्य साध्यसाधनग्रहाविरोधिज्ञाननिष्ठत्वविशेषणस्य वैयर्थ्यं साध्यसाधनग्रहाविरोधिज्ञाननिष्ठविषयितायाः साध्याप्रसिद्धिसाधनाप्रसिद्ध्योर्व्याधिकरणसम्बन्धतया साध्याप्रसिद्धिसाधनाप्रसिद्ध्योस्तादृशसम्बन्धेन व्याप्तिग्रहप्रतिबन्धकत्वाभाववदवृत्तित्वसत्त्वेन तादृशाव्याप्तेर्वारणादिति ।

तन्न । साध्यसाधनग्रहाविरोधिज्ञाननिष्ठेत्यनेन व्याप्तिग्रहत्वव्यापकप्रतिबध्यतायामेव साध्यसाधनग्रहत्वाव्यापकत्वविवक्षणात् । अन्यथा धूमवान् वह्नेरित्यादौ साध्यसाधनग्रहविरोधित्वस्य कामिनीजिज्ञासादौ प्रसिद्धत्वेऽपि कामिन्यादेर्यत्र साध्यता तत्र साध्यसाधनग्रहविरोधित्वस्याऽप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात् ।

'अत्र वदन्ती'त्यायाद्यर्थस्थलीयलक्षणे उक्तरीत्या स्वसजातीयविशिष्टान्तराऽघटितत्वनिवेशाऽसंभवादिति चेन्न ।

स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं वत्स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तद्रूपे निवेशनीयत्वात् । सामानाधिकरण्यघटकस्वाधिकरणत्वन्तु स्वावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तराऽनुमितित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व–स्वावच्छिन्नविषयिताप्रयोज्यताहशोभयाभावप्रयोजकाभावत्वोभयसंबन्धेन । भेदप्रतियोगितावच्छेदकता च स्वावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तराऽनुमितित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन । मेयत्वविशिष्टव्यभिचारत्वाश्रयो यो व्याप्तिवैशिष्ट्यावगाहित्वाभावः तत्र स्वावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तराऽनुमितित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नव्यभिचारत्वनिष्ठावच्छेदकताकभेदसत्त्वेन मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः । व्यभिचारघटितबाधादौ ताहशसंबन्धेन बाधत्वादिविशिष्टो साध्यवैशिष्ट्यावगाहित्वाभावस्तत्र ताहशसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकव्यभिचारत्ववद्भेदाऽसत्त्वेन लक्षणसमन्वयः ।

न च धूमवान् अभाववदवृत्तिवह्नेरित्यादौ अव्याप्तिः । स्वावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन स्वविशिष्टो यो व्याप्तिवैशिष्ट्यावगाहित्वाभावस्तत्र स्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिताकभेदवत्–अभाववदवृत्तिवह्निरूपसाधनाऽप्रसिद्धिभेदसत्त्वादितिवाच्यम् । ताहशभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व–स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताशालिअभावाप्रयोज्यत्वोभयाभावत्वसम्बन्धेन भेदप्रतियोगितावच्छेदकताविवक्षणात् । न च तथापि हेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावमादाय ताहशहेत्वप्रसिद्धिघटितव्यभिचारेऽव्याप्तितादवस्थ्यमिति वाच्यम् । एताहशदोषतुल्यदोषस्य विशिष्टान्तराऽघटितत्वेनाऽघटितस्येत्यादिना ग्रन्थकृतैव वक्ष्यमाणत्वादिति ध्येयम् ।

यत्तु प्रकृतपक्षे प्रकृतसाध्यावगाहिअनुमितित्वव्यापकप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकत्वरूपं बाधत्वत्वमिति ।

तन्न, तस्य स्वत्वघटितत्वेन तद्व्यक्तिविश्रान्ततया वन्ह्यभाववद्धृदत्वबुद्धि यदनुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नाविषयितासामान्यकत्वं तस्य ह्रदवृत्तिवन्ह्यभावत्वेऽसत्त्वेन तत्सजातीयविशिष्टान्तराऽप्रसिद्धया स्वपदेन लक्ष्यतावच्छेदकधारणाऽसंभावनापत्तेः । तच्चिन्त्यम्(१) ।

---

(१) चिन्ताबीजन्तु प्रकृतानुमितिमत्त्वे बाधत्वम् । अनुमितिमत्ता च स्वप्रतिबन्धकतावच्छेदकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन । एवं च नोक्ताऽसंभवः । तथाहि—वन्ह्यभाववद्ध्रदे वर्त्तते या निरुक्तसम्बन्धेन ह्रदो वह्निमानित्यनुमितिः तस्याः निरुक्तसम्बन्धेन ह्रदविशिष्टवन्ह्यभावेऽपि सत्त्वान्नाऽप्रसिद्धिः ।

ननु तथापि जलवान् ह्रदो वह्निमानित्यत्र वन्ह्यभाववज्जलवद्ध्रदेऽव्याप्तिः, तत्र जलवद्ध्रदधर्मिकवन्ह्य-

नुमितेर्वन्ह्यभाववज्जलवद्ह्रदे इव स्वप्रतिबन्धकतावच्छेदकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन जलवद्ह्रदेऽपि सत्त्वात्, ह्रदधर्मिकवह्निमत्ताबुद्धिं प्रति जलावच्छेदेन वन्ह्यभाववत्तानिश्चयविशिष्टह्रदधर्मिकजलवत्तानिश्चयत्वेन प्रतिबन्धकत्वात्, प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे तु असाधारण्येऽव्याप्तिप्रसङ्गादिति चेन्न ।

प्रकृतपक्षसाध्यकानुमितित्वव्यापिका या प्रतिबध्यता स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतस्वविषयतासामान्यकत्वसम्बन्धेन स्ववृत्तिर्या प्रतिबध्यता निरुक्तसम्बन्धेन तद्विशिष्टं यद्विशिष्टान्तरं तदघटितत्वस्य वक्तव्यत्वात्, तथा च वन्ह्यभाववज्जलरूपबाधे निरुक्तसम्बन्धेन वर्त्तते या जलवद्ह्रदधर्मिकवह्निप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता तदवच्छेदकतापर्याप्त्यधिकरणं यज्जलवद्ह्रदधर्मिकवह्निप्रकारकबुद्धित्वं तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं न जलवद्ह्रदविषयितायामस्ति, किन्तु ह्रदधर्मिकवह्निप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वमेव, ह्रदधर्मिकवह्निप्रकारकबुद्धिं प्रति जलावच्छेदेन वन्ह्यभाववत्तानिश्चयविशिष्टह्रदधर्मिकजलप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वात् ।

एतेन घटो विशेषगुणाभावगुणसामान्योभयवानित्यत्र विशेषगुणवद्घटरूपबाधे स्वप्रतिबन्धकतावच्छेदकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन वर्त्तते या निरुक्तानुमितिस्तस्याः स्वप्रतिबन्धकतावच्छेदकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन गुणवद्घटेऽपि सत्त्वात्तदघटितत्वस्य विशेषगुणवद्घटे सत्त्वादव्याप्तिरिति परास्तम् । विशेषगुणवद्घटरूपबाधे वर्त्तते या विशेषगुणाभावप्रकारकबुद्धित्वावच्छिन्ना प्रतिबध्यता तस्याः स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन गुणवद्घटेऽसत्त्वात्, विशेषगुणवद्घटस्य गुणवद्घटघटितत्वेऽपि दोषानवकाशात् ।

अत्र वदन्तीतिनिष्कृष्टकल्पानुसारेण तु बाधत्वं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावरूपं–तस्य बाधवृत्तित्वन्तु स्वप्रयोजकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन । बाधत्ववत्तापि स्वप्रयोजकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन । एवं हेतुधर्मिकसाध्यव्याप्यत्ववगाहित्वाभावरूपं–तत्र स्ववृत्तित्वं–तद्वत्त्वं चोक्तसम्बन्धेन ।

एवं च धूमव्यभिचारिवह्निमान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमति बाधे स्वप्रयोजकीभूतस्वविषयितासामन्यकत्वसम्बन्धेन प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यत्ववगाहित्वाभावो न वर्त्तते धूमव्यभिचारिवह्निविषयितायामेवोक्ताभावप्रयोजकत्वसत्त्वेन धूमाभाववद्धूमव्यभिचारवह्निमद्विषयितायास्तादृशाभावाऽप्रयोजकत्वात्, किन्तु प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभाव एव बाधवृत्तिः तद्व्याप्यो विपरीतबाधस्तदघटितत्वस्य निरुक्तबाधे सत्त्वान्नाव्याप्तिः ।

ननु प्रतिबध्यतायाः साजात्यं—निरुक्ताभावस्य वा साजात्यं विवक्ष्यताम्, एवमपि धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यत्र धूमाभाववद्धूमव्यभिचारिवह्निरूपबाधेऽव्याप्तिर्दुर्वारैव । तथाहि—वह्निधर्मिकधूमाभाववद्वृत्तित्वप्रकारकबुद्धित्वावच्छिन्ना या प्रतिबध्यता तस्याः स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वविषयितासामान्यकत्वसम्बन्धेन धूमाभाववद्धूमव्यभिचारिवह्नाविव धूमव्यभिचारिवह्निरूपव्यभिचारेऽपि सत्त्वान्निरुक्तबाधसजातीयो व्यभिचारोपि जातस्तदघटितत्वस्य बाधेऽसत्त्वात् । एवं धूमाभाववद्धूमव्यभिचारिवह्निविषयिताया अपि धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्निविषयितात्वेन प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यत्ववगाहित्वाभावप्रयोजकतया निरुक्तसम्बन्धेन बाधवृत्तिर्यो निरुक्ताभावः निरुक्तसम्बन्धेन तद्वान्यो धूमव्यभिचारिवह्निरूपव्यभिचारः तदघटितत्वस्य निरुक्तबाधेऽसत्त्वादिति चेन्न ।

स्ववृत्तियावद्धर्माभासविभाजकरूपेण साजात्यस्य विवक्षणात् ।

तथाचोक्तस्थलीयबाधवृत्तियावद्धर्माभासविभाजकरूपान्तर्गतं बाधत्वमपि तत्सहितयावद्रूपैः सजातीयं विशिष्टान्तरं न शुद्धव्यभिचारः—अपि तु विपरीतबाध एव तदघटितत्वस्योक्तबाधे सत्त्वेनाऽव्याप्तिविरहात् ।

न चैवंसति बाधविशिष्टव्यभिचारेऽतिव्याप्तिः, तत्र शुद्धव्यभिचारस्य—शुद्धबाधस्य वा बाधत्व व्यभि

अथात्र पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वाऽव्यापिका—साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वाऽव्यापिका विशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकताशून्यानाहार्याऽप्रामाण्यज्ञानानास्कन्दिताऽव्याप्यवृत्तित्वज्ञानानास्कन्दितनिश्चयवृत्तित्वाभाववत्त्वं बाधत्वम्(१)। वृत्तित्वं

चारत्वरूपयावद्धर्मैः साजात्यविरहेण व्यभिचारविशिष्टबाधस्यैव तथात्वेन तदघटितत्वस्य बाधविशिष्टव्यभिचारे सत्वादिति वाच्यम्। इदानीं स्वरूपसम्बन्धरूपावच्छेदकताघटितसम्बन्धेन स्ववृत्तित्वस्य साजात्ये विवक्षणात्। स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यविवक्षणेऽपि बाधविशिष्टव्यभिचारेऽतिव्याप्तिर्नास्ति। प्रकृतपक्षधर्मिकसाध्यवत्ताग्रहत्वावच्छिन्नप्रतिबध्यतायाः प्रकृतपक्षे साध्यवैशिष्ट्यावगाहित्वाभावस्य वा निरुक्तसम्बन्धेन निरुक्तबाधविशिष्टव्यभिचाराऽवृत्तितया स्ववृत्तिहेत्वाभासविभाजकरूपेण तयोरुपादानं न सम्भवति—किन्तु प्रकृतहेतुधर्मिकसाध्यव्याप्त्यवगाहित्वावच्छिन्नप्रतिबध्यत्व—प्रकृतहेतुधर्मिकसाध्यव्याप्त्यवगाहित्वाभावयोरेव तद्वान् व्यभिचार एव तदघटितत्वस्य निरुक्तबाधविशिष्टव्यभिचारेऽसत्वात्।

अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य सम्बन्धघटकत्वे प्रकृतपक्षे प्रकृतसाध्यावगाहित्वावच्छिन्नप्रतिबध्यताया अपि निरुक्तसम्बन्धेन बाधविशिष्टव्यभिचारवृत्तितया स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण सजातीयविशिष्टान्तरं केवलव्यभिचारो न भवति किन्तु व्यभिचारविशिष्टबाध एव तदघटितत्वस्य बाधविशिष्टव्यभिचारे सत्वात्, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वकल्पे एव तत्रातिव्याप्तिर्दत्ता भट्टाचार्येण।

अत्रेदं बोध्यम्। स्वरूपसम्बन्धरूपाऽवच्छेदकताघटितसाजात्यविवक्षणेऽपि जलं वह्निमज्जलादित्यत्र वन्ह्यभाववद्वृत्तित्व—वन्ह्यभाव-एतदुभयवज्जलेऽतिव्याप्तिः स्ववृत्तियावद्धेत्वाभासविभाजकरूपेणोक्तावपि न शक्यते वारयितुम्। प्रकृतपक्षधर्मिकसाध्यवत्वावच्छिन्नाया इव हेतुधर्मिकव्याप्तिग्रहत्वावच्छिन्नायाः प्रतिबध्यताया अपि स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतस्वविषयितासामान्यकत्वसम्बन्धेन वर्त्तमानतया स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण निरुक्तस्वसजातीयं विशिष्टान्तरं बाधोऽपि न भवति—व्यभिचारोऽपि न भवति, किन्तु वन्ह्यभावव्याप्य—वन्ह्यभाववद्वृत्तित्वव्याप्योभयविशिष्टजलादिकमेव तदघटितत्वस्य तत्र सत्वात्। प्रतियोगिनि स्वत्वान्तर्भावे तु स्वघटकत्वसजातीयविशिष्टान्तराऽप्रसिद्ध्यां स्वपदेन वन्ह्यभाववद्वृत्तित्व—वन्ह्यभावैतदुभयवज्जलस्य धारणं न सम्भवतीति स्वसजातीयविशिष्टान्तरघटितं यत्त्वं मेयत्वविशिष्टव्यभिचारादि तदघटितत्वस्य तादृशोभयवज्जले सत्वादिति।

एवं च व्यभिचारविशिष्टमेयत्वे स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वविषयितासामान्यकत्वस्याऽसत्वात्स्वपदेन व्यभिचारविशिष्टमेयत्वस्योपादानाऽसम्भवाच्च अनुयोगिनि स्वत्वान्तर्भावे न तत्र तत्रातिव्याप्तिः, किन्तु प्रतियोगिनि स्वत्वान्तर्भाव एव। प्रतियोगिनि स्वत्वान्तर्भावेऽपि अनतिरिक्तवृत्तित्वघटितसाजात्यं निवेश्य ग्रन्थकृता तत्राऽतिव्याप्तिवारणं कृतम्।

(१) साध्याऽप्रसिद्धिपक्षाप्रसिद्धित्वयोर्बाधत्ववृत्तितादृशरूपवारणायाऽव्यापकतान्तद्वयं, तदवारणे अवृत्ति जलं ह्रदावृत्तीत्यत्र ह्रदवृत्तिजलात्मकबाधस्य पक्षाप्रसिद्ध्यवृत्तिजलेन घटितस्यासङ्ग्रहापत्तेः, एवं जलम् अवृत्तिजलकालीनह्रदावृत्तीत्यत्र जलकालीनह्रदवृत्तित्ववज्जलात्मकबाधस्य वृत्तित्ववज्जलात्मकसाध्याप्रसिद्धिघटितस्यासङ्ग्रहापत्तेश्च। अत्र साध्यीभूताभावप्रतियोगिवृत्तित्वं साध्यतावच्छेदककुक्षौ च जलांशे वृत्तित्वं संयोगेन, तेन तादृशानुमितेर्नाहार्यतापत्तिः, न वा बाधस्य साध्याप्रसिद्ध्यघटितत्वम्। एवं सत्प्रतिपक्षतात्वं च विशिष्टपक्षग्रहत्वाव्यापकविशिष्टसाध्यग्रहत्वाव्यापकविशिष्टपक्षविशिष्टसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यानाहार्यत्वादिविशिष्टनिश्चयवृत्तित्वाभाववत्वे सति तादृशप्रतिबन्धकतावच्छेदकविषयिताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभाववत्वम्। अत्राप्यव्यापकान्तद्वयं तादृशरूपस्य पक्षाप्रसिद्धिसाध्याप्रसिद्धित्वयोर्वारणाय, अन्यथा अवृत्तिरूपं द्रव्यवृत्तित्वाभाववदित्यत्र द्रव्यवृत्तित्वव्याप्यगुणत्ववद्रूपात्मकस्य सत्प्रतिपक्षस्य वृत्तित्वव्याप्यगुणत्ववद्रूपात्मकपक्षप्रसिद्धिघटितस्यासङ्ग्रहापत्तेः, एवं रूपम् अवृत्तिरूपकालीनद्रव्यवृत्तित्वाभाववदित्यत्र रूपकालीनद्रव्यवृत्ति-

त्वव्याप्यगुणत्ववद्रूपात्मकसत्प्रतिपक्षस्य वृत्तित्वव्याप्यगुणत्ववद्रूपात्मकसाध्याप्रसिद्धिघटितस्यासङ्ग्रहापत्तिः, अत्र द्वितीयदलघटकप्रतिबध्यतायामव्यापकान्तद्वयं नोपादेयं, प्रथमदले तद्विशेषणादेव पक्षाऽप्रसिद्धित्वसाधारण्याभावात् । प्रथमदलमात्रस्य बाधत्वसाधारण्यात् द्वितीयोपादानं, तथासति आधेयत्वं निरूपितत्वाभाववदित्यत्र बाधघटितसत्प्रतिपक्षस्यासङ्ग्रहापत्तेः ।

वस्तुतो द्वितीयदलमात्रमेव सत्प्रतिपक्षतात्वं तावतैव बाधत्वादिसाधारण्याभावात्, तदानीं तत्रैवाव्यापकान्तद्वयं विशेषणम् । स्वरूपासिद्ध्यादिकं द्विविधं तत्र स्वरूपासिद्धितात्वं विशिष्टपक्षग्रहत्वाऽव्यापकविशिष्टहेतुग्रहत्वाऽव्यापकविशिष्टपक्षहेतुवैशिष्ट्याऽवगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्याऽनाहार्यत्वाऽदिविशिष्टनिश्चयवृत्तित्वाभावः प्रथमम् । अत्राव्यापकान्तद्वयानुपादानेऽवृत्ति जलं वह्निमद्ह्रदावृत्तित्वादित्यत्र ह्रदवृत्तिजलात्मकस्वरूपासिद्धेर्वृत्तिजलात्मकपक्षाऽप्रसिद्धिघटिताया जलं वह्निमदवृत्तिजलकालीनह्रदावृत्तित्वादित्यत्र जलकालीनह्रदवृत्तिजलात्मकस्वरूपासिद्धेर्वृत्तिजलात्मकसाधनाऽप्रसिद्धिघटितायाश्चासंग्रहापत्तिः, द्वितीयस्वरूपासिद्धितात्वं विशिष्टहेतुपक्षग्रहत्वाऽव्यापकविशिष्टपक्षहेतुवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यानाहार्यत्वाविशिष्टनिश्चयवृत्तित्वाभावः, अत्राव्यापकान्तानुपादाने उक्तस्थलयोरेव ह्रदवृत्तित्वव्याप्यवज्जलात्मकस्वरूपासिद्धेः वृत्तित्वव्याप्यवज्जलात्मकपक्षाप्रसिद्धिघटिताया जलकालीनह्रदवृत्तित्वव्याप्यवज्जलात्मकस्वरूपासिद्धेः, वृत्तित्वव्याप्यवज्जलात्मकसाधनाप्रसिद्धिघटितायाश्चासङ्ग्रहापत्तिः। अत्र व्यभिचारतात्वं विशिष्टसाध्यसाधनग्रहत्वाऽव्यापकविशिष्टसाधनधर्मिकविशिष्टसाध्यव्याप्तिवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावः। अत्राव्यापकान्तानुपादाने अभाववदवृत्तिवह्निकालीनधूमवान् वन्हेरित्यत्र वन्हिकालीनधूमाभाववद्वृत्तिवह्न्यात्मकव्यभिचारस्याभाववद्वृत्तिवह्न्यात्मकसाध्याऽप्रसिद्धिघटितस्य वह्निमान् अभाववदवृत्तित्वादित्यत्र अभाववद्वृत्तिद्रव्यत्वात्मकव्यभिचारस्याभाववद्वृत्तिद्रव्यात्मकसाधनाऽप्रसिद्धिघटितस्यासङ्ग्रहापत्तेः, द्वितीयव्यभिचारतात्वमुक्तप्रतिबन्धकतावच्छेदकविषयितावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभावः। अत्रापि प्रतिबध्यतायामव्यापकान्तानुपादाने उक्तस्थलयोर्वह्निकालीनधूमाभाववद्वृत्तित्वव्याप्यवद्वह्निरूपव्यभिचारस्याभाववद्वृत्तित्वव्याप्यवह्निरूपसाध्याप्रसिद्धिघटितस्य वह्न्यभाववद्वृत्तित्वव्याप्यवद्द्रव्यत्वरूपव्यभिचारस्याऽभाववद्वृत्तित्वव्याप्यवद्द्रव्यत्वरूपसाधनाप्रसिद्धिघटितस्य चासङ्ग्रहापत्तिः। विशिष्टसाध्यसाधनग्रहत्वाव्यापकसाध्यसाधनधर्म्मिकसाधनसाध्यसामानाधिकरण्यप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावः प्रथमं विरोधतात्वम् । अत्राऽव्यापकान्तानुपादाने गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदभावकालीनगोत्ववानश्वत्वादित्यत्राऽभावकालीनगोत्वाधिकरणनिरूपितवृत्तित्वाऽभाववदश्वत्वरूपविरोधस्य गोत्वाधिकरणनिरूपितवृत्तित्वाभावरूपसाध्याऽप्रसिद्धिघटितस्य, गोत्ववान् गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदभावकालीनाश्वत्वादित्यत्र गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदश्वत्वात्मकविरोधस्य गोत्वाधिकरणनिरूपितवृत्तित्वाभावरूपसाधनाप्रसिद्धिघटितस्य चासङ्ग्रहापत्तिः । अत्र साध्यसाधनतावच्छेदककुक्षौ अभावत्वावच्छेदेन गोत्वाधिकरणनिरूपितवृत्तित्वाभावः प्रविष्टः, स चाभावः प्रतियोगितासम्बन्धावच्छिन्नो ग्राह्यः, अन्यथा गोत्वाधिकरणनिरूपितवृत्तित्वाभावस्य साध्यसाधनाप्रसिद्धित्वाऽसम्भवात् । निरुक्तप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽपरं विरोधतात्वम् । अत्र प्रतिबध्यतायामव्यापकान्तानुपादाने अभावाभाववद्गगनकालीनवह्निमान् गगनादित्यत्र गगनकालीनवह्निमान् गगनादित्यत्र च वह्न्यधिकरणनिरूपितवृत्तित्वाभावव्याप्यवद्गगनरूपविरोधस्याऽभावव्याप्यवद्गगनरूपसाध्याप्रसिद्धिघटितस्य—वह्निमान् अभावाभाववद्गगनादित्यत्र तादृशसाधनाप्रसिद्धिघटितस्य तादृशविरोधस्य चासङ्ग्रहापत्तिः । विशिष्टपक्षग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभाव एकमाश्रयासिद्धितात्वम्, तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृ-

चात्र स्वावच्छिन्नविषयित्वसम्बन्धावच्छिन्नं ग्राह्यम्। तच्च वन्ह्यभाववद्ध्रदत्वं—ह्रदत्वात्त-वन्ह्यभावत्वसाधारणमेकमेव, बाधत्ववृत्तितादृशाभावस्य विपरीतबाधत्वादिसाधारणत्वात्(१)। तथाच स्ववृत्तित्वोपलक्षिततादृशवृत्तित्वाभावान्यतमवद्—अथ च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्रूपत्वं सजातीयविशिष्टान्तराघटितत्वम्, तथाच न मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिरिति चेन्न।

तथापि व्यभिचारघटितबाधासङ्ग्रहात्, तत्र बाधत्वे व्याप्तिज्ञानप्रतिबन्धकताशून्यनिश्चयवृत्तित्वाभावरूपस्य व्यभिचारतात्वस्य पक्षे साध्यवत्ताज्ञानप्रतिबन्धकताशून्यनिश्चयवृत्तित्वाभावरूपस्य बाधतात्वस्य च सत्वात्, स्ववृत्तिव्यभिचारतात्वरूपतावदभावान्यतमवत्—अथ च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यच्छुद्धव्यभिचारत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशबाधत्वेऽभावात्। न च स्ववृत्तितादृशान्यतमयत्किञ्चिदभाववद्विशिष्टान्तराऽघटितत्व.य विवक्षणाद्बाधतात्वरूपयत्किञ्चिदभाववद्विपरीतबाधत्वाघटित-

---

त्तित्वाभावोऽपरम्। एवमेव साध्याऽप्रसिद्धितात्वद्वयं साधनाप्रसिद्धितात्वद्वयं चोह्यम्। विशिष्टसाध्यग्रहत्वाव्यापकसाध्यधर्मिकात्यन्ताभावप्रतियोगित्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽनुपसंहारितात्वम्। अत्राव्यापकान्तानुपादाने निरूपितत्वाभाववत्प्रतियोगित्वकालीनप्रमेयत्ववानित्यत्र प्रमेयत्ववृत्त्यभावप्रतियोग्यत्यन्ताभावनिरूपितप्रतियोगित्वरूपाऽनुपसंहारित्वस्य—निरूपितत्ववत्प्रतियोगित्वरूपसाध्याऽप्रसिद्धिघटितस्याऽसङ्ग्रहापत्तिः। विशिष्टसाधनग्रहत्वाव्यापकविशिष्टसाधनधर्मिकाऽत्यन्ताभावप्रतियोगित्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽप्यनुपसंहारितात्वम्।

अत्राप्यव्यापकान्तानुपादाने निरूपितत्वाभाववत्प्रतियोगित्वकालीनप्रमेयत्वहेतुकस्थलीयोक्तानुपसंहारित्वाऽसंग्रहापत्तिः, एवमपरविधमनुपसंहारितात्वमूह्यम्।

(१) ननु तादृशप्रतिबन्धकताशून्यं यदभाववान् ह्रद इति ज्ञानं तन्निरूपितस्वावच्छिन्नविषयित्वसम्बन्धावच्छिन्नवृत्तित्वमभाववद्ध्रदत्वे, विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावाऽनङ्गीकारात्। तादृशवृत्तित्वस्याऽव्याप्यवृत्तित्वोपगमे वन्ह्यादिघटितसमुदायत्वावच्छेदेनाऽभावोपगमे तादृशाभावस्य केवलाऽन्वयितया एकदेशेऽपि सत्वेनाऽसम्भवापत्तेः।

अत्र केचित्—हेत्वाभासविभाजकतावच्छेदको यो यस्तादृशबाधत्वत्व-व्यभिचारत्वत्वाद्यन्यतमाभावस्तदवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं तदवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपवत्त्वं दोषत्वम्।

वन्ह्यभाववद्ध्रदत्वगतं यत्प्रकृतसाध्यवैशिष्ट्यावगाह्यनुमितिप्रतिबन्धकताशून्यज्ञानाऽवृत्तित्वरूपं बाधत्वत्वं तदवच्छेदकं ह्रदवृत्तिवन्ह्यभावत्वगतसमुदायत्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यं यद्वन्ह्यभाववान् ह्रद इति ज्ञानं तन्निष्ठविषयितानिरूपकतावच्छेदकं यद्वन्ह्यभाववद्ध्रदत्वं तद्रूपत्वस्य वन्ह्यभाववद्ध्रदे सत्वाल्लक्षणसमन्वयः।

मेयत्वविशिष्टबाधे च नातिव्याप्तिः, तत्र मेयत्वविशिष्टवन्ह्यभाववद्ध्रदत्वगतं यत्प्रकृतानुमितिप्रतिबन्धकताशून्यनिरूपिततादृशवृत्तित्वाभावरूपं बाधत्वत्वं तदवच्छेदकं मेयत्वाऽघटितवन्ह्यभाववद्ध्रदत्वगतसमुदायत्वमिव मेयत्वादिघटितवन्ह्यभाववद्ध्रदत्वगतसमुदायत्वमपि तदवच्छिन्नानुयोगिताकपर्याप्तिका या स्वावच्छिन्नाविषयकवन्ह्यभाववान् ह्रद इति ज्ञानीयविषयतानिरूपकतावच्छेदकता तदवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताशून्यत्वस्य मेयत्वविशिष्टवन्ह्यभाववद्ध्रदविषयकज्ञानेऽसत्वादिति वदन्ति।

त्वस्य तादृशबाधत्वे सत्त्वेन लक्षणसमन्वय इति वाच्यम् । तथापि वन्ह्यभाववज्जलादिमत्कालीनजलवद्ह्रदेऽतिव्याप्तिः, तत्र पक्षे साध्यवैशिष्ट्यावगाहित्वव्यापकप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावो यत्तादृशह्रदत्ववृत्तिः तद्वत्—स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यद्वन्ह्यभाववज्जलादिमद्वृत्तिजलवद्ह्रदत्वं तदवच्छिन्नाघटितत्वस्य तत्र सत्त्वात् । न च तादृशप्रतिबन्धकताशून्यनिश्चयवृत्तित्वाभावमपहाय तादृशप्रतिबन्धकतावच्छेदकताशून्याऽनाहार्यज्ञानीयविषयितावृत्तित्वाभावो विवक्षणीयः, वृत्तित्वं चाऽवच्छिन्ननिरूपकताकत्वसम्बन्धेन । एवं च वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्ववृत्तितादृशाभाववद्वन्ह्यभाववज्जलवत्त्वमपीति तदवच्छिन्नाऽघटितत्वाभावात्तादृशविशिष्टे नातिव्याप्तिः । तादृशपाषाणमयत्ववत्पर्वतवारणेन विशेष्यदलसार्थक्यमपि भवतीति वाच्यम् । तथापि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः, तादृशबाधत्ववृत्तिज्ञानवैशिष्ट्यावच्छिन्नतादृशप्रतिबन्धकतावच्छेदकताशून्यतादृशविषयितावृत्तित्वाभावस्य तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकाभाववत्तादृशघटत्वसाधारणतया तद्घटितत्वस्य तत्राऽभावात्, एवमाहार्यस्थलाऽसंग्रहश्च तत्र प्रतिबन्धकत्वादिनिर्वचनाऽसम्भवादिति चेन्न ।

बाधतात्वघटकप्रतिबन्धकतावच्छेदकत्वाभावश्च न स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, अपि तु स्वरूप—स्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितात्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । प्रतिबध्यतावै० स्वाश्रयत्व—स्वनिरूपितमुख्यविशेष्यतावृत्त्यवच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताविशिष्टविशेष्यतानिरूपकाऽव्याप्यवृत्तित्वज्ञानाभाववत्त्वोभयसम्बन्धेन । तथाच तादृशबाधत्ववृत्तिरेतादृशवृत्तित्वाभावश्च न अभाववत्तादृशघटत्वसाधारणः, तदवच्छिन्नविषयितायां तादृशोभयसम्बन्धावच्छिन्ननिरुक्तप्रतिबन्धकतावच्छेदकत्वाभावसत्त्वेन तत्राऽभाववत्तादृशघटत्वरूपधर्मस्याऽवच्छिन्ननिरूपकताकत्वसम्बन्धेन सत्त्वात् (१) ।

---

(१) एवं गगनाभाववदभाववत्कालीनघटो वन्हिमान् गगनादित्यत्र गगनाभाववत्तादृशघटरूपस्वरूपासिद्ध्यव्याप्तिवारणाय विशिष्टपक्षहेतुग्रहत्वाऽव्यापकविशिष्टपक्षधर्मिकविशिष्टहेतुमत्ताग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभिन्नानिरुक्तसम्बन्धद्वयावच्छिन्नप्रतियोगिताकाभाववद्विषयितावृत्तित्वाभावः स्वरूपासिद्धितावृत्तिर्विवक्षणीयः, एवं गगनवद्गगनाभाववदभाववत्कालीनघटस्य यत्र साध्यता हेतुता पक्षता च तत्र साध्याप्रसिद्धिहेत्वप्रसिद्धिपक्षाप्रसिद्धिसंग्रहाय साध्याप्रसिद्धितात्वादिकमप्येवमेव निर्वाच्यम्, सत्प्रतिपक्षतात्वं तु विशिष्टपक्षसाध्यग्रहत्वाव्यापकविशिष्टपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयिताघटितधर्मावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकताशून्याऽनाहार्यविषयितावृत्तित्वाभावः, अत्रावच्छेदकत्वाभावश्च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक एव ग्राह्यः, विषयितायां प्रतिबन्धकतावैशिष्ट्यं च स्वावच्छेदकत्वस्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन, अन्यविधं स्वरूपासिद्धितात्वादिकमपि सत्प्रतिपक्षतात्ववदेव निर्वाच्यम्, तेन गगनाभावव्याप्यवद्गगनाभाववदभाववत्कालीनघटस्य सत्प्रतिपक्षस्वरूपासिद्ध्यादिरूपस्याभावव्याप्यवत्तादृशघटघटितत्वेपि नासङ्गः । नन्वत्र किं तावदसाधारण्यतात्वम् ? न तावद्विशिष्टपक्षसाध्यग्रहत्वाऽव्यापकविशिष्टपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताशून्याऽनाहार्यज्ञानविषयितावृत्तित्वाभावः, अत्राव्यापकान्तविशेषणानिरूपितत्वाभाववत्प्रतियोगित्वं गगनत्ववदाधेयत्वादित्यादौ गगनत्वव्यापकीभूताभावनिरूपितप्रतियोगित्ववदाधेयत्वरूपासाधारण्यस्य पक्षासिद्धि-

न चेदानीं विशेष्यदलवैयर्थ्यं, पाषाणमयत्ववत्पर्वतत्वादौ निरुक्तबाधतात्वस्याऽभावात्, तदवच्छिन्नविषयितायां स्वरूपसम्बन्धेन पक्षे साध्यवैशिष्ट्यावगाहिबुद्धिप्रतिबन्धकतावच्छेदकत्वस्य सत्वेऽपि द्वितीयसम्बन्धेनाऽभावेन तादृशावच्छेदकत्वाभाववद्विषयितावृत्तित्वाभावस्य निरुक्तधर्मेऽभावादिति वाच्यम्। तथापि कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणाय तदावश्यकत्वात्।

नन्वेवं विरोधिविषयिताप्रयुक्तत्वदलवैयर्थ्यमित्यसङ्गतम्, कपिसंयोगी धूमान्यधूमादित्यत्र कपिसंयोगाभाववद्वृक्षस्य विशिष्टान्तराघटितत्वस्य सत्वेन तदुत्तरानुमितिसामान्ये उभयाभावस्य सत्वेन तद्वारणेन तत्सार्थक्यादिति चेद्।

अत्र केचित्। वैयर्थ्यमित्यस्य नोक्तप्रयोजनकत्वमित्यर्थः। आहार्यस्थले घटादिवारणरूपं प्रयोजनं न सिध्यतीति भावः। अत एव तादृशप्रयोजनसिध्यर्थं प्रतियोगिनि स्वत्वमन्तर्भाव्य शङ्कते नचेत्यादिनेति वदन्ति(१)।

---

घटितस्य घटो निरूपितत्वाभाववत्प्रतियोगित्वकालीनगगनत्ववानाधेयत्वादित्यत्र साध्याऽप्रसिद्धिघटितस्य च नासङ्गह इति वक्तुं शक्यम्, तस्याभावस्यावच्छेदकधर्मसाधारणतया ह्रदो वन्ह्यभाववज्जलवत्कालीनवह्निमान् जलादित्यत्र तादृशवह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्येऽव्याप्तेः, तादृशासाधारण्यनिश्चयस्य जलवान्ह्रद इति निश्चयकालीनस्यैव जलवान्वन्ह्यभाववानिति निश्चयस्यापि तादृशनिश्चयकालीनस्य तादृशवह्निविशेषावगाह्यनुमितिं प्रति प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकताशून्यविषयितावृत्तित्वाभावस्य तादृशासाधारण्यत्ववह्न्यभाववज्जलवत्वसाधारणतया असाधारण्यस्य वह्न्यभाववज्जलवृत्तित्वावच्छिन्नघटितत्वात्, यद्वा जलं वह्निमज्जलादित्यत्रासाधारण्येऽतिव्याप्तिः प्रतियोगित्ववद्वह्न्यभाववत्प्रतियोगित्ववज्जलमिति निश्चययोर्ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकताशून्यतादृशविषयितावृत्तित्वाभावस्य प्रतियोगित्ववज्जलत्वेऽपि सत्वेनासाधारण्यस्य तद्घटितत्वादिति चेन्न।

निरुक्तप्रतिबध्यतानिरूपितनिश्चयविशिष्टनिश्चयत्वानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभाववत्तादृशविषयितावृत्तित्वाभावस्य विवक्षणीयत्वात्, निश्चयवैशिष्ट्यं च स्वसामानाधिकरण्यस्वीयप्रकारताविशिष्टप्रकारतानिरूपितविशेष्यतावत्वोभयसम्बन्धेन, अवच्छेदकधर्मदर्शनप्रतिबन्धकता च तादृशनिश्चयत्वावच्छिन्नैव, असाधारण्यनिश्चयप्रतिबन्धकता तु निश्चयविशिष्टनिश्चयत्वानवच्छिन्ना असाधारण्यनिश्चये पक्षधर्मिकहेतुमत्तानिश्चयस्य स्वीयप्रकारताविशिष्टप्रकारतानिरूपितविशेष्यत्वसम्बन्धेनाभावात्, उक्तस्थलेऽसाधारण्यतात्वस्य प्रतियोगित्ववज्जलत्वावृत्तितया अव्याप्त्यनवकाशात्, तादृशासाधारण्यतात्वस्य बाधत्वसाधारण्यवारणाय तादृशावच्छेदकत्वाभावः स्वरूपस्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकाविषयितात्वोभयसम्बन्धावच्छिन्नो विवक्षणीयः॥

(१) एवं प्रतिबन्धकताघटितबाधतात्वादिकमाहार्यस्थलीयदोषसाधारणमपि वक्तुं शक्यम्, प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताव्यापकं यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारत्वं तद्रूपावच्छिन्नविशेष्यतानिरूपिततद्रूपावच्छिन्नप्रकारताशालिग्रहत्वव्यापकत्वं प्रतिबध्यतायां निवेश्य बाधतात्वस्य, एवमेव दोषान्तरतावच्छेदकधर्मवृत्तिरूपस्यापि वक्तव्यत्वात्। अत्रायमनुगमः—पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावनिरूपितविरोधिविषयताप्रयुक्तत्वविशिष्टस्वनिष्ठनिरूपकतानिरूपिताधिकरणतासम्बन्धावच्छिन्नप्रतियोगित्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपिताभाव-निष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितानुमितिनिष्ठावच्छेदकतानिरूपितोत्तरत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपविशिष्टरूपवत्त्वं लक्षणम्, रूपे रूपवैशिष्ट्यं च स्वतादात्म्य-स्वविशिष्टावच्छिन्नत्वसम्बन्धावच्छि-

न्नावच्छेदकतानिरूपकविषयितात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, अवच्छेदकतायां स्ववैशिष्ट्यं च स्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकप्रतीतिनिष्ठावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकनिरूपितत्वानिष्ठावच्छेदकतानिरूपकावच्छेदकत्व स्वनिष्ठावच्छेदकतानिरूपकत्व—स्वनिष्ठाधेयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकतादृशाभावान्यतमत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेनेति । न च तथाप्यवृत्तिजलकालीनजलाभाववान् ह्रदो वह्निमानित्यत्राश्रयासिद्धावव्याप्तिः, तत्र ह्रदवृत्तिजलकालीनजलरूपाश्रयासिद्धेर्वृत्तिजलात्मकस्वसजातीयविशिष्टान्तरघटितत्वादिति वाच्यम् । आहार्यस्थलीयदोषसाधारण्यायोक्तविवक्षायां प्रकृतपक्षतावच्छेदकविशिष्टपक्षग्रहनिष्ठकिञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपितकिञ्चिद्रूपावच्छिन्नप्रकारतानास्तीतिप्रतीतिसिद्धाभावप्रतियोगियत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताशून्यविषयितावृत्तित्वाभावरूपमाश्रयासिद्धितात्वं वक्तव्यम्, ग्रहे तादृशप्रकारतावत्त्वं च स्वविशिष्टविशेष्यतावत्त्वसम्बन्धेन, विशेष्यतायां स्ववैशिष्ट्यं च स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व—स्वावच्छेदकावच्छिन्नत्वावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन, अत्र प्रकारतायां यत्किञ्चित्त्वमभावत्रयप्रतियोगितावच्छेदककोटावपि अन्यतमत्वघटकप्रथमभेदप्रतियोगितावच्छेदककुक्षौ सामान्यरूपेणैव प्रकारताया निवेश इति ध्येयम्, तथाच तादृशस्थले पक्षतावच्छेदकविशिष्टपक्षग्रहनिष्ठयत्किञ्चित्प्रकारता ह्रदत्वावच्छिन्नविशेष्यतानिरूपितजलकालीनजलाभावत्वावच्छिन्ना आश्रयासिद्ध्यन्तरनिश्चयप्रतिबध्यतावच्छेदकयत्किञ्चित्प्रकारता जलत्वावच्छिन्नविशेष्यतानिरूपिताऽवृत्तित्वत्वावच्छिन्नप्रकारता च, अत्र प्रथमप्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यताघटिताश्रयासिद्धितात्वं न वृत्तिजलत्ववृत्तिवृत्तिजलमित्याकारकनिश्चयस्य जलकालीनजलाभाववान् ह्रद इति ज्ञानं प्रत्यप्रतिबन्धकत्वात्, द्वितीयप्रकारताघटिताश्रयासिद्धितात्वस्य जलकालीनजलवद्ध्रदरूपाश्रयासिद्धित्वे सत्त्वेपि न तत्तद्धटकमिति तत्र नाव्याप्तिः । नन्वेवमपि ह्रदो वह्निमानित्यादौ दोषेऽव्याप्तिः, तत्र, विशिष्टपक्षग्रहनिष्ठोक्ताभावप्रतियोगिनी या प्रकारता उक्तोभयसम्बन्धेन तद्विशिष्टविशेष्यतावद्ग्रहाप्रसिद्धेरिति चेत् ।

मैवम् । सर्वत्राश्रयासिद्धितात्वस्य पक्षतावच्छेदकाभाववद्विषयितावृत्तित्वाभावरूपस्य वक्तव्यत्वात्, तदभावनिरूपितपक्षतावच्छेदकनिष्ठप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टग्रहवृत्तियत्किञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपितयत्किञ्चिद्रूपावच्छिन्नप्रकारता नास्तीतिप्रतीतिसिद्धाभावनिरूपितप्रतियोगित्वाभाववद्यत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्ववत्त्वसम्बन्धेन, प्रकारतावैशिष्ट्यं च प्रागुक्तसम्बन्धेन, अवच्छेदकतावत्त्वं च प्राक्प्रतियोगितावच्छेदकतयोक्तस्वरूपस्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन, एवं चायं सम्बन्धो निरवच्छिन्नपक्षतावच्छेदकस्थले तस्य व्यधिकरणसम्बन्ध एव, तेन तदभावः केवलान्वयीति तद्वद्वृत्तित्वाभावस्याप्रसिद्ध्याऽऽश्रयासिद्धिरप्रसिद्धैव आश्रयासिद्धिघटिताश्रयासिद्धौ च नाव्याप्तिरिति ध्येयम् ।

वस्तुतस्तु अन्यतमत्वं न तद्भिन्नभिन्नत्वम्, किन्तु प्रत्येकं तावदवृत्तिधर्मशून्यत्वम्, तथाचात्रैवं निवेशः—पक्षतावच्छेदकविशिष्टपक्षग्रहत्वव्यापकप्रकारतानिष्ठोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकावच्छेदकतायाः परम्परया निरूपकावच्छिन्ननिरूपकताकत्वसम्बन्धावच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावनिरूपितवृत्तितावानित्याकारिका या प्रतीतिस्तन्निरूपितस्य पक्षतावच्छेदकविशिष्टपक्षग्रहत्वव्यापकप्रकारतानिष्ठोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकप्रकारतानिष्ठस्वविशिष्टविशेष्यत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकप्रतिबध्यतानिष्ठावच्छेदकतानिरूपकप्रतिबन्धकतानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठस्वरूपघटितप्रागुक्तोभयसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकावच्छिन्ननिरूपकताकत्वसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावनिरूपितवृत्तितात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धेन

अत्रेदं बोध्यम् । स्ववृत्तिहेत्वाभासविभाजकीभूततादृशबाधत्वाद्यन्यतमवत्त्वमित्येताव-न्मात्रोक्तौ मेयत्वव्यभिचारादावतिव्याप्तितादवस्थ्यमतो विशिष्टान्तराऽघटितत्वमिति । स्वसजातीयाऽघटितत्वमित्युक्तौ तद्दोषतादवस्थ्यं, मेयत्वविशिष्टव्यभिचारत्वसजातीयविपरीत-व्यभिचारत्वाऽघटितत्वात्तस्य, स्वसजातीयं यद्यत्तदघटितत्वमित्युक्तावतिप्रसङ्गवारणेऽपि अ-सम्भवापत्तेः । विशिष्टपदं स्पष्टार्थम्, स्वसजातीयान्तराऽघटितत्वस्यैव सम्यक्त्वादिति तु विभावनीयम् । हेत्वाभासविभाजकरूपेण साजात्यलाभाय तदित्यपरे ।

न च तथापि स्वसजातीयविशिष्टान्तरभिन्नत्वं—स्ववृत्तिहेत्वाभासविभाजकरूपवत्—अथ च—स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यद्यद्रूपं तत्तद्रूपानवच्छिन्नप्रकारतावच्छेदकत्व-मित्येवोच्यतां किं तदघटितत्वनिवेशेनेति वाच्यम् । यत्र घटविषयकं नियमतो मेयत्वविशि-ष्टव्यभिचारविषयकमेव तत्र घटेऽतिव्याप्त्यापत्तेरिति ध्येयम् ।

हेत्वाभासविभाजकत्वं च बाधत्वाद्यन्यतमत्वम् । बाधत्वं च प्रकृतपक्षे प्रकृतसाध्यवत्ता-ग्रहप्रतिबन्धकतावत्त्वम् । तथाच स्ववृत्तिबाधत्वाद्यन्यतमवत्—अथ च स्वावच्छिन्नविषयकप्रती-तिविषयतावच्छेदकं यद्यत्तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्वत्त्वम् । स्वं लक्ष्यतावच्छेदकत्वेनाऽभिमतम् । स्ववृत्तित्वं च बाधत्वे आधेयतासम्बन्धेन । बाधत्ववत्त्वं च स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यता(१)निरूपितप्रतिबन्धकतावत्त्वसम्बन्धेन । तादृशप्रतिबन्धकतावत्त्वं चाऽऽधेयतासम्बन्धेन । आधेयत्वं च स्वा(२)वच्छिन्नविषयिताव्या-पकत्वसम्बन्धेन ।

स्ववृत्तिहेत्वाभासविभाजकरूपे स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताविशिष्टान्यत्वं निवेशनीयम् । प्रतिबन्धकतावै० स्वव्यापकत्व—स्वव्यभिचारित्वोभयसम्बन्धेन । तेन विशे-षगुणाभाववान् घटो गुणसामान्याभाववानित्यत्राऽऽश्रयासिद्धौ नाव्याप्तिः, तत्र निरुक्तबाधत्व-स्याऽऽश्रयासिद्धिप्रतिबन्धकताविशिष्टत्वात् । एतदेव विशिष्टान्तराऽघटितत्वेन घटितव्यभि-चारत्वादिकम् । एवं च व्यभिचारविशिष्टमेयत्वत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकत्वस्या-ऽप्रसिद्ध्या प्रतिबन्धकतायां स्ववृत्तित्वस्य स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकत्वाविशिष्टा-न्यत्वस्य चाऽप्रसिद्ध्या व्यभिचारविशिष्टमेयत्वत्वादेः स्वपदेनोपादानाऽसम्भवान्मेयत्वविशिष्ट-व्यभिचारत्वादेरेव स्वपदेनोपादातुं शक्यतया तदघटितत्वस्य व्यभिचारविशिष्टमेयत्वादौ स-त्त्वेन तत्रातिव्याप्तिवारणाय "प्रतियोगिनि स्वत्वान्तर्भावे" विशिष्टान्तराऽघटितत्वेनाऽघटितव्य-भिचारत्वादिकं निवेशितं भट्टाचार्येण ।

---

योऽभावस्तद्वत्त्वे सति विशिष्टसाध्यग्रहत्वव्यापकयत्किञ्चित्प्रकारताघटिततादृशाभाववत्त्वे सतीत्येवंरीत्या यावद्दोषविभाजकतावच्छेदकतावच्छेदकीभूताभावनिरूपितवृत्तित्वप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशे-ष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाभाववान्यस्तच्छून्यत्वमन्यतमत्वमिति, तथाच यत्र यो दोषः प्रसिद्ध-स्तत्र तादृशदोषतावच्छेदकनिष्ठाभाववृत्तिधर्मे तादृशज्ञानीयतादृशप्रकारतानिरूपितविशेष्यत्वस्य प्रमीय-विशेष्यताप्रतियोगिकस्वरूपसम्बन्धेनाभावो नास्तीति तद्वानन्य एव तच्छून्यत्वं च तादृशदोषतावच्छेदकवृत्त्य-भावे वर्तते इति सर्वत्र प्रसिद्धिर्बोध्या ।

(१) तेन एकरूपेण प्रतिबन्धकत्वास्वीकारेऽपि नासम्भवः । एवं निवेशे हृदवृत्तिवन्ह्यभावत्वादेरेव तादृशविशिष्टान्तरत्वादिति ।

(२) स्वं विशिष्टान्तरतावच्छेदकम् ।

**नन्वेवं यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तोभयाभावस्तत्त्वमित्यत्र विरोधिविषयिताप्रयुक्तत्वदलस्य वैयर्थ्यम्, घटादेस्तादृशरूपेण सजातीयत्वाऽप्रसिद्ध्यैव नातिप्रसङ्गादिति वाच्यम् ।**

विशिष्टान्तराऽघटितत्वाऽघटितव्यभिचारत्ववत्त्वं व्यभिचारत्वे स्ववृत्तित्वं चाऽऽधेयतासम्बन्धेन ( व्यभिचारत्वं च प्रकृतहेतौ प्रकृतसाध्यव्याप्तिग्रहप्रतिबन्धकत्वम् ) । आधेयता च स्वावच्छिन्नविषयिताव्यापकत्वसम्बन्धेन । स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताविशिष्टान्यत्वं रूपे न निवेश्यम् । तथा च न तत्रातिव्याप्तिः । प्रागुक्ताश्रयासिद्धावव्याप्तिस्तु वक्ष्यमाणव्यभिचारघटितबाधाऽव्याप्तिवत्स्थास्यतीति ध्येयम् ।

केचित्तु स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धताविशिष्टान्यत्वं रूपे निवेशनीयम्, अन्यथोक्ताऽऽश्रयासिद्धावव्याप्तेः । न च वक्ष्यमाणाऽव्याप्तेरसङ्गतिरिति वाच्यम् । तत्र धूमव्यभिचारिवन्हिमत्त्वमादायाऽव्याप्तेरित्याहुः । तच्चिन्त्यम् ।

यद्विषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये पक्षे साध्यवैशिष्ट्यावगाहित्व—साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावः विरोधिविषयिताप्रयुक्तस्तत्त्वमिति वक्ष्यमाणनिष्कृष्टकल्पे निर्वन्हिः पर्वतो वह्निमान् धूमादित्यत्र घटादौ "उदासीने" अतिव्याप्तिवारणाय उभयाभावे विरोधिविषयिताप्रयुक्तत्वनिवेश इति वक्ष्यति, तस्य वैयर्थ्यमाशङ्कते **नन्वेति** । **एवं** स्वसजातीयविशिष्टान्तराऽघटितत्वनिवेशे । अनुयोगिनि स्वत्वान्तर्भावनिवेश इत्यपि बोध्यम् । वैयर्थ्ये हेतुमाह **नाऽतिप्रसङ्गादिति** । अतिप्रसङ्गाभावादित्यर्थः । घटत्वादेः स्वपदेनोपादातुमशक्यत्वादिति भावः । तत्र हेतुमाह **घटादेरिति** । आदिना घटत्वस्य पटाद्युदासीनमात्रस्य च परिग्रहः । **तादृशरूपेणेति** । स्ववृत्तिहेत्वाभासविभाजकरूपेणेत्यर्थः । विभाजकतावच्छेदकरूपेणेत्यपि बोध्यम् । **सजातीयत्वाऽप्रसिद्ध्यैवेति** । घटवृत्तिहेत्वाभासविभाजकरूपाऽप्रसिद्ध्यैवेत्यर्थः । घटत्ववृत्तिहेत्वाभासविभाजकरूपाऽप्रसिद्ध्यैवेत्यपि बोध्यम् । एवकारेण विरोधिविषयिताप्रयुक्तत्वस्य व्यवच्छेदः ।

**अत्रवदन्तिकल्पे तु स्ववृत्ति** पक्षे साध्यवैशिष्ट्यावगाहित्वाभाववत्त्वं बाधत्वम् । स्वं वन्ह्यभाववद्ह्रदादिरूपो बाधः । अभावे स्ववृत्तित्वं च स्वप्रयोजकविषयतावत्त्वसम्बन्धेन । स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकाभावप्रयोजकत्वं स्वपूर्ववर्तिज्ञानीयविषयतायां सर्वानुभवसिद्धम् । तादृशाभाववत्त्वमपि स्वप्रयोजकविषयतावत्त्वसम्बन्धेन ।

अथ यद्विषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभाववत्त्वं बाधत्वम्, न तु विरोधिविषयिताप्रयुक्तत्वदलघटितं, गौरवात्, एवंरीत्या व्यभिचारत्वादिकं निरुच्य निवेश्यम् । एवं च निर्वह्निः पर्वतो वह्निमानित्यत्र घटादिविषयकनिश्चयोत्तरानुमितावपि पक्षे साध्यवैशिष्ट्यावगाहित्वाभावसत्वेन घटेऽपि बाधत्वस्याऽक्षततया घटादेरपि स्वपदेनोपादेयतया घटादिवारणाय विरोधिविषयिताप्रयुक्तत्वदलसार्थक्यसम्भवेन तद्वैयर्थ्याभिधानमसङ्गतम् । न च तत्र वह्निमत्पर्वतरूपाऽऽश्रयाऽसिद्धावव्याप्तिः, वह्निविषयकनिश्चयोत्तरानुमितावपि तादृशाभावसत्वेन वह्नावपि ईदृशाश्रयाऽसिद्धित्वसत्वेन वह्निमत्पर्वतरूपाश्रयासिद्धेस्तद्घटितत्वादिति वाच्यम् । तद्दोषवारणायाऽऽश्रयासिद्धिलक्षणे एव विरोधिविष-

यिताप्रयुक्तत्वस्य निवेशनीयत्वात् । एवं च तादृशदलघटिताऽऽश्रयासिद्धिरूपस्य न वन्ह्यादेरिति तद्घटितत्वेऽपि न तत्राऽव्याप्तिः । न च वन्हौ आश्रयाऽसिद्धित्वविरहेऽपि उक्तबाधत्वमस्त्येवेति अव्याप्तिर्दुर्वारैवेति वाच्यम् । स्ववृत्तिहेत्वाभासविभाजकीभूतयत्किंचिद्धर्मवद्विशिष्टान्तराऽघटितत्वस्य विवक्षितत्वात् । अन्यथा विशेषगुणवद्घटादेरसंग्रहापत्तेः, गुणवद्घटादेराश्रयासिद्धित्वादिना साजात्यविरहेऽपि बाधत्वादिना तत्सत्त्वात् । यत्किंचित्त्वनिवेशाच्चाऽऽश्रयासिद्धित्वमादायैव तत्र लक्षणसमन्वय इति चेन्न ।

वन्ह्यभाववान् ह्रदो वह्निमानित्यादौ वन्ह्यभाववद्ह्रदेऽव्याप्तिः, तत्र निरुक्तविशिष्टान्तरवन्ह्यभावघटितत्वादतस्तद्वारणाय यद्विषयकनिश्चयाऽव्यहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावः तत्त्वमेव बाधत्वमित्यादिरीत्या "विरोधिविषयिताप्रयुक्तत्वघटितो" हेत्वाभासविभाजको निर्वाच्य; एवं च विरोधिविषयिताप्रयुक्तत्वदलवैयर्थ्यम्, घटादेर्विरोधिविषयिताप्रयुक्तत्वघटितसाजात्यविरहेण स्वपदेनोपादातुमशक्यत्वात् (१) ।

---

(१) अथैवंसति विशेष्यदलवैयर्थ्यस्यापि प्रसङ्गसम्भवेन विरोधिविषयिताप्रयुक्तत्वमात्रस्य वैयर्थ्योक्तौ सन्दर्भविरोधः । न च बाधत्वादिशरीरे विषयिताप्रयुक्तत्वमात्रं निवेशनीयं, न तु विरोधिविषयिताप्रयुक्तत्वम्, एवं च साध्यवत्पक्षेऽतिव्याप्तिवारणायैव विशेष्यदलसार्थक्यं, यथासन्निवेशे वैयर्थ्याभावादिति वाच्यम् । तथा सति विशेष्यदले विरोधिविषयिताप्रयुक्तत्वदलसार्थक्यसम्भवेन सन्दर्भविरोधापत्तेः ।

मैवम् । इच्छाऽप्रयोज्ययादृशविशिष्टविषयताशालिनिश्चयाऽवृत्तिप्रतियोगिकः प्रकृतपक्ष प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावस्तादृशत्वमेव बाधत्वं ग्रन्थकृतोऽभिप्रेतत्वात् । एवमिच्छाऽप्रयोज्ययादृशविशिष्टविषयताशालिनिश्चयाऽवृत्तिप्रतियोगिकः प्रकृतहेतौ प्रकृतसाध्यनिरूपितव्याप्त्यवगाहित्वाभावः तत्त्वं व्यभिचारत्वं निर्वचनीयम् । एवमाश्रयाऽसिद्ध्यादिकमपि निर्वचनीयम् । एवं च निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षे साध्यवैशिष्ट्यावगाहित्वाभावस्य इच्छाऽप्रयोज्यघटादिविषयताशालिनिश्चयाऽवृत्तित्वाभावान्न निरुक्तबाधत्वादिकं घटादेरिति विरोधिविषयिताप्रयुक्तत्वदलवैयर्थ्योक्तिर्नासङ्गता ।

आहार्य-पक्षे साध्यवैशिष्ट्यावगाहिबाधादिविषयकज्ञानमादायाऽसम्भववारणाय यादृशविशिष्टविषयतायां इच्छाऽप्रयोज्यत्वनिवेशः ।

अथ सामान्यत इच्छाऽप्रयोज्यत्वनिवेशे निर्वह्निः ह्रदो वह्निमान् वन्ह्यभाववांश्च ह्रद इत्याकारकसमूहालम्बनज्ञानीय-स्वातन्त्र्येण वन्ह्यभाववद्ह्रदविषयतायां यदीच्छाऽप्रयोज्यत्वं स्वीक्रियते तदा तादृशबाधे निरुक्तबाधत्वाऽसत्त्वादव्याप्तिरिति चेन्न ।

तत्तदाहार्यव्यक्तिभेदस्य स्वातन्त्र्येणाऽपि यादृशविशिष्टविषयताशालिनिश्चये निवेशनीयत्वात् । न च निर्वह्निः पर्वतो वह्निमानित्यादौ वह्निमत्पर्वतरूपाऽऽश्रयासिद्धौ निरुक्तबाधलक्षणाऽतिव्याप्तिरिति वाच्यम् । निरुक्तलक्षणोपयुक्तबाधत्वस्य तत्र सत्त्वेऽपि क्षतिविरहात्, दोषविभाजकतावच्छेदकबाधत्वस्याऽन्यथैव निर्वचनीयत्वात् ।

नचैवंरीत्या विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यसम्पादनेऽपि बाधादिघटकैकदेशेऽपि निरुक्तबाधत्वाद्यसत्वेन विशेष्यदलस्यापि वैयर्थ्यसम्भवेन तदकथनाद् ग्रन्थकारन्यूनतेति वाच्यम् । पर्वतपक्षकवन्ह्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वते बाधाद्यनात्मकेऽतिव्याप्तिवारणाय तस्य सार्थक्यात् । तथाहि—इच्छाऽप्रयोज्ययादृशविशिष्टविषयताशालिनिश्चयाऽवृत्तिप्रतियोगिकः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावः तत्त्वस्य बाधत्वस्य वह्निमत्पर्वते सत्त्वेन स्वपदेन वह्निमत्पर्वतत्वस्य धर्तुं शक्यत्वात् । विशेष्यदलनिवेशे तु वह्निमत्पर्वतविषयताशालिनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावाऽसत्त्वान्नातिव्याप्तिरिति तद्वैयर्थ्यं नोक्तम् । न च तथापि तादृशपक्षसाध्यकस्थले वन्ह्यभावव्याप्याभावव्याप्यवह्निमत्पर्वतरूपासत्प्रतिपक्षेऽव्याप्तिः, तस्य

स्ववृत्तिबाधत्वाक्रान्तवह्निमत्पर्वतघटितत्वादिति वाच्यम् । ह्रदत्वघटितसाध्याभावव्याप्यवत्पक्षस्यैव सत्प्रतिपक्षत्वोपगमादिति सर्वं समञ्जसम् ।

अथ यादृशविशिष्टविषयताशालिनिश्चयाऽवृत्तिप्रतियोगिकः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावः तत्त्वं बाधत्वमिति निर्वचने तादृशबाधत्वस्य दोषैकदेशे ह्रदेऽपि सत्त्वेनाऽसम्भव इति चेन्न ।

यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशालिनिश्चयाऽवृत्तिप्रतियोगिकः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावः तत्त्वस्य बाधत्वात् । एवं च तादृशबाधत्वादिकं वन्ह्यभाववद्ध्रदत्वगतसमुदायत्वे एव, न तु ह्रदत्वगतैकत्वे इति नाऽसम्भवः ।

लक्षणार्थस्तु—स्ववृत्तिनिरुक्तबाधत्वाद्यन्यतमरूपवद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यविषयितानिरूपकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकयद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताशालिनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तोभयाभाववत्तद्रूपविशिष्टवत्त्वं हेतुदोषवत्त्वम् । स्वपदं लक्ष्यतावच्छेदकत्वेनाऽभिमतवन्ह्यभाववद्ध्रदत्वगतसमुदायत्वपरम् ।

अथ वन्ह्यभाववद्ध्रदत्वगतसमुदायत्वनिष्ठतादृशतत्स्वरूपबाधत्वस्याऽन्यत्राऽसत्त्वात् स्ववृत्तितादृशबाधत्वाद्यन्यतमरूपवद्धर्मान्तरस्याऽप्रसिद्धत्वादसम्भव इति चेन्न ।

पक्षे साध्यवैशिष्ट्यावगाहित्वाभाववत्त्वमेव बाधत्वम् । तादृशाभाववत्त्वं च स्वनिरूपिताधेयत्वसम्बन्धेन । आधेयता च स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताविषयिताशालिनिश्चयाऽवृत्तिप्रतियोगिकत्वसम्बन्धावच्छिन्ना ग्राह्या । एवं च वन्ह्यभाववद्ध्रदत्वगतसमुदायत्व–ह्रदवृत्तिवन्ह्यभावत्वगतसमुदायत्वसाधारणं तादृशबाधत्वमनुगतमेवेति न किञ्चिदनुपपन्नम् । एवमेतादृशरीत्या व्यभिचारत्वादिकं निर्वाच्यम् ।

अथ विरोधिविषयिताप्रयुक्तत्वानिवेशे वन्ह्यभावव्याप्यवत्पर्वतपक्षकवह्निसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तिः, तथाहि—इच्छाऽप्रयोज्यवह्निमत्पर्वतविषयताशालिवन्ह्यभावव्याप्यवान् पर्वतो वह्निमानितिनिश्चये पक्षे साध्यवैशिष्ट्यावगाहित्वस्याऽवृत्तित्वविरहेण बाधत्वाऽसत्त्वेऽपि इच्छाऽप्रयोज्ययद्रूपावच्छिन्नविषयकनिश्चयाऽवृत्तिप्रतियोगिकः पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावः तत्स्वरूपाश्रयासिद्धित्वस्य तत्र सत्त्वात्, तादृशविषयकनिश्चयोत्तरानुमितिसामान्ये उभयाभावसत्त्वादिति तत्राऽतिव्याप्तिवारणायैव विरोधिविषयताप्रयुक्तत्वनिवेशसार्थक्यसम्भवे कथं तद्वैयर्थ्यमिति चेन्न ।

सामान्यत इच्छाऽप्रयोज्यत्वनिवेशेऽपि तत्तदाहार्यभेदनिवेशस्यावश्यकतया आहार्यभेद एव निवेश्यते, एकविधप्रीतिसम्भवे रीतिद्वयस्याऽन्याय्यत्वात् । एवमीश्वरेच्छाप्रयोज्यत्वस्य जन्यमात्रे एव सत्त्वेन इच्छाऽप्रयोज्यत्वस्य जन्यविषयतायामसत्त्वात्, जन्येच्छाऽप्रयोज्यत्वस्य च जन्यतात्वस्याऽनुगतस्याऽभावात् तत्तदिच्छाऽप्रयोज्यतायां पर्यवसानात्, ईश्वरेच्छाभिन्नेच्छाऽप्रयोज्यस्य निवेशे लक्षणस्य सर्वसाधारणत्वाच्च, । एवं चोक्तस्थले वन्ह्यभावव्याप्यवान् पर्वतो वह्निमानित्याद्याहार्यभेदस्याऽनिवेशात्तत्राश्रयाऽसिद्धित्वविरहेणाऽतिव्याप्तिविरहादित्यभिप्रायेण ग्रन्थकृता तद्दलस्य वैयर्थ्यमुक्तम् । न च पर्वतपक्षकवन्ह्यभावव्याप्यसाध्यकस्थले तादृशाऽऽहार्यभेदस्यानिवेशेन वह्निमत्पर्वतेऽतिव्याप्तिविरहेण विशेष्यदलस्यापि वैयर्थ्यमिति वाच्यम् । यदभावव्याप्यसाध्यकयत्पक्षकस्थले तादृशाऽहार्यज्ञानं न जातं तद्वति तत्पक्षेऽतिव्याप्तिवारणाय विशेष्यदलसार्थक्यसम्भवात्, वह्न्यभावव्याप्यवत्पर्वतादिपक्षकवन्ह्यादिसाध्यकस्थले यदि तादृशाऽऽहार्यज्ञानं न जातमित्युच्यते, तदा पक्षे साध्यवैशिष्ट्यावगाहित्वाऽप्रसिद्ध्या सुतरां नातिव्याप्तिरित्यवधेयम् ।

प्राचीनास्तु स्वविषयताप्रयुक्तोभयाभावप्रयोजकयत्किञ्चिदभावाधिकरणतायां ज्ञानवैशिष्ट्याऽप्रयोज्यत्वे सति स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकयद्धर्मावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वं तद्धर्मावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्वत्त्वं स्वसजातीयविशिष्टान्तराऽघटितत्वदलनिष्कर्षः ।

तथाच वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताप्रयोज्यं यद्वन्ह्यभाववद्ध्रदविषयकसमूहालम्बनात्मकसत्प्रतिपक्ष—ह्रदवृत्तिवन्ह्यभावादिनिश्चयोत्तराऽनुमितिसामान्यनिष्ठतादृशसाध्यवैशिष्ट्यावगाहित्वाऽभावाधिकरणत्वं तत्र ह्रदवृत्तिवन्ह्यभाव–सत्प्रतिपक्षविषयताप्रयोज्यत्वमप्यस्तीति सत्प्रतिपक्षादिकमेव विशिष्टान्तरं तदघटितत्वं वन्ह्यभाववद्ध्रदत्वावच्छिन्नेऽस्तीति तत्र लक्षणसमन्वयः ।

ननु "अनुयोगिनि स्वत्वान्तर्भावे" मणिकृदुक्त "यद्विषयकत्वेन ज्ञानस्याऽनुमितिप्रतिबन्धकत्वमि"त्यस्य—अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वस्य वा वैयर्थ्यसम्भवे विरोधिविषयिताप्रयुक्तत्वदलवैयर्थ्यानुधावनमनुचितम्, ह्रदाद्येकदेशाऽतिव्याप्तिवारणं हि तत्प्रयोजनमिदानीं तु सा नास्ति, एकदेशस्य ह्रदादेर्हेत्वाभासत्वविरहात्तादृशरूपेण तत्सजातीयत्वाऽप्रसिद्धयैव तस्य स्वपदेनोपादानाऽसम्भवादतिप्रसङ्गविरहात्। न च ह्रदादिरूपैकदेशस्य हेत्वाभासत्वविरहेऽपि ह्रदवृत्तिवन्ह्यभाववद्ह्रदत्वादिना सजातीयविशिष्टान्तरेण वन्ह्यभाववद्ह्रदेनाऽघटितत्वात्तत्राऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वदलस्य सार्थक्यं सम्भवतीति वाच्यम्। वन्ह्यभाववद्ह्रदत्वस्य ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावेन विशिष्टान्तरत्वाऽसम्भवादिति चेत्।

अत्र ब्रूमः—अनुयोगिनि स्वत्वान्तर्भावे स्ववृत्तिहेत्वाभासविभाजकरूपं यद्वन्ह्यभाववद्ह्रदत्वादिकं तेन रूपेण स्वसजातीयविशिष्टान्तरं न मेयत्वविशिष्टवन्ह्यभाववद्ह्रदादिकं, तद्विषयकप्रतीतेः स्वावच्छिन्नाविषयकत्वाभावात्, न वा ह्रदवृत्तिवन्ह्यभावादिकं, ह्रदवृत्तिवन्ह्यभावत्वस्य स्ववृत्तित्वाभावादिति स्वसजातीयविशिष्टान्तराऽप्रसिद्धयाऽसम्भवस्तद्वारणाय विशिष्टान्तरपदस्य स्वावच्छिन्नपर्याप्तिकविषयताशून्यप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकत्वमवश्यं

---

ज्ञानवैशिष्ट्याप्रयोज्यत्वनिवेशनं च अभाववान् वन्ह्यभाववानितीतिनिश्चयकालीननिश्चयीयाऽभाववद्ह्रदत्वावच्छिन्नविषयताप्रयुक्तत्वमादाय दोषवारणाय। एकदेशविषयतामादायाऽसम्भववारणाय व्यापकत्वपर्यन्तनिवेशः। विशेषगुणवद्घटादिसंग्रहाय यत्किञ्चित्त्वनिवेशः। एवं चैकदेशवारणाय विशेष्यदलसार्थक्यम्। परन्तु घटादिविषयताप्रयोज्यतादृशाऽधिकरणत्वाप्रसिद्ध्या स्वपदेन घटादेर्धर्तुमशक्यत्वात्तद्वारकविरोधिप्रयुक्तत्वदलवैयर्थ्यमतः प्रतियोगिनि स्वत्वान्तर्भाव इति वदन्ति।

उक्तरीत्या घटादावतिव्याप्तिवारकतया विरोधिविषयिताप्रयुक्तत्वदलसार्थक्याऽसम्भवेऽपि आहार्यस्थले एकदेशेऽतिव्याप्तिवारकतयैव सार्थक्यसम्भवेन तद्वैयर्थ्याऽभिधानाऽसङ्गतितादवस्थ्यात्।

एवं निर्वह्निः पर्वतो वह्निमानित्यत्र वह्निव्याप्यत्वावच्छिन्नेऽतिव्याप्तिवारणाय तत्सार्थक्यसम्भवे तद्वैयर्थ्योक्त्यसङ्गतेः। तथाहि—वह्निव्याप्यवान् पर्वत इति ज्ञानीयवह्निव्याप्यत्वावच्छिन्नविषयताप्रयुक्ताभयाभावप्रयोजकपक्षतावच्छेदकविशिष्टविषयकत्वाभावाधिकरणतायां वह्निव्याप्यत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकवह्निमत्पर्वतत्वावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वसत्त्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्निव्याप्यत्वे सत्त्वात्, तदवच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिसामान्ये उभयाभावसत्त्वाच्चेति।

यदि च यद्धर्मावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये विषयताप्रयुक्तोभयाभाववत्त्वमेव विवक्षणीयम्, न तु विरोधिविषयताप्रयुक्तत्वम्, तावतैव तत्रातिव्याप्तिवारणसम्भवात् इति विषयताविशेषणविरोधित्वविशेषणवैयर्थ्येन विशिष्टस्य वैयर्थ्योक्तिरिति। न च तदनिवेशे वह्निमान् धूमादित्यादौ वह्निमत्पर्वतादावतिव्याप्तिरिति वाच्यम्। वह्निमत्पर्वतत्वावच्छिन्नविषयताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणतायां वह्निमत्पर्वतत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वसत्त्वाद् वह्निमत्पर्वतेऽतिव्याप्त्यभावात्, पर्वतीयवह्निमत्पर्वतत्वावच्छिन्नविषयताप्रयोज्यतादृशाभावाधिकरणतायां तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकवह्निमत्पर्वतत्वावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वेऽपि तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य पर्वतीयवह्निमत्पर्वतत्वेऽसत्त्वात्पर्वतीयवह्निमत्पर्वते चातिव्याप्तिविरहादित्युच्यते, तदापि साध्यसाधनग्रहाविरोधिव्याप्तिग्रहविरोधित्वरूपस्य विशिष्टान्तराऽघटितत्वेनाऽघटितस्य व्यभिचारत्वस्य प्रकृतानुपयोगितया तन्निर्वचनस्योन्मत्तप्रलपितत्वापत्तेरिति विभावनीयम्।

वक्तव्यम्, एवं च वन्ह्यभाववद्धृदत्वाद्यवच्छिन्नपर्याप्तिकविषयताशून्य "मेयत्वविशिष्टवन्ह्यभाववद्धृदत्वाद्यवच्छिन्नविषयक" प्रतीतिविषयतावच्छेदकावच्छिन्नमेयत्वविशिष्टवन्ह्यभाववद्धृदादिरूपविशिष्टान्तरप्रसिद्ध्या नाऽसम्भवः। तथाच तादृशबाधाद्येकदेशहृदादिवृत्तिवन्ह्यभाववद्धृदत्वादिना सजातीयविशिष्टान्तरवन्ह्यभाववद्धृदाद्यघटितत्वादेकदेशेऽतिव्याप्तिवारणाय मूलकृल्लक्षणेऽनतिरिक्तवृत्तित्वविशेषणस्य सार्थक्यात्।

केचित्तु अनुयोगिनि स्वत्वान्तर्भावकल्पे स्वरूपसम्बन्धरूपाऽवच्छेदकताघटितसाजात्यस्यैव भट्टाचार्यानुमततया पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणायाऽनतिरिक्तवृत्तित्वदलसार्थक्यमित्याहुः।

अथ तथापि "अन्नवदन्तिकल्पे" यद्विषयकनिश्चयस्येत्यादिसम्पूर्णदलस्यैव वैयर्थ्यसम्भवे विरोधिविषयताप्रयुक्तत्वदलमात्रस्य वैयर्थ्यकथनमसङ्गतम्, स्वसजातीयविशिष्टान्तराऽघटितं यत्त्वं तद्वत्त्वस्यैव सम्यक्त्वात्, तथाहि—व्यभिचारत्वादिरूपदोषतावच्छेदकभिन्नानां "उदासीनानां" सजातीयाऽप्रसिद्ध्याऽतिव्याप्त्यसम्भवादिति चेन्न।

साजात्यघटकबाधत्वादिशरीरेऽव्याप्यवृत्तित्वभ्रमाऽनास्कन्दितत्वनिवेशे प्रयोजनाऽभावेन सामान्यतोऽव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वस्यैव निवेशेन वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणाय तद्दलसार्थक्यात्। अव्याप्यवृत्तित्वज्ञानानास्कन्दितस्य वृक्षः कपिसंयोगाभाववानितिनिश्चयस्य वृक्षः कपिसंयोगवानितिबुद्धिविरोधितया कपिसंयोगाभाववद्वृक्षत्वे बाधत्वसत्त्वात्। अस्माकन्तु यद्विषयकनिश्चये अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वविशेषणसत्त्वादेव नातिव्याप्तिः। न च ममापि बाधत्वादिघटकप्रतिबन्धकतायां अव्याप्यवृत्तित्वभ्रमानास्कन्दितनिश्चयीयत्वविवक्षणादेवाऽतिव्याप्तिवारणसम्भवे विशेष्यदलं व्यर्थमिति वाच्यम्। बाधत्व—व्यभिचारत्वादिप्रविष्टनानानिश्चयेषु अव्याप्यवृत्तित्वज्ञानानां भ्रमत्वेनाऽभावनिवेशाऽपेक्षया एकभ्रमत्वघटितविशेष्यदलोपादानस्यैव युक्तत्वात् (१)।

नचैवमपि कपिसंयोगी धूमान्यधूमादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः, तद्विषयकनिश्चयाव्यवहितोत्तरानुमितौ निरुक्तोभयाभावसत्त्वादिति वाच्यम्। तद्वारणाय विषयिताप्रयुक्तत्वमात्रस्य निरुक्तोभयाभावे निवेशात् विषयितायां विरोधित्वनिवेशवैयर्थ्ये ग्रन्थतात्पर्यात्।

एतेन पाषाणमयत्ववत्पर्वतविषयतासामान्यस्यैव निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकतया स्वप्रयोजकीभूतस्वविषयतासामान्यकत्वसम्बन्धेन पाषाणमयत्वविशिष्टपर्वते पक्षे साध्यवैशिष्ट्यावगाहित्वाभावरूपसाजात्यस्य वर्तमानतया स्वपदेन मेयत्वविशिष्टपर्वतस्य धारणसम्भवेन निर्वह्निः पर्वतो वह्निमानित्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणार्थमेव विरोधिविषयताप्रयुक्तत्वदलस्य सार्थक्यसम्भवे कथं तद्वैयर्थ्यमिति परास्तम्। पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणार्थं विरोधिविषयताप्रयुक्तदलसार्थक्येऽपि "वस्तुमात्रनिश्चयानन्तरं निर्वह्नित्वादिविशिष्टे वह्नेर्ग्रहेऽपि न क्षतिरिति" दीधितिग्रन्थे विरोधिविष-

(१) वस्तुतो विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यमित्यत्र विरोधिविषयताप्रयुक्तं दलं यत्रेति तद्गुणसंविज्ञानो बहुव्रीहिः। तथाच समुदायदलस्य वैयर्थ्यमेव ग्रन्थकृतोऽभिप्रेतमिति ध्येयम्।

**स्वसजातीयविशिष्टान्तरघटितं यथार्थत्वं तद्विषयकप्रतीतिविषयत्ववि·**
**लक्षणेन अनुयोगिनि स्वत्वानन्तर्भावेण—**

---

यताप्रयुक्तत्वानुपादाने पदार्थमात्रेऽतिव्याप्त्यभिधानस्याऽसङ्गतत्वापत्तेश्च । एवं चाऽनुयोगिनि
स्वत्वान्तर्भावेण वस्तुमात्रेऽतिव्याप्तिः सम्भवतीत्यतः प्रतियोगिनि स्वत्वान्तर्भावेण तादृशग्रन्थो
भट्टाचार्येणोपपादित इति ध्येयम् ।

नन्वेवं विशिष्टान्तरविषयित्वाऽप्रयोज्य–स्वविषयिताप्रयोज्येत्यादिक्रमेण विशिष्टान्तराऽघ·
टितत्वनिवेशेऽपि विरोधिविषयिताप्रयुक्तत्वाऽनिवेशेऽपि वस्तुमात्रेऽतिव्याप्तिर्न सम्भवति,
स्वविषयिताप्रयोज्यत्वविरहात्, इति भट्टाचार्योक्तविशिष्टान्तराऽघटितत्वनिवेशेऽपि "**वस्तु·**
**मात्रनिश्चयानन्तरमि**"त्यादिदीधितिग्रन्थाऽसङ्गतिस्तदवस्थैवेति वाच्यम् । तत्रापि
विशिष्टान्तरविषयिताप्रयोज्य–स्वविषयिताप्रयोज्योभयाभावप्रयोजकयावदभावाधिकरणताकं य·
थार्थत्वं तदन्यत्वे तात्पर्यान्न ग्रन्थाऽसङ्गतिरिति ध्येयम् ।

प्रतियोगिनि स्वत्वमन्तर्भाव्य विरोधिविषयिताप्रयुक्तत्वदलं सार्थकयति **स्वसजाती·**
**येति । अनुयोगिनि स्वत्वानन्तर्भावेणेति** । प्रतियोगिनि स्वत्वान्तर्भावेणेति यावत् ।
न च स्वसजातीयविशिष्टान्तरकं यथार्थत्वमित्येव कथं नोक्तमिति वाच्यम् । असम्भवापत्तेः ।
तथाहि–बाधत्वसजातीयं यद्विशिष्टान्तरं विपरीतबाधत्वं तत्कत्वस्य बाधत्वे सत्त्वेन बाधत्व·
स्यापि स्वपदग्राह्यतया स्वाऽघटितत्वस्य स्वस्मिन्नसत्त्वात् । अतो घटितपदम् । स्वस्मिन्
तद्घटितत्वोपादाने तु बाधस्य विपरीतबाधाऽघटिततया तस्य स्वपदाऽग्राह्यत्वान्नासम्भवः ।
तदर्थश्च स्वसजातीयविशिष्टान्तरविषयिताव्याप्यविषयिताकत्वम्, स्वावच्छिन्नविषयित्वाव्याप·
कविषयिताशून्य-स्वावच्छिन्नविषयिताशून्य–प्रतीतिविषयतावच्छेदकस्वसजातीयधर्मकत्वं चेति
ध्येयम् । स्वपदेन मेयत्वविशिष्टविपरीतव्यभिचारत्वमादाय मेयत्वविशिष्टव्यभिचारादावति·
व्याप्तिवारणाय यथार्थेति । तादृशविशिष्टान्तरघटितं यथार्थत्व तद्भिन्नत्वोक्तौ च मेयत्वविशि·
ष्टव्यभिचारविशिष्टघटेऽतिव्याप्तिः, व्यभिचारतात्वाभावेन स्वपदेन तादृशघटत्वस्य धर्तुम·
शक्यतया स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नभेदस्य तत्र सत्त्वात् । अत एव त·
द्रूपानवच्छिन्नप्रकारतावच्छेदकत्वमपि नोक्तम् ।

यद्यपि व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तेर्वक्ष्यमाणतया ऽत्रापीष्टापत्तिरेवेति व्यर्थं तदघ·
टितत्वम्, तथापि अणुरपि विशेषोऽध्यवसायकर इति न्यायात्तदुपात्तम् ।

तथाच स्ववृत्तिहेत्वाभासविभाजकरूपवत्–अथ च–स्वावच्छिन्नाविषयकप्रतीतिविषयता·
वच्छेदकं यद्रूपं तदवच्छिन्नघटिततावच्छेदकं यथार्थत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छे·
दकत्वं यद्रूपे फलितम् ।

अत्र स्वपदेन लक्ष्यतावच्छेदकीभूतव्यभिचारत्वादिकं न शक्यते धर्तुं, तस्य विशिष्टान्त·
रघटितत्वाऽभावात्, किन्तु मेयत्वविशिष्टव्यभिचारत्वादिकमेव, तच्च व्यभिचारत्वेन घटि·
तमिति मेयत्वविशिष्टव्यभिचारत्वस्य मेयत्वविशिष्टव्यभिचारत्वाऽघटितत्वाभावान्मेयत्व·
विशिष्टव्यभिचारे नातिव्याप्तिः । शुद्धव्यभिचारत्वस्य तदघटितत्वाद् व्यभिचारे लक्षण·
समन्वयः ।

पदार्थान्तरेऽतिप्रसङ्गवारकतया तद्दलसार्थक्यात् ।

एवं व्यभिचारघटितबाधेऽपि नाव्याप्तिः, तादृशबाधत्ववृत्तिरूपवत्—एवं—तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं न शुद्धव्यभिचारत्वं, विपरीतबाधत्वस्य तादृशत्वेऽपि तदवच्छिन्नघटिततावच्छेदकं न स्वम्, किन्तु मेयत्वविशिष्टतादृशबाधत्वमेव स्वपदग्राह्यम्, तदवच्छिन्नाऽघटितत्वस्य तादृशबाधत्वे सत्त्वात् ।

बाधविशिष्टव्यभिचारादौ च नातिव्याप्तिः, तादृशव्यभिचारत्वनिष्ठव्यभिचारत्वत्ववत्—अथ च—तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारत्वं तदवच्छिन्नघटिततावच्छेदकं यद्यत्त्वं—तादृशव्यभिचारत्वं—तदघटितत्वस्य स्वस्मिन्नसत्त्वात् ।

एवं च निष्कृष्टकल्पे विरोधिविषयिताप्रयुक्तत्वदलमपि सार्थकमित्याह **पदार्थान्तरे इति** । दोषभिन्ने घटादाविति यावत् । **अतिव्याप्तिवारकतयेति** । घटत्ववृत्तिहेत्वाभासविभाजकतावच्छेदकरूपाऽप्रसिद्ध्या स्वपदेन तस्योपादानाऽसम्भवेन मेयत्वविशिष्टव्यभिचारत्वादेरेव स्वपदेनोपादेयतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य घटत्वेऽपि सत्त्वेन घटेऽतिव्याप्तिवारकतयेत्यर्थः । **तद्दलसार्थक्यादिति** । विरोधिविषयिताप्रयुक्तत्वदलसार्थक्यादिति भावः । तथा च घटादिनिश्चयस्य स्वानन्तरोत्पन्नाऽनुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोजकविरोधिविषयिताकत्वविरहेण घटे नातिव्याप्तिः ।

ननु विशिष्टहेतौ विशिष्टसाध्यव्याप्तिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताऽनतिरिक्तवृत्तित्वरूपव्यभिचारत्वस्य ( अत्र हेत्वाभासविभाजकतावच्छेदकतया ) प्रवेशे धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निरूपबाधेऽव्याप्तिः, तादृशबाधविषयितायाः धूमव्यभिचारिवह्नित्वावच्छिन्ननिरूपितत्वेन व्याप्तिग्रहप्रतिबन्धकतावच्छेदकत्वेन चोक्तबाधतावच्छेदकरूपेऽपि व्यभिचारत्वं वर्त्तते, एवं च तादृशबाधत्ववृत्तिव्यभिचारत्ववत्, अथ च तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यच्छुद्धव्यभिचारत्वं तद्घटिततावच्छेदकं यद्यत्त्वं तादृशबाधत्वं तदघटितत्वस्य स्वस्मिन्नसत्त्वात्, यद्रूपपदेन तस्योपादानाऽसम्भवात् । यदि च "व्यभिचारत्वघटक" प्रतिबन्धकतावच्छेदकताऽनतिरिक्तवृत्तित्वमित्यत्र प्रतिबन्धकतावच्छेदकत्वाभावो न स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, किन्तु स्वरूप—स्वनिरूपकप्रतिबन्धकत्वव्यापकप्रतिबन्धकतानवच्छेदकत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः,—एवं च स्वं—व्याप्तिग्रहप्रतिबन्धकतावच्छेदकता—तन्निरूपिका या व्याप्तिग्रहप्रतिबन्धकता—तद्व्यापिका याऽनुमितिप्रतिबन्धकता तदवच्छेदकत्वस्यैव तादृशबाधविषयितायां सत्त्वेन तादृशप्रतिबन्धकतानवच्छेदकत्वविरहेण ( स्वरूपसम्बन्धेन व्याप्तिग्रहप्रतिबन्धकतावच्छेदकतायाः तादृशबाधविषयितायां सत्त्वेऽपि ) तादृशोभयसम्बन्धावच्छिन्नप्रतियोगिताकव्याप्तिग्रहप्रतिबन्धकतावच्छेदकत्वाभाववत्यां व्यभिचारघटितबाधविषयितायां स्वावच्छिन्ननिरूपितत्वसम्बन्धेन तादृशबाधत्वस्य वृत्तितया "अवृत्तित्वविरहेण" उक्तबाधतावच्छेदकरूपे व्यभिचारत्वविरहेण "बाधत्वेन तत्सजातीयं च न व्यभिचारत्वम्, विपरीततादृशबाधत्वस्य तादृशत्वेऽपि स्वस्य तद्घटितत्वाभावात्" स्वपदेनोक्तबाधत्वस्य धर्तुमशक्यतया मेयत्वविशिष्टतादृशबाधत्वमुपादाय नाऽव्याप्तिरित्युच्यते,

**न च व्यभिचारविशिष्टमेयत्वादेर्हेत्वाभासत्वविरहाद् हेत्वाभासविभाजकरूपेण सजातीयाऽप्रसिद्ध्या तस्य स्वपदेनोपादातुमशक्यत्वात्। मेयत्वविशिष्टव्यभिचारत्वादिकमेव स्वपदेनोपादेयम्, तस्य शुद्धव्यभिचाराद्यभिन्नतया व्यभिचारत्वादिरूपहेत्वाभासविभाजकरूपेण तत्सजातीयप्रसिद्धेरिति तद्विषयकप्रतीतिविषयत्वस्य व्यभिचारविशिष्टमेयत्वादौ सत्वात्तत्रातिप्रसङ्ग इति वाच्यम्।**

---

तदाप्यतिव्याप्तिमाशङ्कते **नचेति**। हेत्वाभासत्वविरहादिति कथनं व्यापकत्वाभावप्रदर्शनायैव, विभाजकतायां हेत्वाभासत्वस्याऽप्रवेशादिति ध्येयम्। तस्य—व्यभिचारविशिष्टमेयत्वत्वादेः। **स्वपदेनोपादेयतयेति**। ननु प्रतिबन्धकता "निरूपितस्वरूपसम्बन्धरूपाऽ"वच्छेदकता यथा व्यभिचारविशिष्टमेयत्वविषयितायां न वर्त्तते तथैव मेयत्वविशिष्टव्यभिचारविषयितायामपि न सा वर्त्तते (किन्तु व्यभिचारविषयितायामेव) इति मेयत्वविशिष्टव्यभिचारत्वस्यापि कथं स्वपदेनोपादानमत आह—**तस्येति**। मेयत्वविशिष्टव्यभिचारत्वस्येत्यर्थः। **तत्रेति**। व्यभिचारविशिष्टमेयत्वे इत्यर्थः। **अतिप्रसङ्ग इति**। तादृशविशिष्टान्तरतावच्छेदकं यन्मेयत्वविशिष्टव्यभिचारत्वं तदघटितत्वस्य व्यभिचारविशिष्टमेयत्वे सत्वादिति भावः।

अथाऽत्र स्वपदेनोदासीनमेयत्वविशिष्टव्यभिचारत्वस्य धर्त्तव्यतया तत्र च विशिष्टान्तराऽघटितत्वघटितव्यभिचारत्वविरहेण स्वपदार्थाऽप्रसिद्ध्याऽसम्भवसम्भवेऽतिव्याप्तिदानमसङ्गतमिति चेन्न।

स्वसजातीयविशिष्टान्तरघटितं यत्स्वमित्यनेन स्वाश्रयवृत्तिवृत्तिहेत्वाभासविभाजकरूपवत् विशिष्टान्तरघटितं यत्स्वमित्यस्यैव विवक्षितत्वात्।

नचैवमपि विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्र विशेषगुणवद्घटरूपाऽऽश्रयासिद्धावव्याप्तिरेव सम्भवति, तथाहि—विशेषगुणवद्घटत्वावच्छिन्नविषयितायामपि गुणसामान्याभाववद्विशेषगुणाभाववद्घटत्वावच्छिन्नविषयकबुद्धित्वव्यापकघटत्वावच्छिन्नविशेष्यतानिरूपितगुणसामान्याभावत्वावच्छिन्नप्रकारताकयत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकविशिष्टपक्षसाध्यग्रहत्वाव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताया निरुक्तोभयसम्बन्धेन सत्वेन तदभाववद्वृत्तित्वाभावरूपस्य बाधतात्वस्य विशेषगुणवद्घटत्वरूपाऽऽश्रयासिद्धत्वे सत्वेन स्ववृत्तिबाधतात्ववत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकगुणवद्घटत्वावच्छिन्नघटितत्वस्याऽऽश्रयासिद्धौ सत्वेन तदघटितत्वस्य स्वस्मिन्नसत्वात् इति चेन्न।

विशिष्टान्तराऽऽघटितत्वघटितबाधत्वादीनामेवाऽत्र विवक्षणीयत्वात्। तत्त्वं च विशिष्टपक्षसाध्यग्रहत्वाव्यापक-पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभाववद्वृत्तित्वाभाव एव। प्रतिबन्धकतावच्छेदकत्वाभावश्च स्वविशिष्टविषयितानुयोगिकस्वरूप—स्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितात्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः। विषयि·

**विशिष्टान्तराऽघटितत्वेनाऽघटितस्य विशिष्टसाध्यसाधनग्रहाऽविरोधि-ज्ञाननिष्ठविषयितासंबन्धेन व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिक-**

---

तायां स्ववै० स्वनिरूपकप्रतिबन्धकतावत्त्वसम्बन्धेन । प्रतिबन्धकतावत्त्वं च स्वविशिष्टविषयताभिन्नमुख्यविशेष्यताशून्यज्ञानीयत्वसम्बन्धेन । विषयतायां स्ववै० स्वावच्छेदकत्व—स्वव्याप्यप्रतिबन्धकतानवच्छेदकत्वोभयसम्बन्धेन । तथा च विशेषगुणवद्घटत्वावच्छिन्नविषयितायां न गुणसामान्याभाववदवच्छिन्नप्रकारतानिरूपकतादृशयत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताऽस्ति, स्वनिरूपकप्रतिबन्धकतायास्तत्राऽभावात्, तादृशविषयितायास्तत्प्रतिबन्धकतानवच्छेदकत्वेऽपि तद्व्याप्याऽऽश्रयासिद्धिप्रतिबन्धकतायामवच्छेदकत्वात्, तादृशोभयसम्बन्धेन तादृशप्रतिबन्धकताविशिष्टा गुणवद्घटविषयितैव तदन्यमुख्यविशेष्यता विशेषगुणवान् घट इति ज्ञानीयविशेष्यता तच्छून्यज्ञानीयविषयिता गुणवद्घटविषयितैव तदनुयोगिकत्वसम्बन्धेन तादृशावच्छेदकत्वाभाववती विषयिता तादृशाऽऽश्रयसिद्धिविषयिता तद्वृत्तित्वाभावश्च नाऽऽश्रयासिद्धित्वे इति विशिष्टान्तराऽघटितत्वेन घटितं बाधतात्वं नाश्रयासिद्धिसाधारणमिति नाव्याप्तिः(१) ।

अत्रायमनुगमः—धर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावनिष्ठाकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावनिरूपितविरोधिविषयताप्रयुक्तत्वविशिष्टस्वनिष्ठनिरूपकताकाधिकरणत्वसम्बन्धावच्छिन्नप्रतियोगित्वं नास्तीतिप्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्त्वं लक्षणम्, धर्मे धर्मवैशिष्ट्यं च स्वविशिष्टरूपघटितत्व—स्वतादात्म्योभयसम्बन्धेन, रूपे स्ववैशिष्ट्यं च स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्व—स्ववृत्तितादृशाभावान्यतमवत्त्वोभयसम्बन्धेनेति ।

साजात्यघटकहेत्वाभासविभाजकव्यभिचारेऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वं निवेश्य विशिष्टान्तराऽघटितत्वं चाऽनिवेश्य व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिं निराकरोति । व्याप्ति-

---

(१) अत्र मुख्यविशेष्यत्वानुपादाने मेयत्वविशिष्टबाधादावतिव्याप्तिः, एतादृशबाधतात्वस्य तत्राऽभावात् । तथाहि । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतारूपयत्किञ्चित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकता मेयत्वविशिष्टबाधविषयितायां नास्ति, स्वनिरूपकप्रतिबन्धकतावत्तायास्तत्राऽभावात्, तदभावश्च वह्न्यभाववान् ह्रदः प्रमेय इति ज्ञाने स्वावच्छेदकत्व—स्वव्याप्यप्रतिबन्धकतानवच्छेदकत्वोभयसम्बन्धेन तादृशप्रतिबन्धकताविशिष्टा या बाधविषयिता तदन्यप्रमेयत्वविषयितायाः सत्त्वात्, तथा च बाधत्वस्य धर्तुमशक्यतया स्वपदग्राह्यं यत्तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात्, मुख्यविशेष्यतानिवेशे तु प्रमेयत्वविषयता न तादृशीति तादृशप्रतिबन्धकताविशिष्टान्यमुख्यविशेष्यता न बाधः प्रमेय इति ज्ञानीयेति तादृशबाधत्वावच्छिन्नविषयितायां निरुक्तोभयसम्बन्धेन बाधप्रतिबन्धकतावच्छेदकतायाः सत्त्वेन तच्छून्यविषयितावृत्तित्वाभावस्य सत्त्वेन तादृशबाधत्वस्य स्वपदग्राह्यतया नातिव्याप्तिः। एवमेवाऽसिद्धित्वादिकमपि निर्वाच्यम् ।

**पस्य व्यभिचारादिविभाजकस्याऽत्र प्रवेशात्, तादृशरूपस्य च व्यभिचा-विशिष्टप्रमेयत्वादिसाधारणत्वादित्याहुः ।**

**ग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिरूपस्येति** । सावधारणमेतत् । **व्यभि-चारविभाजकस्येति** । व्यभिचारत्वस्येत्यर्थः । तथाच व्याप्तिग्रहप्रतिबन्धकताऽनतिरि-क्तवृत्तित्वमेवात्र व्यभिचारत्वम् । वृत्तित्वं च स्वावच्छिन्नानिरूपितविषयित्वसम्बन्धेन । **ताद-शरूपस्य चेति** । व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपस्य चेत्यर्थः । **व्यभिचार-विशिष्टप्रमेयत्वादिसाधारणत्वादिति** । व्यभिचारविशिष्टमेयत्वत्वस्यापि व्याप्तिग्रहप्र-तिबन्धकताऽनतिरिक्तवृत्तित्वादिति भावः । तथाच स्वपदेन तस्योपादानसम्भवान्नातिव्याप्ति-रिति ध्येयम् ।

नचैवं धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यत्र बाधेऽव्याप्तिः, बाधतावच्छेदकरूपेऽपि उक्तव्यभिचारत्वसत्त्वात् तेन रूपेण तत्सजातीयव्यभिचारत्वघटितत्वेनोक्तबाधत्वस्य स्वपदेनो-पादातुं शक्यत्वादिति वाच्यम् । विशिष्टान्तराऽघटितत्वघटितस्य व्यभिचारत्वस्यात्रऽनिवे-शात् । तच्च व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वम् । प्रतिबन्धकत्वाभावश्च स्वरूप-स्वाऽव्यापकप्रतिबन्धकताशून्यत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । तथाच स्वं—व्याप्ति-ग्रहप्रतिबन्धकता—तदव्यापकीभूता याऽनुमितिप्रतिबन्धकता तच्छून्यत्वविरहेण तादृशोभय-सम्बन्धावच्छिन्नप्रतियोगिताकतादृशप्रतिबन्धकत्वाभाववान् उक्तबाधनिश्चयस्तत्र स्वावच्छि-न्ननिरूपितविषयित्वसम्बन्धेन बाधत्वस्य वृत्तितया उक्तबाधतावच्छेदकरूपे व्यभिचारत्वविर-हेण तस्य स्वपदेनोपादानाऽसम्भवादव्याप्तिविरहात् ।

ननु ईदृशव्यभिचारत्वनिवेशे मेयत्वविशिष्टव्यभिचारे—व्यभिचारविशिष्टमेयत्वे वाऽति-व्याप्तिः, तत्र निरुक्तव्यभिचारत्वाऽभावात् । तथाहि—मेयत्वविशिष्टो व्यभिचार इति ज्ञाने व्य-भिचारविशिष्टमेयत्वविषयकज्ञाने वा व्याप्तिग्रहप्रतिबन्धकतायाः स्वरूपसम्बन्धेन सत्त्वेऽपि तादृशप्रतिबन्धकत्वाव्यापिका वा मेयत्वाभाववान् व्यभिचार इति ज्ञानीयप्रतिबन्धकता, एवं व्य-भिचाराभाववन्मेयत्वमिति ज्ञायीयप्रतिबन्धकता तच्छून्यत्वविरहेण निरुक्तोभयसम्बन्धावच्छि-न्नप्रतियोगिताकव्याप्तिग्रहप्रतिबन्धकत्वाभावस्य तत्र सत्त्वात्, तत्र स्वावच्छिन्ननिरूपितवि-षयित्वसम्बन्धेन मेयत्वविशिष्टव्यभिचारत्वस्य—व्यभिचारविशिष्टमेयत्वत्वस्य वा सत्त्वात्, एवं तयोः स्वपदेनोपादानाऽसम्भवात् । न च स्वाव्यापकप्रतिबन्धकताशून्यत्वमित्यत्र प्रतिबन्ध-कतायां प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितत्वस्य निवेशान्नोक्तदोषः । मेयत्वविशिष्टो व्यभिचार इति निश्चये व्यभिचारविशिष्टमेयत्वमिति निश्चये वा व्याप्तिग्रहत्वाऽव्यापकप्रकृतानु-मितिप्रतिबन्धकताविरहेण "तादृशप्रतिबन्धकताशून्यत्वस्यैव सत्वात्" निरुक्तोभयसम्बन्धाव-च्छिन्नप्रतियोगिताकव्याप्तिग्रहप्रतिबन्धकत्वाभाववान् तादृशव्यभिचारनिश्चयः किन्तु बाधादिनि-श्चये एवेति स्वावच्छिन्ननिरूपितविषयित्वसम्बन्धेन तदवृत्तित्वस्य मेयत्वविशिष्टव्यभिचारत्वे—व्यभिचारविशिष्टमेयत्वत्वे वा सत्त्वेन तत्र व्यभिचारत्वसत्त्वेन तस्य स्वपदेनोपादातुं शक्य-तया नोक्तातिव्याप्तिरिति वाच्यम् । तथासति बाधविशिष्टव्यभिचारेऽतिव्याप्तेः, तद्विषयक-ग्रहे स्वरूपेण प्रतिबन्धकतायाः सत्त्वेऽपि तत्प्रतिबन्धकत्वाऽव्यापकाऽनुमितिप्रतिबन्धकता-

शून्यत्वाभावेन निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववान् बाधविशिष्टव्यभिचारनिश्चयः स्वावच्छिन्ननिरूपितविषयित्वसम्बन्धेन तत्र तादृशव्यभिचारत्वस्य वृत्तितया तादृशव्यभिचारत्वस्य स्वपदेनापादातुमशक्यत्वादित्यत आह । **विशिष्टान्तराऽघटितत्वेनाऽघटितस्येति** । व्यभिचारत्वस्याऽत्र प्रवेशादित्यन्वयः । तथाच निरुक्तव्यभिचारत्वघटकप्रतिबन्धकत्वाभावः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक एव ग्राह्य इति भावः । नचैवं व्यभिचारघटितबाधेऽव्याप्तिरिति वाच्यम् । तदग्रस्तत्त्वेत्यादिना वक्ष्यमाणत्वात् ।

ननु पर्वतोऽवच्छेदकवह्निमान् अवृत्तिजलादित्यत्राऽवच्छेदकवह्निरूपसाध्याप्रसिद्धौ व्यभिचारत्वसत्त्वात्तद्घटितत्वाच्च जलवन्निष्ठभेदप्रतियोगितावच्छेदकवह्निरूपव्यभिचारत्वस्येति व्यभिचारत्वस्य स्वपदग्राह्यत्वाद् जलवन्निष्ठभेदप्रतियोगितावच्छेदकवह्निरूपव्यभिचारेऽव्याप्तिः, एवमत्र वृत्तिजलरूपसाधनाऽप्रसिद्धौ व्यभिचारत्वसत्त्वात् तद्घटितत्वाच्च व्यभिचारत्वस्येति व्यभिचारत्वस्य स्वपदग्राह्यत्वाद् वन्ह्यभाववद्वृत्तिजलात्मकव्यभिचारे चाऽव्याप्तिरत(१) आह । **विशिष्टसाध्यसाधनग्रहाऽविरोधीति** इदं च ज्ञानविशेषणम् ।

तथाचाऽवच्छेदको वह्निरिति साध्याप्रसिद्धिनिश्चयस्य विशिष्टसाध्यग्रहाविरोधित्वाभावेन वृत्तिजलमिति साधनाऽप्रसिद्धिनिश्चयस्य च विशिष्टसाधनग्रहाविरोधित्वविरहेण न व्यभिचारसजातीयविशिष्टान्तरं साध्याऽप्रसिद्ध्यादिति तद्घटितत्वेऽपि न तत्राऽव्याप्तिः ।

नचोक्तस्थले मेयत्वविशिष्टवन्ह्यभाववद्वृत्तित्वविशिष्टजलेऽतिव्याप्तिः, हेतुतावच्छेदकविशिष्टहेतुग्रहाविरोधित्वविशिष्टव्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपसाजात्याप्रसिद्धिः "तादृशव्यभिचारनिश्चयस्य वृत्तिजलविषयकत्वेन नियमतो हेतुतावच्छेदकविशिष्टहेतुग्रहविरोधित्वात्" अतः स्वपदेन मेयत्वविशिष्टतादृशव्यभिचारत्वस्य धारणं न सम्भवति, किन्तु मेयत्वविशिष्टबाधत्वादेरेव तदघटितत्वस्य तत्र सत्त्वादिति वाच्यम् । विशिष्टसाधनग्रहाऽविरोधित्वपदेन विशिष्टान्तराऽघटितं यद्विशिष्टसाधनग्रहविरोधि तदन्यत्वस्य विवक्षितत्वात् । तथाचोक्तस्थले वन्ह्यभाववद्वृत्तिजलरूपव्यभिचारे विशिष्टान्तरं यद्वृत्तिजलं तद्घटितत्वस्य सत्त्वा-

---

(१) मान्यास्तु पर्वतोऽवृत्तिवह्निकालीनधूमवान् वह्नेरित्यत्र अभाववदवृत्तिकालीनधूमाभाववद्वृत्तिवह्निरूपव्यभिचारस्य अभाववद्वृत्तिवह्निसाध्याप्रसिद्धिघटिततया उक्तव्यभिचारेऽव्याप्तिवारणार्थं साध्याऽप्रसिद्धेर्व्यभिचारत्ववारकं विशिष्टसाध्यग्रहाऽविरोधित्वमावश्यकम् । न च वह्निधर्मिकाऽवृत्तित्वग्रहं प्रति वस्तुतवह्निधर्मिकवृत्तित्वनिश्चयस्य प्रतिबन्धकतयैवाऽवृत्तिवह्निकालीनधूमसाध्यकवह्निहेतुकव्याप्तिग्रहानुत्पादसम्भवे तादृशव्याप्तिग्रहं प्रति धूमाभाववद्वृत्तित्वप्रकारकवह्निविशेष्यकज्ञानत्वेन प्रतिबन्धकत्वान्तरे मानाभाव इति वाच्यम् । धूमाभाववद्वृत्तिर्वह्निरितिनिश्चयसत्त्वे यथाऽवृत्तिवह्निकालीनधूमसाध्यकवह्निहेतुकव्याप्तिग्रहानुत्पादस्तथा शुद्धधूमसाध्यकवह्निहेतुकव्याप्तिग्रहो—महानसीयधूमादिसाध्यकवह्निहेतुकव्याप्तिग्रहश्च नोत्पद्यते । तथाच वह्निधर्मिकधूमत्वावच्छिन्ननिरूपितव्याप्तिग्रहं प्रत्येव वह्निधर्मिकधूमाभाववद्वृत्तित्वप्रकारकनिश्चयत्वेनैकरूपेण प्रतिबन्धकत्वं, तत्र धूमत्वावच्छिन्ननिरूपितत्वं धूमत्वनिष्ठावच्छेदकताकनिरूपकताकत्वं—न तु धूमत्वपर्याप्तावच्छेदकताकनिरूपकताकत्वम्, तेनोक्तसकलव्याप्तिसाधारण्यम् । तथाचाऽवृत्तिवह्निकालीनधूमसाध्यकवह्निहेतुकव्याप्तिग्रहस्थले वह्निधर्मिकधूमाभाववद्वृत्तित्वप्रकारकनिश्चयत्वेन ; सुतरां प्रतिबन्धकताया आवश्यकत्वमित्यवधेयम् ।

पर्वतो धूमवान् अवृत्तिवह्नेरित्यत्र धूमाभाववद्वृत्तिअभाववदवृत्तिवह्निरूपव्यभिचारस्य अभाववद्वृत्तिवह्निरूपसाधनाऽप्रसिद्धिघटिततया उक्तव्यभिचारेऽव्याप्तिवारणार्थं साधनाऽप्रसिद्धेर्व्यभिचारत्ववारकं विशिष्ट-

साधनग्रहाऽविरोधित्वविशेषणमावश्यकम् । न चाऽवृत्तिवह्निधर्मिकधूमव्याप्तिग्रहं प्रति वह्निधर्मिकधूमाभाववद्वृत्तित्वप्रकारकनिश्चयत्वेन प्रतिबन्धकता न कल्प्यते अपि तु वह्निधर्मिकाऽवृत्तित्वप्रकारकग्रहं प्रति वह्निधर्मिकवृत्तित्वप्रकारकनिश्चयत्वे वल्लप्तप्रतिबन्धकतयैव तादृशव्याप्तिग्रहानुत्पादसम्भवादिति वाच्यम् । वह्नित्वावच्छेदेन धूमाभाववद्वृत्तित्वावगाहिनिश्चयसत्वे वह्नित्वावच्छेदेन तत्सामानाधिकरण्येन वा धूमव्याप्तिग्रहवद् धर्मान्तरसहितवह्नित्वावच्छिन्नधर्मिकव्याप्तिग्रहोऽपि नोत्पद्यते, तथाच तत्तद्व्याप्तिग्रहानुत्पादनिर्वाहार्थं वह्नित्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितधूमव्याप्तिग्रहं प्रति वह्नित्वावच्छेदेन धूमाभाववद्वृत्तित्वावगाहिनिश्चयत्वेन प्रतिबन्धकताया आवश्यकत्वात् ।

अथ प्रतिबन्धकताघटितव्यभिचारत्वस्य साध्याऽप्रसिद्ध्यादिव्यावृत्तत्वेऽपि आहार्यस्थलानुरोधेन यद्रूपावच्छिन्नविषयिताशालिनिश्चयाऽव्यवहितोत्तरानुमितौ अनाहार्यमानसज्ञाने वा प्रकृतहेतौ प्रकृतसाध्यनिरूपितव्याप्त्यवगाहित्वाभाववत्त्वे सति यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमित्यादौ प्रकृतसाध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावस्तदन्यत्वे सति यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितौ प्रकृतहेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावः तदन्यत्वं व्यभिचारत्वं वाच्यम्, तथाचाऽवृत्तिवह्निकालीनधूमसाध्यकवह्निहेतुकस्थले—धूमसाध्यकाऽवृत्तिवह्निहेतुकस्थले च धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयकनिश्चयोत्तरानुमितावपि साध्यतावच्छेदकादिवैशिष्ट्यावगाहित्वाभावसत्वेन, तदन्यत्वस्य तादृशवह्नित्वादावसत्वेन तत्तत्स्थलीयधूमाभाववद्वृत्तिवन्ह्यादिरूपव्यभिचारेऽव्याप्तिः । न च यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितौ यद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्य साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावः तदन्यत्वं विवक्षणीयम्, तथाच धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयकनिश्चयोत्तरानुमितौ धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपं यद्वृत्तिवह्नित्वं तदवच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नाऽप्रयोज्यत्वविरहात्, यद्रूपपदेन तादृशवह्नित्वस्य धर्त्तुमशक्यत्वात्, किन्तु वृत्तिवह्नित्वादिकमेव—तदन्यत्वस्य तत्र विरहेण निरुक्तव्यभिचारत्वं न वृत्तिवह्नित्वादाविति वाच्यम् । अभाववद्वृत्तिवह्नित्वादौ तादृशव्यभिचारत्वसत्वेन तद्घटितधूमाभाववद्वृत्तिवन्ह्यादिरूपव्यभिचारेऽव्याप्तितादवस्थ्यादिति चेन्न ।

प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपिता या विषयता तन्निरूपितवृत्तितात्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नाभावप्रयोजकत्वं-साध्यतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नाभावप्रयोजकतानवच्छेदकत्वे सति हेतुतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नाभावप्रयोजकतानवच्छेदकत्वे सति यद्रूपावच्छिन्नविषयतात्वव्यापकं यद्रूपं तदवच्छिन्नत्वं तत्त्वं व्यभिचारत्वमिति । अवृत्तिवह्निकालीनधूमसाध्यकवह्निहेतुकस्थले धूमाभाववद्वृत्तिवन्हित्वावच्छिन्नविषयतात्वव्यापकं यन्निरूप्यनिरूपकभावापन्नव्यभिचाराविषयतात्वं तत्साध्यतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नाभावप्रयोजकतावच्छेदकं वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयतात्वं तद्भिन्नं, एवं धूमसाध्यकाऽवृत्तिवन्हिहेतुकस्थल धूमाभाववद्वृत्तिवन्हित्वावच्छिन्नविषयतात्वव्यापकं यन्निरूप्यनिरूपकभावापन्नव्यभिचाराविषयतात्वं तद्धेतुतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नाभावप्रयोजकतावच्छेदकं यद्वृत्तित्वप्रकारतानिरूपितवन्हित्वावच्छिन्नविषयतात्वं तद्भिन्नमिति तदवच्छिन्नं तादृशव्याप्तिविषयत्वाभावप्रयोजकतायामस्त्येवेति तत्र लक्षणसमन्वयः ।

द्वितीयतृतीयसत्यन्ताऽनिवेशे अवृत्तिवन्हिकालीनधूमसाध्यकवन्हिहेतुकस्थले वृत्तिवन्हिरूपसाध्याऽप्रसिद्धौ—धूमसाध्यकाऽवृत्तिवन्हिहेतुकस्थले वृत्तिवन्हिरूपसाधनाऽप्रसिद्धौ च निरुक्तव्यभिचारत्वसत्वेन तद्घटितधूमाभाववद्वृत्तिवन्हिरूपतत्स्थलीयव्यभिचारेऽव्याप्तिः, निरुक्ताभावप्रयोजकत्वे वृत्तिवन्हित्वावच्छिन्नविषयतात्वव्यापकं यद्वृत्तित्वप्रकारतानिरूपितवन्हित्वावच्छिन्नविशेष्यतात्वं तदवच्छिन्नत्वसत्वात्, वृत्तिवन्हित्वावच्छिन्नविषयतात्वव्यापकं यद्वृत्तित्वप्रकारतानिरूपितवन्हित्वावच्छिन्नविशेष्यतात्वं तदवच्छिन्नत्वसत्वाच्च ।

न च वृत्तिवन्हित्वावच्छिन्नविषयतात्वव्यापकं यदुक्तरूपं—यच्च वृत्तिवन्हित्वावच्छिन्नविषयतात्वव्याप-

कमुक्तरूपं तदवच्छिन्नत्वं अवृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यत्वाभावप्रयोजकत्वे—इति तादृशव्याप्तिप्रकारतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वाभावप्रयोजकत्वं न तत्तद्रूपावच्छिन्नं प्रतिबन्धकतावच्छेदकविषयतायाः प्रतिबध्यतानिष्ठं यत्तदवच्छेदकत्वं तदवच्छिन्नाभावप्रयोजकत्वादिति तादृशव्यभिचारत्वं न वृत्तिवह्न्यादाविति निरुक्तव्यभिचारेऽव्याप्तिविरहेण सत्यन्तं व्यर्थमिति वाच्यम्। निरुक्तव्याप्तिविषयताव्यापकस्याऽवृत्तिवह्नित्वावच्छिन्नविषयत्वाभावप्रयोजकस्य वृत्तिवह्नित्वावच्छिन्नविषयत्वस्य तादृशव्याप्तिविषयत्वाभावप्रयोजकत्वात्, व्यापकाभावप्रयोजकस्य व्याप्याभावप्रयोजकत्वनियमादिति।

नचाऽवृत्तिवह्निकालीनधूमसाध्यकवह्निहेतुकस्थले धूमाभाववद्वृत्तिवह्निरेव व्यभिचारः इति तादृशप्रतिबध्यतावच्छेदकं धूमव्याप्यो वह्निरित्यादिज्ञानसाधारणधूमत्वावच्छिन्नविषयतानिरूपितव्याप्तिविषयतानिरूपितवह्नित्वावच्छिन्नविषयत्वं तदभावप्रयोजिकैव तादृशव्यभिचारविषयता, न तु तादृशसाध्यतावच्छिन्ननिरूपिततादृशव्याप्तिविषयत्वं,—एवं धूमसाध्यकाऽवृत्तिवह्निहेतुकस्थले धूमाभाववद्वृत्तिरेव व्यभिचार इति तादृशज्ञानप्रतिबध्यतावच्छेदकं धूमव्याप्यो वह्निरितिज्ञानसाधारणं वह्नित्वावच्छिन्नविषयतानिरूपिततादृशव्याप्तिविषयत्वं न तु अवृत्तिवह्नित्वावच्छिन्नविषयतानिरूपिततादृशव्याप्तिविषयत्वमिति निरुक्तप्रकृतसाध्यकप्रकृतहेतुकव्याप्तिविषयत्वाभावप्रयोजकत्वं न तादृशव्यभिचारत्वावच्छिन्नविषयताव्यापकरूपावच्छिन्नमिति तत्र तत्र व्यभिचारेऽव्याप्तिरिति वाच्यम्! दत्तोत्तरत्वात्।

ननु प्रकृतसाध्यहेतुविषयकत्वाभावप्रयोजकतावच्छेदकरूपानवच्छिन्नं प्रकृतसाध्यहेतुकव्याप्तिविषयकत्वाभावप्रयोजकत्वं यद्रूपावच्छिन्नविषयतानिष्ठं तद्रूपवत्त्वमेव व्यभिचारत्वं लाघवादुच्यतां किं गुरुतरतादृशरूपावच्छिन्नविषयताव्यापकरूपावच्छिन्नत्वनिवेशेनेति चेन्न।

धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयतान्तर्गतवृत्तिवह्नित्वावच्छिन्नविषयतायास्तादृशप्रयोजकत्वाश्रयत्वेन वृत्तिवह्नित्वादावपि तादृशव्यभिचारत्वसत्त्वेन निरुक्तव्यभिचारेऽव्याप्तेरिति।

अथ धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविशिष्टमेयत्वादावतिव्याप्तिः, तत्र निरुक्तव्यभिचारत्वाऽसत्त्वात्, तथाहि—निरुक्तव्याप्तिविषयकत्वाभावप्रयोजकतावच्छेदकं निरूप्यनिरूपकभावापन्नव्यभिचारविषयतात्वं तस्य च व्यभिचारविशिष्टमेयत्वत्वावच्छिन्नविषयताव्यापकत्वाभावादिति चेन्न।

यद्रूपावच्छिन्नविषयताव्यापकत्वस्थाने यद्रूपावच्छिन्नविषयिताव्यापकत्वावच्छेदकत्वस्य विवक्षितत्वात्, तच्च निरूप्यनिरूपकभावापन्नव्यभिचारविषयतात्वेऽक्षतमेव। प्रकृतसाध्यहेतुविषयकत्वाभावप्रयोजकतावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकयद्रूपावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकरूपवृत्तिप्रकृतसाध्यहेतुकव्याप्त्यवगाहित्वाभावप्रयोजकत्वं तत्त्वं व्यभिचारत्वमिति पर्यवसितार्थः। वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन।

प्रकृतसाध्यहेतुकव्याप्त्यवगाहित्वाभाववत्त्वमिति निर्गलितार्थः। तेन तत्त्वस्य तन्मात्रवृत्तित्वेऽपि न क्षतिः। तादृशाभाववत्त्वं च स्वनिरूपिताधेयतासम्बन्धेन, आधेयत्वं च प्रकृतसाध्यहेतुविषयकत्वाभावप्रयोजकतावच्छेदकतावच्छेदकतावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकत्वविशिष्टत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकवृत्तित्वसम्बन्धावच्छिन्नं ग्राह्यम्। वृत्तित्वं च स्वनिरूपितप्रयोजकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति। पूर्ववत्समुदायत्वमेव लक्ष्यतावच्छेदकमिति। न च धूमवान् वह्नेरित्यादौ तेजस्त्ववद्वह्नौ अतिव्याप्तिः, तथाहि—तेजस्त्ववान् व्याप्यभाववान् तेजस्त्ववान् वह्निरित्यादिज्ञानस्य व्याप्तिबुद्धिप्रतिबन्धकतया व्याप्तिविषयकत्वाभावप्रयोजकतायां तेजस्त्ववद्वह्नित्वावच्छिन्नविषयताव्यापकं निरुक्तसाध्यहेतुविषयकत्वाभावप्रयोजकतानवच्छेदकं व्याप्यभाववान् तेजस्त्ववानिति निश्चयकालीनतेजस्त्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयतात्वं तदवच्छिन्नत्वसत्त्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयकनिश्चयाऽवृत्तिप्रतियोगिकः प्रकृतहेतुधर्मिकप्रकृतसाध्यनिरूपितव्याप्त्यवगाहित्वाभावस्तद्विशेषणस्य देयत्वादिति प्राहुः।

तदघटितत्वविशिष्टसाधनग्रहविरोधि यत्तदन्यत्वस्य सत्वान्न प्रागुक्तमेयत्वविशिष्टव्यभिचारत्वरूपसाजात्याऽप्रसिद्धिः ।

वस्तुतस्तु व्याप्तिग्रहत्वव्यापकप्रतिबध्यतायामेव विशिष्टसाधनग्रहत्वाऽव्यापकत्वं देयम् ।

तथाच विशिष्टसाध्यग्रहत्वाऽव्यापिका विशिष्टसाधनग्रहत्वाव्यापिका या व्याप्तिग्रहत्वव्यापकप्रतिबध्यता तन्निरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तित्वं व्यभिचारत्वं फलितम् । प्रतिबन्धकत्वाभावः पूर्ववत् स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः । वृत्तितापि पूर्ववद् ।

तथाच पर्वतोऽनवच्छेदकवह्निमान् अवृत्तिजलादित्यादौ अवृत्तिजलधर्मिकवह्निव्याप्तिग्रहत्वव्यापिकापि जलधर्मिकाऽवृत्तित्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता न विशिष्टसाधनग्रहत्वाऽव्यापिका । एवमनवच्छेदको वह्निरिति ज्ञाननिष्ठा वह्निधर्मिकाऽनवच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता तादृशव्याप्तिग्रहत्वव्यापिकाऽपि न विशिष्टसाध्यग्रहत्वाऽव्यापिकेति तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तित्वस्याऽसत्वान्न साधनाप्रसिद्धित्व-साध्याप्रसिद्धित्वयोर्विशिष्टान्तरत्वमिति न तद्घटितव्यभिचारेऽव्याप्तिः(१) ।

एवमत्र बाधतात्वं विशिष्टपक्षग्रहत्वाव्यापक–विशिष्टसाध्यग्रहत्वाव्यापकपक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभाववन्निरूपितवृत्तित्वाभावः । प्रतिबन्धकत्वाभावश्च स्वरूप–स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितावत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः । वृत्तिता च स्वावच्छिन्ननिरूपितविषयितावत्वसम्बन्धावच्छिन्ना बोध्या । निश्चये प्रतिबध्यतावै० स्वाश्रयत्व–

---

(१) एवं च स्ववृत्तिव्याप्तिग्रहत्वव्यापक- विशिष्टसाध्यग्रहत्वाव्यापक–विशिष्टसाधनग्रहत्वाऽव्यापकप्रतिबध्यतारूपं यद्धेत्वाभासविभाजकं तद्वत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं यद्यत्त्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं लक्ष्यतावच्छेदके निवेशनीयम् । अत्र प्रतिबध्यतारूपहेत्वाभासविभाजके स्ववृत्तित्वं च–स्वनिरूपित–स्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताकत्वसम्बन्धेन । प्रथमं स्वपदं प्रतिबध्यतापरम् द्वितीयं स्वपदन्तु मेयत्वविशिष्टव्यभिचारत्वादि "विशिष्टान्तरघटित" धर्मपरम् । हेत्वाभासविभाजकरूपवत्वन्तु स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतिबध्यतानिरूपितस्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताकत्वसम्बन्धेन ।

अत्र वदन्तिकल्पे तु प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्तिवैशिष्ट्यावगाहित्वाभाव–प्रकृतपक्षधर्मिकप्रकृतसाध्यवैशिष्ट्यावगाहित्वाभाव–प्रकृतपक्षधर्मिकप्रकृतहेतुवैशिष्ट्यावगाहित्वाभावान्यतमेव हेत्वाभासविभाजकरूपं ग्राह्यम् । अत्र स्ववृत्तित्वन्तु स्वप्रयोजकत्वावच्छिन्नविषयतासामान्यकत्वसम्बन्धेन । तद्वत्त्वमपि तादृशसम्बन्धेनैव ।

न च व्यभिचारविशिष्टमेयत्वादेरपि स्वपदेनोपादानं न सम्भवति—व्यभिचारविशिष्टमेयत्वविषयतायाः प्रकृतहेतुधर्मिकव्याप्त्यवगाहित्वाभावाऽप्रयोजकत्वात्, स्ववृत्तित्वस्योक्तसम्बन्धेन हेत्वाभासविभाजकरूपेऽसम्भवात्, तथाच प्रतियोगिनि स्वत्वान्तर्भावेऽपि स्वसजातीयविशिष्टान्तरघटितं यद्यत्त्वं तदन्यत्वस्य व्यभिचारविशिष्टमेयत्वेऽपि सत्त्वात्तत्रातिव्याप्तिर्दुर्वारैवेति वाच्यम् । स्वप्रयोजकीभूतत्वावच्छिन्नविषयताको यो धर्मस्तद्धर्मावच्छिन्नघटितत्वेन सम्बन्धेन स्ववृत्तित्वस्योक्तत्वाद्व्यभिचारविशिष्टमेयत्वादेरपि स्वप्रयोजकत्वावच्छिन्नविषयताकव्यभिचारत्वावच्छिन्नघटितत्वेन स्वपदेनोपादानसम्भवान्न तत्रातिव्याप्तिः ।

वस्तुतस्तु यद्विषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयितामयुक्तोभयाभाव इति कल्पे विरोधिविषयतायां स्वनिष्ठत्वोपादानेनैव व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिर्नास्ति स्वपदस्य लक्ष्यपरतया व्यभिचारविशिष्टमेयत्वविषयतायाः प्रतिबन्धकतानवच्छेदकत्वेनोभयाभावाऽप्रयोजकत्वात् ।

**तन्न, व्यभिचारघटितबाधादावपि विशिष्टान्तराऽघटितत्वाऽघटितव्यभिचारत्वादिसत्त्वेन तद्घटकव्यभिचारादेर्व्यभिचारत्वादिना तत्सजातीयतया तत्सङ्ग्रहानुपपत्तेः ।**

---

स्वनिरूपितमुख्यविशेष्यतानुत्थवच्छेदकतानिरूपितावच्छेदकतावत्प्रकारतानिरूपितविशेष्यतानिरूपकज्ञानाभाववत्त्वोभयसम्बन्धेन ।

प्रतिबन्धकत्वनिष्ठप्रतियोगितावच्छेदकसंसर्गविधया द्वितीयसम्बन्धनिवेशात्—ह्रदो वह्निमानित्यत्र वन्ह्याभाववज्जलवद्वृत्तिजलचरद्ह्रदे नातिव्याप्तिः, ह्रदो वह्निमानित्याकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताया उक्तविशिष्टविषयकनिश्चये स्वरूपसम्बन्धेन सत्त्वेऽपि द्वितीयसम्बन्धेनाऽभावात्, तादृशसम्बन्धद्वयेन तादृशप्रतिबन्धकत्वाभावस्य तादृशनिश्चये सत्त्वेन तद्वृत्तित्वाभावस्य बाधतात्वस्य तादृशविशिष्टह्रदत्वेऽसत्त्वात् ।

अत्रायमनुगमः—धर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाववृत्ति यद्रूपं तद्वत्त्वम् । धर्मे धर्मवै० स्वतादात्म्य-स्वविशिष्टरूपघटितत्वोभयसम्बन्धेन । रूपे स्ववै० स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व-स्ववृत्तिबाधतात्वायन्यतमरूपवत्त्वोभयसम्बन्धेन, रूपे उभयाभाववृत्तित्वं च स्वावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयाऽव्यवहितोत्तरानुमितित्वव्यापकत्वसम्बन्धेन । व्यापकता च विरोधिविषयिताप्रयुक्तत्वविशिष्टत्वाधिकरणत्वसम्बन्धेनेति ।

बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वेनाऽघटितमेव व्यभिचारत्वं निर्वाच्यम्, तथा च व्यभिचारघटितबाधेऽव्याप्तिस्तदवस्थैवेत्याह **तन्नेति** । **विशिष्टान्तराऽघटितत्वाऽघटितेति** । प्रतियोगितावच्छेदकसंसर्गविधया स्वाव्यापकप्रतिबन्धकताशून्यत्वाऽघटितेति भावः । **तद्घटकेति** । बाधघटकेत्यर्थः । **तत्सजातीयतयेति** । बाधसजातीयतयेत्यर्थः । **तत्सङ्ग्रहानुपपत्तेरिति** । तादृशबाधेऽव्याप्तेरित्यर्थः । एवं च धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वेऽपि व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपव्यभिचारत्वत्वसत्त्वेन तेन रूपेण तत्सजातीयं विशिष्टान्तरं शुद्धव्यभिचारत्वं तद्घटितत्वेन तादृशबाधत्वस्य स्वपदोपादेयतया तदघटितत्वस्य तादृशबाधेऽसत्त्वादव्याप्तिरिति भावः ।

यत्तु धूमव्यभिचारिवह्निमत्त्वं स्वपदेनोपादाय तत्सजातीयविशिष्टान्तर"धूमव्यभिचारिवह्नित्व"घटितं यत्त्वं धूमव्यभिचारिवह्निमत्त्वं तद्घटितत्वस्य तद्घटितबाधेऽसत्त्वादव्याप्तिरिति ।

तन्न । तदघटितत्वपदेन तत्पर्याप्तावच्छेदकताकविषयतावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वोक्त्यापि तादृशाऽव्याप्तिवारणसम्भवात् । उक्तरीत्याऽव्याप्तेर्यावद्धेत्वाभासविभाजकरूपेण साजात्योक्तावपि दुर्वारत्वाच्च ।

ननु स्ववृत्तिहेत्वाभासविभाजकं यद्यद्रूपं तत्कूटवत्, अथ च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तदवच्छिन्नघटितताावच्छेदकं यत्त्वं तदवच्छिन्नाविषयकप्रतीति

नच स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विवक्षणीयं, तथाच बाधादिघटकव्यभिचारादौ बाधत्वाद्यसत्त्वान्न तादृशबाधादिसजातीयत्वम्, अतस्तत्संग्रहसम्भव इति वाच्यम्। एवं सति बाधविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्म्मेण सजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्रसिद्धावपि तद्घटितत्वाऽसत्त्वेनाऽतिव्याप्तेः। तस्मात् व्यभिचारादिघटितबाधादेः सङ्ग्रहप्रकारोऽग्रे प्रदर्शनीय एवाऽऽदरणीयः।

---

विषयतावच्छेदकत्वं यद्रूपे वाच्यं, एवं च व्यभिचारघटितबाधत्ववृत्तिहेत्वाभासविभाजकरूपं-बाधत्वत्वं-व्यभिचारत्वत्वं च तत्कूटवत् न व्यभिचारघटितबाधत्वं, तस्य स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्—विपरीततादृशबाधत्वस्य तादृशत्वेऽपि तद्घटितत्वस्य स्वस्मिन्नसत्वात्, अतो मेयत्वविशिष्टव्यभिचारघटितबाधत्वमेव स्वपदेनोपादेयन्तथाच नाऽव्याप्तिरित्याशङ्कते। नचेति। अतः—व्यभिचारादौ बाधादिसजातीयत्वाभावात् तत्संग्रहसम्भवः—व्यभिचारघटितबाधसङ्ग्रहसम्भवः।

अनुगमस्तु-स्ववृत्तिहेत्वाभासविभाजकरूपत्वव्याप(१)कत्वम्। व्यापकता च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेनेति।

एवं सति—स्ववृत्तियावद्धेत्वाभावसविभाजकरूपेण साजात्यविवक्षणे सति, बाधविशिष्टव्यभिचारादौ—अयोगोलकं धूमवद् वह्नेरित्यत्र धूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवह्नित्वावच्छिन्ने। अतिव्याप्तेरित्यनेनाऽन्वयः।

बाधादेरिति। व्यभिचारविशिष्टबाधादेरित्यर्थः। तद्घटितत्वाऽसत्वेनेति। व्यभिचारविशिष्टबाधघटितत्वविरहेणेत्यर्थः। अतिव्याप्तेरिति। मेयत्वविशिष्टबाधत्वघविशिष्टव्यभिचारत्वस्यैव स्वपदेनोपादेयतया तदघटितत्वस्य बाधविशिष्टव्यभिचारत्वे सत्वादिति भावः। अग्रे प्रदर्शनीय एवेति। स्वविषयिताप्रयोज्येत्यादिनेत्यादिः।

अथाऽत्र बाधविशिष्टव्यभिचारेऽतिव्याप्तिकथनमसङ्गतम्, स्वपदेन बाधविशिष्टव्यभिचारत्वस्य धर्तुमशक्यत्वेऽपि बाधवैशिष्ट्यमुपादाय तद्वृत्तिबाधत्वत्ववत्-अथ च तदविषयकप्रतीतिविषयतावच्छेदकं शुद्धबाधत्वं तदवच्छिन्नघटितं यत्त्वं बाधवैशिष्ट्यं-तदघटितत्वस्य बाधविशिष्टव्यभिचारत्वेऽभावादिति चेन्न।

एवंसति तुल्ययुक्त्या धूमव्यभिचारिवन्हिमत्वं स्वपदेनोपादाय तद्वृत्तिव्यभिचारत्वत्ववत्-अथ च-तदविषयकप्रतीतिविषयतावच्छेदकं धूमव्यभिचारिवन्हित्वं तद्घटितं यत्त्वं धूमव्यभिचारिवन्हिमत्वं-तदघटितत्वस्य धूमाभाववद्धूमव्यभिचारिवन्हिमत्वे विरहेणोक्तव्यभिचारघटितबाधेऽव्याप्तिवारणाय तदघटितत्वपदेन तत्पर्याप्त्याऽवच्छेदकताकविषयताशून्यत्वस्य विवक्षणीयाऽतिव्याप्तिसङ्गतेः।

केचित्तु धूमव्यभिचारिवन्हिमत्वमादायोक्तरीत्या व्यभिचारघटितबाधेऽव्याप्तिवारणाय

---

(१) प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तद्वृत्तिहेत्वाभासविभाजकयावद्रूपाऽप्रसिद्ध्या स्वपदेन तस्योपादातुमशक्यतया बाधविशिष्टव्यभिचारादेरेव स्वपदेनोपादेयत्वात्। अतो यावत्पदस्य व्यापकतापरत्वमिति ध्येयम्

तदघटितत्वपदेन तदवच्छिन्नाविषयितावत्व—तदवच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वो-भयाभाववत्प्रतीतिविषयतावच्छेदकत्वं लक्ष्यतावच्छेदकरूपे विवक्षणीयम्, तथाच धूमव्य-भिचारिवन्हिमत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभावप्रयुक्तोभयाभाववत्त्वस्य ता-दृशबाधप्रतीतौ सत्वान्नाव्याप्तिः । एवं च बाधविशिष्टव्यभिचारेऽपि बाधवैशिष्ट्यमादाय ना-तिव्याप्तिवारणं शक्यते कर्तुम्, बाधवैशिष्ट्यावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभा-वप्रयुक्तोभयाभाववत्वस्य बाधविशिष्टव्यभिचारविषयकप्रतीतौ सत्वात् ।

नचैवं मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टो व्यभिचारो घटश्चेति समूहा-लम्बनप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वाभावप्रयु-क्तोभयाभावसत्वादिति वाच्यम् । तादृशोभयाभाववत्प्रतीतौ लक्ष्यतावच्छेदकत्वेनाऽभिमत-यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य निवेशनीयत्वात् । एवं च तादृशप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकघटादिविषयितासत्वेन न तादृशप्रतीति-मादायाऽतिव्याप्तिरिति ध्येयम् ।

अथैवमपि स्ववृत्तीनि यावन्ति हेत्वाभासविभाजकरूपाणि प्रत्येकं तद्भिन्नः स्वावच्छिन्ना विषयकप्रतीतिविषयतावच्छेदको धर्मः तदवच्छिन्नघटिततावच्छेदकं यत्त्वं तदवच्छिन्नाऽघ टितत्वविवक्षणे बाधविशिष्टव्यभिचारे नातिव्याप्तिः, बाधविशिष्टव्यभिचारत्ववृत्तिहेत्वाभास-विभाजकरूपं बाधत्वत्वं—व्यभिचारत्वत्वं च प्रत्येकं तद्वत्—स्वावच्छिन्नाविषयकप्रतीति विषयतावच्छेदकं च शुद्धबाधत्वं व्यभिचारत्वं च तदवच्छिन्नघटिततावच्छेदकं च बाधविशिष्ट व्यभिचारत्वं स्वपदग्राह्यं भवतीति तदवच्छिन्नाघटितत्वस्य तत्राऽभावात् ।

व्यभिचारघटितबाधे च नाऽव्याप्तिः, तादृशबाधत्ववृत्तिबाधत्वत्ववतो धर्मस्य स्वाव-च्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविरहात्, विपरीतबाधत्वस्य तादृशत्वेऽपि तदव-च्छिन्नघटिततावच्छेदकत्वस्य स्वस्मिन्नसत्वात्, स्वपदेन तादृशबाधत्वस्य धर्तुमशक्यत्वात्, मेयत्वविशिष्टतादृशबाधत्वमेव स्वपदग्राह्यं तदवच्छिन्नाघटितत्वस्य तत्र सत्वात् ।

एवं मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, मेयत्वविशिष्टव्यभिचारत्ववृत्तिव्यभिचा-रत्वत्ववत्—अथ च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारत्वं—तद-वच्छिन्नघटिततावच्छेदकं यत्त्वं—मेयत्वविशिष्टव्यभिचारत्वं तदवच्छिन्नाऽघटितत्वस्य तत्राऽभावात् ।

न च यावत्पदप्रत्येकपदयोरननुगमः । धर्मविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषय तावच्छेदकत्वस्यैवाऽनुगमकत्वात् । धर्मे धर्मवै० स्वतादात्म्य—स्वाश्रयवृत्तिहेत्वाभासवि-भाजकरूपत्वव्यापकत्वसम्बन्धेन । व्यापकता च स्वाश्रयवृत्तिरूपवत्त्वसम्बन्धावच्छिन्नाधेयत्व सम्बन्धेन । रूपवत्ता च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकताकप्रतियोगिताकभे-दवत्व—आधेयत्वोभयसम्बन्धेन । आधेयता च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छे दकत्वसम्बन्धेन ।

नचैवमपि ह्रदेऽवच्छेदकाऽवच्छेदेन वह्नेः साधनेऽवच्छेदकावच्छेदेन वन्ह्यभाववद्ह्रदरू-पबाधेऽव्याप्तिः तादृशबाधत्ववृत्तिर्यः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारता-

रूपयत्किञ्चित्प्रकारताविशिष्टमहत्त्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतातिरिक्तवृत्तित्वाभावस्तद्वत्तादृशबाधत्वावच्छिन्नविषयिताशून्यशुद्धस्वरूपसम्बन्धेन वह्न्यभावावगाहिज्ञानीयविषयितानिरूपकतावच्छेदकं सामानाधिकरण्येन बाधत्वं तदवच्छिन्नघटितं स्वावच्छिन्नं भवतीति स्वस्य स्वाघटितत्वाभावादिति वाच्यम्। स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यस्यात्र कल्पे विवक्षितया तदानीं स्ववृत्तयो यावन्तस्तादृशान्यतमत्वाक्रान्ता अभावाः प्रत्येकं तत्तदभाववत्स्वावच्छिन्नाऽविषयकप्रतीतिविषयितावच्छेदकावच्छिन्नघटितत्वावच्छेदकत्वस्य स्वस्मिन् विवक्षिततयाऽवच्छेदकावच्छेदेन बाधत्ववृत्तिस्तादृशान्यतमत्वाक्रान्तोऽभावः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितह्रदत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताविशिष्टमहत्त्वव्यापकतादृशप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतातिरिक्तवृत्तित्वाभावः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितशुद्धसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतातिरिक्तवृत्तित्वाभावश्च, तत्र प्रथमाभावस्य सामानाधिकरण्येन बाधत्वे सत्वेऽपि द्वितीयाभावस्याऽवच्छेदकावच्छेदेन बाधत्व एव सत्वेन तस्य स्वावच्छिन्नाऽविषयकप्रतीतिविषयितावच्छेदकत्वाभावात्, विपरीतावच्छेदकावच्छेदेन बाधत्वस्य तादृशत्वेऽपि स्वावच्छिन्नस्य तदवच्छिन्नाघटिततया स्वपदेन तादृशबाधत्वस्य धर्तुमशक्यतयाऽव्याप्तिविरहादिति चेन्न।

यादृशस्थले बाधविशिष्टव्यभिचारज्ञानं, नतु व्यभिचारज्ञानं स्वतन्त्रं, किन्तु बाधज्ञानं स्वतन्त्रमपि जायते तत्र बाधविशिष्टव्यभिचारे(१)ऽतिव्याप्तिरिति ध्येयम्।

अत्र स्ववृत्तितादृशान्यतमप्रतिबध्यतात्वव्यापकस्वावच्छिन्नघटकतावच्छेदकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदक(२)वृत्तित्वकं यद्यत्स्वं तदवच्छिन्नाविषयकप्रतीतिविषयता-

---

(१) इदमुपलक्षणम्—यत्र बाधज्ञानं न स्वतन्त्रं, व्यभिचारज्ञानं स्वतन्त्रमपि जायते तत्राप्यतिव्याप्तिर्बोध्या। एवं यादृशांकुरविशेषसाध्यकस्थले मेयत्वविशिष्टव्यभिचारविषयकज्ञानं नियमतो बाधविषयकसमूहालम्बनमेव तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तथाहि—तत्र मेयत्वविशिष्टव्यभिचारत्वं न स्वपदेन धर्तुं शक्यते स्ववृत्तितादृशान्यतमत्वाक्रान्तोऽभावो व्यभिचारतात्वरूपो बाधतात्वरूपश्च, तत्र स्ववृत्तिव्यभिचारतात्ववत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नघटितत्वेऽपि स्वावच्छिन्नस्य स्ववृत्तिबाधतात्ववत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं न बाधत्वं किन्तु विपरीतबाधत्वम्, अस्तु वा बाधत्वमपि तदवच्छिन्नघटिततावच्छेदकं न स्वमित्यतोऽन्यदेव स्वपदग्राह्यं तदवच्छिन्नाऽघटितत्वस्य मेयत्वविशिष्टव्यभिचारे सत्वात् पूर्वोत्तरकल्पयोर्नायं दोषः। एतेन—कल्पे मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताव्यापकत्वस्य व्याप्तिज्ञानप्रतिबन्धकतायां साध्यवत्ताज्ञानप्रतिबन्धकतायां च सत्वेऽपि यत्किञ्चित्प्रतिबन्धकतात्वेन व्याप्तिज्ञानप्रतिबन्धकतामुपादाय तादृशप्रतिबन्धकतावच्छेदकव्यभिचारविषयतायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यत्वाभावेनातिव्याप्तिविरहात्; अत्र—वदन्ति—कल्पे चोभयाभावाधिकरणताप्रयोजकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां स्वावच्छिन्नविषयिताप्रयोज्यत्वाभावात् हेतौ व्याप्त्यवगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वाभावाच्च विशिष्टाऽन्तराऽघटितत्वाभावान्नातिव्याप्तिरिति दिक्।

(२) बाधत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायां बाधत्वावच्छिन्नघटकतावच्छेदकबाधत्ववृत्तित्वात्स्वपदेन बाधत्वस्योपादानसम्भवाद् बाधेऽव्याप्तिरतः स्वावच्छिन्नघटकतावच्छेदके स्वावच्छिन्नाविषयकप्रतीतिविषतावच्छेदकत्वं विशेषणम्।

वच्छेदकत्वस्य यद्रूपे विवक्षितत्वान्न बाधविशिष्टव्यभिचारेऽतिव्याप्तिः, तथाहि—बाधविशिष्टव्यभिचारत्वे उक्तसम्बन्धेन वृत्ति यत्प्रतिबध्यत्वं तादृशप्रतिबध्यतात्वं हेतुधर्मिकप्रकृतव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतायामस्ति, एवं पक्षधर्मिकसाध्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां चेति, तत्र च प्रकृतव्यभिचारत्व—बाधत्वाऽन्यतमनिरूपितोक्तपरंपरासम्बन्धावच्छिन्नवृत्तित्वमस्तीति स्वपदेन बाधविशिष्टव्यभिचारत्वस्य धर्तुं शक्यतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधविशिष्टव्यभिचारत्वेऽसत्वात् ।

एवं व्यभिचारघटितबाधेऽपि नाऽव्याप्तिः, धूमाभाववद्धूमव्यभिचारिवह्निमत्स्वरूपबाधत्वनिरूपितं यत्स्वनिरूपितस्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकताकत्वसम्बन्धावच्छिन्नवृत्तित्वं तदाश्रयत्वं बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायामस्ति, तत्र च स्वावच्छिन्नघटकतावच्छेदकत्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकव्यभिचारत्वनिरूपितं यत्स्वनिरूपितस्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकताकत्वसम्बन्धावच्छिन्नवृत्तित्वं नास्ति इति तादृशप्रतिबध्यतात्वव्यापकस्वावच्छिन्नघटकतावच्छेदकत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकवृत्तित्वकत्वस्य व्यभिचारघटितबाधत्वेऽसत्वात्स्वपदेन तस्योपादानं न सम्भवति, किन्तु मेयत्वविशिष्टव्यभिचारत्वादेरेव तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारघटितबाधत्वे सत्वात् ।

एवं घटो विशेषगुणाभाववान् गुणसामान्याभावादित्यत्र विशेषगुणवद्घटरूपबाधे गुणवद्घटरूपस्वरूपाऽसिद्धिघटितेऽपि नाऽव्याप्तिः, तत्र विशेषगुणवद्घटत्वनिरूपितोक्तसम्बन्धावच्छिन्नवृत्तित्वाविशिष्टं यद् घटधर्मिकविशेषगुणाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यत्वं तत्र विशेषगुणवद्घटत्वावच्छिन्नघटकतावच्छेदकाविशेषगुणवद्घटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकगुणवद्घटत्वनिरूपितस्वनिरूपितस्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकताकत्वसम्बन्धावच्छिन्नवृत्तित्वविरहात्, स्वपदेन विशेषगुणवद्घटत्वस्य धारणाऽसम्भवात्, किन्तु मेयत्वविशिष्टविशेषगुणवद्घटत्वमेव स्वपदग्राह्यम्, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य विशेषगुणवद्घटत्वे सत्वात्, एवं च सजातीयविशिष्टान्तराऽघटितत्वकल्पे न कोऽपि दोष इत्यवधेयम् ।

---

यदि च ह्रदो वन्ह्यभाववान् ह्रदे वन्ह्यभाव इति ज्ञानयोः पृथक् पृथक् प्रतिबन्धकत्वम्, न त्वेकरूपेण, तदा वन्ह्यभाववद्ह्रदत्वे उक्तपरम्परासम्बन्धेन वृत्तिर्या प्रतिबध्यता तस्यां न स्वनिरूपितस्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकताकत्वसम्बन्धेन वन्ह्यभाववद्ह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकह्रदवृत्तिवन्ह्यभावत्ववृत्तित्वं, प्रतिबन्धकताभेदेन प्रतिबध्यताभेदस्य सर्वसम्मतत्वात् । इदानीं तु प्रतियोगिनि स्वत्वान्तर्भावेण स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताघटितसम्बन्धेन वृत्तित्वनिवेशे प्रयोजनाभावादित्युच्यते, तदा स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव निवेशनीयम्, न तु स्वावच्छिन्नघटकतावच्छेदकत्वमपीत्यवधेयम् ।

स्वभिन्नस्वघटकवृत्तिहेत्वाभासविभाजकसामान्यं यद्यत्तदन्यत्वरूपविशिष्टान्तराऽघटितत्वनिवेशे न कुत्रापि दोषः । तदर्थश्च स्वभिन्नं यत्स्वघटकं तद्वृत्तिस्ववृत्तिहेत्वाभासविभाजकसामान्यं यस्य एवम्भूतं यत्स्वं तद्भिन्नत्वमित्यस्मद्गुरुचरणाः ।

तेन प्रमेयत्वादिविशिष्टे व्यभिचारादौ नातिप्रसङ्गः ।

---

मेयत्वविशिष्टे व्यभिचारादौ **तादृशव्यभिचारत्वाद्यवच्छिन्ने,** नातिप्रसङ्गः न दोषत्वप्रसङ्गः । अत्र मेयत्वविशिष्टव्यभिचारो दोषः इत्यादिव्यवहाराभावान्नेष्टापत्तिः सम्भवति ।

---

दीधितौ तेनेति । विशिष्टान्तराऽघटितत्वविशेषणेनेत्यर्थः ।

**तादृशेति** । मेयत्वविशिष्टेत्यर्थः । अत्र मेयत्वविशिष्टत्वं व्यभिचारविशेषणम् । तस्य व्यभिचारघटकवृत्तित्वविशेषणत्वे—हेतुविशेषणत्वे वा विशिष्टस्य लक्ष्यत्वमिष्टमेव, प्रतिबन्धकतावच्छेदकविषयित्वानिरूपकवस्त्वघटितत्वात् । मेयत्वविशिष्टसाध्याभाववद्वृत्तित्ववान्वह्निः धूमाभाववद्वृत्तिमेयत्वविशिष्टो वह्निरिति ज्ञानयोः प्रकारतावच्छेदकतात्मक-विशेष्यतावच्छेदकतात्मकमेयत्वविषयताघटितधर्मावच्छिन्नाया एव प्रतिबन्धकताया वाच्यत्वात्, अन्यथा इदं ज्ञानं मेयत्वविशिष्टव्यभिचाराभाववति मेयत्वविशिष्टव्यभिचारप्रकारकं, व्यभिचाराभाववति मेयत्वविशिष्टवह्नौ व्यभिचारप्रकारकमित्याद्यप्रामाण्यज्ञानानामुत्तेजकत्वानुपपत्तेः, तथाच पर्वतो वह्न्यभाववानित्यत्र वह्निमत्पर्वतस्येव पर्वतीयवह्निमत्पर्वतस्य यथा बाधत्वं, तथा तयोरपि व्यभिचारत्वमिष्टमेव ।

परन्तु मेयत्वविषयताया प्रतिबन्धतावच्छेदकत्वे न मानम्, अप्रामाण्यज्ञानानां च तत्तद्व्यक्तित्वेनाऽभावाः प्रतिबन्धकतावच्छेदककोटौ प्रवेशनीया इति तादृशविशिष्टयोरपि अलक्ष्यत्वेन तत्राप्यतिव्याप्तिर्बोध्या । मेयत्वविशिष्टव्यभिचारस्य लक्ष्यत्वे इष्टापत्तौ बाधकमाह **अत्रेति** । ह्रदपक्षकधूमसाध्यकवह्निहेतुकस्थले इत्यर्थः । दोषपदार्थश्च यद्रूपावच्छिन्नविषयित्वं "प्रकृता"नुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टतद्रूपवान् । तथा तुल्यवित्तिवेद्यतया "प्रकृता"नुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मवानपि तदर्थः । **व्यवहारभावादिति**(१) विशिष्टान्तराऽघटितत्वेनाऽघटितस्य दोषपदार्थस्याऽभेदेन मेयत्वविशिष्टव्यभिचारेऽन्वयबाधतात्पर्यणे मयत्वेविशिष्टव्यभिचारो दोष इति शब्दप्रयोगाभावादित्यर्थः ।

तथाच तादृशव्यवहारस्य प्रामाणिकत्ववारणाय दोषपदार्थघटकतया विशिष्टान्तराऽघटितत्वं निवेशनीयमिति भावः ।

विशिष्टान्तराऽघटितत्वं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृताऽनु-

---

(१) तथा च दोषत्वप्रयोजको दोषव्यवहारः, दोषव्यवहाराभावश्च दोषत्वाभावप्रयोजक इति सिद्धम् । यद्यपि प्रतिबन्धकताऽनवच्छेदकविषयितानिरूपकाऽघटितत्व-तदभावज्ञानस्याऽवश्याऽपेक्षणीयत्वेन तादृशनिरूपकघटितत्वमेवेष्टापत्त्यभावप्रयोजकतया वक्तुमुचितम्, तथापि प्रतिबन्धकतानवच्छेदकविषयितनिरूपकसामानाधिकरण्यांशघटितस्यापि सत्प्रतिपक्षत्वात्तदुपेक्ष्य व्यवहार एवेष्टापत्तिप्रयोजकतयाऽभिहितः ।

न चोक्तविशेषणविशिष्टस्य लक्षणस्य सत्त्वासत्त्वनिर्णयाभ्यां दोषव्यवहार-तदभावनिर्णयौ, ताभ्यामेवोक्तविशेषणघटितलक्षणत्वानिर्णयाधीनलक्षणसत्त्वाऽसत्त्वनिर्णयौ इत्यन्योन्याश्रय इति वाच्यम् । अप्रातिहतविज्ञानानां तान्त्रिकाणां व्यवहारस्य लक्षणज्ञानानपेक्षत्वात्, इदानींतनव्यवहारस्य लक्षणग्रहाधीनत्वेऽपि क्षत्यभावात् ।

न च विशिष्टव्यभिचारादौ शुद्धव्यभिचारत्वादिना दोषत्वस्याक्षततयोक्तविशेषणदानेऽपि तादृशव्यवहारापत्तिर्दुर्वारैवेति, तत्रेष्टापत्तौ च व्यर्थं विशेषणमिति वाच्यम् । दोषादिपदस्य निरुक्तविशेषणावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकत्वेनान्वयितावच्छेदकधर्मबोधकतया व्युत्पन्नतया प्रकृते च मेयत्वविशिष्टव्यभिचारत्वादिरूपस्यान्वयितावच्छेदकस्योक्तविशेषणासत्त्वेनातिप्रसङ्गाभावादिति हृदयम् ।

---

मितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वं, तच्च यद्रूपे "स्वस्मिन् वा" निवेशनीयम् ।

एवमपि यद्रूपपदेन "स्वपदेन वा" मेयत्वविशिष्टव्यभिचारत्वस्य धारणाऽसम्भवेऽपि शुद्धव्यभिचारत्वमादाय तद्रूपत्वस्य मेयत्वविशिष्टव्यभिचारेऽपि सत्त्वेन अत्र मेयत्वविशिष्टव्यभिचारो दोष इति व्यवहारापत्तिर्दुर्वारैवेत्याशङ्कते **नचेति** । **विशिष्टव्यभिचारादौ**—मेयत्वविशिष्टव्यभिचारादौ । **उक्तविशेषणदानेऽपि**—विशिष्टान्तराऽघटितत्वविशेषणदानेऽपि । **तादृशव्यवहारापत्तिरिति** । मेयत्वविशिष्टव्यभिचारो दोष इति व्यवहारापत्तिरित्यर्थः । **तत्र**—तादृशव्यवहारे । **व्यर्थं विशेषणमिति** । नचात्र मेयत्वविशिष्टव्यभिचारस्य व्यभिचारात्मकतया प्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वाश्रयत्वेन दोषरूपतायामिष्टापत्तिसम्भवेऽपि व्यभिचारकालीनघटादेर्व्यभिचारानात्मकतया तथाविधधर्मानाश्रयत्वेन तस्य दोषत्वे इष्टापत्त्यसम्भवात्, तद्विशेषणस्य वैयर्थ्याभिधानमसङ्गतमिति वाच्यम् । मेयत्वविशिष्टव्यभिचारे दोषवारणार्थैव दीधितिकारस्य विशेषणोपादानं तत्रेष्टापत्तौ व्यर्थं तद्विशेषणं स्यादित्यलक्ष्यताया एव व्यवहारबलेन तदभिमततया विशेषणोपादानेऽपि दोषत्वप्रसङ्गरूपो दोष इति **"नचेत्यारभ्य वाच्यमि"**त्यन्तस्य तात्पर्यादिति ध्येयम् ।

व्यभिचारविशिष्टमेयत्वं दोष इति व्यवहाराभावानुरोधेन धर्मिपारतन्त्र्येणोद्देश्यतावच्छेदके विधेयतावच्छेदकीभूतधर्मस्याऽभेदेन भानोपगम आवश्यकः, तथाच नापत्तिरित्याशयेन समाधत्ते **दोषादिपदस्येति** । **निरुक्तविशेषणावच्छिन्नेति** । विशिष्टान्तराऽघटितत्वविशेषणविशिष्टेत्यर्थः । इदं फलतः स्वपदार्थे विशेषणम् । **अन्वयितावच्छेदकेति** । दोषपदार्थाऽन्वयितावच्छेदकेत्यर्थः । **व्युत्पन्नतयेति** । व्यभिचारविशिष्टमेयत्वादौ दोषव्यवहाराभावानुरोधेनेत्यादिः । **प्रकृते चेति** । मेयत्वविशिष्टव्यभिचारो दोष इत्यत्र चेत्यर्थः । **उक्तविशेषणासत्त्वेन**—विशिष्टान्तराऽघटितत्वविशेषणाऽसत्त्वेन ।

अथैवमपि ह्रदो दोष इति व्यवहारापत्तिः, ह्रदत्वे वह्न्यभाववद्ध्रदत्वाऽभेदसत्त्वादिति चेन्न । वह्न्यभाववद्ध्रदो दोष इत्यत्र हि साक्षात्परम्परासाधारणोद्देश्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगित्वावच्छेदकरूपे दोषपदार्थघटकतावच्छेदकसमुदायत्वस्य धर्मिपारतन्त्र्येणाभेदभानाभ्युपगमेनोक्तव्यवहारापत्तिविरहात् ।

दोषपदार्थश्च यादृशसमुदायत्वा(१)वच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकता-

---

(१) समुदायत्वे एव विशिष्टान्तराऽघटितत्वं निवेश्यम्, तच्च स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽव-

एवञ्च पक्षतावच्छेदकादिविरहविशिष्टः पक्षः, पक्षनिष्ठस्तद्विरहो वा, साध्याभाववद्वृत्तिसाधनं, साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः।

नन्वाश्रयासिद्ध्यादिस्थले पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमेव दोषस्तस्यैव हेतुनिष्ठतया हेतोर्दुष्टत्वव्यवहारनिर्वाहकत्वात्, तादृशधर्म्मस्य च तादृशाऽभाववत्पक्षादिरूपतादृशविशिष्टान्तरघटिततयाऽव्याप्तिरित्यत आह एवञ्चेति। तादृशविशेषणदाने चेत्यर्थः। आदिपदात् साध्यादिपरिग्रहः। पर्व्वतादिधर्म्मिककाञ्चनमयत्वादिविशिष्टबुद्धौ पर्व्वतः काञ्चनमयत्वाभाववानित्यादिधर्म्मिविशेष्यकनिश्चयस्येव पर्व्वते काञ्चनमयत्वं नास्तीत्यादिधर्म्मिविशेषणकनिश्चयस्यापि विरोधित्वमानुभविकमतस्तद्विषयस्यापि दोषत्वमाह पक्षनिष्ठ इति। आधेयतासम्बन्धेन पक्षविशिष्ट इत्यर्थः। समुच्चयार्थको वाकारः। साधनवद्वृत्तिः साध्याभाव इति। साधनधर्म्मिकसाध्याभाववद्वृत्तित्वप्रकारज्ञानं साधनधर्म्मिकव्याप्तिग्रहप्रतिबन्धकम्। साधनवति साध्याभाव इति ज्ञानेऽपि साधने साध्याभाववद्वृत्तित्वं तुल्यवित्तिवेद्यतया नियमतो भासत इत्यभिप्रायेण। साधनवति साध्याभाव इति ज्ञानस्यालमानविशेष्यकस्यापि प्रतिबन्धकत्वमिति प्राचीनमताभिप्रायेणैवेदम्(१)। दोष

---

कविषयित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टवान्, एवञ्च ह्रदत्वगतैकत्वे तादृशसमुदायत्वाऽभेदविरहेण न ह्रदो दोष इति व्यवहारोपपत्तिरिति ध्येयम्।

मेयत्वविशिष्टव्यभिचारादावतिप्रसङ्गवारणाय विशिष्टान्तराऽघटितत्वस्य निवेशेऽप्यव्याप्तिमाशङ्कते नन्विति। आश्रयाऽसिद्ध्यादीति। आदिना सत्प्रतिपक्षपरिग्रहः। पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमेवेति। आदिना पक्षवृत्तिपक्षतावच्छेदकाभावकत्वस्य परिग्रहः। एवकारेण पक्षतावच्छेदकाभाववत्पक्षमात्रस्य व्यवच्छेदः। तन्मात्रस्य हेतुनिष्ठत्वाभावादिति भावः। तस्यैवेति। पक्षतावच्छेदकाभाववत्पक्षकत्वस्यैवेत्यर्थः। तादृशधर्म्मस्य चेति। पक्षतावच्छेदकाभाववत्पक्षकत्वस्य चेत्यर्थः। तादृशाभाववदिति। पक्षतावच्छेदकाभाववदित्यर्थः। अव्याप्तिरिति। काञ्चनमयत्वाभाववत्पर्वतकत्वत्वादेः कांचनमयत्ववत्पर्वतकत्वत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं, अथ च प्रकृताऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्काञ्चनमयत्ववत्पर्वतत्वं तदवच्छिन्नघटितत्वादिति भावः। तादृशविशेषणेति। विशिष्टान्तराऽघटितत्वविशेषणेत्यर्थः।

अत्रेदं बोध्यम्। साधननिष्ठसाध्याभाववद्वृत्तित्वस्यापि व्यभिचारतया तस्य हेतुनिष्ठतया

---

च्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताच्छेदकं यत् प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वम्।

(१) भासत इति तदपि व्याप्तिज्ञानप्रतिबन्धकमिति मताभिप्रायेण। अत्र तादृशज्ञाने नियमतस्तदभानेऽपि मणिमन्त्रादिन्यायेन तस्य व्याप्तिज्ञानप्रतिबन्धकत्वमिति प्राचीनमताभिप्रायेणेति पाठान्तरम्।

येन केनापि सम्बन्धेन तद्वांश्च प्रकृतो हेतुर्दुष्टः ।

इति । न पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमिति शेषः । तथाचालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः ।

ननु पक्षतावच्छेदकाभाववत्पक्षादीनां हेत्ववृत्तित्वात् कथं हेतौ दुष्टताव्यवहार इत्यत आह—येन केनापीति । एकज्ञानविषयत्वादिनेत्यादिः । तद्वान् तदवच्छिन्नः, दुष्टः दुष्टपदप्रतिपाद्यः । तथाच हेतौ तादृशदोषानधिकरणत्वेऽपि न क्षतिः । दुष्ट इत्यादौ सामान्यतः सम्बन्धिन एव निष्ठार्थत्वात् । न चैवमेकज्ञानविषयत्वादिना वन्ह्यभाववद्ध्रदादिरूपदोषस्य धूमादौ सत्त्वेऽपि पर्वतादौ वन्ह्यादिसाधने तस्य दुष्टव्यवहारापत्तिरिति वाच्यम् । यतस्तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्याहारस्थले तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयिताकधर्म्मावच्छिन्नसम्बन्धी दुष्टपदेन बोध्यते, ईदृशव्युत्पत्त्या पूर्व्ववद्वारणेऽपि पूर्व्ववदेव वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारो निरुक्तदोषमात्रस्य दुष्टत्वव्यवहारविषयतावच्छेदकत्वे दुर्व्वार इति प्रकृतहेतुतावच्छेदकाविशिष्टसम्बन्धो निष्ठार्थतावच्छेदको वाच्यः । एतल्लाभाय प्रकृतो हेतुरित्युक्तम् ।

हेतोर्दुष्टत्वव्यवहारनिर्वाहेण साध्याभाववद्वृत्तिसाधनकत्वस्य न दोषत्वविवक्षा, एवं वन्ह्यभाववद्ध्रदस्येव ह्रदवृत्तिवन्ह्यभावस्य—वह्निनिष्ठह्रदनिष्ठाभावप्रतियोगित्वस्यापि बाधतया तस्य तस्य धूमे सत्त्वात् वन्ह्यभाववद्ध्रदकत्वपर्यन्ताऽविवक्षणेऽपि धूमे दुष्टत्वव्यवहारसम्भवात्तत्रतत्र नाऽव्याप्तिर्दर्शिता । एवं विरोधेऽपि । सत्प्रतिपक्षादिकन्तु आश्रयासिद्धिसमानमेवेति ध्येयम् ।

**प्रकृतहेतुतावच्छेदकाविशिष्टसम्बन्ध इति ।** स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्ध इत्यर्थः ।

**एतल्लाभायैवेति ।** एकज्ञानीयविषयताविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धलाभायैवेत्यर्थः । तथाच स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्त्वमेव दुष्टताव्यवहारनियामकमिति भावः ।

अथ पर्वतो वह्निमान् द्रव्यादित्यत्र पर्वते द्रव्येण वह्निसाधने द्रव्यं दुष्टमिति वत्–धूमो दुष्ट इति व्यवहारापत्तिः, वन्ह्यभाववद्वृत्तिद्रव्यात्मकव्यभिचारस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकीभूतद्रव्यत्ववत्त्वसम्बन्धेन धूमेऽपि सत्त्वादिति चेन्न ।

यद्धर्मावच्छिन्ने दुष्टत्वव्यवहारः तद्धर्मावच्छिन्नहेतुकतादृशानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मावच्छिन्नस्य स्वज्ञानविषयतद्धर्मवत्तासम्बन्धेनैव दुष्टत्वव्यवहारनियामकत्वात, अर्थात् अन्वयितावच्छेदकाऽभिन्नस्वज्ञानविषयहेतुतावच्छेदकवत्त्वरूपसम्बन्धस्य विवक्षणान्नोक्तापत्तिः । प्रकृतहेतुतावच्छेदकावच्छेदेनैव वा दोषवत्ताया अङ्गीकारात् ।

ह्रदे वह्नेः साधने धूमो दुष्ट इत्यत्र ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्न-साध्यकधूमत्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्न-विषयिताकधर्मावच्छिन्नसम्बन्धी धूम इत्यन्वयबोधः, तत्र प्रतिबन्धकता-वच्छेदकत्वावच्छिन्नविषयिताकधर्मविशिष्ट एव दुषधातोरर्थः। साधन-पदं लक्षणया धूमत्वावच्छिन्नहेतुकानुमितिपरं, तत्र ह्रद इति सप्तम्यन्ता-र्थह्रदत्वावच्छिन्नपक्षकत्वस्य, वह्नेरिति षष्ठ्यन्तार्थस्य वह्नित्वावच्छिन्नसा-ध्यकत्वस्य चान्वयः, तादृशानुमित्यन्वितसप्तम्यर्थनिरूपितत्वस्य दुषधात्व-र्थैकदेशे प्रतिबन्धकत्वेऽन्वयः। एवञ्च पर्वते वह्नेः साधने धूमो दुष्ट

नचैवमपि पर्वतो वह्निमान् महानसीयधूमादित्यत्र धूमो दुष्ट इति व्यवहारापत्तिरिति वाच्यम्। यादृशरूपविशिष्टावच्छिन्ने दुष्टत्वव्यवहारः तादृशरूपवृत्तिहेतुताकतादृशानुमितिप्रति-बन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मावच्छिन्नस्य स्वज्ञानविषयतादृशरूपविशिष्टवत्त्व-सम्बन्धस्य वाच्यत्वात्।

अथैवमपि पर्वतो वह्निमान् काञ्चनमयधूमादित्यत्र काञ्चनमयधूमे दुष्टत्वव्यवहारानुपपत्तिः, काञ्चनमयत्वधूमत्वगतद्वित्वावच्छिन्नवत्त्वस्याऽप्रसिद्धेः, तादृशद्वित्वविशिष्टवत्त्वस्य सम्बन्धत्वे तु तादृशस्थले धूमो दुष्ट इति व्यवहारापत्तिरिति चेन्न।

प्रकृतान्वयिताविशिष्टप्रकृतहेतुताविशिष्टावच्छेदकताकपर्याप्त्यवच्छेदकरूपस्य संसर्गघट-कत्वाङ्गीकारात्। हेतुतायां अन्वयितावै० स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदक-ताकत्वसम्बन्धेन। अवच्छेदकतायां हेतुतावै० स्वसमानाधिकरणवृत्तित्व-स्वनिरूपितत्वोभ-यसम्बन्धेन। एवं च संसर्गघटकीभूतधर्मो धूमत्वगतैकत्वमेवेति न दोषस्तथाऽप्रसिद्धिः। केव-लधूमत्वेनाऽन्वयितायां च धूमत्वे तद्वैशिष्ट्याऽसम्भवेन धूमो इत्यस्य न प्रसङ्गः।

यादृशसमुदायत्ववृत्तिः दुष्टपदप्रयोज्यप्रकारतानिरूपितविशेष्यता तादृशसमुदायत्ववृ-त्तिहेतुताकत्वं अनुमितौ भासते। प्रकारता च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धा-वच्छिन्ना। तत्र हेतुतावच्छेदकतायाः पर्याप्तिर्न निवेश्यते इत्यपि कश्चित्।

**ह्रदे वह्नेः साधने धूमो दुष्ट इत्यत्रेति।** इति वाक्यादिति यावत्। तत्र—ह्रदे वह्नेः साधने धूमो दुष्ट इति वाक्ये। घटकत्वं सप्तम्यर्थः। अन्वयश्चाऽस्य दुष्धातोरित्यनेन। तत्र—अनुमितौ। **ह्रदत्वावच्छिन्नपक्षकत्वस्येति।** ह्रदत्वावच्छिन्नह्रदनिष्ठोद्देश्यता-कत्वस्येऽत्यर्थः। उद्देश्यत्वं सप्तम्यर्थः। तत्र प्रकृत्यर्थस्य ह्रदस्याऽऽधेयतासम्बन्धेनाऽन्वये तद्विशेषणतापन्नं ह्रदत्वमपि स्वावच्छिन्नत्वसम्बन्धेन "धर्मिपारतन्त्र्येणाऽ"न्वेतीति तादृशा-र्थलाभः। **वह्नित्वावच्छिन्नसाध्यकत्वस्येति।** वह्नित्वावच्छिन्नवह्निनिष्ठविधेयताकत्व-स्येत्यर्थः। षष्ठ्यर्थो विधेयत्वम्, तत्र प्रकृत्यर्थस्य वह्नेराधेयतासम्बन्धेनाऽन्वये तद्विशेषणता-पन्नवह्नित्वस्य स्वावच्छिन्नत्वसम्बन्धेन धर्मिपारतन्त्र्येणाऽन्वयात्तादृशार्थलाभः।

अत्र च तादृशोद्देश्यताकत्व-तादृशविधेयताकत्वयोरेकत्र द्वयमितिरीत्याऽनुमितावन्वये ह्रदो घटवान् जलं वह्निमदित्यनुमितिसाधारणतादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रति-बन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मावच्छिन्नत्वस्य वन्ह्यभाववद्ह्रदादावसत्त्वात्तदादाय

इत्यत्र पर्व्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयताकधर्म्मविशिष्टसम्बन्धी धूम इत्येव प्रतीयते, तत्र तादृशधर्म्मस्याप्रसिद्ध एवेति न तथा व्यवहारः। पक्षविशेषादिकमनन्तर्भाव्य धूमो दुष्ट इति व्यवहारस्त्वबाधित इष्यत एवेति दिक्।

साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारतया प्रसिद्धिर्न तु तद्विशिष्टसाधनादेरतो न तस्य दोषत्वमिति कश्चिदाह। व्याचष्टेऽपि लक्ष-

---

ह्रदे वह्निसाधने धूमो दुष्ट इति व्यवहारानुपपत्तिरतस्तादृशोद्देश्यताकत्वविशिष्टे तादृशविधेयताकत्वान्वय उपगन्तव्यः। तथाच सति विशिष्टान्वयस्थले विधेये उद्देश्यतावच्छेदकावच्छिन्नत्वान्वयस्योत्सर्गसिद्धतया तादृशोद्देश्यताकत्वावच्छिन्नतादृशविधेयताकत्वविशिष्टानुमितिलाभेन, यद्विषयितयोरवच्छेद्यावच्छेदकभावस्तद्विषयतयोरपि निरूप्यनिरूपकभाव इति रीत्या ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितिलाभेन च, तादृशानुमितित्वस्य दर्शितसमूहालम्बनानुमितिसाधारण्याभावान्नोक्तव्यवहारानुपपत्तिरिति ध्येयम्।

**न तथा व्यवहार इति।** न पर्वते वह्नेः साधने धूमो दुष्ट इति व्यवहार इति भावः।

अथ पर्वते वह्निसाधने धूमो न दुष्ट इति व्यवहारानुपपत्तिः, पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्माऽप्रसिद्ध्या तादृशधर्मावच्छिन्नसम्बन्धिभेदस्याऽप्रसिद्धेरिति चेन्न।

प्रतिबन्धकतामात्रं दुष्धात्वर्थः। तस्याश्च स्वावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थाऽभावेऽन्वयः। धर्मावच्छिन्नवत्ता च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन। क्तप्रत्ययार्थं आश्रयत्वम्। तथाच तादृशसम्बन्धेन पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकताविशिष्टो योऽभावस्तदाश्रयो धूम इति बोधः।

दुष्धातोः प्रतिबन्धकत्वे—व्यापकत्वे—विषयित्वे धर्मे च खण्डशः शक्तिः, आकांक्षावशेन विशिष्टबोधः। तथाच स्ववृत्तितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयिताव्यापकत्वाभाववत्प्रकृतानुमितिप्रतिबन्धकताको धूम इति तादृशवाक्याद्बोधः। **अत्र वदन्ति** कल्पे तु स्ववृत्तितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वाभाववत्तद्विरोधिविषयताप्रयुक्त—पक्षे साध्यवैशिष्ट्यावगाहित्व—साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावकत्वं धूमे इति। स्ववृत्तित्वं च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नं ग्राह्यम्। "प्रतियोग्यभावान्वयौ" इति व्युत्पत्त्याग्रहे अन्ध आकाशं न पश्यतीति व्यवहार इव तादृशव्यवहारस्याऽप्रामाण्यमेवोपगन्तव्यमित्यस्मद्गुरुचरणाः।

केचित्तु नञा दुष्धात्वर्थप्रतिबन्धकतायामेव प्रकृतानुमितिनिरूपितत्वाभावस्य बोधनान्नानुपपत्तिरित्याहुः। तच्चिन्त्यम्।

**साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेवेति।** आदिना साधनवद्वृत्तिसाध्याभावादेः परिग्रहः। एवकारव्यवच्छेद्यमाह **नत्विति। तद्विशिष्टेति।** साध्याभाववद्वृत्ति-

याहशधर्म्मिणि, याहशधर्म्मवत्ताज्ञानमनुमितिप्रतिबन्धकं, तस्य धर्म्मिण-स्ताहशधर्म्मवत्त्वं हेतुदोष इत्यपि कश्चित् ।

---

णमन्यथैव, अन्यथातिप्रसङ्गात्। तादृशव्याख्यामुपन्यस्यति—

याहशेति। यद्रूपावच्छिन्नेत्यर्थकम्। ज्ञानं ज्ञानत्वावच्छिन्नम्। तस्य धर्म्मिणः तद्धर्मावच्छिन्नस्य, तेन सम्बन्धेनेति शेषः। तादृशधर्म्मवत्त्वं तद्रूपावच्छिन्नधर्म्मवत्त्वम्। साधनादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य व्याप्त्यादिज्ञानप्रतिबन्धकत्वेऽपि साध्याभाववद्वृत्तित्वादेराधेयतासम्बन्धेन साधनीयत्वादिकं न दोषः, साधनादेः साध्याभाववद्वृत्तित्वादिधर्म्मताविरहात्।

अत्राप्यवच्छेदकत्वं पूर्ववन्न तु स्वरूपसम्बन्धविशेषः। पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभावत्वावच्छिन्नवत्त्वादावतिप्रसङ्गात्, तदवच्छिन्नधर्म्मिकतद्रूपावच्छिन्नवत्ताज्ञानत्वस्यापि प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्, अवच्छेदकतापर्य्याप्तिविवक्षणे तु ह्रदत्वावच्छिन्ननिष्ठवह्न्यभावत्वाद्यवच्छिन्नवत्त्वेऽव्याप्तेः, वह्नित्वादिना घटाद्यवगाहिनो ह्रदो न वह्निमानित्यादिनिश्चयस्य ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतया ह्रदत्वावच्छिन्नविशेष्यकवास्तवन्ह्यभावत्वावच्छिन्नप्रकारकनिश्चयत्वेन न प्रतिबन्धकता,

---

स्वविशिष्टेत्यर्थः। साधनादेरिति। आदिना आधेयतासम्बन्धेन साधनविशिष्टसाध्याभाववद्वृत्तित्वस्य परिग्रहः। अतः—प्रसिद्धिविरहात्। तस्य—साध्याभाववद्वृत्तिसाधनस्य,— आधेयतासम्बन्धेन साधनविशिष्टसाध्याभाववद्वृत्तित्वस्य च। व्याचष्टेऽपीति। अन्यथैव लक्षणं व्याचष्टेऽपीति योजना। अन्यथा—लक्षणस्याऽव्याख्यातत्वे। अतिप्रसङ्गादिति। साध्याभाववद्वृत्तित्वविशिष्टसाधनादावित्यादिः। यद्रूपावच्छिन्नेत्यर्थकमिति। अन्यथाऽसम्भवप्रसङ्गादिति शेषः। ज्ञानत्वे प्रतिबन्धकताऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वलाभायोक्तम्—ज्ञानत्वावच्छिन्नमिति। साधनादिविशेषणकेति। साधनादिप्रकारकेत्यर्थः। आधेयतासम्बन्धेनेत्यादिः। साधनीयत्वादिकमिति। साधनवत्त्वमित्यर्थः। धर्मताविरहादिति। वृत्तिनियामकसम्बन्धेन तद्वृत्तिमत एव तद्धर्मत्वात्, आधेयत्वस्य च वृत्त्यनियामकतया तेन सम्बन्धेन कस्यापि धर्मताविरहादिति भावः।

तथाच यद्रूपावच्छिन्नविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नप्रकारताशालिनिश्चयत्वं प्रकृताऽनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्ने तेन सम्बन्धेन तद्रूपावच्छिन्नवत्त्वं लक्षणं पर्यवसितम्। अत्रापि—लक्षणेऽपि। पूर्ववदिति। अनतिरिक्तवृत्तित्वरूपमित्यर्थः। अतिप्रसङ्गादिति। एकदेशेऽतिप्रसङ्गादिति भावः। अव्याप्तेरिति। पर्वतो वन्ह्यभाववानित्यनुमितौ पर्वतत्वावच्छिन्ननिष्ठवह्नित्वावच्छिन्नवत्त्वरूपबाधे अवच्छेदकतापर्याप्तिघटितलक्षणस्याऽपि सत्त्वान्नासम्भवोऽभिहितः, पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारक-

अथ पर्व्वतत्वेन पक्षत्वे, वन्हित्वेन साध्यत्वे, विशिष्टधूमत्वेन च हेतुत्वे पर्व्वतादेः काञ्चनमयत्वविरहो,

---

अपि तु तद्विशेष्यकवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैवातस्तादृशमेव रूपं प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणं न तु ह्रदत्वावच्छिन्नधर्म्मिकवन्ह्यभावत्वावच्छिन्नप्रकारकत्वमिति यद्रूपपदेन वन्ह्यभावत्वाद्युपादानं न सम्भवति, पर्व्वतो वन्ह्यभाववानित्यादौ पर्व्वतत्वावच्छिन्ननिष्ठवह्नित्वावच्छिन्नरूपबाधादेरसंग्रहभयेन यद्रूपावच्छिन्नधर्म्मिणि यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकता तद्रूपविशिष्टे तद्रूपावच्छिन्नविशेषिततद्रूपावच्छिन्नवत्त्वं दोष इत्यादि विवक्षाया असम्भवात्। अत्र साधननिष्ठसाध्याभाववद्वृत्तित्वादेरिव साध्याभाववद्वृत्तिसाधनादेरपि दोषत्वे क्षतिविरहात् एतावानायासोऽनर्थक इत्यस्वरसः कश्चिदित्यनेन सूचितः।

यथाव्याख्यातयथाश्रुतार्थे निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेरप्रसिद्ध्याऽव्याप्तिर्दर्शयिष्यते, तत्र विशिष्य पक्षतावच्छेदकाद्यप्रवेशे नाऽप्रसिद्धिरतस्तन्निवेशे प्रयोजनमाह अथेति। पर्व्वतादेः काञ्चनमयत्वविरह इत्यादौ सर्व्वत्र न दोष इति सम्बध्यते। तथाच पक्षतावच्छेदकाद्यप्रवेशे पूर्व्वोक्तयुक्त्याऽसम्भवात्, तद्वारणाय यत्किञ्चिद्धर्म्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबन्धकत्वमेव निवेश्यमिति पर्व्वतो वह्निमान् धूमादित्यादौ पर्व्वतादिनिष्ठकाञ्चनमयत्वाभावादावतिव्याप्तिः, तस्यापि

---

निश्चयत्वे पर्वतो वन्ह्यभाववानित्यनुमितिप्रतिबन्धकतावच्छेदकतापर्याप्तिः। तद्विशेष्यकेति। ह्रदविशेष्यकेत्यर्थः। तादृशमेव रूपमिति। निरूप्यनिरूपकभावापन्नविषयिताशालिनिश्चयत्वमेवेति यावत्। एवकारव्यवच्छेद्यमाह—नत्विति।

अत्र—धूमवान् वह्नेरित्यादौ। साध्याभाववद्वृत्तिसाधनादेरिति। आदिनाऽऽधेयतासम्बन्धेन साधनविशिष्टसाध्याभाववद्वृत्तित्वादेः परिग्रहः।

तत्र-लक्षणे। तन्निवेशे प्रयोजनम्—पक्षतावच्छेदकादिनिवेशप्रयोजनम्। पूर्वोक्तयुक्त्येति। अनुमितिनिष्ठप्रतिबध्यतानिवेशे समूहालम्बनानुमितिमादायाऽतिप्रसङ्गात्, अनुमितित्वव्यापकप्रतिबध्यतानिवेशेऽसम्भवादिति। तद्वारणाय—असम्भववारणाय। तस्यापि—पर्वतनिष्ठकाञ्चनमयत्वाभावस्यापि। अथ काञ्चनमयत्ववत्पर्वतत्वस्यालीकतया यत्किञ्चिद्धर्मपदेनोपादातुमशक्यतया काञ्चनमयत्व-पर्वतत्वाऽन्यतरस्यैव यत्किञ्चित्पदेनोपादेयतया नातिव्याप्तिसम्भावना, काञ्चनमयत्वाभाववान् पर्वत इति निश्चयप्रतिबध्यतायाः काञ्चनमयो वह्निमानित्यनुमितिसाधारण्याभावादिति चेन्न।

ह्रदस्य वन्हिधूमशून्यत्वं, मेयत्वस्य केवलधूमस्य वा वन्हिव्यभिचारो, —विशिष्टधूमस्य वा पर्व्वतीयवन्हिव्यभिचारो न दोषः। न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम्, अतस्तद्धर्म्मावच्छिन्नतत्पक्षकतद्धर्म्मावच्छिन्नतत्साध्यकतद्धर्म्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यम्।

काञ्चनमयत्वादिसहितपर्व्वतत्वादिरूपयत्किञ्चिद्धर्म्मावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकज्ञानाविषयत्वादिति भावः। आदिपदञ्च वस्त्वन्तरसंग्राहकम्।

प्रकृतानुमित्यविषयपदार्थाभावेऽतिव्याप्तिं सूचयित्वा तद्विषयसाध्याद्यभावे तां सूचयति ह्रदस्येति। ह्रदनिष्ठं वह्निशून्यत्वं धूमशून्यत्वञ्चेत्यर्थः। ह्रदादिनिष्ठाभावेऽतिव्याप्तिसूचनञ्च प्रकृतपक्षतावच्छेदकावच्छिन्नप्रकृतपक्षकत्वरूपसमुदायदलस्यैवानिवेशे बोध्यम्। महानसीयेति। महानसीयवन्ह्यभावो महानसीयधूमाभावो वेत्यर्थः। अत्रातिव्याप्तिसुचनञ्च प्रकृतसाध्यतावच्छेदक—प्रकृतहेतुतावच्छेदकयोरनिवेशे बोध्यम्।

इदमुपलक्षणम्—साध्यहेत्वोरनिवेशेऽपि जलत्वाभावादावतिव्याप्तिर्बोध्या प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे पक्षधर्म्मताज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयित्वा, व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयति मेयत्वस्येति। वह्निव्यभिचार इत्यनेनान्वयः। अत्रातिव्याप्तिस्तादृशदलसमुदायस्यैव अनिवेशे बोध्या। प्रकृतहेतुकत्वनिवेशेऽपि एतद्दोषस्य शक्यवारणतया हेतुतावच्छेदकनिवेशनायाह केवलधूमस्येति। वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्त्तकविशेषणानवच्छिन्नेत्यर्थः।

साध्यतावच्छेदकानिवेशे पूर्व्वं साध्यवत्ताज्ञानविरोधिन्यतिव्याप्तिर्दे-

---

विशेष्यतायामेव यत्किञ्चित्त्वं निवेश्यम्, न तु धर्मे, अन्यथा काञ्चनमयत्वाभाववत्पर्वतरूपाऽऽश्रयासिद्धावव्याप्तिः स्यात्, काञ्चनमयत्ववत्पर्वतत्वस्याऽऽलीकतया स्वपदेनोपादातुमशक्यत्वात्। तथाच काञ्चनमयत्वपर्वतत्वोभयधर्मावच्छिन्नाविशेष्यतायाः प्रसिद्धतया नाऽव्याप्तिः, एवं चाऽतिव्याप्तिदानमपि सङ्गतम्।

विशेष्यतायां यत्किञ्चित्त्वनिवेशेऽनुगमस्तु—विशेष्यताविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतत्वावच्छिन्नविषयिताकधर्मत्वम्। प्रतिबध्यतायां विशेष्यतात्वै० स्वविशिष्टाऽनुमितित्वव्यापकत्वसम्बन्धेन। अनुमितौ स्वत्वै० स्वनिरूपितसाध्यप्रकारकत्व—स्वनिरूपितसाध्यव्याप्यहेतुप्रकारताकत्वोभयसम्बन्धेन।

आदिपदं चेति। पर्वतादेरित्यत्रेत्यादिः। वस्त्वन्तरसङ्ग्राहकमिति। वह्निधूमसङ्ग्राहकमित्यर्थः। एवं च वह्निनिष्ठकांचनमयत्वविरहो, धूमनिष्ठकांचनमयत्वविरहश्च न दोष इति। पदार्थाऽभावे—कांचनमयत्वाभावे। तद्विषयेति। पर्वतो वह्निमानित्यनु-

तथाच निर्व्वन्हिः पर्व्वतो वन्हिमान् पर्व्वतावृत्तिवन्हिमान् वा तद्व्य-भिचारिणः, पर्व्वतावृत्तेर्व्वा धर्म्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धत्वात् ।

---

शिता, इदानीं व्याप्तिज्ञानविरोधिव्याप्तिव्याप्तिं दर्शयति विशिष्टधूमस्य वा पर्व्वतीयवह्निव्यभिचार इति । दोषलक्षण इव दुष्टलक्षणेऽपि पक्षतावच्छेदकादिनिवेशस्यावश्यकतां दर्शयति न वा तत्सम्बन्धेनेति । तत्र पर्व्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नवह्निसाधने । तस्य विशिष्टधूमत्वावच्छिन्नस्य । पक्षादौ पक्षतावच्छेदकादेर्यादृशसम्बन्धेन विशेषणत्वं यत्राभिमतं तत्र तत्सम्बन्धेन तदवच्छिन्नत्वं निवेश्यमिति सूचयितुं तत्पक्षकेत्युक्तम्, पक्षतावच्छेदकादिनिवेशो पक्षादिनिवेशस्याप्रयोजकत्वादिति । वाच्यं—तद्रूपावच्छिन्नपक्षसाध्यहेतुकदोषलक्षणे निवेशनीयम् ।

तथाचेति । निर्व्वह्निः पर्व्वतो वह्निमान् इत्यत्र पक्षतावच्छेदकनिर्व्वह्नित्वविशिष्टपर्व्वते वह्निवैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवति वह्नित्वविरोधिधर्म्मधर्म्मितावच्छेदककस्वप्रकारकानाहार्य्यज्ञानस्यानभ्युपगमात् । पर्व्वतः पर्व्वतावृत्तिवह्निमान् इत्यत्र पर्व्वते पर्व्वतावृत्तित्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वमनुमितेर्न सम्भवति स्वस्मिन् स्वावृत्तित्वाद्यवच्छिन्नप्रकारकानाहार्य्यज्ञानस्याननुभविकत्वादेवं पर्व्वतो वह्निमान् वह्निव्यभिचारिण इत्यत्र वह्निव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्ने वह्निव्याप्यत्ववैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवतीति पूर्वोक्तयुक्तेः । पर्व्वतो वह्निमान् पर्व्वतावृत्तेरित्यत्र पर्व्वते पर्व्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं नानुमितेः सम्भवति उक्तयुक्तेरिति, यथाविवक्षितानुमित्यप्रसिद्धिप्रयोजकभेदेन नानास्थलेऽव्याप्तिकथनम् । न कोपि हेत्वाभासः स्यादिति । तथाचापार्थकरूपनिग्रहस्थानत्वेन तथा प्रयोक्तुर्निग्रहोपपत्तावपि, निर्व्वह्नित्वेन पर्व्वते वह्नेः साधने धूमो दुष्ट इत्यादिव्यवहारो दुरुपपाद इति भावः । तादृशानुमितेस्तथाविवक्षितानुमितेः । अप्रसिद्धत्वादिति । आहार्य्यपरोक्षज्ञानानभ्युपगमादिति भावः ।

---

मितिविषयेत्यर्थः । दीधितौ केवलधूमस्येति । व्यभिचारवारकतद्विशेषणानवच्छिन्नस्येत्यर्थः । विच्छिन्नमूलस्येति यावत् ।

पर्वतावृत्तीति । इदमुपलक्षणम् । वह्निमदवृत्तोरपि बोध्यम् ।

आहार्यपरोक्षज्ञानाऽनभ्युपगमादिति । परोक्षज्ञाने इच्छाया हेतुत्वानुपगमेन तादृशज्ञानोपगमाऽसम्भवादिति तत्त्वम् ।

प्रसक्तामव्याप्तिं परिहरति दीधितौ अत्र वदन्तीत्यादिना । यद्विषयकनिश्चयस्येति । यत्पदं दोषत्वेनाऽभिमतसाध्याभाववत्पक्षादिपरम् । तदुत्तरमिति । तत्पदं तादृशनिश्चय-

अत्र वदन्ति यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरमनुमितावनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वम् ।

---

यद्विषयकनिश्चयस्येति । यद्रूपावच्छिन्नविषयकनिश्चयस्येत्यर्थः । उत्तरपदस्य उत्तरकालीनार्थकतया तदुत्तरामितिधातूपस्थाप्यानुमितिरूपक्रियाविशेषणमतो द्वितीया । अग्रिमकल्पे तादृशज्ञानरूपक्रियाविशेषणमतो ज्ञानपदमपि सार्थकम् । तत्पदञ्च तादृशनिश्चयपरामर्शार्थकम् । उत्तरपदञ्चाऽव्यवहितोत्तरपरम् । तथा च यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-प्रकृतसाध्यतावच्छेदकावच्छिन्नव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभयाभावः विरोधिविषयिताप्रयुक्तस्तत्त्वं हेत्वाभासत्वम् । विशिष्टस्य शुद्धानतिरेकितया वह्न्यभाववद्ह्रदविषयक "ह्रद" इति निश्चयोत्तरानुमितिसामान्ये उभयाभावविरहेणाऽसम्भववारणाय यद्रूपावच्छिन्नेति । उत्तरकालीनार्थकतयेति । उत्तरपदस्योत्तरकालपरत्वे जन्यमात्रस्य कालोपाधित्वानङ्गीकारे तदभेदो न सम्भवतीत्युत्तरपदस्य तादृशकालवृत्तित्वार्थकत्वमिति भावः । तदुत्तरेति । उत्तरपदोत्तरेत्यर्थः । मितिधातूपस्थाप्येति । क्तिन्नन्तमाधातूपस्थाप्येत्यर्थः । अतः—क्रियाविशेषणत्वात् । द्वितीयेति । अभेदेन धात्वर्थान्वितस्वार्थबोधकपदानां द्वितीयान्तत्वमित्येतदर्थक "क्रियाविशेषणानां कर्मत्वमि"त्यनुशासनसिद्धा इत्यादिः । अग्रिमकल्पे—अनाहार्यमानसज्ञाने वा इत्यादि कल्पे इत्यर्थः । सार्थकमिति । ज्ञाधात्वर्थक्रियाविशेषणत्वसम्पादनाय ज्ञानपदमुक्तम्, अन्यथा मानसपदेनैव तल्लाभाद् ज्ञानपदमनर्थकं स्यात्, तथा च द्वितीयायाः साधुत्वार्थमेव ज्ञानपदमिति भावः ।

अत्रेदं बोध्यम् । आश्रयासिद्धिसंग्रहाय पक्षतावच्छेदकविशिष्टेति । न च पक्षपदं व्यर्थम्, पक्षतावच्छेदकविशिष्ट इत्यस्यैव सम्यक्त्वादिति वाच्यम् । पक्षपदं पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकवैशिष्ट्यस्य लाभाय, तेन वह्न्यभाववान् ह्रद इति निश्चयोत्तरं कालिकादिसम्बन्धेन ह्रदत्वादिविशिष्टकालादौ वह्नेस्तद्व्याप्यधूमवत्त्वस्य चाऽनुमितौ सत्त्वेऽपि न बाधादावव्याप्तिः । एवमग्रेऽपि साध्यहेतुपदयोर्व्यावृत्तिर्बोध्या । बाधसत्प्रतिपक्षसंग्रहाय साध्यतावच्छेदकविशिष्टेति । द्वितीयदलस्य तद्घटकपदानां च व्यावृत्तिः प्रथमलक्षणोक्तदिशा बोध्या । ह्रदो वन्ह्यभाववानितिबाधनिश्चयेऽपि तदुत्तरं ह्रदे वह्निव्याप्यत्वावगाहितादृशज्ञानसम्भवात्तादृशावगाहित्वान्यतरभावविरहेणाऽव्याप्तिरतो द्वयोरिति । तथा चैकावगाहित्वसत्त्वेऽपि द्वित्वावच्छिन्नावगाहित्वविरहाल्लक्षणसङ्गतिरिति ध्येयम् ।

मतान्तरमुपन्यस्यति— उत्तरपदञ्चेति । अव्यवहितोत्तरार्थकमिति । अव्य-

**वहितोत्तरार्थकम्**, कालाध्वनोरत्यन्तसंयोग इत्यनेन **द्वितीयाधिकरणे, उत्तरपदस्य उत्तरकालपरत्वादिति तु न युक्तं, व्यापकतात्मकस्यात्यन्तसंयोगस्य**

वहितोत्तरकालार्थकमित्यर्थः । **कालाध्वनोरत्यन्तसंयोगे इत्यनेनेति** । अत्यन्तसंयोगविवक्षायां कालवाचकाद् अध्ववाचकाच्च शब्दाद् द्वितीयेत्यर्थकेणेत्यादिः। **अधिकरणे**- अधिकरणत्वे । तथाचाऽधिकरणत्ववाचिका आधेयत्ववाचिका वा द्वितीयेति भावः । तत्र हेतुमाह **उत्तरपदस्येति । उत्तरकालपरत्वादिति** । एवं चोत्तरपदस्योत्तरकालीनत्वं नार्थ इति भावः ।

अत्र अधिकरणत्वमात्रे न द्वितीया, अत्यन्तपदवैयर्थ्यापत्तेः, किन्तु समभिव्याहृतप्रकृत्यर्थतावच्छेदकव्यापकताविशिष्टाधिकरणत्वे, तादृशाधिकरणत्वलाभश्च मासमधीते इत्यादौ द्वितीयार्थाधिकरणत्वे प्रकृत्यर्थस्य मासस्याधेयतावदभावप्रतियोगितावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य यो भेदः तदाश्रयधर्मवत्तासम्बन्धेनान्वयादेव । तादृशधर्मश्चैत्रकर्तृकाध्ययनाधारत्वत्वम्। एवञ्च प्रकृते तदुत्तरामिति द्वितीयार्थाधिकरणत्वे उत्तरपदार्थस्योत्तरकालस्य यद्विषयकनिश्चयोत्तरानुमित्याधारत्वत्वरूपधर्ममादाय कालिकसम्बन्धेनान्वयः सम्भवति, परन्तु प्रयोजनाभावेन तद्विवक्षणाभावात् नात्यन्तसंयोगार्थकद्वितीया सम्भवति इत्याशयेनाह **व्यापकतात्मकस्येत्यादिना । अविवक्षितत्वादिति** ।

ननु यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरकालत्वव्यापकानुमित्यप्रसिद्ध्याऽसम्भवः, तथाहि यद्रूपावच्छिन्नविषयकनिश्चयपदेन नानाकालवृत्तिनानानिश्चयबोधनात् तादृशनिश्चयोत्तरकालत्वस्य नानाकाले सत्वात्तत्र कस्या अपि अनुमितिव्यक्तेरसत्वेनानुमितौ तादृशकालत्वव्यापकत्वस्य बाधितत्वात् । एवञ्चाऽसम्भवसम्भवेऽविवक्षितत्वकथनमयुक्तम् । न च कालत्वव्यापकत्वं न कालत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम्, अपि तु तादृशभेदप्रतियोगितावच्छेदकतानवच्छेदकरूपवत्त्वम्, तादृशकालत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकरूपवत्त्वं वा, तथाच तादृशरूपञ्च तादृशानुमितित्वम्, एवं च अनुमितिव्यक्तिषु तादृशानुमितित्ववत्त्वस्य सत्वात् न व्यापकत्वाप्रसिद्धिरिति वाच्यम् । एवमपि निर्वह्निः पर्वतो वह्निमान् धूमात् इत्यत्राश्रयासिद्धौ यादृशाङ्कुराविशेषे यद्विषयकनिश्चयोत्तरं नियमतोऽनुमितिरेवोत्पद्यते तत्रत्यदोषे च लक्षणसमन्वयसम्भवेऽपि वन्ह्यभाववद्ह्रदादिरूपबाधादौ अव्याप्तिदुर्वारैव, तादृशानुमितित्ववत्त्वस्य ह्रदो वह्निमान् इत्यनुमितावपि सत्वेन तादृशानुमितेरपि तादृशनिश्चयोत्तरत्वव्यापकतया तादृशानुमितिरपि अनुमितिसामान्यान्तर्गता तत्र चोभयाभावविरहात्, इति चेन्न । अविवक्षितत्वादित्यस्य विवक्षितुमशक्यत्वादित्यर्थः । अव्याप्तिभियेति यावत् ।

वस्तुतस्तु यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टानुमितित्वव्यापकनिरुक्तोभयाभावो विरोधिविषयिताप्रयुक्तस्तद्रूपवत्त्वमिति विवक्षणेनाऽदोषात् । अनुमितौ निश्चयवैशिष्ट्यं स्वाव्यवहितोत्तरकालत्वव्यापकत्व(१)सम्बन्धेन । तथाच यत्किञ्चिन्निश्चयमादाय लक्षणसमन्वयसम्भवेन

---

(१) तथाच यद्विषयकयत्किञ्चिन्निश्चयोत्तरकालनिष्ठभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धो यो यद्रूपावच्छिन्नविषयकनिश्चयनिष्ठतद्व्यक्तित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानि-

प्रकृतेऽविवक्षितत्वादिति । अनुमितौ अनुमितिसामान्ये । द्वयोर्व्यतिरेक नोक्तदोषावकाश इति ।

ननु तथापि स्वमते उत्तरपदस्य उत्तरकालीनार्थकत्वपर्यन्तानुधावनं विफलं, स्वाधिकरण-समयध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वरूपस्य स्व-ध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपस्य वाऽव्यव-हितोत्तरकालत्वस्यैवाऽनुमितौ सत्वात् , अनुमितेरपि जन्यतया कालोपाधित्वादिति चेन्न ।

यत्राऽपेक्षाबुद्ध्यात्मिका पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्यनुमितिः—ततो लौकि-कसन्निकर्षजन्यबाधनिश्चयः तत्र बाधेऽव्याप्त्यापत्तेः । तन्निश्चयाव्यवहितोत्तरकालात्मकानुमितौ पक्षे साध्यावगाहित्व—साध्यव्याप्यहेतुमत्तावगाहित्वोभयसत्वात् । न चोत्तरकालीनत्वपर्यन्ता-नुसरणेऽपि तद्दोषतादवस्थ्यं, उक्तानुमितेर्बाधनिश्चयोत्तरकालवृत्तित्वादिति वाच्यम् । उत्तर-कालीनेत्यस्योत्तरकालोत्पन्नपरत्वेन निरुक्तानुमितेरुत्तरकालोत्पन्नत्वविरहादिति ध्येयम् ।

नन्वत्र निरुक्ताऽव्यवहितोत्तरत्वनिवेशेऽव्यवहितपदस्योत्तरपदस्य च वक्ष्यमाणा व्याप्तिर्न सङ्गच्छते, अतस्तत्सङ्गत्यर्थं अव्यवहितोत्तरत्वमत्र स्वध्वंसाधिकरणत्वे सति स्वाधिक-रणसुखत्वरूपमेवाऽत्रे वाच्यम् , एवं च पूर्वोक्तापेक्षाबुद्धिस्थलीयबाधेऽव्याप्तिविरहेण वृत्तित्वप-र्यन्तानुसरणं व्यर्थमिति चेन्न ।

काञ्चनमयपर्वतो वह्निमान् गगनादित्यादौ काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिग-गनेऽतिव्याप्तेः । तादृशनिश्चयद्वितीयक्षणे पक्षे साध्यावगाहिसाध्यव्याप्यहेतुमत्वावगाह्यनुमिते-रसम्भवात् , तृतीयक्षणोत्पन्नायां चाऽनुमितौ स्वाधिकरणत्वविरहेणाऽव्यवहितोत्तरत्वविरहात्, अव्यवहितोत्तरानुमितिसामान्ये एवोभयाभावसत्वात् । वृत्तित्वविवक्षणे तु द्वितीयक्षणोत्पन्न-सुखस्याऽव्यवहितोत्तरतया तद्वृत्तित्वेन तृतीयक्षणोत्पन्नानुमितेरपि लाभात्तत्रोभयाभावविर-हाददोष इति ।

वस्तुतो यत्र स्थलविशेषे दोषनिश्चयद्वितीयक्षणे काप्यनुमितिर्न जायते तत्राऽव्यवहितो-

---

रूपकोत्तरकालनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाव एवानुमितौ निवेशनीयः, द्वितीयाभावस्तु यद्रूपानिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेद-कतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकोभयावृत्तिधर्मनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिका सती निरवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिका याऽवच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपकनिश्चयनिष्ठाव-च्छेदकत्वनिष्ठावच्छेदकतानिरूपकोत्तरकालनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकत्व-निष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-कतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगितानिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकानुमितिनिष्ठा-वच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकता-निरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाव(१) एव, सामान्याभाव एव उभयाभावे निवेशनीयः एतादृशसामान्याभावनिवेशान्नातिप्रसङ्गः,एवंरीत्या निवेशेऽव्याप्तिविरहादिविवक्षितत्वाभिधानमिति दिक् ।

---

( १ ) अभावप्रतीतिश्च यद्रूपावच्छिन्नविषयिताशालितन्निश्चयोत्तरकालवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति ।

इत्यभिसम्बन्धः। तत्त्वं, तद्रूपावच्छिन्नत्वम्। अत्र च तज्ज्ञानानन्तरज्ञाननिष्ठताद्दशोभयाभावे तज्ज्ञानीयाया एव विरोधिविषयितायाः प्रयोजकत्वात् विरोधिविषयितायां ताद्दशनिश्चयीयत्वकथनं स्वरूपकीर्तनमात्रं, न तु तल्लक्षणघटकं, तथा च यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं, ताद्दशरूपावच्छिन्नत्वं दोषत्वमिति समुदितार्थः।

वन्ह्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरं ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुत्पत्त्या घटाद्यनुमितय एव ताद्दशनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गतास्तासु च ह्रदत्वादिविशिष्टे यत् वह्नित्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं, वह्नित्वावच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वावच्छिन्नवैशिष्ट्यावगाहित्वञ्च, तदुभयाभाववत्त्वमक्षतमेव, तत्र ताद्दशनिश्चयीयविरोधिविषयिताप्रयुक्तत्वमपि, स्वनिष्ठप्रतिब-

---

त्तरानुमित्यप्रसिद्ध्याऽव्याप्तिरतो वृत्तित्वनिवेशः। काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिगगनेऽतिव्याप्तेस्तु पाषाणमयत्ववत्पर्वतेऽतिव्याप्तेरिव वारणसम्भवादिति ध्येयम्।

निर्वह्निः पर्वतो वह्निमानित्यादौ वस्तुमात्रनिश्चयोत्तरानुमितिनिष्ठोभयाभावमादाय वस्तुमात्रेऽतिव्याप्तिवारणाय यद्विषयकनिश्चयनिष्ठविरोधिविषयिताप्रयुक्तत्वमादायाऽतिव्याप्तिं वारयितुं न समर्थमिति नियमविशेषमवलम्ब्यैवाऽतिव्याप्तिवारणं कर्त्तव्यं, तथाचसति विषयितायां यद्विषयकनिश्चयीयत्वविशेषणं व्यर्थमित्यत्रेष्टापत्तिमाह अत्र चेति। तदुज्ञानानन्तरमिति। तद्ज्ञानाव्यवहितोत्तरमित्यर्थः। प्रयोजकत्वादिति। प्रयोजकत्वनियमादित्यर्थः।

लक्ष्ये लक्षणं योजयति वन्ह्यभावविशिष्टेति। कदाचिदप्यनुत्पत्त्येति। बाधनिश्चयाभावरूपसामग्रीविरहादिति भावः। घटाद्यनुमितय इति। भूतलं घटवद् घटव्याप्यपटवच्चेत्याद्यनुमितय एवेत्यर्थः। अक्षतमेवेति। तथाच वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये ह्रदे वह्निवैशिष्ट्यावगाहित्व—वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावसत्वेन तद्रूपवत्त्वस्य वन्ह्यभाववद्ध्रदे सत्त्वाल्लक्षणसमन्वयः। तत्र—ताद्दशोभयाभावे। ताद्दशनिश्चयीयेति। वन्ह्यभाववान् ह्रद इति निश्चयनिष्ठेत्यर्थः। विरोधिविषयिताप्रयुक्तत्वमपीति। अस्य अक्षतमेवेति पूर्वेणाऽन्वयः। स्वं—वन्ह्यभाववान् ह्रद इति निश्चयः। तन्निष्ठप्रतिबन्धकतावच्छेदको धर्मः—वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयिता। स्वं—उक्तनिश्चयः। तदनन्तरोत्पन्नं यद् ज्ञानं "भूतलं घटवद् घटव्याप्यपटवच्चेत्याकारकं" तन्निष्ठो यः प्रतिबध्यतावच्छेदकीभूतह्रदे वह्निवैशिष्ट्यावगाहित्व—वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावः तत्प्रयोजकत्वनियमादित्यर्थः।

प्रतिबन्धकतावच्छेदकविषयितायाः स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकप्रति-

न्धकतावच्छेदकधर्म्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्म्माभावप्रयोजकत्वात्, तत्र ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादिविशिष्टप्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूताया ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवह्नित्वावच्छिन्नाभावीयप्रकारितायास्तादृशवह्नित्वादिविशिष्टप्रकारकत्वघटितोभयाभावे तथात्वात्।

न च तादृशविशिष्टप्रकारकत्वमात्रं न विपरीतनिश्चयप्रतिबध्यतावच्छेदकं, अपि तु तद्विशेषितानाहार्य्यज्ञानत्वं, तत् कथं तत्प्रकारकत्वाभावस्य तथाविधविरोधिविषयिताप्रयुक्तत्वमिति वाच्यम्। विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्वात् अनाहार्य्यज्ञानत्वाद्याश्रयानुमितिनिष्ठतादृशविशिष्टप्रकारकत्वाभावस्य विरोधिविषयिताप्रयुक्तत्वाक्षतेरिति ह्रदो वह्निमान् धूमादित्यादौ वन्ह्यभावविशिष्टह्रदत्वाद्यवच्छिन्ने लक्षणसमन्वयः। निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत्पर्व्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्र प्रसिद्धपक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारकत्वघटितोभयाभाववत्त्वमक्षतमे-

---

योगितासम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकप्रतिबध्यतावच्छेदकाभाव(१)त्वघटितधर्मावच्छिन्ननिरूपकताकाधिकरणताप्रयोजकत्वमिति नियमः। प्रतिबन्धकतावच्छेदकविषयितायाः प्रयोजकत्वं च प्रतिबन्धकज्ञानोत्तरज्ञाननिष्ठतादृशोभयाभावाधिकरणतायां, प्रतिबन्धकज्ञानानुत्तरज्ञाननिष्ठाधिकरणतायां तु प्रतिबध्यज्ञानसामग्र्यभावस्य प्रयोजकत्वमिति निष्कर्षः।

प्रयोजकत्वं सङ्गमयति **तत्रेति**। ह्रदो वन्ह्यभाववानिति निश्चये इत्यर्थः। **तादृशेति**। ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नेत्यर्थः। **तथात्वात्**—प्रयोजकत्वात्।

शङ्कते **नचेति**। **तादृशविशिष्टप्रकारताकत्वमात्रमिति**। ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादिविशिष्टप्रकारताकत्वमित्यर्थः। मात्रपदेनाऽनाहार्यत्वादेर्व्यवच्छेदः। **विपरीतनिश्चयेति**। बाधादिनिश्चयेत्यर्थः। वन्ह्यभाववान् ह्रद इत्यादिनिश्चयेति यावत्। **तद्विशेषितेति**। तद्विशिष्टेत्यर्थः। तादृशप्रकारताकत्वविशिष्टेति यावत्। वै॰ सामानाधिकरण्यसम्बन्धेनेत्यर्थः। **तत्प्रकारकत्वाभावस्येति**। तत्प्रकारकत्वाभावमात्रस्येति यावत्। **विशिष्टाभावप्रयोजकस्येति**। तादृशप्रकारताकत्वविशिष्टाऽनाहार्यज्ञानत्वाभावप्रयोजकस्येत्यर्थः। अत्र विशेष्यवन्निष्ठत्वाभिधानं तादृशज्ञाने प्रकारकत्वाभावप्रयोजकत्वप्रदर्शनाय। विशेष्यवति विशिष्टाभावो विशेषणाभावरूप इत्यभिप्रायः। विशेष्यं—अनाहार्यज्ञानत्वम्। **तादृशविशिष्टप्रकारकत्वाभावस्य**—ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादिविशिष्टप्रकारकत्वाभावस्येत्यर्थः। **अन्यत्र**—निर्वह्निः पर्वतो वह्निमानि-

---

(१) प्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणधर्माभावेत्यर्थः। तेन तत्कोटिप्रविष्टयत्किञ्चिद्धर्माभावाऽप्रयोजकत्वेऽपि नोक्तनियमभङ्गः, अत एवाऽग्निमनचेत्यादिग्रन्थोऽपि सङ्गच्छते इति ध्येयम्।

वेति तत्र लक्षणसमन्वयः ।

न चाहार्य्यज्ञानमात्रे प्रसिद्धस्य निर्व्वह्निपर्व्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानत्वस्य विरोधिविषयकज्ञानप्रतिबध्यतानवच्छेदकतया तादृशधर्म्मावच्छिन्ने वन्ह्यादिप्रकारकत्वस्याभावे विरोधिविषयताप्रयुक्तत्वमप्रामाणिकमिति वाच्यम् । तादृशज्ञानत्वस्य प्रतिबध्यतानवच्छेदकत्वेऽपि तद्व्यापकस्य पर्व्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकज्ञानत्वस्यैव वह्निविशिष्टपर्व्वतविषयकज्ञानप्रतिबध्यतावच्छेदकतया व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकतया तादृशविशिष्टविशेष्यकत्वावच्छिन्नवन्ह्यादिप्रकारकत्वाभावे तादृशदोषविषयिताप्रयुक्तत्वस्यावश्यकत्वात् ।

---

त्याकारकाऽऽहार्ये । तत्र—वह्निमत्पर्वतरूपाऽऽश्रयासिद्धौ ।

तादृशोभयाभावस्येच्छाघटितसामग्र्यभावमात्रप्रयुक्ततया विषयिताप्रयुक्तत्वमेव नास्ति कुतो विरोधिविषयिताप्रयुक्तत्वमित्याशङ्कते **नचेति । तादृशधर्मावच्छिन्ने**—निर्वह्निपर्वतत्वावच्छिन्ने । **तादृशज्ञानत्वस्य**—निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवह्निप्रकारकज्ञानत्वस्य । **तद्व्यापकस्य**—तादृशज्ञानत्वव्यापकस्य । **तादृशविशिष्टेति ।** निर्वह्निपर्वतत्वविशिष्टेत्यर्थः । **तादृशदोषेति ।** वह्निमत्पर्वतरूपाऽऽश्रयासिद्ध्यात्मकेत्यर्थः । तथाच निर्वह्निः पर्वतो वह्निमान्धूमादित्यत्र वह्निमत्पर्वतरूपदोषविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठा या तादृशोभयाभावाधिकरणता सापि निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वव्यापकस्य पर्वतत्वावच्छिन्ने वन्ह्यभावावगाहित्वस्याभावप्रयोजिका या वह्निमत्पर्वतविषयिता तत्प्रयोज्या भवतीति(१) ।

---

(१) ननु निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वव्यापिकाऽऽहार्यज्ञानीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्ह्यभावत्वावच्छिन्नविषयता सा च न प्रतिबध्यतावच्छेदिका, किन्तु निर्वह्निः पर्वत इति ज्ञानीयवन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतैव, तस्या वह्निप्रकारत्वानिरूपिततया आहार्यज्ञानाऽवृत्तित्वात् । न च निर्वह्निः पर्वतो वह्निमानितिज्ञानस्य प्रत्यक्षतया उपनयसन्निकर्षमर्यादया निर्वह्निः पर्वतो वह्निमान् निर्वह्निश्च पर्वत इति समूहालम्बने प्रत्यक्षात्मके बाधकाभावादाहार्यज्ञानवृत्तित्वमपि तादृशविषयतायामक्षतमेवेति वाच्यम् । यत्र पर्वतो वह्निमानिति बाधनिश्चयो वर्त्तते तदुत्तरं निर्वह्निपर्वते वह्निज्ञानं जायतामितीच्छा तदुत्तरं केवलनिर्वह्निः पर्वतो वह्निमानितिज्ञानं जायते न तु समूहालम्बनं, तत्र पर्वतत्वावच्छिन्ने वन्ह्यभाववत्ताबुद्धिं प्रति पर्वतत्वावच्छिन्ने वन्ह्यभावप्रकारकनिश्चयेच्छाविरहविशिष्टपर्वतविशेष्यकवह्निप्रकारकनिश्चयाभावस्य जनकत्वात्तादृशाभावस्य तत्राऽसत्वात् । तथाच निर्वह्निः पर्वत इति ज्ञानीया या प्रतिबध्यतावच्छेदकीभूताविषयता तस्याः प्रकृतपक्षे प्रकृतसाध्यावगाहित्वव्यापकत्वविरहात्कथं वह्निमत्पर्वतविषयतायाः व्यापकाभावप्रयोजकतया व्याप्याभावप्रयोजकत्वमिति चेन्न ।

व्यापकतावच्छेदकरूपावच्छिन्नाभावप्रयोजकस्यैव व्याप्याभावप्रयोजकत्वात् । तथा च पर्वतत्वावच्छिन्ने वन्ह्यभावावगाहितात्वस्य निर्वह्निपर्वतत्वावच्छिन्ने वन्ह्यवगाहित्वव्यापकतावच्छेदकतया तदवच्छिन्नाभावप्रयोजकवह्निमत्पर्वतविषयकत्वस्य निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजकत्वमावश्यकमेवेति ध्येयम् ।

**न च विरोधिज्ञानासत्त्वेऽपि निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्या-नाहार्यस्यानुत्पत्त्या इच्छादिघटिततादृशाहार्यज्ञानसामग्र्यभावस्यैव निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं न तु विरोधिविषयित्वस्य, क्वचिदप्यक्लृप्तत्वादिति वाच्यम् । अभावाधिकरणतायामेव विरोधिविषयताप्रयुक्तत्वस्य निवेश्यतया अधिकरणतानाञ्चाभावाभेदेऽप्यधिकरणभेदेन भिन्नतया विरोधिज्ञानानन्तरोत्पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण पूर्वज्ञानीयविरोधिविषयिताया अपि प्रयोजकत्वात् ।**

**यद्विषयिताप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येतावन्मात्रे कृते ह्रदो वन्ह्यभाववानित्यादिज्ञानीयवन्ह्यभावादिविशिष्टह्रदादिविषयिताया इव तद्-**

---

शङ्कते **नचेति** । **विरोधिज्ञानाऽसत्त्वेऽपि**—वह्निमत्पर्वतरूपाऽऽश्रयासिद्धिनिश्चयाऽसत्वेऽपि । विरोधिज्ञानस्य प्रतिबध्यतावच्छेदककोटावनाहार्यत्वनिवेशादनाहार्यज्ञानं प्रत्येव तदभावस्य हेतुत्वं न त्वाहार्यज्ञानं प्रतीत्याशयेनाह **अनाहार्यस्येति** । इच्छानुत्तरस्येत्यर्थः । तथाच निर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानस्य विरोधिज्ञानप्रयुक्तानुत्पत्तिकत्वे तदसत्वदशायामिच्छाया असत्त्वेऽपि तदुत्पत्त्यापत्तेरत इच्छाया एव तदुत्पत्तिप्रयोजकत्वमुपगम्य तदभावप्रयुक्तानुत्पत्तिकत्वं वाच्यमितीच्छाघटितसामग्र्यभावस्यैव निर्वह्नित्वविशिष्टपर्वते वह्नित्वविशिष्टवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वमिति भावः । सामग्र्यभावस्यैवेति एवकारव्यवच्छेद्यमाह **न तु विरोधिविषयित्वस्येति** । अस्य निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वमिति पूर्वेणाऽन्वयः । **क्वचिदपि**—आहार्यज्ञाने, आहार्यज्ञानविरोधिज्ञानाऽसत्त्वस्थले तादृशसामग्र्यभावे एव तादृशोभयाभावप्रयोजकत्वस्य क्लृप्ततया विरोधिविषयकज्ञानसत्त्वेऽपि तस्यैव तत्कल्पनीयं न तु विरोधिविषयिताया इति भावः । **विरोधिज्ञानानन्तरोत्पन्नज्ञाने**—वह्निमत्पर्वतरूपाश्रयासिद्धिविषयकज्ञानानन्तरोत्पन्नघटाद्यनुमितौ । **तादृशेति** । निर्वह्निपर्वतत्वविशिष्टे वह्नित्वविशिष्टेत्यर्थः । **विनिगमनाविरहेणेति** ।

अत्रेदं बोध्यम् । आहार्यज्ञानसामग्र्यभावस्यैकस्योभयाभावाधिकरणतासामान्ये प्रयोजकत्वकल्पने उभयाभावाधिकरणतात्वमेकमेव प्रयोज्यतावच्छेदकं सम्भवतीति प्रयोज्यप्रयोजकभावैक्यम्, अधिकरणताविशेषे विरोधिविषयितायाः प्रयोजकत्वकल्पने तु अधिकरणताविशेषत्वमेव तत्प्रयोज्यतावच्छेदकमिति सामान्यत आहार्यज्ञानसामग्र्यभावस्य प्रयोजकत्वकल्पने लाघवमेव विनिगमकम् । अन्यथा अधिकरणताविशेषे वस्तुमात्रविषयितायाः विनिगमनाविरहेण प्रयोजकत्वं को वारयेदिति ।

इदमत्र तत्त्वम् । लक्षणे उभयाभावशब्देनोभयाभावप्रयोजकीभूताभावस्यैवाग्रे विवक्षणीयतया वह्निमत्पर्वतरूपाऽऽश्रयासिद्धिविषयितायाः उभयाभावे अधिकरणत्वे वाऽप्रयोजकत्वेऽपि उभयाभावप्रयोजकीभूते पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावे प्रयोजकतायामविवादाल्लक्षणसमन्वय इति ध्येयम् ।

**इत्येतावन्मात्रे कृते इति** । तथाच विशेष्यदलं किमर्थमिति पूर्वपक्षः ।

न्तःपातिवन्ह्यभावत्वादिविशिष्टविषयिताया अपि प्रतिबन्धकतावच्छेदककोटिप्रविष्टतया प्रतिबध्यतावच्छेदकस्य ह्रदत्वादिविशिष्टे वन्ह्यादिवैशिष्ट्यावगाहित्वस्य विरहप्रयोजकतया बाधायेकदेशे वन्ह्यभावादिरूपविशिष्टेऽतिव्याप्तिरिति यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विविरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं निवेशितम् ।

न च यादृशविशिष्टविषयितासामान्यप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येव सम्यक्, ह्रदत्वादिविशिष्टविषयितासामान्यान्तर्गतायां ह्रद इत्यादिज्ञानीयविषयितायामुभयाभावप्रयोजकत्वासत्त्वादतिव्याप्तेरनवकाशादिति वाच्यम् । पाषाणमयो न वह्निमानितिज्ञानसहितस्य पर्व्वतः पाषाणमय इति ज्ञानस्य पर्व्वतो वह्निमानितिज्ञानप्रतिबन्धकतया ज्ञानभेदेन विषयिताभेदाभावात् पाषाणमयत्वविशिष्टपर्व्वतादिविषयितासामान्यस्यैव उभयाभावप्रयोजकत्वात् पाषाणमयत्वविशिष्टपर्व्वतादावतिव्याप्तेर्दुर्व्वारत्वात् ।

---

**निवेशितमिति** । यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टानुमितित्वव्यापकं "विरोधिविषयिताप्रयुक्त"मुभयाभाववत्त्वं निवेशितमित्यर्थः । वै० स्वाव्यवहितोत्तरकालवृत्तित्व—स्वसामानाधिकरण्योभयसम्बन्धेन ।

नन्वत्र विशेष्यदलसत्त्वे(१) ह्रदो वह्निमानित्यत्र बाधेऽव्याप्तिः, जातिमान् वन्ह्यभाववानित्याकारकवन्ह्यभाववद्ध्रदत्वविशिष्टविषयकनिश्चयोत्तरं ह्रदे वन्ह्यवगाहिसमूहालम्बनानुमितेरुत्पादात् तत्र चोभयाभावविरहादतो निश्चयेऽव्यापकीभूतविषयिताशून्यत्वं निवेशनीयम्, तथाच बाधनिश्चयश्च न बाधैकदेशविषयित्वाव्यापकविषयिताशून्यः तादृशैकदेशमात्रविषयकनिश्चयीयतद्विषयिताप्रयुक्तो नोभयाभाव इति नैकदेशातिव्याप्तिरिति चेन्न ।

गोत्वाभावो गोत्वाभाववानित्यादौ गोत्वाभावादावतिव्याप्तेः उक्तरीत्याऽव्यापकीभूतविषयिताशून्यत्वानिर्वचने च प्रागुक्तरीत्यैव दोषोऽनुसन्धेयः ।

सामान्यपदनिवेशेन नैकदेशातिव्याप्तिरित्याशङ्कते **नचेति** ।

**अतिव्याप्तेर्दुर्वारत्वादिति** । न च यद्विषयितायां विरोधित्वनिवेशनेन पाषाणमयत्वपर्वते नातिव्याप्तिरिति वाच्यम् । तथापि वन्ह्यभाववद्ध्रदादिरूपबाधादावव्याप्तेः, वन्ह्यभावविशिष्टह्रदत्वावच्छिन्नविषयिताया विरोधित्वाभावात्, ह्रदत्वावच्छिन्नविषयतानिरूपितवन्ह्यभावविषयताया एव विरोधित्वात् । तादृशोभयाभावप्रतियोगितावच्छेदककोटौ यदंशे यदवगाहित्वं निविष्टं तद्विषयतानिरूपिततदभावतद्व्याप्यान्यतरविषयताया एव विरोधिविषयतारूपत्वात् । कथञ्चित्तथात्वेऽपि असाधारण्याऽसंग्रहभयेन तन्निवेशाऽसम्भवात् । साध्यवत्पक्षविषयताभिन्नविषयताया एव निवेश्यतयाऽतिव्याप्तिसङ्गतिरिति ध्येयम् ।

अत्र पाषाणमयत्ववत्पर्वते सामान्यपदोपादानेऽपि विशेष्यदलाभावेऽतिव्याप्तिर्बोध्या । विशेष्यदलसत्त्वे तु पाषाणमयत्ववत्पर्वतविषयकनिश्चयाव्यवहितोत्तरानुमितिः पर्वतो वह्निमा-

---

(१) यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये इति विशेष्यदलम् ।

**ह्रदो वन्ह्यभाववानित्यादिह्रदादिविषयकनिश्चयानन्तरोत्पन्नघटाद्यनुमितौ विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वात् केवलह्रदादावतिव्याप्तिरतः**

---

निरुक्तानुमितिरपि—तत्रोभयाभावविरहेणाऽतिव्याप्तेरभावात् । समानाकारकज्ञानीयविषयतयोरैक्येन प्रतिबन्धकतावच्छेदकत्वेऽपि "तादृशनिश्चयाऽसमानकालीन" पर्वतः पाषाणमय इति निश्चयस्याऽविरोधित्वात् ।

नन्वत्र विशेष्यदलसत्त्वेऽपि धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितिसामान्ये व्यभिचारविषयितारूपविरोधिविषयिताप्रयुक्तोभयाभावस्य सत्त्वात् । विशिष्टान्तराघटितत्वेन विशेषणेन न तद्वारणं शक्यम् । तादृशवह्निर्धूमवानिति ज्ञानं प्रति मेयत्ववान् धूमाभाववान् मेयत्ववान् तादृशवह्निरिति ज्ञानविशिष्टज्ञानस्य प्रतिबन्धकतया तादृशोभयाभावाधिकरणताप्रयोजिकायां पक्षेसाध्यवैशिष्ट्याभावाधिकरणतायां पक्षे तादृशव्यभिचारविषयितायाः प्रयोजकत्वात्, तत्र च शुद्धव्यभिचारविषयिताया अप्रयोजकत्वात्, तथा च विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविषयिताप्रयोज्योभयाभावाधिकरणताप्रयोजकाभावाधिकरणताकत्वरूपविशिष्टान्तराघटितत्वस्य सत्त्वादतस्तद्वारणाय स्वविषयितानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वा-ऽसाधारण्यविषयित्वान्यतरत्वोभयाभावो निवेशनीयः । एवं चोक्तस्थले धूमव्यभिचारिवह्नौ धूमवैशिष्ट्याभावाधिकरणतानिष्ठप्रयोज्यतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकत्वस्य सत्त्वेन मेयत्वविशिष्टव्यभिचारविषयितानिष्ठप्रयोजकतायामुभयाभावाभावान्नातिव्याप्तिः, तथाच पाषाणमयत्वविशिष्टपर्वते च नातिव्याप्तिः, तद्विषयितानिष्ठप्रयोजकतायामुक्तोभयाभावाऽसत्त्वादिति चेन्न ।

कपिसंयोग्येतत्त्वादित्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणाय विशेष्यदलावश्यकत्वात्, तादृशविशिष्टविषयकनिश्चयोत्तरज्ञाननिष्ठे पक्षे साध्यवैशिष्ट्याभावाधिकरणत्वे कपिसंयोगाभाववत्वृक्षविषयितायाः प्रयोजकत्वात् विशिष्टान्तरविषयिताया अप्रयोजकत्वाच्च विशिष्टान्तराऽघटितत्वस्य सत्त्वात् विशेष्यदलसत्त्वे चाऽव्याप्यवृत्तित्वग्रहाकालीनतादृशविशिष्टविषयकनिश्चयोत्तरानुमितावुभयाभावासत्त्वेनातिव्याप्तिवारणात् ।

न च विशेष्यदलसत्त्वेऽपि निर्वह्निः पर्वतो वह्निमानित्यादौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, तदुत्तरानुमितयस्तु न निरुक्तरूपाः, तादृशज्ञानस्याऽऽहार्यत्वात्, पाषाणमयत्वावच्छेदेन वह्न्यभाववत्ताज्ञानसहितस्य निरुक्तनिश्चयस्य वह्निमानिति ज्ञानविरोधितया निरुक्तज्ञानीयविषयतायाः व्यापकाभावप्रयोजकत्वेन व्याप्याभावप्रयोजकत्वस्याक्षतत्वादिति वाच्यम् । विरोधिविषयताप्रयुक्तत्वं अनुमितित्वव्यापकत्वं च उभयाभावाधिकरणतायामेव निवेश्यम्—एवं च पाषाणमयो न वह्निमानितिनिश्चयाविशिष्टपाषाणमयत्ववत्पर्वतविषयकनिश्चयोत्तरजातघटानुमितिनिष्ठोभयाभावाधिकरणतायामेव पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयिताप्रयोज्यत्वस्य स्वीकरणीयतया तादृशनिश्चयासमानकालीनपाषाणमयत्ववत्पर्वतविषयकनिश्चयोत्तरजातघटाद्यनुमितौ विरोधिविषयिताप्रयुक्तोभयाभावाधिकरणताया असत्त्वेन व्यापकताभङ्गादतिव्याप्त्यनवकाशादिति ।

सामान्यपदं पूरितम् । तथासति ह्रदादिनिश्चयानन्तरोत्पन्नानुमितिसामान्यान्तर्गतायां ह्रद इत्यादिनिश्चयानन्तरजात-ह्रदो वन्हिमान् वन्हिव्याप्यधूमवांश्चेत्याद्यनुमितौ विरोधिविषयिताप्रयुक्तताद्दशोभयाभावासत्त्वान्नातिव्याप्तिः । ह्रदत्वादिना वन्ह्यभावविशिष्टह्रदादिविषयकनिश्चयानन्तरमुक्तसमूहालम्बनानुमित्युत्पत्त्या ताद्दशविशिष्टस्यापि दोषत्वानुपपत्तिरतो यत्पदं यद्रूपावच्छिन्नपरतयोपवर्णितम् । वन्ह्यभावविशिष्टह्रदादिविषयकस्य ह्रदो वन्हिमानित्यादिज्ञानस्यानन्तरं ताद्दशसमूहालम्बनानुमित्युत्पत्त्या तद्दोषताद्वस्थ्यमतो निश्चयेति । अनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानपरं, तेनाहार्यस्याप्रामाण्यज्ञानास्कन्दितस्यापि दोषविषयकनिश्चयस्यानन्तरं ताद्दशानुमित्युत्पत्तावपि न क्षतिः ।

दोषविषयकनिश्चयनाशे सति ताद्दशानुमितेरप्रसिद्ध्या तद्दोषापत्तिरतोऽव्यवधाननिवेशः । एवं दोषविषयकलौकिकनिश्चयाव्यवहितपूर्व्वमनुमित्युत्पत्त्या तद्दोषः स्यादिति उत्तरेति । तत्सामानाधिकरण्यमनुमितौ निवे-

---

**तथा सति** सामान्यपदनिवेशे सति । **निश्चयानन्तरमिति** । ह्रद इत्याकारकनिश्चयानन्तरमित्यर्थः । **उक्तसमूहालम्बनानुमित्युत्पत्त्येति** । ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेति समूहालम्बनानुमित्युत्पादेनेत्यर्थः । **तद्दोषताद्वस्थ्यमिति** । उक्तविशिष्टस्य दोषत्वानुपपत्तिरित्यर्थः । असम्भव इति यावत् ।

**ताद्दशानुमितेरप्रसिद्ध्या**—ताद्दशनिश्चयाव्यवहितोत्तरानुमितेरप्रसिद्ध्या ।

**तद्दोषापत्तिरिति** । बाधादावव्याप्तिरित्यर्थः । अथात्राऽव्यवहितत्वं यदि स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाऽनधिकरणत्वं, तदाऽलौकिकदोषज्ञानादतिपूर्वं जायमानायामनुमितावपि ताद्दशाव्यवहितत्वसत्त्वात् दोषविषयकलौकिकनिश्चयमादायोत्तरत्वानिवेशाव्याप्तिकथनमसङ्गतमिति चेन्न । स्ववृत्तिकृतिमत्त्वस्यैवाऽव्यवधानरूपत्वात् । उत्तरत्वं च स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । तथा च स्ववृत्तिकृतिमत्त्वे सति स्वाधिकरणध्वंसाधिकरणक्षणवृत्तित्वरूपमुत्तरकालीनत्वमनुमितौ विशेषणं फलितम् ।

**एवं**—अव्यवहितत्वनिवेशे । अत्र साध्यानुमित्यनन्तरं लौकिकान्यदोषज्ञानस्य साध्यानुमितिप्रतिबध्यतयैवोत्पत्त्यसम्भवादतो लौकिकेति ।

ननु दोषविषयकलौकिकान्यज्ञानाऽव्यवहितप्राक्कालीनानुमितौ निरुक्तोभयाभावसत्त्वेऽपि तस्य विरोधिविषयिताप्रयुक्तत्वाभावादेव दोषविषयकनिश्चयाऽव्यवहितानुमितिसामान्ये विरोधिविषयिप्रयुक्तोभयाभावविरहेणाऽव्याप्तिवारकतयोत्तरपदप्रयोजनसम्भवेन व्यर्थमेव लौकिकनिश्चयानुसरणमिति चेन्न । विरोधिविषयिताप्रयुक्तत्वदलसत्त्वेऽसत्त्वे चोभयथैवाऽव्याप्तिसूचनार्थं लौकिकत्वानुसरणम् । **तद्दोषः स्यादिति** । अव्याप्तिः स्यादित्यर्थः । न त्वसम्भवः, यत्र बाधादिग्रहकाले आहार्यस्य दोषविशेषजन्यस्य चाऽप्रसिद्धिस्तत्र लक्षणसमन्वयादिति ध्येयम् । **उत्तरेतीति** । निरुक्तार्थकमिति भावः । अव्यवहितोत्तरत्वं चाऽत्र तृतीयक्षणसाधारणम्, द्वितीयक्षणमात्रवृत्तिअव्यवहितोत्तरत्वनिवेशे काञ्चनमयः पर्वतो वह्निमान्

इयमत एकस्य बाधनिश्चयानन्तरमन्यस्यानुमितावपि न क्षतिः । बाधादिनिश्चयानन्तरं पक्षतावच्छेदकावच्छिन्ने साध्यादिप्रकारकस्याहार्यस्य लौकिकस्य च प्रत्यक्षस्य उत्पत्त्या ज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः । यत्पक्षकयत्साध्यकयद्धेतुकस्थले तादृशदोषविषयकनिश्चयानन्तरं कस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्रसिद्ध्याऽव्याप्तिरतोऽनुमितिस्थलेऽनाहार्यदोषविशेषाजन्यज्ञानं निवेश्य कल्पान्तरमाहानाहार्येति । तथा च यत्र तादृशानुमित्यप्रसिद्धिस्तत्र तथाविधमानसोपनीतभानादिकमादायैव लक्षणं सङ्गमनीयमिति भावः ।

बाधादिनिश्चयानन्तरं आहार्यसाध्यादिप्रकारकप्रत्यक्षोत्पत्त्याऽसम्भवोऽव्याप्तिश्चेत्यत आहानाहार्येति । शङ्खो न पीत इत्यादिनिश्चयानन्तरं

---

गगनादित्यत्र काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिगगनेऽतिव्याप्तेः, निरुक्तनिश्चयोत्तरं काञ्चनमयपर्वतो वह्निमान् वह्निव्याप्यगगनवांश्चेति बुद्धेराहार्यतयाऽनुमितित्वासम्भवेन तदुत्तरानुमितिसामान्ये निरुक्तोभयाभावसत्त्वात् । काञ्चनमयत्वप्रकारकबुद्धिं प्रति काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिगगनवत्तावुद्धेर्ज्ञानविशिष्टत्वावच्छिन्नप्रतिबन्धकतया निरुक्तसमूहालम्बनबुद्धेरपि स्वाव्यवहितप्राक्क्षणे स्वत्र काञ्चनमयत्वव्यापकीभूताभावप्रतियोगि गगनमिति निश्चयविशिष्टगगनवत्पर्वतत्वावच्छिन्नधर्मिकतया तत्प्रतिबध्यीभूतकाञ्चनमयत्वप्रकारकपर्वतत्वावच्छिन्नधर्मिकतया वाऽनाहार्यत्वाऽसम्भवात् । तृतीयक्षणसाधारणतन्निवेशे तु निरुक्तैकैकनिश्चयनाशक्षणे अनाहार्यत्वसम्भवेन तादृशानुमितेः सम्भवात्तत्र चोभयाभावविरहान्नातिव्याप्तिः । नचैवमुक्तरीत्या वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिरिति वाच्यम् । यद्रूपावच्छिन्नविषयकनिश्चये पक्षे हेतुमत्तानिश्चयभिन्नत्वअसाधारण्यविषयितावत्त्वोभयाभावस्य विवक्षणात् । असाधारण्यादौ च साध्यव्यापकीभूताभावप्रतियोगी हेतुः हेतुमांश्च पक्ष इति निश्चयमादाय लक्षणसमन्वयः । न च तादृशनिश्चयो न लक्षणघटकः, अव्यापकीभूतविषयिताशून्यत्वविरहादिति वाच्यम् । अव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितविषयताया विवक्षणान्न काप्यनुपपत्तिरिति ध्येयम् ।

**तत्सामानाधिकरण्यमिति** । तादृशनिश्चयसामानाधिकरण्यमित्यर्थः । **न क्षतिः**—न बाधादावव्याप्तिः । **लौकिकस्य चेति** । लौकिकत्वं चाऽत्र दोषविशेषजन्यत्वमेव, तेन ह्रदो वह्निमानिति प्रत्यक्षस्य विशेषणविशेष्यसन्निकर्षजन्यत्वरूपलौकिकत्वस्याऽसत्त्वेऽपि नाऽसङ्गतिः ।

यथाश्रुतानुगमस्तु—प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नावगाहित्व—प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वोभयाभाववृत्तिरूपवत्त्वम् ।

रूपे तादृशोभयाभाववृत्तित्वं च स्वविशिष्टानुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व—विरोधिविषयिताप्रयुक्तत्वोभयसम्बन्धेन । अनुमितौ स्ववै० स्वावच्छिन्नविषयिताशालिनिश्चयाऽव्यवहितोत्तरत्वसम्बन्धेनेति ।

आहार्यस्याऽसार्वत्रिकत्वमभ्युपेत्याह—**अव्याप्तिर्वेति** । तथा च यत्र स्थलविशेषे कस्यापि

शङ्खादौ पीतत्वादिप्रकारकस्य दोषविशेषजन्यचाक्षुषादेरुत्पत्त्या शङ्खः पीतः शङ्खत्वादित्यादिस्थलीयबाधादावव्याप्तिरतो मानसेति । मानसपदं दोषविशेषाजन्यज्ञानपरं, तेन नाहं गौर इत्यादिनिश्चयानन्तरं मिथ्याज्ञानजन्यवासनादिरूपदोषविशेषजन्यात्मविशेष्यकगौरत्वादिप्रकारकमानसज्ञानस्योत्पत्तावपि अहं गौर आत्मत्वादित्यादिस्थलीयबाधादौ नाव्याप्तिः । एतेन यादृशपक्षसाध्यहेतुकस्थले यद्विषयकनिश्चयानन्तरं विरोधिसामग्र्यादिवशेन मानसज्ञानं कदापि न जातं तत्राव्याप्तिरित्यपि निरस्तम् । तत्राप्यनुमितिशाब्दबोधादिकमादाय लक्षणगमनसम्भवात् । पक्षतावच्छेदकेत्यादिदलद्वयनिवेशस्य व्यावृत्तिः पूर्वोक्तरीत्या बोध्या । विरोधिविषयिताप्रयुक्तत्वनिवेशप्रयोजनं स्वयमेवाग्रे वक्ष्यति ।

यत्र विषयविशेषे समूहालम्बनज्ञानं न कस्यापि जातं तत्र पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वविशिष्टसाध्यव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वाभावरूपविशिष्टाभावाप्रसिद्ध्याऽव्याप्तिरतो विशिष्टाभावमुपेक्ष्योभयाभावनिवेशः कृतः । तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयकत्वव्यापकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यस्य स-

---

पुरुषस्याऽऽहार्यज्ञानं न जातं तत्र लक्षणसमन्वय इति भावः । अव्यापकीभूतविषयिताशून्यत्वनिवेशस्यावश्यकत्वे संयोगः संयोगवानित्यादौ संयोगाभावेऽतिव्याप्तिरपि द्रष्टव्या । वन्ह्यभाववान् ह्रदो वह्निमानित्याहार्ये पक्षतावच्छेदकतापर्याप्तिघटितोभयाभावसम्भवेऽपि ह्रदो वन्ह्यभाववानिति निश्चयोत्तरमिच्छाजन्ये केवलं ह्रदो वह्निमानित्याहार्ये ह्रदो धूमवान् धूमव्यभिचारिवह्निमानित्याहार्ये च नोभयाभावसम्भव इति ध्येयम् ।

**तादृशोभयाभावप्रयोजकेति ।** पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रयोजकतावच्छेदकतापर्याप्त्यधिकरणधर्माविशिष्टेरयर्थः । तेन पर्वतो वन्हिमान् धूमादित्यत्र पाषाणमयत्ववत्पर्वते नातिव्याप्तिः(१) ।

न च यद्रूपविशिष्टविषयकत्वसमानाधिकरणमित्येव सम्यक् किं व्यापकत्वनिवेशेनेति वाच्यम् । बाधाद्येकदेशेऽतिव्याप्तेः, बाधज्ञानीयह्रदत्वादिविशिष्टविषयकत्वसामानाधिकरण्यस्य तादृशविरोधिविषयितायां सत्वात्, तदुपादाने च ह्रद इत्याकारकज्ञाने तदभावान्नातिव्याप्तिः(२)

---

(१) एतेन पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिसम्भवे यथासन्निवेशे न वैयर्थ्यमित्युक्तिरसङ्गता । समानाकारकज्ञानीयविषयिताया ऐक्येन पाषाणमयत्वप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताया अपि तादृशोभयाभावप्रयोजकविषयतारूपतया व्यापकत्वेन कथमुक्तं यथासन्निवेशे न वैयर्थ्यम् इति परास्तम् । निरुक्तप्रयोजकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणत्वं यद्रूपावच्छिन्नविषयित्वव्यापकमित्यर्थे तात्पर्यात् । तादृशाधिकरणतायाश्च केवलपाषाणमयत्ववत्पर्वतविषयकज्ञानेऽसत्त्वात् विशिष्याधिकरणताया वैलक्षण्यात्, पाषाणमयो न वह्निमानितिज्ञानसहितनिरुक्तज्ञानीयविषयितात्वेनैव वा पाषाणमयत्ववान् पर्वत इति ज्ञानीयविषयितायाः प्रयोजकत्वात् । नचैवं प्रयोजकतैक्यात् वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिरिति वाच्यम्, विशिष्टद्वयाघटितत्वनिवेशेनैव तद्वारणात् ।

(२) ननु ह्रदो वह्निमानित्यादौ वन्ह्यभाववद्ध्रदविषयकजातिमान् वन्ह्यभाववानिति ज्ञाने वक्ष्यमाणविरोधि-

**व्यापकत्वेऽपि यथासन्निवेशे न वैयर्थ्यम् ।**

**यथा सन्निवेशे न वैयर्थ्यमिति ।** यद्रूपावच्छिन्नविषयकनिश्चयाऽऽव्यवहितोत्तरानुविषयितायाः अभावेन बाधासंग्रहभिया यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य तादृशविरोधिविषयितायां विवक्षणीयतया सामानाधिकरण्यमात्रनिवेशेऽपि नैकदेशेऽतिव्याप्तिः तादृशैकदेशमात्रविषयकनिश्चये कुत्रापि तादृशविषयिताया अभावात् । न च तथापि गोत्वाभावो गोत्वाभाववानित्यत्र गोत्वाभावेऽतिव्याप्तिः गोत्वाभाववत्त्वविशिष्टविषयित्वाव्यापकविषयिताशून्यगोत्वाभावविषयकगोत्वाभावगोत्वाभावो गोत्ववानिति निश्चयत्वसामानाधिकरण्यस्य तादृशविरोधिविषयितायां सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता विशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षणीयत्वादिति चेन्न ।

कपिसंयोग्येतत्त्वादित्यादौ कपिसंयोगाभाववद् वृक्षादावतिव्याप्तेः । अव्याप्यवृत्तित्वज्ञानानास्कन्दिततद्विषयकनिश्चयान्तर्भावेण विरोधिविषयितायां कपिसंयोगाभाववद्वृक्षविषयकत्वसामानाधिकरण्यस्य सत्त्वात्, व्यापकत्वनिवेशे नायं दोषः लक्षणेऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्यैव निश्चये निवेशनीयतया वृक्षे कपिसंयोगाभावेऽव्याप्यवृत्तित्वज्ञानस्य प्रमात्वेन तद्भ्रमानास्कन्दिताऽव्याप्यवृत्तित्वप्रमाकालीनतादृशविशिष्टविषयकनिश्चये विरोधिविषयित्वाभावात् ।

न च ज्ञानभेदेन विषयिताभेदाभावेनाव्याप्यवृत्तित्वज्ञानकालीनकपिसंयोगाभाववद्वृक्षविषयकनिश्चयेऽपि विरोधिविषयितायाः सत्त्वात् व्यापकत्वनिवेशेऽपि नातिव्याप्तिवारणं सम्भवतीति वाच्यम् । विरोधिविषयितावत्त्वमित्यनेन तदधिकरणत्वस्य विवक्षितत्वात् । तत्रैव चोभयाभावप्रयोजकत्वस्य विशेषणत्वात्, तथा च ज्ञानभेदेन विषयिताभेदाभावेऽपि तदधिकरणत्वस्य भिन्नतयाऽव्याप्यवृत्तित्वज्ञानास्कन्दितकपिसंयोगाभाववद्वृक्षविषयकनिश्चये विरोधिविषयितासत्त्वेऽपि तादृशोभयाभावप्रयोजकत्वविशिष्टविरोधिविषयिताधिकरणत्वस्याभावेनातिव्याप्तिविरहात् । अथैवमप्यसाधारण्येऽव्याप्तिः असाधारण्यविषयकत्वव्यापकत्वस्य विरोधिविषयितायामभावात् इति चेन्न । साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्ताज्ञानभिन्नत्वाऽसाधारण्यविषयकत्वोभयाभाववद्यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य विरोधिविषयितायां वक्तव्यत्वात्, तथा च तादृशहेतुमत्ताज्ञानमेवासाधारण्यविषयकमुभयाभाववद् भवति, तत्र च तादृशहेतुविषयितैव पक्षे साध्याभावव्याप्यविषयितात्वेन तादृशविरोधिविषयितेति तत्संग्रहात् । अत्र चोभयाभावप्रयोजकाधिकरणतायां विषयित्वीयत्वानुपादाने ह्रदो जलवद्ध्रदकालीनवह्निमानित्यत्र वन्ह्यभाववज्जलवत्यतिव्याप्तिः वन्ह्यभाववज्जलत्वावच्छिन्नविषयकोक्तपक्षसाध्यवैशिष्ट्यावगाहिनिश्चयस्याहार्यत्वनियमेन तद्विषयकानाहार्यनिश्चयत्वस्य तादृशोभयाभावप्रयोजकप्रकृतपक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानियतत्वात् । न च धूमव्यभिचारिवह्निधूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः यथाश्रुतविशिष्टान्तराऽघटितत्वेन न वारयितुं शक्यते मेयत्ववान् धूमाभाववान् मेयत्ववान् धूमव्यभिचारिवह्निरिति ज्ञानयोर्ज्ञानविशिष्टज्ञानत्वेन पक्षे साध्यवैशिष्ट्यावगाहिज्ञानं प्रति प्रतिबन्धकतया तादृशपक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामुभयाभावप्रयोजिकायां मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायां शुद्धव्यभिचारविषयित्वाप्रयोज्यत्वस्य सत्त्वात्, अतो विशिष्टान्तराघटितत्वघटकस्वविषयितानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वासाधारण्यविषयित्वाऽवृत्तित्वोभयाभावो निवेशनीयस्तथा च उक्तस्थले मेयत्वविशिष्टव्यभिचारविषयितानिष्ठप्रयोजकतायामुभयाभावाभावान्नातिव्याप्तिः, एवं चोक्तस्थले वन्ह्यभाववज्जलवति नातिव्याप्तिः, पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यतायाः ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपकतया वन्ह्यभाववज्जलत्वावच्छिन्नविषयितानिष्ठप्रयोजकतायामुभयाभावाभावेन विशिष्टान्तराऽघटितत्वाभावादिति वाच्यम् । कपिसंयोगाभाववान् वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तेः, तद्विषयकाऽनाहार्यनिश्चयत्वव्यापकत्वस्याऽऽहार्यमात्राऽवृत्तिपक्षे साध्यवैशिष्ट्यावगाहित्वस्य योऽभावस्तदधिकरणतायां सत्त्वात् . अधिकरणतायां विषयित्वीयत्वोपादाने च नातिव्याप्तिरिति दिक् ।

पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तविकं ग्राह्यम् ।

ननु काञ्चनमयः पर्व्वतो वन्हिमानित्यादौ पक्षतावच्छेदकविशिष्टपक्षाद्यप्रसिद्ध्या विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्यावगाहित्वाद्यप्रसिद्धिरित्याश्रयासिद्ध्यादावव्याप्तिरित्यत आह

पक्षतावच्छेदकेति । आदिपदात् साध्यतावच्छेदकवैशिष्ट्यादिपरिग्रहः । वैज्ञानिकमिति । तत्तत्प्रकारेण ज्ञायमानत्वरूपमित्यर्थः, तथा च पर्व्वतादेः काञ्चनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेऽपि तेन रूपेण ज्ञायमानत्वमादाय लक्षणसमन्वय इति भावः। न च ह्रदो न वन्हिमानित्यादिनिश्चयानन्तरं जायमाने ह्रदो द्रव्यं जलमयो वन्हिमानित्याद्याकारकसमूहालम्बने ह्रदत्वादिना ज्ञायमाने वन्ह्यादिवैशिष्ट्यावगाहित्वस्यत्वादसम्भव इति वाच्यम्। पक्षतावच्छेदकावच्छिन्ना या पक्षनिष्ठविशेष्यता तन्निरूपिता या साध्यतावच्छेदकावच्छिन्ना साध्यप्रकारता या च साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारता तत्प्रतियोगित्वयोरवगाहित्वान्तद्वयेन विवक्षणात्, विशिष्टविषयाप्रसिद्धावपि पर्व्वताद्यंशे काञ्चनमयत्वाद्यवगाहिभ्रमविषयताया व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नायाः प्रसिद्ध्या लक्षणसमन्वयात्। व्याप्तिप्रकारतास्थले च निरूप्यनिरूपकभावापन्ना व्याप्तिघटकतत्तत्पदार्थप्रकारता निवेशनीया। तेन धूमवान् वन्हेरित्यादौ वन्हिव्यापकधूमसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धावपि न क्षतिः ।

नन्वत्र व्याप्तिपदेनान्वयव्याप्तिश्चेद्विवक्ष्यते तदा व्यतिरेकव्याप्तिज्ञानविरोधिनि हेत्वादिनिष्ठाभावाप्रतियोगित्वादिरूपानुपसंहारित्वेऽव्याप्तिस्त-

मितिरत्वव्यापकत्व—यद्रूपावच्छिन्नविषयकत्वव्यापकत्वयो''रभावात्मकयो''र्भेदादिति भावः ।

विरहेऽपि अप्रसिद्धत्वेऽपि। तेन रूपेणेति। काञ्चनमयत्वादिनेति भावः। ज्ञायमानत्वमादायेति। तथा च तादृशविशिष्टस्याऽप्रसिद्धावपि तादृशज्ञानप्रसिद्ध्यैव तदीयविषयत्वमादायेत्यर्थः।पक्षतावच्छेदकविषयकत्वं ज्ञाने निविष्टमित्याशयेनाशङ्कते नचेति। ज्ञायमाने इति। ह्रदत्वादिना यत्समूहालम्बनज्ञानं तद्विषयीभूते ''जलमये'' इत्यर्थः। विवक्षणादिति । तथा च प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावस्य लक्षणघटकतया साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रकारतायां पक्षतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यतानिरूपितत्वविरहान्नासम्भव इति भावः। अत्र निर्विधेयकानुमितेरसम्भवात्सविधेयकत्वसम्पत्तये द्रव्यपदम् । जलमयत्वस्य ह्रदविशेषणत्वे तु नेष्टसिद्धिरिति मन्तव्यम् ।

व्यतिरेकव्याप्तिज्ञानविरोधिनि—व्यतिरेकव्याप्तिज्ञानविषये। हेत्वादीति। आदिना साध्यपरिग्रहः(१)। अव्याप्तिरिति । तथा च वह्निमान् प्रमेयत्वादित्यत्राऽत्यन्ताभावाऽप्रति-

(१) नन्वत्राऽऽदिना साध्यापरिग्रहो न युक्तः, अन्वयव्याप्तिनिवेशे साध्याभाववदवृत्तित्वरूपव्याप्तेरपि

व्याप्तिश्चान्वयतो व्यतिरेकतश्च ग्राह्या, तादृशावगाहित्वप्रसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्या अनन्यगतिकत्वात् ।

एवञ्च वस्तुमात्रनिश्चयानन्तरं निर्व्वह्नित्वाविशिष्टे वह्निग्रहेऽपि न क्षति-

---

ज्ज्ञानस्यान्वयव्याप्तिज्ञानाविरोधित्वात्, व्यतिरेकव्याप्तिविवक्षणे च हेतुनिष्ठसाध्याभाववद्वृत्तित्वसाध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादावव्याप्तिः, तज्ज्ञानस्य ग्राह्याभावाद्यनवगाहितया व्यतिरेकव्याप्तिज्ञानविरोधित्वे मानाभावादत आह— व्याप्तिश्चेति । अन्वयत अन्वयनिरूपिता, प्रकृतहेतुनिष्ठा साध्यनिरूपितेति यावत्, सा चात्यन्ताभावान्योन्याभावभेदेन भिन्ना अव्यभिचरितत्व-हेतुव्यापकसाध्यसामानाधिकरणरूपा नानाविधैव ग्राह्या, अतोऽत्यन्ताभावादिगर्भव्याप्तिज्ञाने अन्योन्याभावादिगर्भव्यभिचारज्ञानस्य व्यापकत्वादिज्ञाने साध्याभाववद्वृत्तिहेत्वादिज्ञानस्य ग्राह्याभावाद्यनवगाहितया अविरोधित्वेऽपि न क्षतिः । व्यतिरेकतः व्यतिरेकनिरूपिता, साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा ग्राह्या व्याप्तिपदेन विवक्षणीया, तथा च एतद्व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताप्रतियोगित्वकूटाभावो निवेशनीय इति भावः । ननु निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ पक्षतावच्छेदकाविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वमेवाप्रसिद्धमिति तत्र कथं लक्षणसमन्वय इत्यत आह तादृशावगाहित्वप्रसिद्धिरिति ।

आहार्य्यज्ञान एवेति । निर्व्वह्नित्वविशिष्टपर्व्वते वह्निप्रत्यक्षं जायतामित्याकारकेच्छाजन्यप्रत्यक्ष एवेत्यर्थः ।

विरोधिविषयिताप्रयुक्तत्वनिवेशनप्रयोजनमाह एवञ्चेति । विरोधिविषयिताप्रयुक्तत्वनिवेशे चेत्यर्थः । न क्षतिः—न निर्व्वह्निः पर्व्वतो

---

योगिप्रमेयत्वरूपाऽनुपसंहारित्वेऽव्याप्तिरित्यर्थः । तद्ज्ञानस्य—प्रमेयत्वमत्यन्ताभावाऽप्रतियोगीतिनिश्चयस्य । अन्वयव्याप्तिज्ञानाऽविरोधित्वादिति । वह्न्यभाववदवृत्तित्वादिरूपाऽन्वयव्याप्तिधीप्रतिबन्धकत्वाभावादित्यर्थः ।

व्याप्तिपदेन विवक्षणीयेति । तथा च प्रमेयत्वमत्यन्ताभावाप्रतियोगीति निश्चये

---

निवेशात्तथाऽभावांशे साध्यभाने साध्ये अभावप्रतियोगित्वभानस्य तुल्यवित्तिवेद्यत्वसिद्धतया तज्ज्ञानविरोधितया साध्येऽत्यन्ताभावाऽप्रतियोगित्वरूपाऽनुपसंहारित्वेऽव्याप्तिविरहादिति चेन्न । साध्याभाववदवृत्तित्वरूपव्याप्तिशरीरे प्रतियोगितासम्बन्धेन साध्यनिवेशादसमानप्रकारकज्ञानस्याऽविरोधितया तादृशानुपसंहारित्वसङ्ग्रहानुपपत्तेः ।

केचित्तु साध्यनिष्ठाऽभावाप्रतियोगित्वादिरूपाऽनुपसंहारित्वे इत्येव पाठः । तत्र च साध्यनिष्ठाभावप्रतियोगित्वमादिर्यस्य, तच्च तदनुपसंहारित्वं चेति विग्रहेऽतद्गुणसंविज्ञानबहुव्रीहिणा हेतुनिष्ठाभावाऽप्रतियोगित्वरूपाऽनुपसंहारित्वस्य लाभ इति वदन्ति ।

स्तस्य विरोध्यविषयकत्वात् । एवं साध्यनिश्चयोत्तरं तस्याननुमितावपि मान-सज्ञानाविरोधित्वात् ।

---

वन्हिमानित्यादौ घटादावतिव्याप्तिः । तस्य घटादिनिश्चयस्य, विरोध्य-विषयकत्वात्—स्वानन्तरोत्पन्नानुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोज-कविरोधिविषयिताकत्वविरहात् । वन्हिमत्पर्वतादिविषयकसमूहा-लम्बनात्मकघटादिनिश्चयानन्तरजातज्ञाननिष्ठतादृशोभयाभाववत्त्वस्य त-ज्ज्ञानीयविरोधिविषयिताप्रयुक्तत्वेऽपि घटादिनिश्चयाव्यवहितोत्तरा-नुमितिसामान्यान्तर्गतसमूहालम्बनात्मकघटादिनिश्चयाव्यवहितोत्तरा-नुमितेर्विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वविरहान्नातिव्याप्तिरिति भावः । प्रयोज्यप्रयोजकभावश्चानुभवसिद्धः स्वरूपसम्बन्धविशेषः । विरोधिपद-प्रयोजनमाह एवमिति । अननुमितावपीति । न क्षतिः, तस्य विरोध्यवि-षयत्वादित्यनुषज्यते । न क्षतिः—न साध्यवत्पक्षेऽतिव्याप्तिः ।

विरोधिविषयितापदेन तादृशोभयाभावप्रतियोगितावच्छेदककोटौ य-द्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्न-विषयितानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयितायाः "सा-ध्यविशिष्टपक्षविषयता" साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्ष-

---

वत्त्वयभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानप्रतिबन्धात्लक्षणसमन्वय इति भावः । विरोधिविषयिताकत्वविरहादिति । ग्राह्याऽभाव—तद्व्याप्यावगाहित्वरूपवि-रोधिविषयिताया एव प्रकृते निवेशादिति भावः ।

ननु विषयिताया विरोधित्वं यदि प्रतिबन्धकतावच्छेदकत्वं तदा निर्वन्हिमानित्यादौ घटत्वाभावविशिष्टभूतलादेरपि दोषत्वापत्तिः, तन्निश्चयनिष्ठविषयिताया अपि घटवद्भूतलमि-त्यादिधीप्रतिबन्धकतावच्छेदकत्वात्, एवं पर्वतान्यः पर्वतो वन्हिमानित्यादौ पर्वतान्यत्वा-भावविशिष्टपर्वतादिरूपाश्रयासिद्धावव्याप्तिः, तद्विषयितायाः कुत्रापि बुद्धौ प्रतिबन्धकतानव-च्छेदकत्वात्, पर्वतः पर्वतान्य इत्याकारकबुद्धेराहार्यत्वेनाऽप्रतिबध्यत्वादित्यत आह विरो-धिविषयितापदेनेति। तादृशोभयाभावेति । पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्य-हेतुवैशिष्ट्यावगाहित्वोभयाभावेत्यर्थः । तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपाव-च्छिन्नाभावतद्व्याप्यान्यतरविषयिताया इति । तद्रूपावच्छिन्नविषयितानिरूपिता या तद्रूपावच्छिन्नाभावत्वावच्छिन्ना विषयिता तद्रूपावच्छिन्नाभावव्याप्यत्वावच्छिन्ना विषयिता एत-दन्यतरस्या इत्यर्थः ।

अनुगमस्तु—निरुक्तोभयाभावप्रतियोगितावच्छेदकीभूतविशेष्यताविशिष्टप्रकारतावत्त्वं वि-रोधिविषयत्वम् । वै० स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व—स्वावच्छेदकावच्छिन्नवि-शेष्यतानिरूपितप्रकारतावच्छेदकधर्मवत्त्वोभयसंबन्धेन । धर्मवत्ता च स्वावच्छिन्नत्वस्वाव-च्छिन्नव्याप्यत्वावच्छिन्नत्वान्यतरसंबन्धेन ।

नन्वेवमपि पर्वतो वन्ह्यभाववानित्यादौ वन्हिमत्पर्वतरूपबाधेऽव्याप्तिः, पर्वतत्वावच्छिन्नविषयितानिरूपितवन्हित्वावच्छिन्नविषयितायास्तादृशविरोधित्वाभावात्, वन्ह्यभावाभावत्वावच्छिन्नविषयिताया एव तथात्वात् इति चेन्न। यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नविषयितानिरूपित(१)तद्रूपावच्छिन्नात्मकाभावप्रतियोगितावच्छेदकावच्छिन्नतद्व्याप्यान्यतरविषयिताया विवक्षणान्नोक्ताऽव्याप्तिः, पर्वते वन्हिविषयताया अपि तादृशत्वात्(२)।

---

(१) वन्ह्यभाववद्ह्रदकालीनो वन्ह्यभावव्याप्यवद्ह्रदकालीनो वा पर्वतो वह्निमानित्यादौ सिद्धिविषयवह्निमत्पर्वतेऽतिव्याप्तिवारणाय निरूपितान्तम्। वन्ह्यभाववत्पाषाणमयकालीनपर्वतो वह्निमानित्यादौ सिद्धिविषयवारणाय तत्र तद्रूपावच्छिन्नेति। तद्रूपपर्याप्तावच्छेदकताकेति तदर्थः। तेन वन्ह्यभाववत्पर्वतकालीनपर्वतो वह्निमानित्यादौ सिद्धिविषये नातिव्याप्तिः। तद्रूपावच्छिन्नाभावनिष्ठविषयतानिवेशे पर्वतो वह्निमान् द्रव्याभावादित्यादौ सिद्धिविषयेऽतिव्याप्तिरतस्तद्रूपावच्छिन्नाभावत्वावच्छिन्नविषयतानिवेशः। एवं तादृशाभावव्याप्यनिष्ठविषयतानिवेशे शैवालसाध्यके वह्निहेतुके सिद्धिविषयेऽतिव्याप्तिरतस्तादृशव्याप्यत्वावच्छिन्नविषयतानिवेशः।

पक्षधर्मिकहेतुमत्ताज्ञानकालीनज्ञानीयहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्यव्यापकीभूताभावप्रतियोगित्वत्वावच्छिन्नविषयता पृथगेव निवेश्या, तेन नाऽसाधारण्यासङ्गहः।

(२) ननु ह्रदो वन्ह्यभाववान् द्रव्यादित्यत्र सिद्धिविषयेऽतिव्याप्तिः, तत्र वन्ह्यभावाभावस्य वह्निरूपद्रव्यात्मकतया वन्ह्यभावत्वस्य द्रव्यत्वावच्छिन्नात्मकाभावप्रतियोगितावच्छेदकतया तादृशोभयाभावप्रतियोगितावच्छेदककुक्षौ ह्रदत्वावच्छिन्नांशे द्रव्यत्वावच्छिन्नवैशिष्ट्यावगाहित्वस्य निविष्टतया ह्रदत्वावच्छिन्नविषयितानिरूपितवन्ह्यभावत्वावच्छिन्नविषयिताया निरुक्तविरोधिविषयितारूपत्वात्। न च यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नावगाहित्वं निविष्टं तद्धर्मावच्छिन्नविषयतानिरूपिततद्धर्मसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्न–तद्व्याप्यान्यतरविषयिता विवक्षणीया, तथाच वन्ह्यभावत्वत्र धूमजनकतेजस्त्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतानिरूपकतावच्छेदकामिति तादृशविषयितायां विरोधिविषयितात्वाभावान्नोक्तातिव्याप्तिरिति वाच्यम्। पर्वते संयोगेन वह्नेः साधने कालिकसम्बन्धावच्छिन्नवन्ह्यभावस्य हेतुत्वे सिद्धिविषयेऽतिव्याप्तेः पर्वतत्वावच्छिन्ने वन्ह्यभावत्वावच्छिन्नवैशिष्ट्यावगाहित्वस्योभयाभावप्रतियोगितावच्छेदककोटौ प्रविष्टतया वन्हित्वस्य वन्ह्यभावत्वसमानियतानुयोगितानिरूपितप्रतियोगितावच्छेदकतया तादृशप्रतिबन्धकतावच्छेदकविषयतानिरूपकतातावच्छेदकतया च पर्वतत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयिताया विरोधिविषयतारूपत्वादिति चेन्न। तादृशोभयाभावीयप्रतियोगितानिरूपितावच्छेदकताश्रयविषयताविशिष्टा या विषयता तादृशविषयताविशिष्टविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतान्यतरविषयतायास्तथाविधत्वात्, विषयितायां विषयतावैशिष्ट्यञ्च स्वाधिकरणत्व—स्वाधिकरणत्वान्यतरसम्बन्धेन, तत्र प्रथमस्वाधिकरणत्वं स्वविशिष्टविशेष्यतावच्छेदकावच्छिन्नत्व—स्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन, विशेष्यतायां स्ववैशिष्ट्यञ्च स्वनिरूपितत्व—स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन, भेदप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धः—स्वनिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वरूपः, प्रकारतायां स्ववैशिष्ट्यञ्च स्वाश्रयत्व—स्ववत्त्वान्यतरसम्बन्धेन, स्वाश्रयत्वञ्च स्वविशिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतावच्छेद्यत्वस्वावच्छेदकरूपावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववृत्तिस्वाश्रयसामान्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिष्ठयत्किञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नविषयतानिरूपितत्वोभयसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यञ्च स्वावच्छेदकरूपावच्छिन्नत्व—स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, स्ववत्त्वं च स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतावत्त्वसम्बन्धेन, तादृशविषयतावत्ता च स्वनिरूपितप्रकारतावच्छेदक-

तावच्छेदकावच्छिन्नविशेष्यता"बहिर्भूतविषयतायां वा विवक्षितत्वादिति भावः। न च सिषाधयिषाधीनायां साध्यनिश्चयानन्तरं समूहालम्बनानुमितौ तादृशोभयाभावासत्त्वात् सिद्धिविषयेऽतिप्रसङ्ग एव नास्ति, एवं पक्षे साध्यनिश्चयोत्तरं तदतिरिक्ताविषयकसाध्यविषयकानुमितेरनुत्पादेऽपि पक्षांशे साध्यांशे वाऽधिकावगाहिन्या अनुमितेः साध्यधर्मितावच्छेदककान्यविधेयकानुमितेः साध्यावच्छिन्नपक्षविधेयकानुमितेश्चोत्पत्त्या तत्रोभयाभावासत्त्वादपि नातिप्रसक्तिरिति वाच्यम्। यत्र विषयविशेषे सिषाधयिषाबलात् सिद्ध्युत्तरं तादृशानुमितिः कदापि न जाता तत्रैवातिव्याप्तिसम्भवात्। द्वितीयकल्पे विषयितामात्रं निवेश्यं न तु विरोधिविषयितापर्य्यन्तमित्याशयेनाह मानसज्ञान इति। साध्यनिश्चयस्येत्यादिः।

---

पूर्वकल्पे विपरीतबाधादावव्याप्तिः, एवं घटः पृथिवीभिन्न इत्यादौ स्वरूपतः पृथिवीत्वघटितबाधेऽव्याप्तिः, तद्विषयितायाः पृथिवीभेदत्वावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितत्वाभावादतः कल्पान्तरमाह—साध्यवत्पक्षविशेष्यताबहिर्भूतेति। पर्वतो वह्निमान् द्रव्याभावादित्यादौ स्वरूपासिद्धिविषयताया विरोधित्वनिर्वाहाय प्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशः। तच्च साध्यतावच्छेदकपर्य्याप्तावच्छेदकताकत्वम्, तेन महानसं वह्नि-

---

धूमावच्छिन्नत्वस्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धनिष्ठाकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वोभयसम्बन्धेन, द्वितीयस्वाधिकरणत्वञ्च स्वनिरूपिताकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व-स्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन, स्ववैशिष्ट्यञ्च स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकाविषयतावत्त्व-स्वाश्रयात्वान्यतरसम्बन्धेन, सांसर्गिकविषयतावत्त्वञ्च स्वनिरूपितप्रकारतावच्छेदकरूपावच्छिन्नत्व-स्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, स्वाश्रयत्वञ्च स्वविशिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतावच्छेद्यत्व-स्वनिरूपितसंसर्गतावच्छेदकेतरधर्मानवच्छिन्नसंसर्गनिष्ठावच्छेदकताकस्वावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववृत्तित्वाश्रयसामान्यानिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यञ्च स्वावच्छेदकरूपावच्छिन्नत्व-स्वनिरूपितसंसर्गतानवच्छेदकेतरधर्मानवच्छिन्नसंसर्गनिष्ठावच्छेदकताकप्रतियोगित्वसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति। साध्यवदवृत्तिमत्पक्षस्य बाधत्वे तु स्वाधिकरणत्वत्रयान्यतमसम्बन्धेन विषयतावैशिष्ट्यं विवक्षणीयं, तत्र तृतीयस्वाधिकरणत्वं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व-स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वाभावावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन बोध्यम्।

ननु विरोधिविषयिताया एतादृशत्वे असाधारण्येऽव्याप्तिः, असाधारण्यविषयकनिश्चयोत्तरानुमितिनिष्ठोभयाभावाधिकरणतायां विरोधिविषयताप्रयुक्तत्वाभावात् असाधारण्यविषयितायामुक्तविरोधिविषयितात्वाभावादिति चेन्न।

लक्षणघटकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वघटितोभयाभावमनिवेश्य पक्षधर्मिकसाध्यव्यापकीभूताभावप्रतियोगिहेतुमत्ताज्ञानभिन्नत्वासाधारण्यविषयकत्वोभयाभावस्य निवेशनीयतया असाधारण्यविषयकनिश्चयस्य पक्षे तादृशहेत्ववगाहिन एवोभयाभाववत्तया तादृशनिश्चयमादायैवासाधारण्यलक्षणसमन्वयस्य कर्तव्यतया तत्र च विषयताविशिष्टविषयताविरहेऽपि विषयताविशिष्टविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतारूपविरोधिविषयतायाः सत्त्वात् तत्प्रयुक्तत्वाच्च तादृशोभयाभावाधिकरणताय नाव्याप्तिरिति दिक्।

**अत्र प्रमेयत्वविशिष्टव्यभिचारादिवारणाय यथाश्रुतविशिष्टान्तराघटितत्वनिवेशे उपदर्शितव्यभिचारघटितबाधाद्यव्याप्तेः, विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपं तादृशविशेषणं निवेशनीयम् । प्रमेयत्वविशिष्टव्यभिचारादिविषयिताप्रयोज्याया उक्तोभयाभावप्रयोजकव्याप्त्याद्यवगाहित्वाभाववत्तायाः शुद्धव्यभिचारादिविषयिताप्रयोज्यत्वानियमेन प्रमेयत्वविशिष्टव्यभि-**

---

मन्मह्रानसीयवन्ह्यभावादित्यादौ स्वरूपासिद्धिविषयताया न विरोधिविषयतात्वानुपपत्तिः । द्रव्यं वह्निमद् वन्ह्यभावविशिष्टपर्वतादित्यादौ साधनाऽप्रसिद्धिविषयतायां विरोधिविषयतात्वोपपत्तये विशेष्यतायां पक्षतावच्छेदकावच्छिन्नत्वनिवेशः । तच्च पक्षतावच्छेदकपर्याप्तावच्छेदकताकत्वम्, तेन वृत्तित्वं घटवृत्ति घटादित्यादौ घटवृत्तित्वाभाववद्वृत्तित्वं घटवृत्तीत्याकारकव्यभिचारज्ञानीयविषयताया न विरोधित्वानुपपत्तिः ।

यद्यपि तादृशविशेष्यताभिन्नत्वं न तादृशविशेष्यताबहिर्भूतत्वम्, पर्वतो वह्निमानिति ज्ञानीयप्रकारतायास्तादृशविशेष्यताभिन्नत्वात्सिद्धिविषयेऽतिव्याप्तिः । तथापि तादृशविशेष्यतावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वमेव तादृशविशेष्यताबहिर्भूतत्वम् । साध्यवत्पक्षवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वं वा तत् ।

नन्वत्र पर्वतो वह्निमान् वन्ह्यभावादित्यत्र स्वरूपाऽसिद्धावव्याप्तिः, तद्विषयितायाः साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताबहिर्भूतत्वाभावादिति चेन्न ।

विषयतायां साध्यवत्पक्षविषयतावहिर्भूतत्वमनिवेश्य विषयतानिष्ठप्रयोजकतायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितसाध्यवत्पक्षविषयतानिष्ठप्रयोजकताभिन्नत्वस्य निवेशेनैवोक्ताव्याप्तिविरहा(१)दिति ।

अत्र—उभयाभावघटितलक्षणे । **प्रमेयत्वविशिष्टव्यभिचारादिवारणायेति ।** मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणायेत्यर्थः । आदिना मेयत्वविशिष्टबाधादेः सङ्ग्रहः । **यथाश्रुतविशिष्टान्तराऽघटितत्वनिवेशे इति ।** यद्रूपावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये उभयाभाव इत्यत्र यद्रूपे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशे इत्यर्थः । **उपदर्शितेति ।** धूमाभाववद्धूमव्यभिचारिवह्निमदात्मकेत्यर्थः ।

मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय **विशिष्टान्तरविषयित्वाऽप्रयोज्येति ।** स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्यद्रूपं तत्तद्रूपावच्छिन्नविषयित्वाऽप्रयो-

---

(१) ननु पर्वतः प्रमेयवह्निमान् वन्ह्यभावादित्यादौ साध्यवत्पक्षेऽतिव्याप्तिः, पक्षे साध्यावगाहित्वाभावाधिकरणतामादाय विशेष्यदलस्य, पक्षे हेत्ववगाहित्वाभावाधिकरणतामादाय विशिष्टान्तराऽघटितत्वस्य च सत्त्वादिति चेन्न । विरोधिविषयतानिष्ठप्रयोजकताया विशिष्टान्तराघटितत्वघटकस्वविषयितानिष्ठप्रयोजकतायाश्चैकरूपावच्छिन्नत्वविवक्षणात् ।

**चारादौ न विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यानिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वमिति नातिप्रसङ्गः । उपदर्शितव्यभिचारादिघटितबाधादिविषयिताप्रयोज्यायाः पक्षे साध्यावगाहित्वाद्यभावाधिकरणतायास्तद्घटकव्यभिचारादिविषयित्वाप्रयोज्यतया तत्संग्रहः ।**

---

ज्येति तदर्थः । तेन मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायामधिकरणतायां तादृशयत्किञ्चिद्बाधादिविषयिताप्रयोज्यत्वाभावसत्त्वेऽपि नाऽतिव्याप्तिः । "उभयाभावप्रयोजकाभावाधिकरणतायां" विशिष्टान्तरविषयित्वाप्रयोज्यत्वमात्रोक्तौ यत्र घटानुमित्यव्यवहितपूर्वं वन्ह्यनुमितिसामग्री नास्ति बाधनिश्चयोऽपि नास्ति तत्र घटानुमितिनिष्ठोभयाभावप्रयोजकाऽभावाऽधिकरणतायां ह्रदधर्मिकवन्ह्यनुमितिसामग्र्यभावमात्रप्रयोज्यायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वसत्त्वात्तदधिकरणताकं यत्त्वं मेयत्वविशिष्टवन्ह्यभाववद्ह्रदत्वं तद्वत्त्वस्य मेयत्वविशिष्टवन्ह्यभाववद्ह्रदे सत्त्वादतिव्याप्तिः, एवं पर्वतो धूमवान् वह्नेरित्यत्र सामानाधिकरण्येन धूमस्य साध्यतायां मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, निरुक्तोभयाऽभावप्रयोजक—पक्षे साध्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वसत्त्वात्, अतः **स्वविषयिताप्रयोज्येति** । स्वावच्छिन्नविषयिताप्रयोज्येति तदर्थः । तथाचाऽनुमितिसामाग्र्यभावमात्रप्रयोज्यायां तादृशाधिकरणतायां मेयत्वविशिष्टवन्ह्यभाववद्ह्रदविषयिताप्रयोज्यत्वविरहात्स्वपदेन मेयत्वविशिष्टवन्ह्यभाववद्ह्रदोपादानाऽसम्भवान्नातिव्याप्तिः । एवं पक्षे साध्यावगाहित्वाभावाधिकरणतायां मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वविरहान्नातिव्याप्तिः ।

एतेन विषयिताप्रयोज्यत्वमेव निवेश्यताम्, अनुमितिसामग्र्यभावमात्रप्रयोज्यतादृशाधिकरणतायां विषयिताप्रयोज्यत्वविरहेणाऽतिप्रसंगविरहादिति निरस्तम् । पक्षे साध्यावगाहित्वाभावाधिकरणतायां धूमाभाववान् पर्वत इति बाधप्रमीयविषयिताप्रयोज्यत्वसत्त्वात्, बाधाऽप्रसिद्ध्या तादृशबाधत्वस्य निरुक्तविशिष्टान्तरत्वाऽसम्भवात् । स्वविषयिताप्रयोज्यत्वनिवेशे बाधप्रमीयविषयिताप्रयोज्यायां पक्षे साध्यावगाहित्वाभावाधिकरणतायां मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वविरहेणाऽतिव्याप्तेरभावात् ।

नन्वेवमपि धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमव्यभिचारिवह्निमति अतिव्याप्तिः, तद्विषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये उभयाभावसत्त्वात्, तादृशोभयाभावप्रयोजक-पक्षे साध्यावगाहित्वाभावाधिकरणतायां धूमाभाववान् धूमव्यभिचारिवह्निमानिति बाधज्ञानीयस्वविषयिताप्रयोज्यत्वस्य बाधत्वस्य विशिष्टान्तरत्वाऽसम्भवेन व्यभिचारत्वस्यैव विशिष्टान्तरतावच्छेदकत्वेन तदप्रयोज्यत्वस्य च सत्त्वादिति चेन्न ।

स्वविषयिताप्रयोज्यत्वपदेन स्वविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्य विवक्षणात् ।

न च धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयताप्रयोज्यायां मेयत्ववान् धूमाभाववान् धूमव्यभिचारिवह्निश्च मेयत्ववानिति ज्ञानोत्तरानुमितिनिष्ठायां प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याभावाधिकरणतायां मेयत्वावच्छेदेन धूमाभावाप्रसिद्ध्या विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वसत्त्वेन मेयत्वविशिष्टधू-

मव्यभिचारिवन्ह्यादावतिव्याप्तितादवस्थ्यात् , यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्ता यदभावाधिकरणताप्रयुक्तोभयाभावाधिकरणता स्वविषयताप्रयोज्यविशिष्टान्तरविषयत्वाप्रयोज्यतदभावाधिकरणताकत्वमेव विवक्षणीयम् , तथाच मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयकनिश्चयोत्तरानुमितिसामान्ये प्रकृतपक्षे प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयुक्तत्वं निरुक्तोभयाभावे, मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयताप्रयोज्यायां तादृशाभावाधिकरणतायां व्यभिचारिविषयताप्रयोज्यत्वनियमाच्च निरुक्तस्थले मेयत्वविशिष्टधूमव्यभिचारिवन्ह्यादावतिव्याप्तिः ।

एवं च पर्वतो धूमवान् वह्नेरित्यादौ पर्वतत्वावच्छेदेन धूमाभाववत्तानिश्चयोत्तरानुमितिनिष्ठ—पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायाः विशिष्टान्तरविषयित्वाप्रयोज्यत्वेऽपि न मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयकनिश्चयोत्तरानुमितित्वव्यापकः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याभावाधिकरणताप्रयुक्तोभयाभावो भवति, किन्तु प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयुक्त एव, तस्यां च विषयताप्रयोज्यायां न विशिष्टान्तरविषयित्वाप्रयोज्यत्वमिति मेयत्वविशिष्टधूमव्यभिचारिवन्ह्यावतिव्याप्तिविरहात् कथं स्वपदोपादानमिति वाच्यम् ।

एवमपि पर्वतो वन्ह्यभाववान् ह्रदश्च पर्वत इति ज्ञानोत्तरानुमितिनिष्ठा या प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता भ्रमीयविषयतामात्रप्रयोज्या तस्याः विशिष्टान्तरविषयित्वाप्रयोज्यत्वात ह्रदो वह्निमान् धूमादित्यत्र मेयत्वविशिष्टवन्ह्यभाववद्ह्रदेऽतिव्याप्तिरतः केवलविषयताप्रयोज्यत्वमनिवेश्य स्वविषयताप्रयोज्यत्वनिवेशः ।

न च विशिष्टान्तरविषयित्वाप्रयोज्य—स्वविषयिताप्रयोज्ययत्किञ्चिदभावाधिकरणताकत्वमेवोच्यतां किं निरुक्तोभयाभावप्रयोजकत्वनिवेशनेति वाच्यम् । एवंसति व्यभिचारे मेयत्ववैशिष्ट्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वस्य च सत्वेन मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तेः ।

न च तथापि तादृशोभयाभावप्रयोजकाधिकरणताकत्वमेव विवक्ष्यतां किमभावपदोपादानेनेति वाच्यम् । मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तेः । तादृशोभयाभावप्रयोजकमेयत्वविशिष्टव्यभिचारविषयकस्मृतिमेयत्वविशिष्टव्यभिचारविषयित्वाधिकरणतायाः पूर्वानुभवीय"संस्कारीय"मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वात, कार्यतावच्छेदकविषयितायाः कारणतावच्छेदकविषयिताप्रयोज्यत्वनियमात् शुद्धव्यभिचारविषयकसंस्कारेण तादृशस्मृत्यजननेन विशिष्टान्तरविषयित्वाप्रयोज्यत्वाच्च स्वपदेन मेयत्वविशिष्टव्यभिचारत्वस्योपादानसम्भवात् । अभावपदोपादाने चाऽभावाधिकरणतात्वेन प्रयोजकतालाभाच्च दोषः(१) ।

---

(१) केचित्तु ह्रदो वह्निमान् धूमादित्यत्र मेयत्वव्याप्यविशिष्टवन्ह्यभाववद्ह्रदेऽतिव्याप्तिः, वन्ह्यभाववद्ह्रदो मेयत्वव्याप्यवानिति परामर्शीया या विषयता तत्प्रयोज्यत्वस्य वन्ह्यभाववद्ह्रदः प्रमेयत्ववानित्यनुमितिनिरूपिततया वन्ह्यभाववद्ह्रदविषयतायाः प्रतिबन्धकतावच्छेदकीभूतविषयतात्वेनोभयाभावप्रयोजिकायाः सत्वेन विशिष्टान्तरविषयित्वाप्रयोज्यत्वेन च तद्विषयताधिकरणताकत्वस्य मेयत्वव्याप्यविशिष्टवन्ह्यभाववद्ह्रदे सत्वात् । न च यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्ना या विरोधिविषयतानिष्ठप्रयोजकता तन्निरूपितप्रयोज्यताविशिष्टोभयाभावाधिकरणताकत्वं तद्रूपत्वमेव लक्षणम् ।

विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यताहशोभयाभावाधिकरणताकत्वमात्रोक्तौ व्यभिचारघटितबाधेऽव्याप्तिः, बाधविषयिताप्रयोज्यायां पक्षधर्मिकनिरुक्तोभयाभावाधिकरणतायां व्यभिचाररूपविशिष्टान्तरविषयिताप्रयोज्यत्वनियमादत उभयाभावप्रयोजकीभूताभावा-

एवं च मेयत्वविशिष्टव्यभिचारवारणं सम्भवति । तथा हि मेयत्वविशिष्टव्यभिचारविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठोभयाभावाधिकरणतायाः विशिष्टान्तरव्यभिचारविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यतया न विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वम् । एवं च विशिष्टान्तराऽघटितत्वविशेषो व्यर्थ एव, किन्तु विरोधिविषयितायां मुख्यविशेष्यतात्मकत्वं अवश्यं निवेशनीयम्, अन्यथा व्यभिचारविषयतायाः धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयतात्वेन वह्नित्वावच्छिन्नविषयतानिरूपितधूमाभाववद्वृत्तित्वप्रकारताया अपि वह्नित्वावच्छिन्नविशेष्यतानिरूपितधूमाभाववद्वृत्तित्वप्रकारतात्वेन प्रयोजकतया तादृशप्रकारतात्वस्य विशिष्टान्तरविषयतात्वव्यापकत्वाविरहात् । तादृशप्रकारतानिष्ठप्रयोजकतायाः विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नतया तादृशप्रकारतानिष्ठप्रयोजकतानिरूपितप्रयोज्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयकनिश्चयोत्तरानुमितिनिष्ठोभयाभावाधिकरणतायां सत्त्वेन मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरिति वाच्यम् । यत्र ह्रदत्वावच्छेदेन वह्निः साध्यता तत्र ह्रदत्वव्यापकत्वविशिष्टवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभाववद्ह्रदस्य दोषत्वम्, एवं केवलस्वरूपसम्बन्धेन वह्न्यभाववद्ह्रदस्यापि दोषत्वम् । तत्र ह्रदत्वावच्छेदेन वन्ह्यभावेऽव्याप्तिः । तथाहि ह्रदत्वावच्छेदेन वन्ह्यभावावगाहिनिश्चयोत्तरानुमितिनिष्ठह्रदत्वावच्छेदेन वन्ह्यभावावगाहित्वघटितोभयाभावाधिकरणतायां ह्रदत्वावच्छेदेन वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वरूपसम्बन्धावच्छिन्नवन्ह्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतात्वेन रूपेणैव ह्रदत्वव्यापकवन्ह्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नवन्ह्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतायाः प्रयोजकतेति तादृशाभावाधिकरणतायां विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्यासम्भवः ।

एवं घटो गुणसामान्याभाव–विशेषगुणाभावोभयवानित्यत्र विशेषगुणवद्घटो बाधः–गुणवद्घटोऽपि बाधः, तत्रानुमितौ विशेषगुणाभावप्रकारकबुद्धित्वावच्छिन्ना एका प्रतिबध्यता, अपरा च गुणसामान्याभावत्वावच्छिन्नप्रकारकबुद्धित्वावच्छिन्ना प्रतिबध्यता, तथाच तादृशप्रतिबध्यताभेदेन प्रतिबन्धकतापि गुणवद्घटविषयकनिश्चये विशेषगुणवद्घटविषयकनिश्चये च भिन्ना । तत्र विशेषगुणवद्घटेऽव्याप्तिः विशेषगुणवद्घटविषयकनिश्चयोत्तरानुमितिसामान्ये या तादृशोभयाभावाधिकरणता तस्यां गुणवद्घटरूपविशिष्टान्तरविषयतात्वव्यापकरूपात्मकगुणत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयतात्वेनैकरूपेण अवच्छिन्ना या प्रयोजकता तन्निरूपितप्रयोज्यत्वमेव स्वीक्रियते, न तु विशेषगुणत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयतात्वेनावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वान्तरमपि गौरवात्, तथा च विशेषगुणवद्घटविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठोभयाभावाधिकरणतायां न विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वसम्भवः । अभावपदोपादाने च ह्रदत्वावच्छेदेन वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजिका यथा ह्रदत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणता तथा ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगत्वावच्छिन्नसंसर्गतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वसामान्याभावाधिकरणतापि, एवं विशेषगुणाभाव—गुणसामान्याभावोभयवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजिका यथा घटविशेष्यकगुणाभावप्रकारकत्वसामान्याभावाधिकरणता तथा घटविशेष्यकविशेषगुणाभावप्रकारकत्वसामान्याभावाधिकरणतापि तयोश्च प्रत्येकं ह्रदत्वसामानाधिकरण्येन वह्न्यभावरूपविशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्व–ह्रदत्वावच्छेदेन वह्न्यभावविषयताप्रयोज्यत्वोभयोः, एवं गुणवद्घटरूपविशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वविशेषगुणवद्घटरूपस्वविषयताप्रयोज्यत्वयोः सत्त्वादुक्तस्थले ह्रदत्वावच्छेदेन वह्न्यभाववद्रूपबाधे विशेषगुणवद्घटरूपबाधे च नाव्याप्तिः ।

न च विशिष्टपक्षे विशिष्टसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदिकाया-स्तादृशबाधादिविषयतान्तःपातिव्यभिचारादिविषयिताया अपि तादृश-बाधादिविषयिताप्रयोज्यायां विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहि-त्वाभावाधिकरणतायां प्रयोजकतया तादृशबाधादेर्दुःसंग्रह इति वाच्यम् । यत्किञ्चिद्विशिष्टान्तराविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यतानिवेशे-न तत्संग्रहसम्भवात्, व्यभिचारादिविषयिताया बाधविषयतान्तःपाति-विषयितामात्रवृत्तिरूपेणैव उपदर्शितसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेद-कतया तेनैव रूपेण तादृशसाध्यावगाहिताविरहवत्ताप्रयोजकत्वात्तादृशस्य

---

धिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वनिवेशः, तथा चोभयाभावप्रयोजकीभूता या प्र-कृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्यां व्यभिचाररूपविशिष्टान्तरविष-यित्वाप्रयोज्यत्वसत्त्वान्नाव्याप्तिरित्यग्रे व्यक्तीभविष्यति ।

व्यभिचारघटितबाधेऽव्याप्तिमाशङ्कते **नचेति । विशिष्टपक्षे विशिष्टसाध्यव-त्ताग्रहेति** । धूमव्यभिचारिवह्निमान् धूमवानितिग्रहेत्यर्थः । तादृशग्रहत्वव्यापकप्रतिबध्यता-निरूपितेति यावत् । तथाच तादृशग्रहं प्रति धूमव्यभिचारिवह्निमान् धूमाभाववानितिबाधनिश्च-यियविषयिताया इव तद्घटकव्यभिचारविषयिताया अपि प्रतिबन्धकतवच्छेदकतया(१) पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां बाधविषयिताप्रयोज्यत्वस्य सत्त्वेऽपि तद्घटक-व्यभिचाररूपविशिष्टान्तरविषयित्वाप्रयोज्यत्वविरहेण स्वपदेन व्यभिचारघटितबाधधारणाऽस-म्भवेनाऽव्याप्तिरित्याह **तादृशबाधादिविषयितान्तःपातीति** । धूमभाववद्धूमव्यभि-चारिवह्निमद्रूपबाधविषयितान्तर्गतेत्यर्थः । **तादृशबाधादेरिति** । व्यभिचारघटितबाधादेरित्यर्थः

अथ ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ह्रदादिरूपदोषविषयिताप्रयोज्योभयाभाव-प्रयोजकीभूताभावाधिकरणतायां वह्न्यभावादिरूपविशिष्टान्तरविषयिताया अपि बाधविषयिता-न्तःपातिविषयितात्वेन प्रयोजकतया विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशा-धिकरणताकत्वाभावादसम्भव एव वक्तुमुचित इति चेन्न ।

विशिष्टान्तरविषयितायां यद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापको विरो-धिविषयिताप्रयुक्तोभयाभावः तद्रूपावच्छिन्नत्वं निवेश्यम्, एवं च वन्ह्यभावादिविषयिताया अतथात्वान्नाऽसम्भवः, तथाहि वन्ह्यभावविषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभाव विरहाद् विशिष्टान्तरपदेन केवलवन्ह्यभावस्य धर्तुमशक्यत्वात् । व्यभिचारघटितबाधस्थले धूमव्यभिचारिवह्नित्वावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिसामान्येऽपि तादृशोभयाभावस-त्त्वात् व्यभिचारविषयिता तादृश्येवेत्यव्याप्त्यभिधानसङ्गतिरिति ।

**यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकेति । तत्सङ्ग्रहसम्भवादिति ।** व्यभिचारघटितबाधदिसङ्ग्रहसम्भवादित्यर्थः । उक्तबाधेऽव्याप्तिं वारयति **व्यभिचारादि-विषयिताया इति । तेनैव रूपेणेति ।** तादृशबाधविषयितान्तःपातिव्यभिचारविषयि-

---

(१) निरूप्यनिरूपकभावापन्नविषयितात्वेन प्रतिबन्धकतावच्छेदकतया व्यभिचारघटितबाधादिविष-यितान्तःपातिव्यभिचारादिविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वात् ।

च रूपस्य बाधादिविषयतानन्तःपातिव्यभिचारादिविषयतासाधारणव्यभिचारादिरूपाविशिष्टविषयतात्वाव्यापकत्वात्तद्व्यापकरूपावच्छिन्नाप्रयोज्यत्वस्य उक्तबाधादिविषयिताप्रयुक्तसाध्याद्यवगाहित्वाभाववत्तायामक्षतत्वात् ।

मेयत्वविशिष्टव्यभिचारादिविषयितायाः येन रूपेण व्याप्त्यादिग्रहप्रतिबन्धकतावच्छेदकता तद्रूपेण निरुक्तविषयतात्वव्यापकेन मेयत्वविशिष्टव्यभिचारादिविषयतान्तःपातिव्यभिचारादिविषयतात्वेन मेयत्वविशिष्टव्यभिचारादिविषयताप्रयोज्यस्याप्त्याद्यवगाहित्वाभाववत्तायां नियमतः प्रयोजकत्वान्नातिप्रसङ्गावकाशः ।

---

तात्वेनैव रूपेणेत्यर्थः । **तादृशस्य च रूपस्येति** । तादृशबाधविषयितान्तःपातिव्यभिचारविषयितात्वस्येत्यर्थः । **अव्यापकत्वादिति** । तथा च बाधविषयितान्तःपातिव्यभिचारविषयितात्वं न विशिष्टान्तरव्यभिचारविषयितात्वव्यापकं, केवलधूमव्यभिचारिवह्निरितिज्ञानीयविषयितायां बाधविषयितान्तःपातिव्यभिचारविषयितात्वविरहात् , किन्तु धूमव्यभिचारिवह्नित्वावच्छिन्नविषयितात्वं, तादृशरूपं न धूमव्यभिचारिवह्न्यवच्छिन्नधर्मिकधूमप्रकारकग्रहप्रतिबन्धकतावच्छेदकमिति न तादृशरूपेण व्यभिचारविषयितायाः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वम् , येन रूपेण विषयितायाः यादृशरूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं तेन रूपेण स्वविषयितायाः तादृशविषयितात्वावच्छिन्नाभावाधिकरणताप्रयोजकत्वात् । **तद्व्यापकरूपावच्छिन्नाप्रयोज्यत्वस्येति** । व्यभिचारादिरूपविशिष्टान्तरविषयितात्वव्यापकं यच्छुद्धव्यभिचारविषयितात्वं तदवच्छिन्नाऽप्रयोज्यत्वस्येत्यर्थः । **अक्षतत्वादिति** । तथाच नाव्याप्तिरिति भावः ।

मेयत्वविशिष्टव्यभिचारेऽपि नातिव्याप्तिरित्याह **मेयत्वविशिष्टव्यभिचारविषयितायाः इति** । **येन रूपेण**—व्यभिचारविषयितात्वेन रूपेण । **तद्रूपेण**—व्यभिचारविषयितात्वेन । **निरुक्तविषयितात्वव्यापकेन**—व्यभिचाररूपविशिष्टान्तरविषयितात्वव्यापकेन ।

अत्रेदं बोध्यम् । व्यभिचारविषयितात्वे सामान्यतो विशिष्टान्तरविषयितात्वव्यापकत्वाऽसम्भवान्मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः स्यादतो यत्किञ्चित्पदोपादानम् । वस्तुतो विशिष्टान्तरविषयित्वव्यापकं रूपं प्रमेयविषयितात्वादिकमेव तदवच्छिन्नप्रयोज्यत्वाऽप्रसिद्धेरतो **यत्किञ्चिदिति**, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्यद्रूपं प्रत्येकं तत्तद्रूपावच्छिन्नविषयिताव्यापकत्वलाभाय ।

तथाच स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकत्वसमानाधिकरणरूपानिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावः ( व्यापकतारूपः ) विशेषाभावो ग्राह्यः ।

अभावश्च स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकव्यभिचारत्वादितत्तद्रूपावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो बोध्यः ।

प्रयोज्यत्वाभावस्तु सामान्याभावः—स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसमा·

नाधिकरणाऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाववद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वं नास्तीति प्रतीतिसिद्धः, स्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकप्रतीतिनिष्ठावच्छेदकतानिरूपकविषयित निष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपकरूपनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिष्ठावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगितानिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकरूपनिष्ठावच्छेदकतानिरूपकाऽवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपकप्रयोजकतानिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकप्रयोज्यतात्वावच्छिन्नप्रतियोगिताकाभावो ग्राह्यः। अत्र सामान्याभावाऽनिवेशे मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणमशक्यम्, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजकहेतुधर्मिकव्याप्त्यवगाहित्वाभावाधिकरणतायां तादृशव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकबाधत्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वस्य सत्वात्।

तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्किंचिद्रूपावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकरूपवृत्तिप्रयोज्यताशून्यत्वं निविष्टम्, रूपवृत्तित्वं च प्रयोज्यतायां स्वनिरूपितप्रयोजकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवं च व्यभिचारघटितबाधस्थले पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यता च न तादृशबाधाविषयकप्रतीतिविषयतावच्छेदकशुद्धव्यभिचारत्वावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकशुद्धव्यभिचारत्वगतसमुदायत्ववृत्तिरिति नाव्याप्तिरिति दिक्।

अथ वह्न्यादिधर्मिकव्याप्तिग्रहं प्रति धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकविशेष्यताशालिनिश्चयत्वेन व्यभिचारग्रहस्य प्रतिबन्धकत्वमावश्यकम्, अन्यथा जातिमान् धूमाभाववद्वृत्तिरिति ज्ञानोत्तरमपि वन्ह्यादिधर्मिकधूमव्याप्तिग्रहानुत्पादप्रसङ्गात्। एवं च मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणमशक्यमेव, तथाहि तत्र विशिष्टान्तरं यद्धूमव्यभिचारिवन्ह्यादि तद्विषयितात्वव्यापकं न धूमाभाववद्वृत्तित्वप्रकारतानिरूपितनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविषयितात्वम्, जातिमान् धूमाभाववद्वृत्तिरितिज्ञानीयविषयितायां व्यभिचारात्, किन्तु धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयितात्वम्, एतादृशं च रूपं न शुद्धवह्नित्वावच्छिन्नधर्मिकव्याप्तिग्रहत्वावच्छिन्नप्रतिबन्धकतावच्छेदकमिति न तदवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्य व्याप्तिवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सम्भवः, विशिष्टान्तरविषयितात्वव्यापकरूपाव-

च्छिन्नप्रयोजकत्वाप्रसिद्धेर्वा । एवं च विशिष्टान्तरविषयित्वाव्यापकविषयिताशून्यज्ञानीयविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वं निवेश्यम् ।

तथाच धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यं न जातिमान् धूमाभाववद्वृत्तिरिति ज्ञानं, किन्तु धूमाभाववद्वृत्तिवह्निरितिज्ञानमेव, तज्ज्ञानीयधूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयितात्वव्यापकं धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकविषयितात्वमपि तद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्य व्याप्तिवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्वान्नातिव्याप्तिः ।

एवं च विशिष्टान्तरविषयित्वाव्यापकविषयिताशून्यज्ञानीयविशिष्टान्तरविषयित्वाप्रयोज्यत्वमेव निवेश्यतां किं व्यापकतानिवेशेन । व्यभिचारघटितबाधे व्यभिचाररूपविशिष्टान्तरविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानं न धूमव्यभिचारिवह्निमान् धूमाभाववानिति बाधविषयकं ज्ञानं, किन्तु धूमव्यभिचारी वह्निरिति ज्ञानं केवलव्यभिचारविषयकं, तदीयविषयिता तु न प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदिकेति तादृशविषयित्वाप्रयोज्यत्वस्य प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्त्वेनाऽव्याप्तिविरहात् ।

न च मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारिवह्निविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठायाः उभयाभावप्रयोजकीभूतव्याप्तिवैशिष्ट्यावगाहित्वाभावाधिकरणतायाः धूमव्यभिचारिवह्निरूपविशिष्टान्तरविषयित्वाव्यापकविषयिताशून्यधूमव्यभिचारिवह्निरितिज्ञानीयविषयितायाः मेयत्वविशिष्टधूमव्यभिचारिवह्निरिति ज्ञानाऽवृत्तितया तादृशविषयित्वाऽप्रयोज्यत्वात्, स्वपूर्ववर्त्तिज्ञानीयविषयिताया एव स्वानन्तरोत्पन्नज्ञानवृत्तिप्रतिबध्यतावच्छेदकधर्माभावाधिकरणताप्रयोजकतया मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्निरितिज्ञानोत्तरज्ञानवृत्तिव्याप्त्यवगाहित्वाभाववत्तायां व्यभिचारमात्रविषयकज्ञानीयविषयिताया अप्रयोजकत्वादिति वाच्यम् । तादृशविशिष्टान्तरविषयितावृत्तिरूपावच्छिन्नाप्रयोज्यत्वस्य निवेशात्, तथा च विशिष्टान्तरविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितावृत्तिरूपपर्याप्त्यवच्छेदकताकप्रयोजकतानिरूपितप्रयोज्यत्वाभावविवक्षणेऽतिव्याप्तिवारणं सम्भवति । केवलं धूमव्यभिचारिवह्निरितिज्ञानीया या विषयिता तद्वृत्ति यद् धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयितात्वं तेन रूपेणैव मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयितायास्तदनन्तरज्ञाननिष्ठोभयाभावप्रयोजकाभावाधिकरणतायां प्रयोजकत्वादिति(१)चेन्न ।

---

(१) यत्तु अव्यापकीभूतविषयिताशून्यत्वमनिवेश्य तादृशोभयाभावप्रयोजकविशिष्टान्तरविषयितात्वव्यापकत्वं निवेश्यम्, तथाच नाऽप्रसिद्धिरिति ।

तन्न । धूमव्याप्यजातिमद्वान् धूमवान् वन्हेरित्यादौ मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तेः, धूमाभाववद्वृत्तिजातिमानितिज्ञानीयविषयिताया अपि निरुक्तोभयाभावप्रयोजकत्वात् । अथ धूमव्यभिचारिवन्हिर्धूमवान् वन्हेरित्यादौ धूमाभावत्वेन घटावगाहिधूमाभाववान् धूमव्यभिचारिवह्निरितिज्ञानमादायाऽव्याप्तिः । न च यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता अव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वं निवेशनीयमिति वाच्यम् । तथा सति जलवज्जलं जलाभाववद् अवृत्तिजलवज्जलादित्यादौ जलवज्जलत्ववजलरूपबाधेऽव्याप्तिः, जलत्वरूपपक्षतावच्छेदकेन ह्रदावगाहिजलवज्जलवज्जलमिति बाधज्ञानीयविषयितायाः जलवज्जलवद्रूपविशिष्टान्तरविषयित्वाव्यापकविषयिताशून्यज्ञानीयतया तद्वृत्तिबाधविषयितात्वावच्छिन्नप्रयोज्यत्वस्य साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्त्वादिति ।

बाधसत्प्रतिपक्षादिविषयकज्ञानस्य नानाविधबाधविषयकज्ञानस्य वाऽनन्तरं जायमानायामनुमितौ या बाधादिविषयताप्रयोज्याऽभावाधिकरणता तस्या विशिष्टान्तरविषयिताप्रयोज्यत्वेऽपि स्वपूर्ववर्त्तिज्ञानीयविरोधिविषयताया एव स्वनिष्ठप्रतिबध्यतावच्छेदकधर्म्माभावाधिकरणताप्रयोजकत्वात्तन्नैकविधबाधादिज्ञानानन्तरं जातज्ञाने या तत्तद्बाधादिविषयिताप्रयोज्या पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्या विशिष्टान्तरविषयित्वाप्रयोज्यतया बाधादौ लक्षणसमन्वयः।

व्यभिचारघटितबाधादिविषयिताप्रयोज्याया दीधितिकारोक्तोभयाभा-

---

सामान्यतो विशिष्टान्तरविषयित्वाव्यापकीभूतविषयिताशून्यग्रहस्याऽप्रसिद्धेः, विशिष्टान्तरविषयितायाः घटादिज्ञाने सत्त्वात्तत्र व्यभिचारविषयिताया अभावात्, व्यभिचारविषयिताया अपि विशिष्टान्तरविषयित्वाव्यापकत्वेन तच्छून्यत्वस्य व्यभिचारविषयकज्ञानेऽसत्वात्, किन्तु स्वावच्छिन्नाविषयकप्रतीतिविषतावच्छेदकं यद्यद्रूपं प्रातिस्विकरूपेण तत्तद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तिविषयितानिष्ठधर्मपर्याप्तावच्छेदकताकप्रयोजकतानिरूपितप्रयोज्यत्वाभावकूट एव निवेशनीयः, तथा च मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः, विशिष्टान्तरव्यभिचारविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तिविषयितानिष्ठधर्मपर्याप्तावच्छेदकताकप्रयोजकतानिरूपितप्रयोज्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयकज्ञानोत्तरज्ञाननिष्ठोभयाभावप्रयोजकाभावाधिकरणतायामक्षतत्वात्, एवं च घटाभाववद्भूतलविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तिविषयितानिष्ठधर्मपर्याप्तावच्छेदकताकप्रयोजकतानिरूपितप्रयोज्यत्वाभावस्य प्रातिस्विकरूपेण निवेशः कार्यः, तदपेक्षया स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तिर्या स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतधर्मावच्छिन्नविषयिता तत्प्रयोज्यत्वाभाव एव निवेशनीयः। तथाच घटभाववद्भूतलविषयितायाः स्वावच्छिन्नाविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तित्वविरहान्न तदप्रयोज्यत्वस्य तादृशकूटान्तर्गतता, एवं च धूमव्यभिचारिवह्निमान् धूमवान् वन्हेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्विषयित्वाव्यापकविषयिताशून्यज्ञानीया या धूमव्यभिचारिवह्नित्वावच्छिन्नविषयिता तस्याः साध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकतया प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकत्वेन धूमाभाववद्धूमव्यभिचारिवह्निमति अव्याप्तिरतो व्यापकत्वनिवेश इति।

अनुगमस्तु—स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकविशिष्टान्यतादृशाधिकरणताकत्वम्। वै०स्वावच्छिन्नविषयितात्वव्यापकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रयोजकतानिरूपितप्रयोज्यतावत्वसम्बन्धेन। रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति।

ननु विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्यत्वविषयिताप्रयोज्यतादृशोभयाभावाधिकरणताकत्वमित्येवोच्यतां किमुभयाभावप्रयोजकाभावाधिकरणतायां विशिष्टान्तरविषयिताव्यापकरूपावच्छिन्नाऽप्रयोज्य—स्वविषयिताप्रयोज्यत्वनिवेशेनत्यत आह व्यभिचारघटितेति। दीधितिकारोक्तोभयाभावाधिकरणताया इति। पक्षे साध्यवै-

वाधिकरणताया व्याप्त्याद्यवगाहिताविरहप्रयोज्यत्वेन यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नबाधादिविषयतानन्तःपातिव्यभिचारादिविषयिताप्रयोज्यत्वनियमात्तत्संग्रहाय तादृशोभयाभावप्रयोजकाभावाधिकरणतापर्य्यन्तनिवेशः । तथासति दर्शितोभयाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वप्रयोज्यत्वनियमेऽपि तादृशोभयाभावप्रयोजकसाध्यादिमत्त्वावगाहित्वाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयत्वाप्रयोज्यत्वेन तादृशबाधादेः संग्रहः ।

---

शिष्ट्यावगाहित्व—साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणताया इत्यर्थः । व्याप्त्याद्यवगाहिताविरहप्रयोज्यत्वेनेति । उभयस्य साध्यव्याप्तिविशिष्टहेतुमत्ताघटिततया साध्यव्याप्तिवैशिष्ट्याभावस्याप्युभयाभावप्रयोजकत्वं, एकाभावस्याप्युभयाभावप्रयोजकत्वादिति भावः । रूपावच्छिन्नेति । अस्य व्यभिचारविषयितायामन्वयः । तत्सङ्ग्रहायेति । व्यभिचारघटितबाधादिसङ्ग्रहायेत्यर्थः । तथासति—उभयाभावप्रयोजकाभावाधिकरणतायां विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्य-त्वविषयताप्रयोज्यत्वनिवेशे च । दर्शितोभयाभावाधिकरणताया इति । पक्षे साध्यवैशिष्ट्यावगाहित्व-साध्यव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणताया इत्यर्थः । उक्तरूपावच्छिन्नेति । उक्तबाधविषयितानन्तःपातिव्यभिचारविषयितात्वावच्छिन्नेत्यर्थः । साध्यादिमत्त्वावगाहित्वाभावाधिकरणताया इति । पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताया इत्यर्थः । उक्तरूपावच्छिन्नेति । बाधविषयितानन्तःपातिव्यभिचारविषयितात्वावच्छिन्नेत्यर्थः । तादृशबाधादेः—व्यभिचारघटितबाधादेः । सङ्ग्रह इति(१) । नाव्याप्तिरित्यर्थः ।

तथाच बाधविषयिताप्रयोज्यायां पक्षे निरुक्तोभयाभावाधिकरणतायां व्यभिचाररूपविशिष्टान्तरविषयिताप्रयोज्यत्वनियमादव्याप्तिरतो विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वस्य उभयाभावप्रयोजकीभूताभावाधिकरणतायां निवेशनम् । तथाचोभयाभावप्रयोजकीभूता या प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्यां व्यभिचारविषयितात्वव्यापकरूपेण व्यभिचारविषयिताया अप्रयोजकत्वाद् व्यभिचाररूपविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्यत्वस्याऽक्षततया नाव्याप्तिरिति निष्कर्षः ।

---

(१) नन्वम्रोमयाभावप्रयोजकाभावाधिकरणतापर्यन्तानिवेशे व्यभिचारघटितबाधे अव्याप्तिरभिहिता सा च न सङ्गच्छते, तदनुपादानेऽपि यत्र धूमव्यभिचारिवह्निमान् धूमाभाववानिति दोषज्ञानं धूमव्याप्तिविशिष्टवह्निज्ञानं जायतामितीच्छा च तदनन्तरं जायमानानुमितौ हेतौ व्याप्त्यवगाहित्वाभावो हि सामग्र्यभावप्रयुक्तः, न तु पूर्वज्ञाननिष्ठव्यभिचारविषयिताप्रयुक्तः प्रतिबन्धकज्ञाननिष्ठविरोधिविषयिताया एव प्रयोजकत्वस्वीकारात्, इच्छाविरहविशिष्टविरोधिज्ञानस्यैव प्रतिबन्धकतया तादृशदोषज्ञानस्य व्याप्त्यवगाहित्वावच्छिन्नं प्रत्यप्रतिबन्धकत्वात्, तथा च तादृशानुमितिनिष्ठोभयाभावाधिकरणता न व्यभिचारविषयिताप्रयुक्तहेतुधर्मिकव्याप्त्यवगाहित्वाभावप्रयुक्तेति तन्निष्ठतादृशबाधविषयताप्रयोज्यत्वमादाय लक्षणगमनसम्भवात् । न च प्रतिबध्यतावच्छेदकशरीरेऽनाहार्यत्वनिवेशेनेच्छाकालीनविरोधिज्ञानस्यापि प्रतिबन्धकतया तदीयव्यभिचारविषयिताया व्याप्त्यवगाहित्वाभावप्रयोजकतया तदुत्तरानुमितिनिष्ठोभयाभावाधिक·

रणतायां व्यभिचारविषयिताप्रयोज्यत्वमस्तीति तत्राव्याप्तिरेवेति वाच्यम्। सत्प्रतिपक्षग्रन्थे इच्छाव्यक्तीनामुत्तेजकत्वेऽनन्ततद्व्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वेऽपि तदभावानामेकत्र द्वयमितिरीत्या विशेषणत्वे गौरवाभावात्। अनाहार्यत्वस्य प्रतिबध्यतावच्छेदककुक्षौ निवेशे आहार्यज्ञानं प्रतीच्छायाः पृथक्कारणत्वे गौरवाच्चेच्छाया उत्तेजकतामतस्यैव भट्टाचार्यैरभिहितत्वात्। इच्छाकालीनतादृशज्ञानस्याप्रतिबन्धकतया तन्निष्ठव्यभिचारविषयिताया अप्रयोजकत्वादिति। मैवम्। तथाहि ह्रदेऽवच्छेदकावच्छेदेन वन्हेः साध्यतायामवच्छेदकावच्छेदेन बाधेऽव्याप्त्यापत्तिः, अवच्छेदकावच्छेदेन बाधविषयिताप्रयोज्यायां तादृशोभयाभावाधिकरणतायां तादृशबाधाविषयकप्रतीतिविषयसामानाधिक ण्येन बाधविषयिताया अपि प्रयोजकत्वात्, उक्तविवक्षायां तु नाव्याप्तिः तादृशोभयाभावप्रयोजकीभूता या पक्षे सामानाधिकरण्येन साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्या अवच्छेदकावच्छेदेन बाधविषयिताप्रयोज्यायाः सामानाधिकरण्येन बाधविषयिताप्रयोज्यत्वाभावादिति तादृशोभयाभावप्रयोजकसामानाधिकरण्येन वह्न्यवगाहित्वाभावमादाय लक्षणसमन्वयसम्भवादिति। स्वविषयिताप्रयोज्यत्वानुपादाने यत्र किमपि प्रतिबन्धकज्ञानं नासीत् स्वसामग्र्यभावादेव समूहालम्बनानुमित्यादिकं न जातं घटाद्यनुमितिरेव जाता तन्निष्ठोभयाभावप्रयोजकाभावाधिकरणता न किञ्चिद्विशिष्टान्तरविषयताप्रयोज्येति तत्र मेयत्वविशिष्टव्यभिचारेऽपि विशिष्टान्तरविषयित्वाप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वस्य सत्त्वात्तत्रातिव्याप्तिः।

न च तद्वारणाय विषयिताप्रयोज्यत्वमेवोपादीयतामिति वाच्यम्। यत्र धूमव्याप्यवह्निमानिति परामर्शः पर्वतो धूमाभाववानिति बाधभ्रमस्तदनन्तरज्ञाने उभयाभावप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां बाधभ्रमीयविषयताप्रयोज्यत्वस्य विशिष्टान्तराविषयित्वाऽप्रयोज्यत्वस्य च सत्त्वात् तदधिकरणतामादाय मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, अतः स्वविषयिताप्रयोज्यत्वाभिधानम्, तावन्मात्रे कृते तत्रैवातिव्याप्तिरतो विशेषणदलम्। अत्रोभयाभावप्रयोजकाधिकरणतायामभावीयत्वानुपादाने धूमवान्वन्हेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः स्मृत्यनुभवसाधारणविरोधिविषयकनिश्चयत्वेनैव प्रतिबन्धकतया मेयत्ववान् धूमाभाववानितिनिश्चयविशिष्टमेयत्ववान् धूमव्यभिचारिवह्निरिति स्मरणात्मकनिश्चयस्य वन्हौ धूमवत्ताज्ञानप्रतिबन्धकतया तादृशस्मरणोत्तरज्ञानवृत्तिसाध्यव्याप्तिवैशिष्ट्यावगाहित्वघटितोभयाभावं प्रति तादृशस्मरणात्मकप्रतिबन्धकज्ञानवृत्तिमेयत्वविशिष्टव्यभिचारविषयितायाः प्रयोजकतया तदधिकरणत्वस्यापि प्रयोजकत्वात् कार्यताच्छेदकविषयितां प्रति कारणतावच्छेदकविषयितायाः प्रयोजकत्वात् स्मृतिनिष्ठमेयत्वविशिष्टव्यभिचारविषयित्वाधिकरणत्वस्यानुभवीयविषयताप्रयोजकत्वात् विशिष्टान्तरविषयित्वाप्रयोजकत्वाच्च विशेष्यदलस्य च सत्त्वात्, अभावीयत्वोपादाने च न साऽभावाधिकरणेति नातिव्याप्तिः, अधिकरणतात्वेनाधिकरणतामनुपादाय विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतातादृशोभयाभावप्रयोजकाभावनिरूपकत्वं विशिष्टान्तराऽघटितत्वमित्युक्तौ भावभेदोऽवृत्तिरित्यत्र पक्षे साध्यप्रकारत्वाभावेऽतिव्याप्तिः, तत्र हि भावभेदवान् बाधः भावभेदो ह्यभावत्वं तथाचाभाववानितिज्ञानीयाभावत्वावच्छिन्नविषयितेव पक्षे साध्यप्रकारत्वाभाव इति स्मरणात्मकज्ञानीयतादृशाभावत्वावच्छिन्नविषयितापि तादृशोभयाभावप्रयोजिका सामान्येऽवृत्तित्वज्ञानं प्र(१)ति विशेषवत्ताज्ञानस्य बाधतुल्ययोगक्षेमतया प्रतिबन्धकत्वात् स्मृतीयतादृशविषयिताप्रयोजिका तद्विषय-

---

(१) अत्रायम्भावः—अवृत्तिरूपसाध्यप्रकारत्वाभावो नाम प्रतियोगितासम्बन्धेन वृत्तित्वविशिष्टाभाववन्निष्ठप्रकारत्वाभावः सोऽपि प्रतियोगितासम्बन्धेन तादृशप्रकारत्वविशिष्टरूपः, तथाच प्रथमाभावनिर्वचनशरीरे प्रतियोगितासम्बन्धेन वृत्तित्वात्मकविशेषिताभाववत्त्वस्याभावे भानाद् द्वितीयाभावे पूर्वनिखिलपदार्थघटितप्रकारत्वस्य प्रतियोगितासम्बन्धेन विशेषणतया भानात् तत्रापि निरुक्तप्रकारत्वविशेषिताभाववत्त्वविशिष्टाभावस्य भानात् सोऽपि बाध एव, तथाच द्विविधबाधस्य लक्ष्यत्वेपि पक्षावृत्तित्वविशिष्टस्य मेयत्वविशिष्टव्यभिचारवदलक्ष्यत्वमेव एतदर्थमेव पक्षस्याधेयतासम्बन्धेन विशेषणत्वमुपात्तम्। न च पक्षवृत्तित्वविशिष्टाभावत्वविशिष्टावच्छिन्नमुपेक्ष्य तादृशसाध्यप्रकारत्वाभावपर्यन्तानुधावनं विफलमिति वाच्यम्। तस्य भ्रमविषयत्वेनाप्रसिद्धत्वात् तादृशसाध्यप्रकारत्वाभावस्य च पक्षे प्रसिद्धत्वात्। न चैवं स्मृतीयविषयितायां स्वीयानुभवी-

कानुभवादिविषयितेति विशिष्टान्तरविषयितामयोज्यतादृशोभयाभावप्रयोजकस्मृतीयाविषयितात्मकतादृशाभावनिरूपकत्वस्य तादृशप्रकारत्वाभावे सत्त्वात् तद्विषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावस्य च सत्त्वात्। न च भावभेदोऽवृत्तिरितिज्ञानं नियताहार्यतया निर्वह्निर्वह्निमानिति ज्ञानतुल्यं नियमेनाभावत्वप्रकारकत्वात्तदीयसाध्यवत्पक्षाविषयिताव्यापकप्रतिबध्यतावच्छेदकविषयित्वाप्रसिद्धिः, तथाचैतल्लक्षणे तादृशस्थले दोषो ग्रन्थकारेण स्वयं वक्तव्य इति वाच्यम्। तथापि भावभेदे वृत्तिभेदसाधने तत्रातिव्याप्तिः, तस्य नियताहार्यत्वाभावात्। एवमभावः प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकप्रकारत्वाभाववानित्यत्र पक्षे साध्यप्रकारत्वाभावेऽतिव्याप्तिश्चेति अधिकरणतात्वेन तन्निवेशः।

नन्वत्रासाधारण्येऽतिव्याप्तिः, विशेष्यदलघटकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वघटितोभयाभावं निवेश्य विशेष्यदलोपादानेऽपि विशिष्टान्तराघटितत्वस्याभावात् असाधारण्यविषयिताप्रयोज्यायास्तादृशोभयाभावप्रयोजिकायाः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताया विशिष्टान्तरहेतुमत्पक्षविषयिताप्रयोज्यत्वात्।

अथ सर्वं गगनवदित्यत्र गगनाभाववद्घटादौ बाधेऽव्याप्तिः, सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिविषयकनिश्चयानां गगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताशालिनिश्चयत्वेनानुगतरूपेणैव प्रतिबन्धकतया गगनाभाववद्घटत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां गगनाभाववत्पटादिरूपविशिष्टान्तरविषयितात्वव्यापकगगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाश्च सत्त्वात्, अतो विशिष्टान्तरे स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकत्वस्य तद्विषयितायां वा तादृशज्ञानीयत्वस्यावश्यं वक्तव्यतया हेतुमत्पक्षस्य विशिष्टान्तरत्वाभावात् न तद्विषयिताप्रयोजकत्वमादाय साधारण्येऽतिव्याप्तिः। न चैवं ह्रदो वह्निमानित्यादौ बाधासङ्ग्रहः, तत्र बाधैकदेशवह्न्यभावादेरेव तादृशविशिष्टान्तरतया तद्विषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताया अप्रसिद्धेरिति वाच्यम्। अभावो न वह्नीयज्ञानं प्रति वह्न्यभाव इति ज्ञानस्य प्रतिबन्धकतया वह्न्यभावविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताया अभावे वह्नीयत्वाभावावगाहित्वाभावाधिकरणतायां प्रसिद्धत्वात्।

नचैवमपि पर्वतो वह्न्यभाववानित्यत्र वह्निमत्पर्वतरूपबाधेऽव्याप्तिः। तदेकदेशवह्न्यादिविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकत्वाप्रसिद्धेरिति वाच्यम्। तत्रापि वह्निरवृत्तिरितिज्ञानं प्रति तादृशबाधैकदेशवह्निमद्विषयकनिश्चयस्य प्रतिबन्धकतया प्रसिद्धिसम्भवादिति।

मैवम्। घटोऽवृत्तिरित्यत्र घटवति बाधे तादृशविशिष्टान्तराप्रसिद्ध्याऽव्याप्तेः। न च तत्रापि घटत्वावच्छिन्नविषयताशालिज्ञानस्य घटवान् पट इति ज्ञानं प्रति घट इति स्मृतिं प्रत्यपि च कारणतया कार्यतावच्छेदकविषयितायामेव घटत्वावच्छिन्नविषयिताप्रयोज्यत्वं प्रसिद्धमिति वाच्यम्। घटवान् पट इति ज्ञानं प्रति घट इति ज्ञानस्य घटत्वप्रकारताशालिज्ञानत्वेनैव कारणतया घट इति स्मृतिं प्रत्यपि तत्तद्विषयताशालिज्ञानत्वेनैव कारणतया घटत्वप्रकारितात्वस्य तत्तद्घटविषयितात्वस्य च घटत्वावच्छिन्नविषयितात्वव्यापकत्वाभावेन तादृशविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्याऽप्रसिद्धेरिति चेन्न। विशिष्टान्तराविषयित्वाऽप्रयोज्येत्यनेन स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकधर्माभाववत्त्वस्य विवक्षितत्वात्। अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वावच्छिन्नविषयिताव्यापकविषयिताशून्यज्ञानीयस्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वसम्बन्धः। एवञ्च घटोऽवृत्तिरित्यत्र घटवदात्मकबाधविषयित्वाव्यापकविषयताशून्यज्ञानीयतद्विषयकप्रतीतिविषयतावच्छेदकघटत्वस्यायं व्यधिकरणसम्बन्ध इति तेन सम्बन्धेन तदभाववती बाधविषयिताप्रयोज्या पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता भवतीति न तत्राव्याप्तिः। मेयत्वविशिष्टव्यभिचारादौ च नातिव्याप्तिः,

---

यविषयिताप्रयोज्यत्ववद् विशिष्टान्तरीयपक्षवृत्तित्वाघटितकेवलसाध्यप्रकारत्वाभावीयविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितत्वमिति वाच्यम्। मानाभावात्।

उक्तसम्बन्धेन शुद्धव्यभिचारत्वस्य हेतौ व्याप्तिवैशिष्ट्यावगाहित्वाभावाधिकरणतायां तादृशव्यभिचारविषयिताप्रयोज्यायां सत्त्वात् ।

ननु तथाप्यभावो गगनत्ववानाधेयत्वादित्यत्र हेतुमत्पक्षघटितासाधारण्येऽव्याप्तिः । तादृशासाधारण्यविषयिताप्रयोज्यायाः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायाः गगनत्वव्यापकाभावप्रतियोग्याधेयत्वरूपासाधारण्यविषयित्वाव्यापकविषयिताशून्यज्ञानीयासाधारण्यविषयकप्रतीतिविषयतावच्छेदकाधेयत्ववदभाववत्त्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वनियमात् ।

नच विशिष्टान्तरविषयितायां प्रकृतलक्षणाश्रयीभूतत्वं निवेशनीयं तथाच हेतुमत्पक्षविषयिता च न तादृशीति वाच्यम् । ह्रदो वह्निमानित्यादावपि तादृशविशिष्टाप्रसिद्ध्याऽव्याप्त्यापत्तेः । न च प्रतियोगिनि स्वत्वमन्तर्भाव्य विशिष्टान्तराघटितत्वं निर्वाच्यं, तथाहि स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत्स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकं तदवच्छिन्नविषयिताप्रयोज्यत्वस्वविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकं यद्यत्त्वं तत्तदघटितत्वं, तथाच सर्वत्र मेयत्वविशिष्टदोषतावच्छेदकमादाय लक्षणसमन्वयः, स्वस्य स्वाऽघटितत्वाभावादेव मेयत्वविशिष्टदोषे नातिव्याप्तिः, इदानीं विशिष्टान्तरविषयितायां प्रकृतलक्षणाश्रयीभूतत्वं विवक्षणीयम् अतो न हेतुमत्पक्षघटितासाधारण्येऽव्याप्तिरिति वाच्यम् । आधेयत्वाभाववानभावो गगनत्वानाधेयत्वादित्यत्रासाधारण्येऽव्याप्तेः, तत्र हेतुमत्पक्षरूपविशिष्टान्तरस्य प्रकृतलक्षणाश्रयीभूतत्वात् । एवमनुयोगिनि स्वत्वान्तर्भावे घटो गगनाभाववदभाववत्कालीनगगनवान्, अभावाभाववद्धटकालीनपटादित्यत्राभाववति गगनाभावोऽध्याप्यवृत्तिरिति ज्ञानकालीनतादृशगगनाभाववद्धटरूपबाधनिश्चयोत्तरज्ञाने तादृशोभयाभावप्रयोजक-पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वसत्त्वेन तादृशनिश्चयमादाय लक्षणसमन्वयः सम्भवति, प्रतियोगिनि स्वत्वान्तर्भावे तु तत्राऽव्याप्तिः, अभाववद्धटत्वात्मकं यदुक्तविशिष्टान्तरतावच्छेदकं तदवच्छिन्नविषयिताप्रयोज्य—स्वावच्छिन्नविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताप्रसिद्ध्या स्वपदेन तादृशबाधत्वस्यापि धर्तुं शक्यत्वात् अभाववद्धटस्य प्रकृतलक्षणाश्रयत्वात् स्वस्य स्वाघटितत्वाभावादिति चेन्न ।

विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावदाधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वासाधारण्यविषयित्वावृत्तित्वोभयाभावस्य निवेशनीयत्वात् । तथाच उक्तहेतुमत्पक्षघटितासाधारण्ये नाव्याप्तिः । हेतुमत्पक्षविषयितानिष्ठप्रयोजकतायामसाधारण्यविषयकज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यताशालि-पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वासाधारण्यविषयित्वावृत्तित्वोभयस्यैव सत्त्वेनोभयाभावाऽभावात् । इदानीमनुयोगिन्येव स्वत्वान्तर्भावः ।

नचैवं मेयत्वविशिष्टबाधेऽतिव्याप्तिः वह्निव्यापकीभूताभावप्रतियोगिधूमवान् ह्रदः, वन्ह्यभाववान् ह्रदः प्रमेयं इति असाधारण्यभ्रमात्मकमेयत्वविशिष्टबाधविषयकज्ञानोत्तरज्ञाननिष्ठायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां मेयत्वविशिष्टबाधविषयिताप्रयोज्यायां शुद्धबाधात्मकविशिष्टान्तरविषयिताप्रयोज्यत्वसत्त्वेपि बाधविषयितानिष्ठप्रयोजकतायां निरुक्तोभयसत्त्वेनोभयाभाववती चान्यविषयितानिष्ठप्रयोजकतैवेति तन्निरूपितप्रयोज्यताशून्यत्वस्य तत्र सत्त्वादिति वाच्यम् । स्वविषयितानिष्ठप्रयोजकतायामपि तादृशोभयाभावस्य विशेषणत्वात् । नचैवमप्याधेयत्वं निरूपितत्वाभाववदाधेयतात्वादित्यत्र निरूपितत्वव्याप्यवदाधेयत्वरूपसत्प्रतिपक्षे बाधघटितेऽव्याप्तिः, तत्र बाधसत्प्रतिपक्षविषयितयोरेकत्रैवाधिकरणतायां प्रयोजकत्वात् बाधविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावस्य सत्त्वाच्चेति वाच्यम् । तत्र बाधस्यैव दोषत्वाङ्गीकारात् । अस्तु वा बाधघटितसत्प्रतिपक्षस्य दोषत्वं तथापि विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां स्वविषयितानिष्ठप्रयोजकतावदन्यत्वं विशेषणं देयम्, तादृशप्रयोजकतावत्त्वं च स्वावच्छेदकानवच्छिन्नत्वस्वनिरूपितप्रयोज्यतावदाधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वोभयसम्बन्धेन, तथाच बाधविषयितानिष्ठप्रयोजकता च तादृशोभयसम्बन्धेन सत्प्रतिपक्षविषयितानिष्ठप्रयोजकताविशिष्टैवेति तद्वदन्या सत्प्रतिपक्षैकदेशान्तरविषयितानिष्ठा किञ्चिदन्यानिरूपितप्रयोजकतैव तन्निरूपितप्रयोज्यताशून्यत्वस्य स्वविषयिताप्रयोज्याधिकरणतायां सत्त्वान्नाव्याप्तिः इदानीं

विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां प्रागुक्तोभयाभावोऽपि न विवक्षणीयः अभावो गगनत्ववानाधेयत्वादित्यत्राधेयत्ववदभावरूपहेतुत्यस्यविषयितानिष्ठप्रयोजकतायामुक्तोभयसम्बन्धेनाऽसाधारण्यविषयितानिष्ठप्रयोजकतायाः सत्त्वेनाऽव्याप्तिविरहात् ।

यद्यपि स्वविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावानिवेशेऽपि न मेयत्वविशिष्टबाधादावुक्तरीत्याऽतिव्याप्तिः शुद्धबाधविषयितानिष्ठप्रयोजकतायां मेयत्वविशिष्टबाधविषयितानिष्ठप्रयोजकतावच्छेदकावच्छिन्नत्वसत्त्वेन तदनवच्छिन्नत्वघटितोभयसम्बन्धेन स्वविषयितानिष्ठप्रयोजकतावदन्यत्वस्य सत्त्वेन तादृशप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वविषयिताप्रयोज्यताशून्यत्वस्य स्वविषयिताप्रयोज्यतादृशाधिकरणतायामभावेन विशिष्टान्तराघटितत्वाभावात्, तथापि ह्रदो वह्निमानित्यत्र वन्ह्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः तादृशवन्ह्यभाववज्जलवत्त्वावच्छिन्नविषयितानिष्ठप्रयोजकतायामुक्तोभयसम्बन्धेन तादृशविषयितानिष्ठप्रयोजकतायाः सत्त्वेन तदन्यप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य तादृशविशिष्टविषयिताप्रयोज्याधिकरणतायां सत्त्वात्, तत्र तादृशोभयाभावनिवेशे तु स्वपदेन तादृशविशिष्टमेव न धर्तुं शक्यते तद्विषयतानिष्ठप्रयोजकतायां असाधारण्यविषयित्वावृत्तित्वज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वोभयसत्त्वात् ।

नच स्वविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावानिवेशेऽपि नोक्तविशिष्टेऽतिव्याप्तिः । जलवद्ध्रदस्यापि विशिष्टान्तरतया तादृशविषयिताया अपि जलवद्ध्रदविषयितात्वेनैव प्रयोजकतया जलवद्ध्रदविषयितानिष्ठप्रयोजकतायां तादृशविशिष्टविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यतावदधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वसत्त्वेऽपि तदवच्छेदकानवच्छिन्नत्वाभावेन तादृशोभयसम्बन्धेन स्वविषयितानिष्ठप्रयोजकताविशिष्टान्यजलवद्ध्रदविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वविषयिताप्रयोज्याधिकरणतायामभावादिति वाच्यम् । अभावो वह्निमानित्यत्र वन्ह्यभाववद्वृत्तिर्वह्निमत्त्यतिव्याप्तिः, तत्र वन्ह्यभावरूपविशिष्टान्तरविषयितानिष्ठप्रयोजकतायां तादृशविशिष्टविषयितानिष्ठप्रयोजकताया निरुक्तोभयसम्बन्धेन सत्त्वेन तदन्यप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वपदग्राह्यतादृशविशिष्टविषयिताप्रयोज्याधिकरणतायां सत्त्वात् ।

एवं धूमव्यभिचारवह्निर्धूमवान् वन्हेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां शुद्धव्यभिचारविषयिताप्रयोज्यत्वाभावात्, स्वविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावनिवेशे स्वपदेन वन्ह्यभाववद्वह्निमेयत्वविशिष्टव्यभिचारश्च न धर्तुं शक्यते, ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्पक्षे साध्यवैशिष्ट्यावगाहित्वाधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वासाधारण्यविषयिताऽवृत्तित्वोभयसत्त्वात् ।

नन्वेवमपि गगनाभाववदभावत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः, एवं वन्ह्यभाववद्वन्ह्यभावव्याप्यवत्कालीनह्रदो वह्निमान् इत्यत्र वन्ह्यभावव्याप्यवत्तादृशह्रदरूपसत्प्रतिपक्षे व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तादृशसत्प्रतिपक्षमात्रे चाव्याप्तिः सर्वत्र दोषज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया दोषविषयितानिष्ठप्रयोजकतायां उक्तोभयाभावाऽसत्त्वेन स्वपदेन तस्य धारणासम्भवादिति चेत् । न, स्वावच्छिन्नविषयितानिष्ठप्रयोजकतावदन्यविशिष्टान्तरविषयिताव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताशून्यनिरुक्तोभयाऽभाववत्स्वावच्छिन्नविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशालिनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकान्यत्व—तादृशोभयाभावप्रयोजकाभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितप्रयोजकताविशिष्टविषयतानिरूपकतानवच्छेदकत्व—तादृशविषयिताघटितधर्मावच्छिन्नकार्यतानिरूपितकारणताविशिष्टविषयितानिरूपकतानवच्छेदकत्वैतत्त्रितयाभावस्य दोषतावच्छेदकधर्मे निवेशनीयत्वात् ।

विषयितायां प्रयोजकतावैशिष्ट्यञ्च स्वाश्रयत्व—स्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन, विषयितायां स्ववैशिष्ट्यञ्च स्वाश्रयत्व—स्वनिरूपितप्रयोज्यतावदधिकरणतानिरूपकाभावप्रतियोगितावच्छेदकताविशिष्टनिश्चयोत्तरानुमितित्वव्यापकविषयिताप्रयुक्ताधिकरणतानिरूपकाभावप्रतियोगित्वोभयसम्बन्धेन, निश्चयेऽवच्छेदकतावैशिष्ट्यञ्च-स्वाश्रयविषयताकत्व—स्वविशिष्टप्रकारतावच्छेदकावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभावत्वो-

भयसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यञ्च स्वाश्रयत्व–स्वनिरूपितावच्छेदकताश्रयमुख्यविशेष्यतानिरूपितत्वोभयसम्बन्धेन, अत्र मुख्यविशेष्यतानिवेशाद् वन्ह्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र वन्ह्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदे नातिव्याप्तिः ।

तादृशविषयितावत्ता च—स्वव्याप्यत्व—स्वाव्यापकत्वोभयसम्बन्धेन, कारणतावैशिष्ट्यञ्च स्वावच्छेदकत्व स्वावच्छेदकविषयितावदन्यत्वोभयसम्बन्धेन, विषयितावत्त्वञ्च पूर्वोक्तोभयसम्बन्धेन । अत्रानुगमः–प्रकृतपक्षतावच्छेदकावच्छिन्नसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वोभयाभावविशिष्टरूपवत्त्वं लक्षणम् ।

तादृशाभाववैशिष्ट्यञ्च रूपे स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयिताव्यापकविषयिताशून्याकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावीयविषयिताप्रयुक्तत्वविशिष्टस्वाधिकरणत्वसम्बन्धावच्छिन्नोभयाऽवृत्तिधर्मेतरधर्मावच्छिन्नप्रतियोगित्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगित्वनिष्ठप्रतियोगितानिरूपितावच्छेदकता(१)निरूपितावच्छेदकता(२)निरूपितावच्छेदकता(३)निरूपितावच्छेदकता(४)निरूपितावच्छेदकता(५)निरूपितावच्छेदकता(६)निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वप्रयोजकाभावाधिकरणावृत्तित्वोभयसम्बन्धेन, तादृशाधिकरणतावृत्तित्वञ्च स्वावच्छिन्नविषयितानिष्ठासाधारण्यविषयित्वाऽवृत्तित्वघटितोभयाभाववत्प्रयोजकतानिरूपितप्रयोज्यतावत्त्व—स्वविशिष्टप्रतीतिविषयितावच्छेदकरूपाभाववत्त्वोभयसम्बन्धेन, प्रतीतौ स्ववैशिष्ट्यञ्च स्वावच्छिन्नविषयिताशून्यत्वस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वोभयसम्बन्धेन, रूपनिष्ठप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टविषयितानिष्ठभेदप्रतियोगितानवच्छेदकरूपावच्छिन्नप्रागुक्तोभयाभाववत्प्रयोजकतानिरूपितप्रयोज्यतारूपः, विषयितायां स्ववैशिष्ट्यञ्च स्वावच्छिन्ननिरूपकताकत्व —स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन, त्रितयाभावनिवेशकल्पे रूपेऽभाववैशिष्ट्यञ्च प्रागुक्तप्रथमसम्बन्धे—स्वप्रयोजकाभावाधिकरणत्वावृत्तित्व —प्रत्येकप्रागुक्तविषयिताद्वयानवच्छेदकत्वैतत्त्रितयाभाववत्त्वोभयसम्बन्धेनेति बोध्यम् ।

वस्तुतस्तु यद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकोभयाभावप्रयोजकयदभावाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वमस्ति तदभावाधिकरणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविशिष्टत्वविषयिताप्रयोज्यत्वाभिधानमेव सम्यक् ।

एवं च मेयत्वविशिष्टव्यभिचारे च नातिव्याप्तिः तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितित्वव्यापकोभयाभावप्रयोजकहेतुधर्मिकव्याप्त्यनवगाहित्वाभावाधिकरणतायामेव विरोधिविषयिताप्रयुक्तत्वसत्त्वात् , तत्र विशिष्टान्तरशुद्धव्यभिचारविषयिताप्रयुक्तत्वस्य च सत्त्वात्, धूमव्यभिचारिवह्निर्धूमवान् वन्हेरित्यादौ च मेयत्वविशिष्टव्यभिचारे च नातिव्याप्तिः, तत्र विशेष्यदलघटकविरोधिविषयिताप्रयुक्तत्वं हि हेतौ व्याप्त्यवगाहित्वाभावाधिकरणतायामेवास्ति तस्या एव तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितिव्यापकत्वात्, तत्र च विशिष्टान्तरशुद्धव्यभिचारविषयिताप्रयोज्यत्वमस्त्येव, तादृशोभयाभावप्रयोजिकायां पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामेव विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविशिष्टत्वविषयिताप्रयोज्यत्वसत्त्वात् अधिकरणताया ऐक्याभावात्, एवञ्च स्वविषयितानिष्ठप्रयोजकतायामसाधारण्यविषयित्वाऽवृत्तित्वघटितोभयाभाववत्त्वमपि न विवक्षणीयम्, तद्धारणीयोक्तस्थलीयमेयत्वविशिष्टव्यभिचारातिव्याप्तेरभावात्, एवमलक्ष्ये कुत्रापि विशिष्टे नातिव्याप्तिः, बाधघटितसत्प्रतिपक्षेऽव्याप्तिस्तु नियतज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकताश्रयज्ञानविषयसत्प्रतिपक्षसंग्रहभयादनेनैव वार्यते, हेतुमत्पक्षघटितासाधारण्यसंग्रहस्तु यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितित्वव्यापकमुभयाभावप्रयोजकाभावाधिकरणत्वं तद्रूपावच्छिन्नविषयिताभिन्नत्वासाधारण्यविषयिताभिन्नत्वोभयाभाववद्विषयितानिरूपकतावच्छेदकधर्मवत्त्वमितिविवक्षणेन भवति, एवञ्च विशेष्यदलघटकयद्रूपावच्छिन्नविषयकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वघटितोभयाभावोऽपि न निवेशनीयः,

(१) अभावे । (२) वृत्तित्वे । (३) अनुमितौ । (४) उत्तरत्वे । (५) निश्चये ।
(६) विषयितायाम् ।

बाधादिविषयिताप्रयोज्यस्य साध्यादिमत्त्वावगाहिताविरहस्य सत्प्रतिपक्षादिरूपविशिष्टान्तरविषयताप्रयोज्यत्वानियमादसम्भवः स्यादित्युभयाभावप्रयोजकाभावे विशिष्टान्तरविषयत्वाप्रयोज्यत्वमनिवेश्य तादृशाभावाधिकरणतायां तन्निवेशः । तथा सति अधिकरणताया अधिकरणभेदेन भिन्नतया पूर्व्ववर्त्तिनिष्ठप्रतिबन्धकतावच्छेदकधर्म्मस्यैव तदुत्तरोत्पन्ननिष्ठप्रतिबध्यतावच्छेदकधर्म्माभावाधिकरणताप्रयोजकत्वेन बाधादिनिश्चयानन्तरोत्पन्नानुमितिनिष्ठसाध्यादिमत्त्वावगाहित्वाभावाधिकरणतायां सत्प्रतिपक्षान्यादृशबाधादिविषयताया अप्रयोजकत्वेन सामञ्जस्यात् । (एतत्-पर्यन्तं क्रोडम् । )

---

तन्निवेश इति । विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वनिवेश इत्यर्थः । तथा सति—तन्निवेशे सति ।

अनुगमस्तु—प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नावगाहित्व—प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वोभयाभावप्रयोजकाभावाधिकरणतावृत्तित्वे सति अधिकरणतावृत्तिधर्मवत्त्वम् । सत्यन्तदलघटकाऽधिकरणतावृत्तित्वं च स्वविशिष्टविषयतात्वविशिष्टरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्व—स्वविशिष्टप्रतीतिविषयतावच्छेदकरूपावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । प्रथमसम्बन्धघटकविषयतायां स्ववै० स्वावच्छिन्नत्वसम्बन्धेन । प्रतीतौ स्ववै० स्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । रूपे विषयतात्ववै० स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । द्वितीयाऽधिकरणतावृत्तित्वं च स्वावच्छिन्नविषयताशालिनिश्चयविशिष्टानुमितित्वसम्बन्धाव-

---

उक्तविवक्षयैवासाधारण्यमात्रसंग्रहात्, सर्वत्रासाधारण्यस्थले बाधस्वरूपासिद्ध्यन्यतरनियमेन तादृशदोषमादाय लक्षणसमन्वयात्, मेयत्वविशिष्टासाधारण्यविषयितायाः शुद्धासाधारण्यविषयिताभिन्नत्वादेव नातिव्याप्तिः।

अत्रायमनुगमः—तादृशोभयाभावप्रयोजकीभूताभावविशिष्टविषयिताभिन्नत्वासाधारण्यविषयिताभिन्नत्वोभयाभाववद्विषयतानिरूपकतावच्छेदकधर्मवत्त्वं लक्षणम्, विषयितायामभाववत्त्वञ्च स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावीयविरोधिविषयिताप्रयुक्तत्वविशिष्टाधिकरणतासम्बन्धावच्छिन्नोभयाऽवृत्तिधर्मेतरधर्मानवच्छिन्नप्रतियोगित्वं नास्तीति प्रतीतिसिद्धोभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदकता(१)निरूपितावच्छेदकता(२)निरूपितावच्छेदकता(३)निरूपितावच्छेदकता(४)निरूपितावच्छेदकता(५)निरूपितावच्छेदकत्व(६)—स्वनिरूपिताधिकरणतावृत्तित्वोभयसम्बन्धेन, अधिकरणतावृत्तित्वं च पूर्वोक्तसम्बन्धेन, परन्तु विशिष्टान्तरविषयितायां स्वविषयितायाञ्च प्रागुक्तोभयाभावो न निवेशनीय इति बोध्यम् ।

---

(१) निरूपितत्वे । (२) अभावे । (३) वृत्तित्वे । (४) अनुमितौ । (५) उत्तरत्वे । (६) निश्चये ।

च्छिन्नाधिकरणतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्विरोधिविषयताप्रयुक्तताद‍ृशोभयाभावाधिकरणतात्ववत्त्वसम्बन्धेन ।

नन्वीद‍ृशविशिष्टान्तराऽघटितत्वनिवेशे विरोधिविषयिताप्रयुक्तत्वनिवेशनमफलम्, निर्वह्निः पर्वतो वह्निमानित्यादौ घटवद्भूतलादिरूपोदासीनस्य स्वविषयिताप्रयोज्यनिरुक्ताभावाधिकरणताकत्वविरहादेव व्युदासादिति । न च विशेष्यदले तत्सार्थक्यायाऽन्नाऽभावाधिकरणतायां स्वविषयिताप्रयोज्यत्वं स्वरूपकथनं न तु विशिष्टार्थघटकमिति वाच्यम् । तथासति प्रागुक्तरीत्या मेयत्वविशिष्टबाधादावतिव्याप्तितादवस्थ्यापातात् । नचाऽस्तु विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्य—स्वविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाऽभावाधिकरणताकत्वमेव विशिष्टान्तराऽघटितत्वम्, तथापि विशेष्यदले विरोधिविषयिताप्रयुक्तत्वनिवेशनमावश्यकम्, अन्यथा निर्वह्निः पर्वतो वह्निमानित्यादौ वह्निमत्पर्वतरूपाश्रयासिद्ध्यैकदेशे वन्ह्यादावतिप्रसङ्गात्, तस्य स्वविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठनिरुक्तोभयाभावाधिकरणताकत्वेन विशेष्यदलवत्त्वात्, विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यवह्निमत्पर्वतविषयितान्तःपातिस्वविषयिताप्रयोज्यनिरुक्तोभयाभावाधिकरणताकत्वेन विशिष्टान्तराऽघटितत्वाच्चेति वाच्यम् । स्वविषयिताप्रयोज्यत्वपदेन स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वनिवेशस्यावश्यकतया तत एव वन्ह्यादिरूपैकदेशवारणसम्भवात् ।

मैवम् । प्रतियोगिनि स्वत्वं निवेश्य स्वविषयिताप्रयोज्यविशिष्टान्तरविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकं यत्स्वं तदन्यत्वरूपं विशिष्टान्तराऽघटितत्वं वाच्यं, तथाचोदासीनघटादावतिव्याप्तिवारणाय विरोधिविषयिताप्रयुक्तत्वदलसार्थक्यम् । न चाऽनुयोगिन्येव स्वत्वं निवेश्यतां, किं विरोधिविषयिताप्रयुक्तत्वोपादानेनेति वाच्यम् । यथासन्निवेशे वैयर्थ्याभावात् ।

निर्वह्निः पर्वतो वह्निमानित्यादौ पाषाणमयो वह्निमानितिज्ञानकालीनस्य पाषाणमयः पर्वत इति ज्ञानस्य प्रतिबन्धकतामादाय पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, पाषाणमयत्वावच्छेदेन वह्निमत्वज्ञानस्य भ्रमतया तद्विषयविशिष्टस्याऽप्रसिद्ध्या विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्य—स्वविषयितात्वव्यापकरूपावच्छिन्नप्रयोज्यनिरुक्ताभावाधिकरणताकत्वेन तस्य विशिष्टान्तराऽघटितत्वात्, स्वविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठताद‍ृशोभयाभावाधिकरणताकत्वेन विशेष्यदलसत्त्वाच्च। तन्निवेशे च स्वविषयकनिश्चयोत्तरानुमितिसामान्यान्तःपातिताद‍ृशज्ञानाऽकालीनतन्निश्चयोत्तरानुमितिनिष्ठाधिकरणताया विरोधिविषयिताप्रयुक्तत्वाभावेनाऽतिव्याप्त्यभावात् । न च तथापि विशिष्टान्तराऽघटितत्वघटकस्वविषयितायां विशेष्यदलघटकयद्विषयितायां वा विरोधित्वनिवेशेनैव पाषाणमयत्ववत्पर्वतविषयितायां निरुक्तविरोधित्वाभावादेवाऽतिव्याप्त्यसम्भवे विशेष्यदले विरोधिविषयिताप्रयुक्तत्वपर्यन्तमफलमिति वाच्यम् । सिद्धिविषयेऽतिव्याप्तिवारकं विषयितायां विरोधित्वं यदि साध्यवत्पक्षविषयिताबहिर्भूतत्वरूपं तदा पाषाणमयत्ववत्पर्वतविषयितायामपि तदक्षतेः । निरुक्तावगाहिताद्वयाभावप्रतियोगितावच्छेदककोटौ यदंशे यदवगाहित्वं निविष्टं तदंशे तदभावतदभावव्याप्यान्यतरनिरूपितत्वरूपं चेद्विरोधित्वं निवेश्यते, तदा तत्रातिव्याप्त्यभावेऽपि नीलनिर्वह्निः पर्वतो वह्नि-

अथैतादृशोभयाभाववत्त्वघटितलक्षणकरणेऽपि केवलनिर्वह्नित्वादिपक्षतावच्छेदककवह्न्यादिसाध्यकस्थलीयनिर्वह्निनिष्ठवह्न्यभावादिरूपबाधादिरूपदोषेऽव्याप्तिस्तादृशबाधादिरूपदोषज्ञानस्याप्रतिबन्धकतया तदीयविषयतायाः प्रतिबन्धकतानवच्छेदकतया तथाविधोभयाभावाप्रयोजकत्वात्, तस्य दोषत्वानुपगमे तत्र हेतोर्दुष्टत्वव्यवहारानुपपत्तेः, इष्टापत्तौ तु निर्वह्निः पर्वतो वह्निमानित्यादावपि तत्सम्भवेन एतादृशप्रयासवैफल्यात्।

न च तत्र अभाववान् वह्निमानित्यनाहार्यज्ञानस्य प्रसिद्ध्या तत्प्रतिबन्धकीभूताभाववान् निर्वह्निरित्यादिज्ञानविषय एव दोष इति वाच्यम्।

---

मानित्यादौ नीलत्वाभाववान् वह्निमानितिज्ञानकालीनस्य पर्वतो नीलत्वाभाववानिति ज्ञानस्य विरोधितामादाय पर्वतत्वसामानाधिकरण्येन नीलत्वाभावघटितस्य नीलत्वाभाववत्पर्वते विशिष्टपक्षग्रहविरोधितया आश्रयासिद्ध्यनात्मकेऽतिव्याप्तेः, तद्विषयताप्रयोज्यनिरुक्तद्वयाभावप्रयोजके पर्वतत्वविशिष्टे निर्वह्नित्ववैशिष्ट्यावगाहित्वाभावाधिकरणत्वे नीलत्वाभाववान् वह्निमानिति भ्रमविषयितायाः प्रयोजकत्वेऽपि भ्रमविषयविशिष्टस्याऽप्रसिद्ध्या विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वसत्त्वेन नीलत्वाभाववत्पर्वतस्य विशिष्टान्तराघटितत्वात्। तस्मात्तद्वारणाय विशेष्यदले विरोधिविषयिताप्रयुक्तत्वमावश्यकमित्यस्मद्गुरुचरणाः।

आहार्यज्ञानमात्रे प्रसिद्धस्य निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानत्वस्य न विरोधिविषयकज्ञानप्रतिबध्यतावच्छेदकत्वम्, तथाच निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्येच्छाघटितसामग्र्यभावमात्रप्रयुक्ततया न विरोधिविषयिताप्रयुक्तत्वमस्तीत्याशंक्य व्यापकाभावप्रयोजकस्य व्याप्याभावप्रयोजकतयेति रीत्या तादृशोभयाभावे विरोधिविषयिताप्रयुक्तत्वं साधितम्, परन्तु निर्वह्निर्वह्निमानित्याहार्यस्थले निर्वह्नौ वह्निवैशिष्ट्यावगाहित्व–वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयाभावस्य तद्रीत्यापि विरोधिविषयिताप्रयुक्तत्वं न सम्भवतीत्याशङ्कते **अथेति**। **केवलेति**। निर्वह्नित्वमात्रपक्षतावच्छेदककेत्यर्थः। तेन पर्वतत्वस्य व्यावृत्तिः। **अव्याप्तिरिति**। निर्वह्निर्वह्निमानित्याहार्यस्थलीयवह्न्यभाववन्निर्वह्निरूपबाधेऽव्याप्तिरित्यर्थः। **तदीयविषयतायाः**—बाधनिश्चयीयविषयतायाः। **तथाविधेति**। निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्व–वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयेत्यर्थः। **तस्य**–उक्तबाधस्य। तत्र—निर्वह्निपक्षकवह्निसाध्यकस्थले। **तत्सम्भवेन**–इष्टापत्तिसम्भवेन।

उक्तस्थले वह्न्यभाववन्निर्वह्निर्न बाधः, किन्तु वह्न्यभाववदभाववद्बाधः, तन्निश्चयस्य—अभाववान् वह्निमानितिज्ञानप्रतिबन्धकतया तादृशबाधनिश्चयविषयतायाः प्रतिबन्धकतावच्छेदकतया अभाववति वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजकतया निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावस्यापि प्रयोजकत्वात्, व्यापकाभावप्रयोजकस्येत्यायुक्तन्यायादित्याशङ्कते **नचेति**। **तत्रेति**—निर्वह्निर्वह्निमानित्यत्र। अस्य तत्प्रतिबन्धकीभूताऽभाववान् निर्वह्निरित्यादिज्ञानविषय एव दोष इत्यनेनाऽन्वयः। **अनाहार्यज्ञानस्येति**। प्रतिबध्यज्ञानस्येति भावः। **तत्प्रतिबन्धकीभूतेति**। तादृशाऽनाहार्यज्ञानप्रति-

अभाववत्त्वसामानाधिकरण्येन निर्व्वह्नित्वग्रहस्य तादृशवह्निमत्त्वग्रहाविरोधित्वात्, अभाववत्त्वावच्छेदेन वन्ह्यादिमत्ताग्रहविरोधित्वेऽपि तादृशवन्ह्यादिमत्तावगाहित्वस्य वन्ह्यभावादिमत्त्वरूपपक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वाव्यापकतया तदवच्छिन्नानिरूपितप्रतिबन्धकतावच्छेदकविषयितायास्तथाविधोभयाभावाप्रयोजकत्वात् तद्विषयस्य दोषत्वानुपपत्तेः, अभाववत्त्वावच्छेदेन निर्व्वह्नित्वग्रहस्य भ्रमरूपतया तद्विषयाविशिष्टस्याप्रसिद्धेः। एवं वह्निमान्निर्व्वह्निरित्यादिस्थलीयदोषे नितरामव्याप्तिर्व्वह्निमद्विशिष्टवह्निमत्त्वादेरेव तत्र दोषत्वसम्भवात्, तद्विषयकस्य ज्ञानस्य क्वचिदपि प्रतिबन्धकत्वायोगात्। एवं यत्र निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ पर्व्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादिमत्त्वस्य पक्षतावच्छेदकघटकता तत्र पर्व्वतत्वसामानाधिकरण्येन वन्ह्यादिमत्त्वं न दोषः, विशिष्टपक्ष-

---

बन्धकीभूतेत्यर्थः। एवकारेण वन्ह्यभाववन्निर्वह्निरूपबाधव्यवच्छेदः। निर्वह्निर्वह्निमानित्यनुमितौ अभाववत्त्वसामानाधिकरण्येन वन्ह्यभावो बाधः, अभाववत्त्वावच्छेदेन वा। नाद्यः इत्याह **अभाववत्त्वसामानाधिकरण्येनेति**। **निर्वह्नित्वग्रहस्येति**। वन्ह्यभावग्रहस्येत्यर्थः। बाधनिश्चयस्येति यावत्। **तादृशेति**। अभाववत्त्वसामानाधिकरण्येनेत्यर्थः। **विरोधित्वेऽपीति**। सामानाधिकरण्येन बाधनिश्चयस्याऽवच्छेदावच्छेदेनाऽनुमितौ विरोधित्वादित्यर्थः। **तादृशेति**। अवच्छेदावच्छेदेनेत्यर्थः। **अव्यापकतयेति**। अभाववत्त्वावच्छेदेन वह्निमत्ताग्रह—वन्ह्यभाववत्त्वावच्छेदेन वह्निमत्ताग्रहौ भिन्नौ व्यापकतावच्छेदकरूपभेदेन व्यापकताभेदात्। तथाचाऽभाववत्त्वावच्छेदेन वह्निमत्ताग्रहत्वस्य वन्ह्यभाववत्त्वावच्छेदेन वह्निमत्ताग्रहत्वाव्यापकतयेत्यर्थः। **तदवच्छिन्ननिरूपितेति**। वन्ह्यभाववदभाववत्त्वावच्छिन्ननिरूपितेत्यर्थः। **तथाविधोभयेति**। वन्ह्यभाववति वह्निवैशिष्ट्यावगाहित्व—वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वोभयेत्यर्थः। **तद्विषयस्येति**। अभाववत्त्वसामानाधिकरण्येन वन्ह्यभाववत्तानिश्चयविषयस्येत्यर्थः। **दोषत्वानुपपत्तेरिति**। एवं च नाऽत्र सामानाधिकरण्येन तादृशबाधो दोष इत्यर्थः। न द्वितीयः, तस्याऽप्रसिद्धत्वेन यद्रूपपदाऽग्राह्यत्वादित्याह **अभाववत्त्वावच्छेदेनेति**। तथाच वन्ह्यभाववान्निर्वह्निरूपबाधस्यैवाऽऽवश्यकतयाऽव्याप्तिरिति भावः।

दोषज्ञानप्रतिबध्याऽनाहार्यज्ञानप्रसिद्धिस्थले दोषमुक्त्वा तदप्रसिद्धिस्थलेऽव्याप्तिमाह **एवमिति**। **तद्विषयकस्यज्ञानस्येति**। वह्निमान् वह्निमानित्याकारकबाधनिश्चयस्येत्यर्थः।

दीधितिकृता पर्वतत्वावच्छेदेन वन्ह्यभावस्य पक्षतावच्छेदकघटकत्व एवाऽव्याप्तिरुक्तेत्याशयेनाह **एवमिति**। **विशिष्टपक्षग्रहाद्यविरोधित्वेनेति**। सामानाधिकरण्येनाऽनुमितौ सामानाधिकरण्येन विपरीतनिश्चयस्याऽप्रतिबन्धकत्वादिति भावः। **उक्तरीत्या**—पर्वतत्वावच्छेदेन वन्ह्यवगाहित्वस्य तादृशविषयत्वाव्यापकत्वेनेत्यर्थः। सामानाधिकरण्येनाऽऽश्रयासिद्धिर्न सम्भवतीति भावः। अवच्छेदावच्छेदेनाऽऽश्रयासिद्धिश्च न सम्भवतीत्याह

ग्रहाद्यविरोधित्वेनाश्रयासिद्ध्यादिरूपत्वानुपपत्तेः, उक्तरीत्यैतल्लक्षणानाक्रान्तत्वाच्च । पर्व्वतत्वाद्यवच्छेदेन वन्ह्यादिमत्त्वञ्चाप्रसिद्धं, वह्निशून्यपर्व्वतादेरपि सत्त्वात् । नापि पर्व्वतत्वादिसामानाधिकरण्येन, निर्व्वह्निपर्व्वतत्वाद्यवच्छेदेन वा वन्ह्यभावादिमत्त्वरूपबाधादिदोषः । तज्ज्ञानस्य पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वव्यापकविषयताघटितधर्म्मावच्छिन्नाप्रतिबन्धकतया तत्र लक्षणगमनायोगात् । नापि पर्व्वतत्वावच्छेदेन वन्ह्यभावादिमत्त्वम्, अप्रसिद्धत्वादिति तत्र को दोषः ।

यत्तु प्रयुक्तत्वं व्यापकत्वं, यद्विषयकनिश्चयनिष्ठविरोधिविषयिताया उभयाभावव्याप्यत्वञ्च स्वाश्रयतादृशनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन, तादृशसम्बन्धलाभायैव तदुत्तरमनुमितावित्युक्तम् । एवञ्च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभावस्तत्त्वम् इति पर्य्यवसितम् । एवञ्च निर्व्वह्निर्वह्निमानित्यादिस्थलीयबाधादिस्थलीयबाधादिविषयितायां स्वरूपसम्बन्धरूपोभयाभावप्रयोजकत्वासम्भवेऽपि उभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकत्वं निविष्टं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरप्रकारकत्वस्यैव विरोधिविषयत्वार्थकतया तत्र लक्षणं सुसमन्वयमेव तादृशप्रयोजकत्वस्यानिवेशात् ।

नचैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्व्वारैव, तादृशोभयाभावस्य विरोधिविषयकसमूहालम्बनरूपघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्व-

---

**अप्रसिद्धमिति** । ननु मास्तु तत्राश्रयासिद्धिः, तत्र बाध एवास्त्वित्यत आह **नापीति** । **तज्ज्ञानस्य**—पर्वतत्वसामानाधिकरण्येन वन्ह्यभावज्ञानस्य । **अप्रतिबन्धकतयेति** । तज्ज्ञानस्य पर्वतत्वावच्छेदेन वन्ह्यवगाहिज्ञानप्रतिबन्धकत्वेऽपि तादृशावगाहिताया निर्वह्निपर्वतत्वावच्छिन्ने वन्ह्यवगाहित्वाव्यापकतया प्रकृतेऽनुपयोगादिति भावः । सामानाधिकरण्येन बाधस्यापि न सम्भवः, नाप्यवच्छेदावच्छेदेनापि तस्येत्याह **नापीति** । **को दोष इति** । वह्निव्यभिचारिणो हेतुत्वाभिप्रायेणेदम्, अन्यथा धूमादौ हेतुत्वे धूमाभाववन्निर्वह्निपर्वतादेः स्वरूपासिद्ध्यात्मकस्य सत्त्वात् को दोष इत्यसङ्गतं स्यात् ।

स्वरूपसम्बन्धरूपप्रयोजकतानिवेशे एवोक्ताव्याप्तिरिति तमनिवेश्य प्रकारान्तरेणाऽव्याप्तिमुद्धरतां मतमुपन्यस्य दूषयति **यत्त्विति** । **स्वाश्रयेति** । स्वं—विषयिता । **तादृशेति** । यद्विषयकेत्यर्थः । एवं चाऽत्र व्याप्यतावच्छेदकीभूततादृशानुमितित्वसम्बन्धेन तादृशविषयित्वाधिकरणत्वं ग्राह्यम्, तेन साक्षात्सम्बन्धेन तयोरसामानाधिकरण्येऽपि न क्षतिः । फलितार्थमाह **एवञ्चेति** । व्यापकतारूपप्रयुक्तत्वनिवेशे चेत्यर्थः । **यद्विषयकेति** । यद्रूपावच्छिन्नविषयकेत्यर्थः तेन नाऽसम्भवः । **तादृशेति** । स्वरूपसम्बन्धरूपेत्यर्थः ।

**एवं**—व्यापकतात्मकप्रयुक्तत्वनिवेशे । **तत्र**—निर्वह्निः पर्वतो वह्निमानित्यत्र । ननु ह्रदो वह्निमान् धूमादित्यादौ सर्वत्रैव वस्तुमात्रेऽतिव्याप्तिसम्भवात्तत्रेत्यनेव निर्वह्निः पर्वतो

व्यापकताया अक्षतत्वादिति वाच्यम्। विरोधिविषयितानातिरिक्तवृत्तिर्यद्विषयिता तच्छालिनिश्चयस्य निश्चयन्तेन विवक्षणाद्धटादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्वविरहात्।

---

वह्निमानित्यादौ वस्तुमात्रेऽतिव्याप्तिकथनमसङ्गतम्। न च तत्रेत्यनेन तादृशपरिष्कारे इति विवक्षणात्सर्वत्रैव वस्तुमात्रेऽतिव्याप्तिरिष्टेति वाच्यम्। तथासति दुर्वारैवेत्यस्याऽसङ्गतत्वापातादिति चेन्न।

सामानाधिकरण्यसाध्यकस्थलीयलक्षणस्योदासीनेऽतिव्याप्तिविरहात्। सामानाधिकरण्येन साध्यवत्युभयाभावप्रतियोगिकोटावित्यादिविरोधित्वस्य सामानाधिकरण्येन या साध्याभावविषयिता तच्छालिज्ञानीयविषयितायामपि सत्वेन सामानाधिकरण्येन यः साध्याभावस्तद्विषयकोदासीनविषयकविरोधिविषयकनिश्चयोत्तरानुमितिसामान्ये उभयाभावाऽसत्वात्। एवं च सर्वत्रोदासीने नातिव्याप्तिरिति सूचनाय निर्वह्निः पर्वतो वह्निमानित्याहार्यस्थलबोधकं तत्रेत्युपन्यस्तम्। इत्थं च विरोधिविषयिताप्रयुक्तत्वदलानिवेशेऽपि उदासीनेऽतिव्याप्तिरिदानीमस्त्येवेति सूचनाय दुर्वारैवेत्युक्तम्। **निश्चयान्तेनेति**। तथाच विरोधिविषयिताऽनतिरिक्तवृत्तिर्यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये इत्यादिलक्षणार्थः।

अत्र यद्रूपावच्छिन्ननिरूपकताकविरोधिविषयिता तादृशोभयाभावव्याप्येत्युक्तावसाधारण्याऽसङ्ग्रहः, असाधारण्यत्वावच्छिन्नविषयितायां निर्वाच्यविरोधिविषयितात्वाभावात्। न च यद्रूपावच्छिन्नविषयिता विरोधिविषयिताऽनतिरिक्तवृत्तिरित्यभिधाने कथमसाधारण्यसङ्ग्रहः, असाधारण्यविषयिताया विरोधिविषयिताशून्याऽसाधारण्यज्ञाने सत्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयितायां निरूप्यनिरूपकभावापन्नसाध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षविषयिताशालिज्ञानभिन्नत्व—निरूप्यनिरूपकभावापन्नाऽसाधारण्यविषयितावत्वोभयाभाववज्ज्ञानीयत्वस्य विवक्षणीयत्वात्। तथाच तादृशहेतुमत्पक्षविषयितानिरूपकज्ञानमेवाऽसाधारण्यविषयकमुभयाभाववद्भवति, तथा च तादृशपक्षविषयितानिरूपितसाध्याभावव्याप्यताशून्यविरोधिविषयकयद्विषयकनिश्चयविवक्षणे पर्वतविषयित्वाऽव्यापकविषयिताशून्यपर्वतविषयकाविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरेकदेशातिव्याप्तेरनवकाशात्(१)।

---

(१) न चैवमपि गोत्वाभावो गोत्वाभाववान् घटान्यघटादित्यत्र गोत्वाभावेऽतिव्याप्तिः, गोत्वादिविषयिताया गोत्वाभावविषयिताव्यापकतया तद्विषयित्वाव्यापकविषयिताशून्यगोत्वाभावविषयकविषयिताशालिगोत्वाभावो गोत्ववानिति निश्चयोत्तरानुमितिसामान्ये उभयाभावसत्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता यद्विषयित्वाव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं विवक्षणीयम्, तथा च गोत्वाभावत्वावच्छिन्नविषयितानिरूपितसमवायावच्छिन्नविषयिताया गोत्वाभावविषयित्वाव्यापिकाया उक्तबाधभ्रमे सत्त्वेन तच्छून्यगोत्वाभावविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरतिव्याप्तिविरहात्। न चैवमपि घटो द्रव्यभिन्न इत्यत्र बाधैकदेशे घटेऽतिव्याप्तिः, घटो द्रव्यमित्याकारकघटविषयकविरोधिविषयिताशालिनिश्चये घटत्वावच्छिन्नविषयित्वाव्यापिका या यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता तस्या अभावात, समवायावच्छिन्नविषयितानिरूपितघटत्वावच्छिन्नविषयिता व्यापिकैव घटं इति ज्ञाने घटे घटत्वस्य समवायेन भानात्, बाधज्ञाने द्रव्यत्वं स्वरूपत एव

नचैवं विरोधिविषयितानतिरिक्तवृत्तिर्यद्विषयिता तत्त्वमित्येतावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यम् । यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यादेः साध्यता तत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादिमत्त्वविषयिताया निरुक्तविरोधिविषयितानतिरिक्तवृत्तितया तत्रातिव्याप्तिवारकतया शेषसार्थक्यात् । तदुपादाने तादृशवन्ह्यभावादिमत्त्वविषयकनिश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वन्ह्याद्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति । तत्तुच्छम् ।

निर्वन्हिः पर्वतो वन्हिमानित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादेः पक्षतावच्छेदकता तत्र पर्वतत्वसामानाधिकरण्येन वन्ह्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वादाश्रयासिद्ध्यनात्मकहेत्वाभासान्तरताभयेनासम्भवल्लक्ष्यभावस्य निरुक्तविरोधिविषयितानातिरिक्तवृत्ति-

---

एवं–निश्चयपदस्य तादृशविषयिताशालिनिश्चयपरत्वे । वन्ह्याद्यनुमित्युत्पत्त्येति । सामानाधिकरण्येनाऽनुमितिं प्रति सामानाधिकरण्येन बाधनिश्चयस्याऽप्रतिबन्धकत्वादिति भावः।

अत्र विरोधिविषयता–पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रतियोगितावच्छेदकताश्रयविषयता(१)विशिष्टविषयता(२) तादृशविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयिताविशिष्टविषयतान्यतररूपा । विषयतायां विषयतावैशिष्ट्यं च स्वाधिकरणत्व–स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, स्वाधिकरणत्वं च स्वविशिष्टप्रकारतानिरूपितत्व–स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतावत्प्रकारतानिरूपितत्व—स्वावच्छेद्यविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टप्रकारतानिरूपितत्व-स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाधिकरणतानिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावावच्छिन्नप्रकारतानिरूपितत्वान्यतमसम्बन्धेन, अन्यतमघटकप्रथमसम्बन्धे प्रकारतायां स्ववैशिष्ट्यं च स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रति-

---

भासत इति न तद्विषयिता किञ्चिद्रूपावच्छिन्ना तादृशनिश्चयोत्तरानुमितिसामान्ये उभयाभावस्य च सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता यद्विषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयताशून्यत्वविवक्षणेऽतिव्याप्त्यभावात्, घट इति ज्ञानेऽविद्यमानायाः समवायावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयताया घटो द्रव्यमिति ज्ञाने सत्त्वेन तच्छून्यघटविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरिति चेन्न ।

स्वरूपं स्वरूपवह्नेदत्ववदित्यत्र स्वरूपवह्नेदत्ववह्नेदवति बाधैकदेशेऽतिव्याप्तेः, स्वरूपवह्नेदत्ववह्नेदवत्स्वरूपमिति बाधज्ञाने बाधैकदेशनिरुक्तविशिष्टविषयित्वाव्यापिकायाः कस्या अपि निरुक्तविषयिताया अभावात्, तादृशनिश्चयोत्तरानुमितिसामान्ये उभयाभावस्याऽक्षतत्वात्, यद्विषयितायां विरोधिविषयितानतिरिक्तवृत्तित्वनिवेशे तु तादृशैकदेशविषयिताया विरोधिविषयिताशून्यैकदेशमात्रविषयकज्ञाने सत्त्वेन न तिव्याप्तिरिति दिक् ॥ श्रीः ॥

(१) साध्यप्रकारत ास्य (२) पक्षविशेष्यता दोषज्ञानीया ।

**विषयिताकतयाऽतिव्याप्तेः । ताहशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमितित्वाव-च्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वरूपविरोधित्वस्य वि-षयितायां निवेशे तु शेषवैयर्थ्यम्, उक्तरीत्या निर्वन्हिर्वन्हिमानित्यादिस्थ-लीयदोषेऽव्याप्तिश्च ।**

**यत्तु पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चया-ऽवृत्तिविषयितैव विरोधिविषयितापदार्थः । तथाच यन्निरूपिततादृशवि-**

---

योगितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताच्छेयत्व—स्वावच्छेदकसम्बन्धावच्छिन्नत्वा-वच्छेदकावच्छिन्नप्रतियोगिताकाभावनिष्ठस्वाश्रयसामान्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धा-वच्छिन्नत्वोभयस्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकभेदत्वावच्छिन्न-त्वानुपदमुक्तद्वितीयसम्बन्धावच्छिन्नत्वोभयान्यतरसम्बन्धेन, द्वितीयसम्बन्धे प्रकारतायां सां-सर्गिकविषयतावत्त्वं च स्वनिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नत्व—स्वनिरूपितावच्छिन्नत्वानि-ष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, तृतीयसम्बन्धेऽवच्छे-दकतावैशिष्ट्यं च प्रकारतायां स्वाधिकरणवृत्तित्व—स्वावच्छेदकसम्बन्धावच्छिन्नत्वाऽवच्छेद-कतासम्बन्धावच्छिन्नस्वाभाववद्धर्मानवच्छिन्नत्व—स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, अन्यतमशरीरे प्रथमसम्बन्धनिवेशात् ह्रदो वन्हिमानित्यत्र ह्रदो वन्ह्यभाववान् ह्रदो वन्हिमद्भिन्न इति ज्ञा-नीयविषयतयाः सङ्ग्रहः, द्वितीयसम्बन्धनिवेशात् पर्वतो वन्ह्यभाववानित्यत्र पर्वतो वन्हिमा-निति ज्ञानीयविषयतासङ्ग्रहः, तृतीयसम्बन्धनिवेशाद्घटो द्रव्यभिन्न इत्यत्र स्वरूपतो द्रव्यत्वाव-गाहि—घटो द्रव्यमितिज्ञानीयविषयतासङ्ग्रहः, चतुर्थसम्बन्धनिवेशात् ह्रदो वन्हिमानित्यत्र वन्हिमदवृत्तिमान् ह्रद इति ज्ञानीयविषयतासंग्रहः, एवं तुल्यवित्तिवेद्यतया भानमङ्गीकृत्य पक्ष-वृत्तिः साध्याभाव इत्यादिज्ञानीयविषयता संग्राह्येति दिक् ।

**अतिव्याप्तेरिति** । सामानाधिकरण्येन पक्षतावच्छेदककस्थले पक्षेऽवच्छेदकावच्छेदेन पक्षतावच्छेदकवैशिष्ट्यावगाहित्वघटिताऽन्यतरविषयितानिवेशे तु नायं दोषः, एकोक्तेराकिञ्चि-त्करत्वादिति बिभावनीयम् ।

**तद्रूपावच्छिन्नेति** । वस्तुतः पक्षतावच्छेदकविषयतामनिवेश्य पक्षविशेष्यतानिरूपि-ताकिञ्चिद्धर्मव्यापकसंसर्गनिष्ठसांसर्गिकविषयतानिरूपिततदभावादिविषयतैवाऽवच्छेदकावच्छेदेन विरोधिविषयता । **शेषवैयर्थ्यमिति** । वृक्षः संयोगीत्यत्र संयोगाभाववद्वृक्षेऽतिव्याप्तिवार-णाय शेषसार्थक्यसम्भवादाह **उक्तरीत्येति** । अनुमित्यप्रसिद्धेरित्यर्थः ।

विरोधित्वमन्यथा निरुच्य लक्षणमुपवर्णयतां मतमुपन्यस्य दूषयति **यत्त्विति** । **नि-रुक्तसाध्यहेतुवैशिष्ट्यावगाहीति** । साध्यतावच्छेदकावच्छिन्नव्याप्तिविशिष्टहेतुताव-च्छेदकावच्छिन्नहेतुवैशिष्ट्यावगाहीत्यर्थः । **विरोधिविषयितापदार्थ इति** । यथा ह्रदो वन्हिमानित्यत्र वन्ह्यभाववद्ह्रदविषयिता तादृशी, तस्या ह्रदो वन्हिमान् वन्हिव्याप्यधूमवा-नित्येतादृशनिश्चयाऽवृत्तित्वात्, विरोधिनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्धात् । तथाच—इद-

**षयिताशालिनिश्चयोत्तरानुमितित्वव्यापक उभयाभावस्तत्त्वमिति समुदितार्थः। निश्चयत्वं च विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यक(१)ज्ञानान्यज्ञानत्वम् । कोटिद्वये विशेषणविशेष्यतावच्छेदकभावानापन्नत्वनिवेशात् निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्यादिवैशिष्ट्यग्रहस्य एकत्र विरोधिद्वयप्रकारकत्वनियमेऽपि न तादृशवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिः ।**

---

शविरोधिविषयितानिवेशे । **यन्निरूपितेति** । यद्रूपावच्छिन्नेत्यर्थः । **तादृशेति** । तादृशनिश्चयावृत्तीत्यर्थः । तथाच प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहि–प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयाऽवृत्तियद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावस्तद्रूपवत्त्वं लक्षणम् । अत्र यद्रूपावच्छिन्नविषयितायां तादृशनिश्चयाऽवृत्तित्वरूपविरोधित्वनिवेशान्निर्वह्निः पर्वतो वह्निमानित्यत्र घटविषयकनिश्चयोत्तरानुमितिसामान्ये उभयाभावसत्त्वेऽपि न क्षतिः । निश्चयपदोपादानाच्च वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयितायास्तादृशसंशयवृत्तित्वेऽपि न क्षतिः । निश्चयत्वं हि संशयाऽन्यज्ञानत्वम्, संशयत्वं च विरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानत्वम् । तथाच तादृशज्ञानान्यज्ञानत्वं निश्चयत्वम् । तत्रापि कोटिद्वये विशेषणविशेष्यतावच्छेदकभावानापन्नत्वनिवेशस्य फलमाह **कोटिद्वये इत्यादिना।** **निर्वह्निः पर्वतो वह्निमानित्यादौ** । अस्य न तादृशवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिरित्यनेनाऽन्वयः । **पक्षतावच्छेदकविशिष्टेति** । प्रकृतेत्यादिः । एवमग्रेऽपि । **साध्यादिवैशिष्ट्यग्रहस्येति** । निर्वह्निः पर्वतो वह्निमानित्याकारकग्रहस्येत्यर्थः । **एकत्र विरोधिद्वयप्रकारत्वनियमेऽपीति** । एकधर्मिविशेष्यकविरोधिकोटिद्वयप्रकारकत्वनियमेऽपीत्यर्थः । तादृशज्ञानान्यज्ञानत्वविरहेऽपीति यावत् । **न तादृशवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिरिति** । न तादृशवैशिष्ट्यावगाहिज्ञाने निश्चयत्वानुपपत्तिरिति यावत् । तथाच विशेषणविशेष्यतावच्छेदकभावानापन्नत्वाऽनिवेशे तद्धर्मावच्छिन्नविशेष्यकतदभावाप्रकारकत्वे सति तद्धर्मावच्छिन्नविशेष्यकतत्प्रकारकत्वमेव निश्चयत्वं वाच्यम्, एवञ्च निर्वह्निः पर्वतो वह्निमानित्यत्र तादृशनिश्चयाऽप्रसिद्ध्याऽऽश्रयासिद्धावव्याप्तिः स्यात्(२), तन्निवेशे तु आहार्यनिश्चय-

---

(१) अत्र एकधर्मिविशेष्यकेत्यनुपादाने ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभाववद्घटादावतिव्याप्तिः, वह्न्यभाववद्घटाद्यविषयकस्यैव पक्षे साध्यादिनिश्चयस्य विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकज्ञानान्यज्ञानत्वेन वह्न्यभाववद्घटादिविषयितायास्तदवृत्तित्वात् ।

(२) न च तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रकारताकं सत् तद्धर्मावच्छिन्नविशेष्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नाभावप्रकारकान्यत्वं विवक्षणीयम्। तथा च निर्वह्निः पर्वतो वह्निमानित्यत्र वह्निप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणं वह्न्यभावपर्वतोभयमेव तादृशोभयधर्मावच्छिन्नविशेष्यताकवह्न्यभावप्रकारकान्यत्वं तादृशनिश्चये ऽक्षतमेव । अनुगमप्रकारस्तु—स्वनिरूपकत्व–स्वनिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणीभूतधर्मावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नाभावप्रकारताकान्यत्वैतदुभयसम्बन्धेन तद्धर्मावच्छिन्नप्रकारताविशिष्टत्वमिति वाच्यम्। एवं सति नीलह्रदो वह्निमानित्यत्र ह्रदत्वावच्छेदेन वह्न्यभावस्य बाधतया तादृशसाध्यकधूमहेतौ च ह्रदत्वावच्छेदेन धूमाभावस्य स्वरूपासिद्धितया तत्राव्याप्तिः । भट्टाचार्यमते यथा सामान्यघटितविशेषधर्मावच्छिन्न-

सामान्याभावकोटिसंशयो ह्रदो महानसीयवह्निमान् वह्निसामान्याभाववान्वेत्याकारको जायते तथा सामान्य-
घटितविशेषधर्मावच्छिन्ने एककोटिविशिष्टसामान्यधर्मावच्छेदेनापरकोट्यवगाहिनीलह्रदो वह्निमान्, ह्रदो वह्नि-
सामान्याभाववान् नीलह्रदो वह्निव्याप्यधूमवान् ह्रदो धूमसामान्याभाववान्वेत्याकारको जायते। तथा च तादृश-
संशयस्य वह्नित्वावच्छिन्नप्रकारताकत्वेऽपि वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्याप्त्यवच्छे-
दकीभूतनीलत्वह्रदत्वोभयधर्मावच्छिन्नविशेष्यतानिरूपितवह्न्यभावप्रकारताकत्वाभावात् वह्नित्वावच्छिन्नप्रका-
रत्वस्य निरुक्तोभयसम्बन्धेन वैशिष्ट्यस्य तत्र सत्त्वात्, तादृशसंशये च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयता-
सत्त्वादतः स्वनिरूपकत्व—स्वनिरूपितविशेष्यतावच्छेदकतानात्मकस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्न-
प्रकारतानिरूपकान्यत्वैतदुभयसम्बन्धेन तद्धर्मावच्छिन्नप्रकारतावत्त्वं वक्तव्यम्। तथा च निर्वह्निः पर्वतो
वह्निमानितिज्ञाने वह्नित्वावच्छिन्नप्रकारतानिरूपकत्वसत्त्वेऽपि तादृशप्रकारतानिरूपितविशेष्यतावच्छेदकता-
नात्मकवह्न्यभावप्रकारतानिरूपकत्वं नास्तीति निरुक्तोभयसम्बन्धेन वह्नित्वावच्छिन्नप्रकारतावैशिष्ट्यं निरु-
क्ताहार्येऽस्त्येव।

न च निर्वह्निः पर्वतो वह्निमानिति ज्ञाने यथा वह्निप्रकारतानिरूपितविशेष्यतावच्छेदकता वह्न्यभावे
वर्तते, तथा पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधर्मितावच्छेदकतानात्मकप्रकारता वर्तत इति कथं तादृशा-
हार्यसङ्ग्रह इति वाच्यम्॥ तत्र धर्मितावच्छेदकत्वप्रकारकत्वयोर्भेदमते स्वनिरूपितविशेष्यतावच्छेदकताना-
त्मकत्वं विहाय स्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छिन्नत्वस्योक्तत्वान्न दोषः। नचैवं सति ह्रदो वह्निमान्
धूमादित्यत्र ह्रदविशिष्टवह्न्यभावेऽव्याप्तिः। ह्रदो वह्निमान् वह्न्यभाववांश्च ह्रद इति समूहालम्बनाहार्यस्य
वह्नित्वावच्छिन्नप्रकारकत्वसत्त्वेऽपि वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यता-
निरूपितावच्छेदकत्वानवच्छिन्नवह्न्यभावप्रकारकत्वविरहेण निरुक्तोभयसम्बन्धेन वह्नित्वावच्छिन्नप्रकारतावि-
शिष्टत्वात् तत्र च ह्रदविषयतानिरूपितवह्न्यभावविषयताया वर्तमानत्वान्निरुक्ततादृशनिश्चयावृत्तित्वस्य ह्रद-
विशिष्टवह्न्यभावत्वावच्छिन्नविषयतायामसत्त्वात्। आहार्यज्ञानीयविषयताया अनाहार्यज्ञानीयविषयतातो नि-
रूपकभेदेनैव भिन्नतया भ्रमस्य केवलह्रदे वह्न्यभाव इति ज्ञानीयविषयताया ह्रदो वह्निमान् वह्न्यभाववांश्च ह्रद
इति समूहालम्बनज्ञानीयह्रदविशिष्टवह्न्यभावविषयताया भिन्नतया भ्रमान्यकेवलह्रदे वह्न्यभाव इति ज्ञानीय-
ह्रदविशिष्टवह्न्यभावविषयताया अपि तादृशसमूहालम्बननिश्चयवृत्तित्वे बाधकाभावात्। अत एव वह्निमान्
ह्रदो वह्न्यभाववानिति ज्ञानीयविषयताया भेदे प्रयोजिका आहार्यज्ञानसमानाकारानाहार्यज्ञानाप्रसिद्धिरिति
भट्टाचार्येण लिखितं सङ्गच्छते इति वाच्यम्। स्वनिरूपकत्वत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता-
वच्छेदकविषयतावत्त्वैतदुभयसम्बन्धेन प्रकारताविशिष्टान्यत्वं निश्चयत्वम्, तथा च ह्रदो वह्निमान् वह्न्यभाव-
वांश्च ह्रद इति ज्ञाने ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वं वर्तते। एवं तादृशप्र-
कारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयत्वसम्बन्धावच्छिन्नह्रदत्वावच्छिन्नप्रका-
रतानिरूपितवह्न्यभावत्वावच्छिन्नविषयतावत्त्वं वर्तते इत्युभयसम्बन्धेन तादृशप्रकारतावत्त्वात्तादृशज्ञानस्य
न निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टान्यत्वं, किन्तु ह्रदो वह्निमानितिज्ञानस्यैव तत्र ह्रदविशिष्टव-
ह्न्यभावविषयताया अवर्तमानत्वात्स्वपदेन ह्रदविशिष्टवह्न्यभावत्वस्य धारणसम्भवात् ह्रदविशिष्टवह्न्यभावे
लक्षणसमन्वयः। न च निर्वह्निः पर्वतो वह्निमानित्यत्र वह्न्यभावप्रकारताया अपि आहार्यज्ञानवृत्तित्वेन
त्वावच्छिन्नप्रतिबध्यताया अप्रसिद्धत्वेन स्वपदेन तस्य धारणं न सम्भवतीति निर्वह्निः पर्वतो वह्निमान्
पर्वतश्च वह्निमानिति ज्ञाने निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमक्षतमेवेति तादृशज्ञाने वह्निमत्प-
र्वतत्वावच्छिन्नविषयताया वर्तमानत्वेन वह्निमत्पर्वतस्य धारणासम्भवात् वह्निमत्पर्वतेऽव्याप्तिरिति वाच्यम्।
स्वनिरूपकत्व—स्वविशिष्टप्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावत्त्वैतदुभ-
यसम्बन्धेन प्रकारताविशिष्टान्यत्वस्य विवक्षितत्वात्। प्रकारतायां स्ववैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्व-
स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वैतदुभयसम्बन्धेन। तथा च निर्वह्निः पर्वतो
वह्निमान् पर्वतश्च वह्निमानिति समूहालम्बनज्ञाने निर्वह्निः पर्वतो वह्निमानितिज्ञानीया या वह्न्यभाव-
प्रकारता तन्निरूपकत्वं वर्तते, एवं निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टा या निर्वह्निः पर्वत इति

ज्ञानीयविषयता तदवच्छिन्नप्रतिबध्यतानिरूपितबन्धकतावच्छेदकीभूतपर्वतो वह्निमानितिज्ञानीयविषयतानिरूपकत्वं च वर्तत इति निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टान्यत्वं तादृशसमूहालम्बनज्ञाने नास्तीति न वह्निमत्पर्वतेऽव्याप्तिः ॥ न च निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञानीयवह्निमत्पर्वतविषयताया वन्ह्यभावप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वेन तादृशज्ञानमपि निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टान्यदेवेति तादृशज्ञानीयवह्निमत्पर्वतविषयितायास्तादृशनिश्चयवृत्तितया तथापि वह्निमत्पर्वतेऽव्याप्तितादवस्थ्यमिति वाच्यम्। भ्रमान्यवृत्तियद्रूपावच्छिन्नविषयिता तादृशनिश्चयावृत्तित्वद्रूपावच्छिन्नत्वस्य भट्टाचार्येण विवक्षणीयतया निर्वह्निपर्वतो वह्निमानिति ज्ञानीयविषयताया भ्रमान्यवृत्तियद्रूपावच्छिन्नविषयतासामान्यस्य तादृशनिश्चयावृत्तितया असत्तेः। न चैवमपि निर्वन्हिः पर्वतो वन्हिमान् निर्वन्हिश्च वन्ह्यभाववानिति समूहालम्बनज्ञाने या वन्ह्यभावावच्छिन्नविशेष्यतानिरूपितवन्ह्यभावत्वावच्छिन्नप्रकारता तस्याः प्रतिबन्धकतानवच्छेदकतया तादृशज्ञाने निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमक्षतमेवेति निरुक्तनिश्चयावृत्तित्वस्य वह्न्यभावावच्छिन्नवह्न्यभावविषयतायामसत्वात् वन्ह्यभाववद्वह्न्यभाववत्यव्याप्तिरिति वाच्यम्। शुद्धवह्न्यभावावच्छिन्नविशेष्यकवह्न्यभावप्रकारकान्यत्वस्य स्वातन्त्र्येण ज्ञानविशेषणत्वात् न वह्न्यभावविशिष्टवह्न्यभाववत्यव्याप्तिः। एवं वह्न्यभावस्याधेयतासम्बन्धेन वन्ह्यभाववत्प्रकारकान्यत्वमपि तादृशज्ञाने देयमतो नाधेयतासम्बन्धेन वन्ह्यभाववद्विशिष्टवन्ह्यभावेऽव्याप्तिरिति। एवं निर्वन्हिः पर्वतो वन्हिमानित्यत्र वन्हिविशिष्टपर्वतस्याधेयतासम्बन्धेन पर्वतविशिष्टवन्ह्यादीनां लक्षणसमन्वयार्थं पर्वते वन्हिप्रकारकान्यत्वस्याधेयतासम्बन्धेन वन्हौ पर्वतप्रकारकान्यत्वस्य च प्रातिस्विकरूपेण निवेशे गौरवात्प्रतिबन्धकताघटितोक्तानुगमप्रकारः। वन्ह्यभाववद्विशिष्टवन्ह्यभावादौ च तादृशानुगमप्रकारासम्भवादगत्या प्रातिस्विकरूपेण निवेशः। न च निरुक्तोभयाभावनिवेशनमफलमिति वाच्यम्। यादृशस्थले यद्व्याप्यवत्वज्ञानं यद्व्याप्यधर्मितावच्छेदककं पक्षे तदभावनिश्चयात्मकं जायते, तद्व्याप्यस्य साध्यतायां तदभाववत्पक्षेऽतिव्याप्तिवारणार्थं तादृशविशिष्टविषयकनिश्चयोत्तरानुमितिसामान्ये उभयाभावनिवेशसार्थक्यात्। न चात्रापि कल्पे प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणार्थं विशिष्टान्तराघटितत्वमवश्यं निवेशनीयम्, तथा सति धूमव्यभिचारिवन्हिमान् धूमवान् वन्हेरित्यत्र धूमाभाववद्धूमव्यभिचारिवन्हिमद्रूपव्यभिचारघटितेऽव्याप्तिरिति वाच्यम्।

पक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यव्याप्यहेतुमत्तावगाहिज्ञानत्वव्यापकं यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकत्वं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकनिश्चयावृत्तियद्रूपावच्छिन्नविषयतासामान्यं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकनिश्चयावृत्तित्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नत्वनिवेशान्न दोषः। तथा च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयता केवलं न पक्षविशेष्यकसाध्यवैशिष्ट्यावगाहिसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वव्यापकहेतुविशेष्यकव्याप्तिप्रकारकनिश्चयत्वाश्रयावृत्तिर्भवति, परन्तु तादृशनिश्चयावृत्तिमेयत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नविषयताऽपि भवतीति व्यभिचारत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसत्वान्नातिव्याप्तिः, स्वनिरूपकत्व—स्वविशिष्टविशेष्यताकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमेव निश्चयत्वम्। वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितत्व—स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वैतदुभयसम्बन्धेन। तथा च ह्रदो वन्हिमान् धूमादित्यत्र ह्रदो वन्हिमान्न वा इति संशये या वन्हित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या समानाकारकज्ञानीयैकविषयतास्वीकर्तृमते ह्रदो वन्हिमान्नेति संशयीयवन्ह्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यता तद्वत्त्वमपि वर्तत इति न निरुक्तसम्बन्धेन प्रकारताविशिष्टान्यत्वं तत्रास्तीति न तस्य निश्चयत्वमिति तादृशसंशये वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयतायास्सत्वेपि न वन्ह्यभाववद्ध्रदादावसम्भवः। निर्वन्हिः पर्वतो वन्हिमानित्यत्र निर्वन्हिः पर्वतो वन्हिमान् वन्हिव्याप्यधूमवांश्चेति समूहालम्बननिश्चयस्य वन्ह्यभावप्रकारतानिरूपकत्वसत्वेऽपि निरुक्तोभय

सम्बन्धेन वन्ह्यभावप्रकारताविशिष्टा या पर्वतो वन्ह्यभाववानित्यनाहार्यविशेष्यता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वविरहान्निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमक्षतमेवेति तस्य निश्चयत्वनिर्वाहः ॥ न च निर्वन्हिः पर्वतो वन्हिमानित्यत्र वन्हिमत्पर्वतरूपाश्रयासिद्धिविषयास्तादृशानिश्चयवृत्तितया वन्हिविशिष्टपर्वतरूपाश्रयासिद्धावव्याप्तिरिति वाच्यम् । अप्रामाण्यवृत्तियद्रूपावच्छिन्नविषयता तादृशनिश्चयवृत्तिस्तद्रूपावच्छिन्नत्वस्यैव निवेशनीयतया निर्वन्हिः पर्वतो वन्हिमानिति ज्ञानीयवन्हिमत्पर्वतविषयताया अप्रामाण्यवृत्तित्वविरहात् । अप्रामाण्यवृत्तिः केवलं वन्हिमान् पर्वत इति ज्ञानीयविषयता तस्याश्च तादृशनिश्चयावृत्तितया तत्र लक्षणगमनसम्भवात् । न च ह्रदो वन्हिमान् वन्ह्यभावादित्यत्र ह्रदो वन्हिमान् वन्हिव्याप्यवन्ह्यभाववानित्यस्य निश्चयत्वानुपपत्तिः, तत्र ह्रदो वन्हिमानितिज्ञानीयवन्हित्वावच्छिन्नप्रकारतानिरूपकत्वस्य तादृशप्रकारताविशिष्टह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वस्य च तत्र सत्त्वादिति वाच्यम् । वन्ह्यभाववद्वृत्तित्वरूपवन्हिव्याप्यत्वस्य वन्ह्यभावे भाने स्वस्मिन् स्वावृत्तिधर्मप्रकारकज्ञानस्येव स्वस्मिन् स्वाधिकरणावृत्तित्वप्रकारकज्ञानस्याहार्यतया वन्हिव्याप्यत्वावच्छिन्नवन्ह्यभावविषयतायाः प्रतिबन्धकतानवच्छेदकत्वेन प्रतिबन्धकतावच्छेदकीभूतविषयताघटितोभयसम्बन्धेन तादृशविषयताविशिष्टान्यत्वस्य तत्राक्षतत्वात् । न च ह्रदो वन्हिमान् वन्हिव्याप्यवन्ह्यभाववद्ध्रदकालीन—जलवांश्च ह्रद इति ज्ञानीयवन्ह्यभावप्रकारतानिरूपितह्रदविषयताघटितप्रतिबन्धकतावच्छेदकीभूतविषयताकस्य ज्ञानस्य निश्चयत्वानुपपत्तिरिति वाच्यम् । ह्रदधर्मिकवन्ह्यभाववत्ताबुद्धिं प्रति ह्रदधर्मिकवन्हिव्याप्यप्रकारकनिश्चयत्वेन प्रतिबन्धकतया ह्रदधर्मिकवन्हिव्याप्यप्रकारकनिश्चयात्मकज्ञानीयवन्ह्यभाववद्ध्रदविषयताया अपि आहार्यज्ञानीयत्वेन प्रतिबन्धकतानवच्छेदकत्वात् । न च ह्रदो वन्हिव्याप्यवानित्यत्र ह्रदो वह्न्यभाववान् वह्निव्याप्याभाववान् ह्रदो वह्निव्याप्यवांश्चेति समूहालम्बनस्य वह्न्यभावत्वावच्छिन्नप्रकारताकत्वसत्त्वेऽपि विरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टा या ह्रदो वह्न्यभाववानिति ज्ञानीयह्रदत्वावच्छिन्नविशेष्यता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वं नास्ति वह्निव्याप्याभाववान् ह्रदो वह्निव्याप्यवानिति ज्ञानस्याहार्यतया तदीयविषयतायाः प्रतिबन्धकत्वानवच्छेदकत्वादिति समानाकारकज्ञानीयैकविषयताङ्गीकर्तृमते ह्रदो वह्न्यभाववानिति अप्रामाण्यवृत्तिवह्न्यभावत्वावच्छिन्नविषयतायास्तत्र सत्त्वात् ह्रदपक्षकवह्निव्याप्यसाध्यकस्थलेऽतिव्याप्तिर्न सम्भवतीति तादृशनिश्चयोत्तरानुमितिसामान्येत्यस्य वैयर्थ्यं दुर्वारमिति वाच्यम् । यादृशस्थलविशेषे ह्रदो वन्ह्यभाववानितिज्ञानं कदाचिदपि वन्हिव्याप्यवान् ह्रदो वह्निव्याप्याभाववानित्याकारकाहार्यात्मकं न सम्भवति तत्र स्थल एव वह्निव्याप्यसाध्यकस्थले वन्ह्यभाववद्ध्रदेऽतिव्याप्तिवारणार्थं सामान्यान्तपदोपादानसार्थक्यसम्भवात् । न च यादृशस्थलविशेषे उदासीनघटादिविषयकं निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञानं न जातं तत्र निर्वह्निः पर्वतो वह्निमानित्याकारक–प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिवह्निनिश्चयावृत्तित्वस्य तादृशोदासीनघटविषयतायां सत्त्वात्, उदासीनविषयकनिश्चयोत्तरानुमितिसामान्ये निर्वह्निपर्वतत्वविशिष्टे तादृशोभयाभावसत्त्वादिति वाच्यम । एतादृशसमशीलरूपमादृत्य अस्वरसस्य जगदीशेन दत्तत्वात । न च घटवद्ध्रदकालीनह्रदो वह्निमान् घटाभाववद्ध्रदकालीनधूमादित्यत्र प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतसाध्यव्याप्यवैशिष्ट्यावगाहिनिश्चयाप्रसिद्धिः, घटत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतानिरूपकत्वस्य तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतानिरूपकत्वस्य तादृशज्ञाने सत्त्वान्निरुक्तोभयसम्बन्धेन प्रकारतावैशिष्ट्यस्यैव तत्र सत्त्वादिति वाच्यम् । सम्बन्धघटकीभूतप्रतिबन्धकतावच्छेदकीभूतविषयतायां प्रकृतपक्षे प्रकृतसाध्यविषयताबहिर्भूतत्वस्य प्रकृतसाध्यव्याप्यहेतुविषयताबहिर्भूतत्वस्य च निवेशनीयत्वात् । घटवद्ध्रदकालीनह्रदो वह्निमान् तादृशह्रदो वह्निव्याप्यघटाभाववद्ध्रदकालीनधूमवानितिज्ञाने घटत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतायास्सत्त्वेऽपि तादृशविषयता न प्रकृतपक्षे प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यविषयताबहिर्भूता, एवं घटाभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदक=घटत्वावच्छिन्न—प्रकारतानिरूपितह्रदत्वावच्छिन्नविषयतायास्सत्त्वेऽपि तादृशविषयता न प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयताबहिर्भूतेति न तादृ-

शस्थले तादृशज्ञानस्य निश्चयत्वानुपपत्तिः ।

न च तादृशज्ञाने घटाभाववद्ध्रदविषयतायास्तादृशपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिसाध्यव्याप्य-हेतुवैशिष्ट्यावगाहिनिश्चयवृत्तितया घटाभाववद्ध्रदस्य दोषत्वानुपपत्तिरिति वाच्यम् । अप्रामाण्यवृत्तित्वस्य यद्रूपावच्छिन्नविषयतायां निवेशनीयतया निरुक्तज्ञाने या घटाभाववद्ध्रदविषयता तस्यास्तादृशज्ञानीय-त्वविरहात् तादृशज्ञानीया या ह्रदो घटाभाववानिति ज्ञानीयविषयता तस्याश्च निश्चयावृत्तित्वेन लक्षणगम नसम्भवादिति । न च अप्रामाण्यवृत्तित्वस्य यद्रूपावच्छिन्नविषयतायां निवेशेऽपि ह्रदो वन्हिमान् जातिमान् वन्ह्यभाववान् ह्रदो वन्हिव्याप्यवांश्चेति समूहालम्बनज्ञाने अप्रामाण्यो यो जातिमान् वन्ह्यभाववानित्याका-रकः जातित्वसामानाधिकरण्येन वन्ह्यभावावगाहिनिश्चयः तदीयविषयतायास्सत्वेन वन्ह्यभाववद्ध्रदादा-वव्याप्तिरतो यद्रूपावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यज्ञानवृत्तित्वमेव यद्रूपावच्छिन्नविषयतायां निवेशनीयम् । एवञ्च वन्हिमान् ह्रदो वन्ह्यभाववानित्याहार्यज्ञानीयवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषय-ताया अव्यापकीभूतविषयताशून्यज्ञानवृत्तित्वविरहादेवाव्यापकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषय-तासामान्ये तादृशनिश्चयावृत्तित्वं सम्भवतीति भट्टाचार्योक्तअप्रामाण्यत्वनिवेशनं निष्प्रयोजनमिति वाच्यम् । सम्बन्धघटकविशेष्यतायां प्रकारतावैशिष्ट्यघटकत्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नमित्यत्र निरवच्छिन्नावच्छेदकताकत्वरूपं न निविष्टमिति ह्रदो वन्हिमानिति ज्ञानीया या प्रकारतात्वविशिष्टा या जातिमान् वन्हिमानितिज्ञानीयविषयतापि भवतीति तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेद-कीभूतविषयताया जातिमान् वन्ह्यभाववान् वन्हिमान् ह्रदो वन्हिव्याप्यधूमवांश्चेति समूहालम्बनज्ञानेपि सत्वात्तादृशज्ञाने निरुक्तनिश्चयत्वाभावादेवाव्यापकीभूतविषयताशून्यत्वनिवेशे प्रयोजनाभावात् । नचैवं निर्वन्हिः पर्वतो वन्हिमानित्यत्र वन्हिमत्पर्वतरूपाश्रयासिद्धिः, तत्रैव वन्हिमज्जातिमत्यतिव्याप्तिः, निर्वन्हिः पर्वतो वन्हिमान् जातिमांश्च वन्हिमानिति ज्ञाने पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता या वन्ह्य-भावत्वावच्छिन्नप्रकारता निरुक्तोभयसम्बन्धेन तद्विशिष्टा या विशेष्यता सापि जातिमान् वन्ह्यभाववा-निति ज्ञानीया भवति, तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्वस्य तत्र सत्वान्निरुक्तसम्बन्धेन प्रकारताविशिष्टान्यत् तज्ज्ञानं न भवति, किन्तु वन्हिमज्जातिमदविषयकप्रकृत-पक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिज्ञानमेव तत्र विशेष्यतावच्छेदकावच्छिन्नावच्छेदकताकत्वं वन्हिमज्जाति-मद्विषयताया अवर्तमानत्वात् वन्हिमज्जातिमद्विषयकनिश्चयोत्तरानुमितिसामान्ये निर्वन्हिपर्वते वन्हि-वैशिष्ट्यावगाहित्वघटितोभयाभावसत्वादिति सम्बन्धघटकविशेष्यतावच्छेदकावच्छिन्नत्वं विशेष्यतावच्छे-दकनिष्ठनिरवच्छिन्नावच्छेदकत्वं वा कुत्रचिद्देयमिति, तथा च ह्रदो वन्हिमान् धूमादित्यत्र ह्रदो वन्हिमान् जातिमान् वन्ह्यभाववानितिज्ञानमपि निरुक्तप्रकारताविशिष्टान्यज्ञानं तत्र वन्ह्यभाववद्ध्रदत्वावच्छिन्न-विषयताया वर्तमानत्वेन असम्भववारणायाऽव्यापकीभूतविषयताशून्यज्ञानवृत्तित्वं देयमिति अप्रामाण्यवृत्ति-त्वं व्यर्थमिति वाच्यम् । संयोगाभाववत्संयोगस्संयोगवानित्यादौ संयोगस्संयोगवानित्याश्रयासिद्धिभ्रम-विषयसंयोगत्वावच्छिन्नेऽतिव्याप्तिवारणार्थं अप्रामाण्यवृत्तित्वस्य यद्रूपावच्छिन्नविषयतायामव्यापकविषय-ताशून्यत्वनिवेशेऽप्यवश्यं निवेशनीयत्वात् । अन्यथा संयोगस्संयोगवानिति भ्रमस्यापि संयोगत्वाव-च्छिन्नविषयत्वाऽव्यापकीभूतविषयताशून्यज्ञानतया तदीयविषयताया अस्मदुक्ते प्रकृतपक्षे प्रकृतसाध्यवै-शिष्ट्यावगाहिनिश्चयावृत्तितया तद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितौ संयोगाभावावच्छिन्ने संयोगवैशिष्ट्यावगाहित्वघटितोभयाभावसत्वात् । न च घटवद्ध्रदकालीनह्रदो वन्हिव्याप्यवान् घटाभाव-वद्ध्रदकालीनधूमादित्यत्र ह्रदो वन्हिव्याप्यवान् वन्ह्यभावादित्यत्र वा वन्ह्यभाववद्ध्रदेऽव्याप्तिः । तत्राऽव्यापकीभूतविषयताशून्यज्ञानीयवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताया निरुक्तप्रकृतपक्षे प्रकृतसा-ध्यवैशिष्ट्यावगाहिपूर्वोक्तनिश्चयावृत्तितया तादृशविशेष्यताशालिनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभ-याभावसत्वादिति वाच्यम् । यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नविषयत्वं पक्षे साध्यवैशिष्ट्या-वगाहित्वव्यापकं तद्रूपावच्छिन्नविशेष्यतानिरूपिततद्रूपावच्छिन्नप्रकारताशालिनिश्चयावृत्तियद्रूपावच्छि-

स्य विरोधिकोटिद्वये विशेषणविशेष्यतावच्छेदकभावानापन्नत्वविरहेण तादृशज्ञानान्यज्ञानत्वस्य सुघटत्वात् । अयं भावः । यत्र पर्वतादेः सामानाधिकरण्येन वन्ह्यभावादेः पक्षतावच्छेदकता तत्र पर्वतत्वसामानाधिकरण्येन वन्ह्यादिमत्त्वविषयितायाः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिनिश्चयात्मक–निर्वह्निः पर्वतो वह्निमानिति समूहालम्बनवृत्तितया न तत्रातिव्याप्तिः, यत्र पर्वतत्वावच्छेदेन वन्ह्यभावादेः पक्षतावच्छेदकघटकता तत्र पर्वतत्वसामानाधिकरण्येन वन्ह्यादिमत्त्वे तु नाव्याप्तिः, तथाहि–पर्वतत्वसामानाधिकरण्येन वन्ह्यभावाद्यवगाहिनो निर्वह्निः पर्वतो वह्निमानितिज्ञानस्य न प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वं, पर्वतत्वावच्छेदेन वन्ह्यभावाद्यवगाहि–निर्वह्निः पर्वतो वह्निमानितिज्ञानस्य प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वेऽपि भ्रमान्यवृत्तितदीयविषयितायास्तदवृत्तित्वादिति ध्येयम् ।

तथा च प्रकारताविशिष्टप्रकारत्वानिरूपकज्ञानत्वं विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वम् । प्रकारतायां प्रकारतावै० स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व—स्वनिरूपकज्ञानीयत्व—स्वावच्छेदकावच्छिन्ननिरूपितविरोधितावच्छेदकधर्मावच्छिन्नत्व—स्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छेद्यत्व–स्वाभाववत्त्वैतत्सम्बन्धपञ्चकेन(१), ह्रदो वह्निमान्नवेति संशयीयवन्ह्यादिप्रकारता वन्ह्यभावादिप्रकारताविशिष्टा, तत्र स्वपदग्राह्यवन्ह्यभावप्रकारतानिरूपितविशेष्यतावच्छेदक

---

न्नविषयकनिश्चयोत्तरानुमितिव्यापकः यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताभावस्तद्रूपावच्छिन्नत्वस्य विवक्षितत्वान्न तत्र वन्ह्यभाववद्ध्रदो दोषः । वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताया ह्रदत्वविशिष्टे वन्हिवैशिष्ट्यावगाहितादृशनिश्चयावृत्तित्वेपि वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये ह्रदत्वविशिष्टे वन्हिव्याप्यवैशिष्ट्यावगाहित्वाभावसत्वात् तत्रातिव्याप्त्यसम्भवादिति ॥

(१) अत्र प्रथमसम्बन्धानिवेशे पर्वतो वह्निमान् धूमान्यधूमादित्यत्र वन्ह्यभाववद्भूतलादावतिव्याप्तिः । पर्वतो वह्निमान् भूतलं वन्ह्यभाववदितिज्ञानीयवन्ह्यादिप्रकारताया अन्यसम्बन्धचतुष्टयेन परस्परविशिष्टत्वात् । प्रकारताविशिष्टप्रकारताऽनिरूपकत्वरूपनिश्चयत्वस्य तादृशसमूहालम्बनेऽभावेन, तादृशनिश्चयश्च वन्ह्यभाववद्भूतलानवगाहि–पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानमेवेति, तत्र च वन्ह्यभाववद्भूतलविषयिताया अवृत्तित्वात् द्वितीयसम्बन्धाऽनिवेशेऽसम्भवः, सर्वस्या अपि प्रकारतायाः समानधर्मितावच्छेदककज्ञानान्तरीयविरोधिप्रकारताविशिष्टत्वात् । तृतीयसम्बन्धाऽनिवेशे ह्रदो वह्निमानित्यत्र पक्षे साध्यहेतुवैशिष्ट्यावगाहितादृशनिश्चयोऽप्रसिद्धः, तत्र परस्परविशेषणविशेष्यतावच्छेदकभावाऽनापन्नयोः साध्यसाधनयोरेकस्मिन् धर्मिणि प्रकारत्वात् । नचैवं ह्रदो वह्निमान् वन्ह्यभावादित्यत्र न कोऽपि दोषः स्यादिति विरोधितावच्छेदकेतरधर्मानवच्छिन्नत्वस्यापि (१)विवक्षणीयत्वात्, चतुर्थपञ्चमसम्बन्धानिवेशे निर्वह्निः पर्वतो वह्निमानितिसाध्यवन्निश्चयस्यासङ्ग्रह इति ध्येयम् ।

---

(१) वस्तुतस्तु एवं सम्बन्धपञ्चकनिवेशे ह्रदो वह्निमान् वह्निमत्पर्वतकालीनवह्न्यभाववत्पर्वतकालीनधूमादित्यत्र पक्षे साध्यवैशिष्ट्य—साध्यव्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयस्य उक्तसम्बन्धेन प्रकारताविशिष्टप्रकारतानिरूपकत्वरूपनिश्चयत्वानुपपत्तिः । तन्निरूपितवन्ह्यभावत्वावच्छिन्नप्रकारतायाः वह्नित्वावच्छिन्नप्रकारताविशिष्टत्वात् अतः चतुर्थपञ्चमसम्बन्धस्थाने स्वानिरूपकज्ञाननिरूपितत्वम् एकः सम्बन्धो वाच्यः, तथाचोक्तनिश्चयीयवन्ह्यभावत्वावच्छिन्नप्रकारतायाः निर्वह्निः पर्वतो वह्निमान् इत्यादिज्ञानीयप्रकारतायाश्च स्वानिरूपकज्ञाननिरूपितत्वात्सङ्ग्रहः । एवं तज्ज्ञानीयवन्ह्यभावप्रकारतां स्वपदेनादाय निश्चयत्वानुपपत्तिवारणाय स्ववृत्तित्वघटितोभयसम्बन्धस्तृतीयो वाच्यः, वृत्तित्वघटकसम्बन्धश्चोक्तसम्बन्ध एवेति ।

यद्दीयविषयता तादृशनिश्चयाऽवृत्तिस्तत्त्वमित्येतावति कृते ह्रदो व-न्हिव्याप्यधूमवानित्यादौ ह्रदादिनिष्ठवन्ह्यभावादिमत्त्वेऽतिव्याप्तिः, वन्ह्या-दिव्याप्यवत्तानिश्चयस्यापि वन्ह्यादिनिश्चयवत्कार्यसहभावेन वन्ह्यभावादि-ग्रहविरोधित्वाद्वन्ह्यभावादिमत्त्वविषयतायास्तादृशनिश्चयावृत्तित्वादिति न शेषवैयर्थ्यमिति ।

तदपि न, वन्हिव्याप्यवान् वन्हिव्याप्यव्याप्यवांश्च ह्रदो वन्ह्यभाववा-निस्येतादृशाहार्यज्ञानोपगमेन वन्ह्यभावादिमत्त्वविषयिताया वह्निव्या-प्यादिमत्त्वनिश्चयवृत्तितया उक्तातिव्याप्त्यनवकाशेन शेषसार्थक्यानुपप-त्तेः । वह्निमान्वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्यसाध्या-दिवैशिष्ट्यनिश्चये ह्रदो वह्निमानित्यादिस्थलीयबाधादिविषयितायाः सत्त्वे-नाऽसम्भवप्रसङ्गाच्च । वन्ह्यादिरूपधर्मितावच्छेदकानवच्छिन्नवन्ह्यभावा-

ह्रदत्वावच्छिन्नविशेष्यतानिरूपितत्वस्य—तन्निरूपकतादृशसंशयनिरूपितत्वस्य तादृशप्रकार-तावच्छेदकीभूतवन्ह्यभावत्वावच्छिन्ननिरूपितविरोधितावच्छेदकवह्नित्वावच्छिन्नत्वस्य—तादृशप्र-कारतानिरूपितह्रदनिष्ठविशेष्यतानिरूपितावच्छेदकत्वानवच्छेद्यत्वस्य—तादृशप्रकारत्वाभावव-त्वस्य च सत्वात् । तादृशप्रकारत्वाभावश्च स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितत्वरूप-सम्बन्धावच्छिन्नप्रतियोगिताकः, अयं सम्बन्धः संशयीयकोटिप्रकारताया व्यधिकरण एव, संशये वन्ह्यभावादेः धर्मितावच्छेदकत्वाभावात् । निर्वह्निः पर्वतो वह्निमानितिज्ञानीया प्रका-रता न कापि तादृशी वह्निप्रकारतायां वन्ह्यभावप्रकारताया एव स्वावच्छेद्यावच्छेदकतानिरू-पकविशेष्यतानिरूपितत्वसम्बन्धेन तदभाववत्त्वविरहात् । वन्ह्यभावप्रकारतायां च वह्निप्रका-रतायाः स्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छेद्यत्वसम्बन्धेनाऽभावात् । एवं पर्वतत्वनिष्ठ-प्रकारतायां विरोधितावच्छेदकधर्मावच्छिन्नत्वमपि नास्ति । एवं निर्वह्निर्वह्निमानितिज्ञानीयाऽपि बोध्येति । उक्तज्ञानद्वयं तादृशनिश्चयाक्रान्तम् । एवं ह्रदो वह्निमान् वह्निव्याप्यधूमवान् वन्ह्य-भाववानिति समूहालम्बनज्ञानं तु तादृशनिश्चयत्वाक्रान्तम् , ह्रदे वह्नेर्वन्ह्यभावस्य च परस्पर-विशेषणविशेष्यतावच्छेदकभावानापन्नयोः प्रकारत्वात् ।

**यदीयविषयतेति** । यद्रूपावच्छिन्नविषयितेत्यर्थः । **तादृशनिश्चयेति** । पक्षे सा-ध्यहेतुवैशिष्ट्यावगाहिनिश्चयेत्यर्थः । **तत्त्वं**—तद्रूपावच्छिन्नत्वम् । **न शेषवैयर्थ्यमिति** । "यद्रूपावच्छिन्नविषयिताशालि" निश्चयोत्तरानुमितित्वव्यापकोभयाभाव इत्यस्य न वैयर्थ्यमिति भावः । पर्वतो वन्ह्यभाववानितिनिश्चयोत्तरं ह्रदो वह्निव्याप्यवानिति ग्रहस्तु जायते, सत्प्रति-पक्षनिश्चयस्याऽप्रतिबध्यत्वात् । तथाच तादृशानुमितौ उभयाभावविरहान्न तत्रातिव्याप्तिः ।

**आहार्यज्ञानोपगमेनेति** । अनाहार्यसमूहालम्बनस्य मतद्वयसिद्धत्वे अप्रामाण्यवृत्तिय-दीयविषयितेत्यादिविवक्षायामपि असम्भवः, अप्रामाण्यसमूहालम्बनात्मकज्ञानीयवन्ह्यभावव-द्ह्रदत्वाद्यवच्छिन्नविषयितायाः पक्षविशेष्यकसाध्यावगाहि—ह्रदो वह्निमान्वन्ह्यभाववांश्चेत्याहा-र्यसमूहालम्बनात्मकज्ञानवृत्तितया समूहालम्बनाऽसमूहालम्बनरूपसमानाकारकज्ञानीयविष-यितयोर्भेदाभावात् । **वह्निव्याप्यादिमत्त्वनिश्चयवृत्तितयेति** । "अप्रामाण्यवृत्ति" वन्ह्य-

दिविशेषितह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेऽपि घटादिनिरूपिताया अपि दोषविशेषावच्छिन्नाया विषयितायाः साध्यादिनिश्चयावृत्तितया घटादावुदासीनेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयितासामान्यं तादृशनिश्चयावृत्ति तादृशविशिष्टनिरूपितविषयिताया एव विरोधिविषयितेत्यनेन विवक्षणीयतया अप्रतीकारात्। असमान्यवृत्तियदीयविषयितासामान्यं तादृशनिश्चयावृत्ति तदीयविषयिताविवक्षणेन निर्वा-

---

भाववद्ह्रदत्वावच्छिन्नविषयिताया ह्रदो वह्निव्याप्यवान् वन्ह्यभाववांश्चेत्याहार्यसमूहालम्बनतादृशनिश्चयावृत्तित्वविरहादिति भावः। अप्रतीकारादिति। अतिव्याप्तिवारणेऽपि प्रागुक्ताऽसम्भवतादवस्थ्यादिति भावः। निर्वाहेऽपीति। तथाच असमान्यवृत्तियद्रूपावच्छिन्नविषयितासामान्यं तादृशनिश्च(१)याऽवृत्ति तादृशनिश्चयाव्यवहितोत्तरानुमितिसामान्ये निरुक्तो-

---

(१) नन्वत्रोक्तनिश्चयस्य लक्षणघटकत्वे किं तत्कुक्षिप्रविष्टविरोधितावच्छेदकत्वं नाम? यदि तद्व्याप्तितानवच्छेदकत्वं तदा ह्रदो वह्निमान् धूमान्यधूमादित्यत्र जलवद्ध्रदेऽतिव्याप्तिः ह्रदो वह्निमान् वह्निव्याप्यधूमान्यधूमवान् जलवांश्चेति ज्ञानीयवह्निजलप्रकारतयोरुक्तसम्बन्धैः परस्परविशिष्टत्वात् तन्निरूपकत्वेन तादृशज्ञानस्य निश्चयत्वासम्भवेन जलानवगाहिसाध्यहेतुत्वावगाहिज्ञानस्यैव निश्चयत्वात्। तत्र च जलवद्ध्रदविषयिताया अवृत्तित्वात्। न च विरोधितावच्छेदकावच्छिन्नत्वेत्यनेन स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदधर्मावच्छिन्नत्वाविवक्षणान्नायं दोष इति वाच्यम्। ह्रदो वह्निमान् धूमान्यधूमादित्यत्र कालिकसम्बन्धेन वन्ह्यभावविशिष्टह्रदेऽतिव्याप्तेः पक्षे साध्यहेतुवैशिष्ट्यावगाहिनः कालिकसम्बन्धेन वन्ह्यभावावगाहिज्ञानस्योक्तनिश्चयत्वाभावात्। तेन सम्बन्धेन वन्ह्यभावानवगाहिनि पक्षे साध्यसाधनावगाहिनिश्चये तत्सम्बन्धेन वन्ह्यभावविशिष्टह्रदविषयिताया अवृत्तित्वात्। न च तादृशप्रकारतावच्छेदकावच्छिन्नत्वं परित्यज्य तादृशप्रकारताविशिष्टत्वं तृतीयसम्बन्धो विवक्षणीयः, वैशिष्ट्यं च स्वावच्छेदकरूपसम्बन्धावच्छिन्नत्वसम्बन्धेनेति वाच्यम्। यत्र निर्वह्नित्वसामानाधिकरण्येन वन्हेः साध्यता तत्र निर्वह्नित्वावच्छेदेन वन्ह्यभाववन्निर्वह्निरूपबाधासङ्ग्रहापत्तेः निर्वन्हिर्वन्हिमान् निर्वन्हिर्वन्ह्यभाववांश्चेति समूहालम्बनज्ञानीयवह्नितदभावप्रकारतयोः परस्परविशिष्टत्वाऽभावात्। तथाहि सामानाधिकरण्येन वन्हिमत्ताबुद्धिम्प्रत्यवच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य प्रतिबन्धकतया शुद्धसंयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या प्रकारता तदवच्छेदकसम्बन्धस्य पर्वतत्वादिव्यापकप्रतियोगिकत्वविशिष्टस्वरूपमेव निर्वन्हित्वव्यापकप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रकारताया निरुक्तप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभावात्। तादृशसमूहालम्बनज्ञानीयवन्ह्यभावप्रकारता च न पर्वतत्वादिव्यापकप्रतियोगिकस्वरूपावच्छिन्ना, तथाच तादृशप्रतिबन्धकतावच्छेदकप्रकारतायाः स्वावच्छेदकावच्छिन्नत्व—स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन तादृशप्रकारतायामभावेनोक्तसम्बन्धैः प्रकारताविशिष्टप्रकारताऽनिरूपके तादृशज्ञाने दोषविषयितासत्त्वादिति। न च तादृशप्रकारतावैशिष्ट्यं स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गतानिरूपितावच्छेद्यतावत्वघटितं न विवक्ष्यते किन्तु संसर्गतावच्छेदकधर्मावच्छिन्नावच्छेदकताकसंसर्गताघटितमेव, तथाच तादृशदोषविषयकसमूहालम्बनीयवन्ह्यभावप्रकारतायामपि तादृशप्रतिबन्धकतावच्छेदकप्रकारतानिरूपितसंसर्गतावच्छेदकीभूतस्वरूपत्वावच्छिन्नसंसर्गतानिरूपितावच्छेद्यत्वस्य सत्त्वात् नाव्याप्तिरिति वाच्यम्। तथानिवेशे तत्रैव सामानाधिकरण्येन वन्ह्यभाववन्निर्वन्हेरपि दोषत्वापत्तेः निर्वन्हित्वसामानाधिकरण्येन वन्हितदभावावगाहिसमूहालम्बनादिज्ञानस्य निश्चयत्वाभावेन तादृशसमूहालम्बनान्यज्ञानस्यैव निर्वन्हिर्वन्हिमानित्यस्य तथात्वात्, तत्र च सामानाधिकरण्येन वन्ह्यभाववन्निर्वन्हिविषयिताया असत्त्वादिति चेन्न।

स्वविशिष्टप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावत्वसम्बन्धेनोभयत्र प्रकारतावैशिष्ट्यस्य स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्वनिरूपितसंसर्गतावच्छेदककिञ्चिद्धर्मव्यापकप्रतियोगिकत्वेतरधर्मावच्छिन्नाकिञ्चिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वोभयसम्बन्धेन विवक्षितत्वात्, किञ्चिद्धर्मावच्छिन्नव्यापकत्वावच्छिन्नत्वानिवेशेन सामानाधिकरण्येन वन्ह्यभाववन्निर्वन्हौ न प्रागुक्तातिप्रसङ्गावकाशः। यत्र निर्वन्हित्वावच्छेदेन वन्हेः साध्यता तत्र तत्सामानाधिकरण्येन दोषसङ्ग्रहाय वन्हित्वावच्छिन्नप्रकारतायां वन्ह्यभावत्वावच्छिन्नप्रकारतावैशिष्ट्यमादाय साध्यसाधनदोषविषयकसमूहालम्बनस्य निश्चयत्वाभाव उपपादनीयः, निर्वन्हित्वावच्छेदेन वन्हिसाधनस्थले सामानाधिकरण्येन वन्ह्यभावव्याप्यवत्पक्षस्य यदि दोषत्वमावश्यकं तदा स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकप्रकारताविशिष्टत्वान्यतरघटितसम्बन्धपञ्चकेन वैशिष्ट्यं बोध्यम्। न चैवमपि ह्रदो वन्हिमान् वन्ह्यभाववद्ध्रदकालीनधूमादित्यत्र न कश्चिद्दोषस्स्यात् पक्षे साध्यहेत्ववगाहितादृशनिश्चयाप्रसिद्धेरिति वाच्यम्। पक्षे साध्यावगाहिनिश्चयवृत्तित्व-पक्षे हेत्ववगाहिनिश्चयवृत्तित्वोभयाभावस्य विवक्षणीयत्वात्।

नन्वत्र ग्रन्थकाररीतिविरोधरूपदूषणाभिधानमसङ्गतम् ह्रदो वन्हिव्याप्यधूमवान् घटाम्यघटादित्यत्र वन्ह्यभाववद्ध्रदेऽतिव्याप्तेः ह्रदे वन्ह्यभाववत्तादृशसाध्यहेतुविषयकसमूहालम्बनस्य निश्चयत्वासम्भवेन वन्ह्यभाववद्ध्रदविषयितायाः पक्षे साध्यसाधनावगाहितादृशनिश्चयावृत्तित्वादिति चेन्न।

अनुमितिघटितलक्षणस्यातिव्याप्तत्वेऽपि अनाहार्यमानसज्ञानसामान्यघटितलक्षणस्य निर्दुष्टत्वे तात्पर्यात्, अनाहार्यमानसत्वमिच्छाविशिष्टान्यदोषविशेषाजन्यज्ञानत्वं, तत्रेच्छाविशिष्टज्ञाने दोषत्वेनाभिमततादृशोदासीनज्ञानोत्तराहार्यतत्सव्यक्तिभेदो निवेशनीयः, तथाच तादृशदोषत्वेनाभिमतोदासीनज्ञानोत्तरपक्षविशेष्यकसाध्यहेतुवैशिष्ट्यावगाहितादृशाहार्यज्ञानमपि सामान्यान्तर्गतम्-तत्र नोक्तोभयाभावोऽस्तीति नातिव्याप्तिरित्यभिप्रायात्।

ननु भ्रमान्यज्ञानीयमेयत्वविशिष्टव्यभिचारादिविषयितासामान्यस्य तादृशज्ञाननिश्चयाऽवृत्तितया तत्रातिव्याप्तिवारणं कथमिति चेत्।

विशिष्टान्तराघटितत्वनिवेशनेनेति गृहाण। तन्निवेशश्च भ्रमान्यज्ञानीयस्वावच्छिन्नविषयितासामान्यं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रकारताविशिष्टा यावन्तः प्रकारताविशिष्टप्रकारतानिरूपका निश्चयास्तदन्तर्गतयद्यन्निश्चयास्तत्तन्निश्चयावृत्तित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नभ्रमान्यज्ञानीयविषयितासामान्यं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं लक्ष्यतावच्छेदके विशेषणमिति। निश्चये प्रकारतावैशिष्ट्यं च स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतावत्वसम्बन्धेन, तादृशनिश्चयत्वघटकप्रकारतावैशिष्ट्यघटकतृतीयसम्बन्धघटकप्रतिबन्धकतायां निश्चयविशिष्टनिश्चयत्वानवच्छिन्नत्वं विशेषणं बोध्यम्, नातो विशिष्टद्वयाघटितत्वं निवेशनीयम्।

अत्रायमनुगमः—प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वप्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वव्यापकविषयिताशून्याकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदक(१)तानिरूपितावच्छेदक(२)तानिरूपितावच्छेदकता(३)निरूपितावच्छेदकतानिरूपितावच्छेदकता(४)निरूपितावच्छेदकता(५) निरूपितावच्छेदकता(६)निरूपितावच्छेदकता(७)निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मविशिष्टधर्मवत्त्वं लक्षणम्। धर्मे धर्मवैशिष्ट्यं च स्वतादात्म्यस्वविशिष्टरूपावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकत्वोभयसम्बन्धेन, रूपे स्ववैशिष्ट्यं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वभ्रमान्यज्ञानीयस्वा(१)वच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववत्पक्षे साध्यवैशिष्ट्यावगाहिसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिग्रहनिष्ठकिञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपिताकिञ्चिद्रूपावच्छिन्नप्रकारता नास्तीतिसिद्धाभावा-

(१) स्वपदग्राह्यं वन्ह्यभाववद्ध्रदत्वम्।

हेऽपि विरोधियद्विषयिताशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यनभिधाय यद्विषयकनिश्चयस्येत्यादिवक्ताभिधानस्य ग्रन्थकारीयरीतिविरुद्धत्वात् ।

एतेन विषयिताया उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगितावच्छेदकं यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटितं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकत्वविशेषितेनानुमितित्वेनानाहार्य्यलौकिकसन्निकर्षाद्यजन्यज्ञानत्वेन वा अवच्छिन्ना या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकत्वम् । एवञ्च यादृशविशिष्टविषयिता निरुक्तथाविधोभयाभावप्रयोजकताश्रयस्तादृशत्वमेव लक्षणम् । विषयितादौ विरोधित्वादिकथनन्तु स्वरूपाख्यानमात्रमेव इति प्रलपितमप्यनादेयमेव । निर्व्वह्निर्व्वह्निमानित्यादिस्थलीयदोषस्य उक्तयुक्त्या दुःसङ्ग्रहात् ।

अत्र केचित् कश्चिदित्यन्ताग्रिमकल्प इवात्रापि कल्पे न दीधितिकृतो निर्भरः, निर्व्वह्निर्व्वह्निमानित्यादिस्थलीयदोषासङ्ग्रहेणास्वरसस्याग्रिमकल्पे कश्चिदित्यनेनैवात्रापि कल्पे वदन्तीत्यनेन सूचितत्वात् । निर्भरस्तु केचिदित्यादिकल्प एव, अत एव तत्र प्रकर्षबोधनाय प्राहुरित्युक्तमिति ।

भयाभावस्तद्रूपवत्त्वाविवक्षणे असम्भववारणेऽपीत्यर्थः ।

एतेनेति । वक्ष्यमाणदोषेणेत्यर्थः । उक्तयुक्त्या—प्रतिबन्धकत्वाद्यप्रसिद्ध्या । इदमुपलक्षणम् । साध्यवत्पक्षेऽतिव्याप्तिरपि बोध्या । अथेत्यादिनाऽऽशङ्कायामाह अत्र केचिदिति । अत्रापि कल्पे—उभयाभावघटितकल्पे ।

ऽप्रतियोगिप्रकारतात्वव्यापकत्ववि(१)शिष्टोभयाभावाऽवृत्तितादृशाभावप्रतियोगितापरम्परावच्छेदकत्वोभयसम्बन्धेन, भेदप्रतियोगितावच्छेदकताघटकसम्बन्धश्च (२)स्वविशिष्टप्रकारतानिरूपकत्वविशिष्टप्रागुक्तप्रकारताविशिष्टप्रकारत्वानिरूपकत्वविशिष्टनिश्चयावृत्तित्वसम्बन्धः, प्रकारतायां स्ववै० स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । प्रकारतात्वव्यापकत्वं च भ्रमान्यज्ञानीय(३)स्वावच्छिन्नविषयितात्वव्यापकत्वसम्बन्धेन । व्यापकत्वं च प्रागुक्तसम्बन्धेनेति ।

(१) निरुक्ताभावप्रतियोग्यसमूहालम्बनप्रकारतात्वविशिष्टेत्यस्योभयाभाववृत्तितादृशाभावीयप्रतियोगितानिरूपितपरम्परया ह्रदवृत्तिवन्ह्यभाववत्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वेऽन्वयः, तथाच यादृशप्रकारत्वं वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयितावृत्तिभेदीयप्रतियोगितानिरूपितनिरुक्तसम्बन्धावच्छिन्नावच्छेदकत्वाभाववद्भवति तदेव प्रकारत्वं ह्रदवृत्तिवन्ह्यभावत्वावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववद्भवतीति स्वरूप–स्वरूपघटितसामानाधिकरण्यसम्बन्धाभ्यां व्यापकत्वविशिष्टं तादृशोभयाभाववृत्त्यभावीयपरम्परयाऽवच्छिन्नावच्छेदकत्वामिति सर्वं समञ्जसम् ।

(२) अत्र स्वपदेन समूहालम्बनीयप्रकारता-तद्वैशिष्ट्यं च समूहालम्बनप्रकारतायाम् ।

(३) तथाच निरुक्तवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वव्यापकप्रकारतात्वाधिकरणे स्वावच्छिन्नविषयितावृत्तिनिरुक्तनिश्चयावृत्तित्वसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वाभाववत्त्वसम्बन्धेन—ह्रदवृत्तिवन्ह्यभाववत्त्ववतो भानेनाऽन्यस्यैव कस्यचिद्भेदस्य तथात्वेन तन्निरूपितावच्छेदकत्वाभावरूपव्यापकत्वं विपरीतबाधतावच्छेदकेऽस्तीति भावः ।

**परे तु घटाभावादिधर्म्मितावच्छेदकवन्ह्यादिमत्त्वज्ञानम्प्रति तद्धर्म्मितावच्छेदकवन्ह्यभावादिमत्त्वज्ञानप्रतिबन्धकत्वे कल्पनीये धर्म्मितावच्छेदकभेदेन तदकल्पनप्रयुक्तलाघवानुरोधेन धर्म्मितावच्छेदकमनिवेश्यानाहार्य्यवन्ह्यादिविशिष्टबुद्धित्ववन्ह्यभावादिनिश्चयत्वाभ्यां समानधर्म्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावः कल्प्येत । एवञ्च तद्देशनिष्ठस्य स्वपूर्व्ववर्त्तिप्रतिबन्धकज्ञाननिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य उत्तरवर्त्तिज्ञाननिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशासम्बन्धित्वं प्रति प्रयोजकतया वन्ह्यभावादिनिष्ठवन्ह्यभावादिप्रकारकज्ञानीयधर्म्मितावच्छेदकताख्यविषयतायास्तदुत्तरोत्पन्नानाहार्य्यवन्ह्यादिप्रकारकज्ञानस्य वन्ह्यभावादिधर्म्मितावच्छेदकत्वविरहप्रयोजकत्वाद्वन्ह्यभावादिविशिष्टव-**

---

स्वयं समाधानमाह **परेत्विति** ।**तद्धर्मेति** । घटाभावादीत्यर्थः । **वह्न्यादिविशिष्टेति** । वह्नित्वावच्छिन्नप्रकारताकेत्यर्थः । **कल्प्येत इति** । तथाच स्वीयधर्मितानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतासम्बन्धेन वह्नित्वावच्छिन्नप्रकारताशालिअनाहार्यतत्पुरुषीयबुद्धिम्प्रति तादृशसम्बन्धेन वन्ह्यभावत्वावच्छिन्नप्रकारताशालितत्पुरुषीयनिश्चयत्वेन(१)प्रतिबन्धकत्वमित्यर्थः । निर्वह्निर्वह्निमानित्यादौ वन्ह्यभाववद्वन्ह्यभाववद्रूपबाधे लक्षणमुपपादयति **एवञ्चेति** । विषयनिष्ठप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावे कल्पिते चेत्यर्थः । **तद्देशनिष्ठस्येति** । धर्मितावच्छेदकनिष्ठस्येत्यर्थः । **स्वपूर्ववर्त्तिप्रतिबन्धकज्ञाननिरूपितेति** । ह्रदो वन्ह्यभाववानितिज्ञाननिरूपितेत्यर्थः । **प्रतिबन्धकतावच्छेदकसम्बन्धस्य**—धर्मितावच्छेदकतासम्बन्धस्य । **उत्तरवर्त्तिज्ञाननिष्ठमिति** । घटवद्भूतलमित्यादिज्ञाननिष्ठमित्यर्थः । अस्य तद्देशासम्बन्धित्वमित्यनेनाऽन्वयः । **प्रतिबध्यतावच्छेदकसम्बन्धेन**—धर्मितावच्छेदकतासम्बन्धेन । **तद्देशाऽसम्बन्धित्वं प्रतीति** । ह्रदत्वादिरूपधर्मितावच्छेदकदेशाऽवृत्तित्वं प्रतीत्यर्थः । **प्रयोजकतयेति** । तथाच तद्देशनिष्ठपूर्ववर्त्तिप्रतिबन्धकज्ञाननिरूपितधर्मितावच्छे-

---

(१) चैत्रीयह्रदो वन्ह्यभाववानितिज्ञानोत्तरं मैत्रीयह्रदो वन्हिमानितिज्ञानोत्पत्त्या उभयत्र तत्पुरुषीयत्वनिवेशः । नच पुरुषभेदेन प्रतिबध्यप्रतिबन्धकभावभेदे गौरवात् धर्मितावच्छेदकधर्मिनिवेशे एव लाघवमिति वाच्यम् । पुरुषापेक्षया धर्माणामानन्त्यात् कालिकादिना ह्रदत्वविशिष्टे वन्ह्यभाववत्तानिश्चयोत्तरं समवायादिना ह्रदत्वविशिष्टे वन्हिमत्ताज्ञानोत्पत्त्या, एवं समवायेन ह्रदत्वविशिष्टे वन्हिसामान्याभाववत्तानिश्चयोत्तरं कालिकेन ह्रदत्वविशिष्टे वन्हिमत्ताबुद्ध्युत्पादेन उभयत्र समवायसम्बन्धावच्छिन्नधर्मितावच्छेदकतानिवेशः । जातिमान् वन्ह्यभाववानितिनिश्चयोत्तरं समवायेन ह्रदत्वविशिष्टवन्हिमत्ताबुद्ध्युत्पत्त्या एवं ह्रदो वन्ह्यभाववानितिनिश्चयोत्तरं जातिमान्वन्ह्यभाववानितिबुद्ध्युत्पत्त्या चोभयत्र धर्मितावच्छेदकतायां निरवच्छिन्नत्वनिवेशः । जातिमान्वन्ह्यभाववान् जातिमान् वन्हिमानितिज्ञानयोश्च पृथगेव प्रतिबध्यप्रतिबन्धकभाव ऊह्यः । ह्रदो वन्ह्यभाववानितिनिश्चयोत्तरं ह्रदो घटवान् द्रव्यं वन्हिमादीतिज्ञानस्य ह्रदो घटवान् द्रव्यं वन्ह्यभाववदितिनिश्चयोत्तरं ह्रदो वन्हिमानितिज्ञानस्य चोत्पत्त्योभयत्र केवलधर्मितावच्छेदकतायाः सम्बन्धत्वमुपेक्ष्य तद्विशेषस्य सम्बन्धत्वादरः । स्वनिरूपकत्वस्वाभिन्नावच्छेदकतानिरूपकत्वोभयसम्बन्धेनावच्छेदकताविशिष्टान्यस्वरूपाऽवच्छेदकताद्वयानिरूपकत्वविशेषितविशेष्यतानिरूपितत्वेनाऽपि निरुक्तावच्छेदकता विशेषणीया । तेन सुन्दरह्रदत्वावच्छेदेन वन्ह्यभाववत्तानिश्चयोत्तरं ह्रदत्वसामानाधिकरण्येन वन्हिमत्ताबुद्ध्युत्पत्तावपि न क्षतिः ।

न्ह्यादिवैशिष्ट्यावगाहित्वविरहस्य वन्ह्यभावादिधर्म्मितावच्छेदकताकवन्ह्यभावादिप्रकारकनिश्चयविषयिताप्रयुक्तत्वमक्षतमेवेति तादृशनिश्चयविषयस्य दोषत्वमव्याहतमेव ।

नच धर्म्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीतज्ञानस्य प्रतिबन्धकत्वे

---

दकतासम्बन्धः स्वोत्तरवर्तिज्ञानीयधर्मितावच्छेदकतावच्छेदकतासम्बन्धेन तद्देशाऽसम्बन्धित्वं प्रति प्रयोजकः ।

अत्रावच्छेदकावच्छेदेन ज्ञानस्य प्रतिबध्यत्वे वह्नित्वावच्छिन्नप्रकारतानिरूपिताकिंचिद्धर्मव्यापकप्रतियोगिकत्वविशिष्टसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन निश्चयस्य प्रतिबन्धकत्वम् ।

सामानाधिकरण्येन ज्ञानस्य प्रतिबध्यत्वे वह्नित्वावच्छिन्नप्रकारतानिरूपितसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानत्वावच्छिन्नम्प्रति किञ्चिद्धर्मव्यापकप्रतियोगिकत्वविशिष्टसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाऽभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन निश्चयस्य प्रतिबन्धकत्वम्(१) ।

**विपरीतज्ञानस्येति। घटाभाववान् वह्न्यभाववानितिज्ञानेत्यर्थः। प्रतिबध्यतावच्छेद-**

---

(१) अयं प्रतिबध्यप्रतिबन्धकभावः पर्वतो वन्हिमान् घटो वन्हिमानित्यादिज्ञानानां पर्वतो वन्ह्यभाववान् घटो वन्ह्यभाववानित्यादिज्ञानानां च नीलपर्वतो वन्हिमान् पीतपर्वतो वन्हिमानित्यादिज्ञानानां तद्विपरीतज्ञानानां च तद्भावस्तु अवच्छेदकावच्छेदेन प्रतिबध्यत्वे वन्हित्वावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगित्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितावच्छेदकत्वावच्छेद्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति संयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नप्रकारत्वावच्छेद्यावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नाऽवच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति, एवं सामानाधिकरण्येन बुद्धिम्प्रति, एवं घटवान् वन्हिमान् पटवान् वन्हिमानित्यादिज्ञानानां तद्विपरीतज्ञानानां च तद्भावः वन्हित्वावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितावच्छेदकत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति वन्हित्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छेद्याभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकतानिरूपितसमवाय-

कानिर्वह्निविशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छाजन्यनिर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानित्याद्यांशिकाहार्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रान्ततया घटाभाववान् वन्ह्यभाववानित्यादिनिश्चयऽनाक्रान्ततयेति । अनाहार्यत्वविरहेणेति यावत् । तथाविधेच्छासत्वे—निर्वह्निविशेष्य-

सम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति, एवं घटाभाववान् वन्हिमान् पटाभाववान् वन्हिमानित्यादिज्ञानानां तद्विपरीतज्ञानानां च तद्भावः वन्हित्वावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मव्यापकप्रतियोगिकसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितावच्छेदकत्वावच्छेद्यस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारत्वाऽवच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नधर्मविशिष्टान्यावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकसम्बन्धेन ज्ञानं प्रति वन्हित्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावत्वावच्छिन्नप्रकारत्वावच्छिन्नाऽवच्छेदकतानिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारत्वावच्छेद्यावच्छेदकतानिरूपितसमवायसम्बन्धाऽवच्छिन्ननिरवच्छिन्नधर्मविशिष्टान्यावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति, एवमेव सर्वत्र प्रतिबध्यप्रतिबन्धकज्ञानयोर्धर्मितावच्छेदकपरम्परायां यस्य स्वरूपतो भानं तद्वृत्तिधर्मान्तर्भावेण प्रतिबध्यप्रतिबन्धकभाव ऊहनीय इति दिक् ।

यद्यपि विशेष्यतावच्छेदकतासम्बन्धेन वन्हिमान्पर्वत इत्याकारकबुद्धिं प्रति वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन निश्चयस्य विरोधित्वस्वीकारे नीलपर्वतो वन्हिमानिति बुद्धिं प्रति श्वेतपर्वतो वन्ह्यभाववानिति निश्चयस्यापि प्रतिबन्धकत्वापत्त्या विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतासम्बन्धेन प्रतिबध्यप्रतिबन्धकभावकल्पने पर्वतत्वधर्मितावच्छेदककनीलगुणमवगाह्य उभयधर्मितावच्छेदककबुद्धिं प्रति नीलत्वेन घटवगाहिनीलपर्वतो वन्ह्यभाववानिति निश्चयस्य प्रतिबन्धकत्वानुपपत्तिः । बाधनिश्चयीयविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं यद् घटपर्वतत्वादिगतद्वित्वं तेन सम्बन्धेन प्रतिबध्यीभूतज्ञानीयविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यन्नीलपर्वतत्वगतद्वित्वं तत्र बाधनिश्चयस्याऽसत्वात् । न च विशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतारूपसम्बन्धेन प्रतिबध्यप्रतिबन्धकभावस्य कल्पनीयतया प्रतिबध्यीभूतज्ञानीयविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे एतादृशसम्बन्धेन सत्वादिति वाच्यम् । नीलपर्वतो वन्हिमानिति बुद्धिं प्रति पर्वतनीलो वन्ह्यभाववानितिनिश्चयस्यापि प्रतिबन्धकत्वापत्तेः, नीलपर्वतो वन्हिमानिति—ज्ञानीयविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तदेव पर्वतनीलो वन्ह्यभाववानिति—निश्चयीयविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमिति ।

तथापि वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितानिरवच्छिन्नपर्वतत्वनिष्ठावच्छेदकताका या विशेष्यता तदवच्छिन्ना या विशेष्यता तन्निरूपितकिञ्चिद्धर्मावच्छिन्नावच्छेदकत्वावच्छिन्ना या प्रकारता तदवच्छेदकत्वसम्बन्धेन प्रतिबध्यप्रतिबन्धकभावकल्पनात् ।

नचैवं सति यत्रादौ नीलत्वं धर्मितावच्छेदकीकृत्य पर्वतत्वस्य भानं तदुभयं धर्मितावच्छेदकीकृत्य वन्ह्यादेर्भानं तद्धर्मं धर्मितावच्छेदकीकृत्य नीलस्य भानं पर्वतनीलो वन्हिमानिति निश्चयस्य तादृशस्य नीलपर्वतो वन्ह्यभाववानिति बुद्धिप्रतिप्रति बन्धकत्वापत्तिरिति वाच्यम् । नीलपर्वतो वन्ह्यभाववानिति बुद्धिं प्रति वन्हित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताकविशेष्यताविशिष्टप्रकारतावच्छेदकत्वसम्बन्धेन प्रतिबध्यप्रतिबन्धकभावस्वीकारात् । प्रकारतायां विशेष्यतावै० स्वावच्छेदकत्वावच्छिन्नत्वस्वावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेनेति ।

काले तथाविधेच्छासत्वे घटाभावविशिष्टविशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छां विनैव ताहशज्ञानापत्तिरिति वाच्यम्। यतः सामान्यतो वन्ह्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्य्यत्वं न प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, किन्त्वाहार्य्यज्ञानोत्पत्त्यर्थं विशेष्यतानिष्ठं यत्स्वविषयतावच्छेदकत्वं तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यादिज्ञानेच्छाविरहस्य या स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्म्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्बन्धत्वमुपेयते, ताहशेच्छाविरहस्य प्रतिबन्धकविशेषणत्वमेव वा विशेषणताविशेषधर्म्मितावच्छेदकतासम्बन्धघटितसामानाधिकरण्यसम्बन्धेनोपगन्तव्यम्, उक्तस्थले च घटाभावादौ ताहशेच्छाविरहस्य सत्वान्नोक्तापत्तिरधिकमन्यत्रानुसन्धेयमिति वदन्ति।

---

कवह्निज्ञानं जायतामित्याकारकेच्छासत्वे। **स्वविषयतावच्छेदकत्वमिति।** स्वं०इच्छा। सा च वह्न्यभावावच्छिन्नविशेष्यताकवह्निप्रकारकताज्ञानं जायतामित्याकारिका। विशेष्यतापदेन वह्न्यभावावच्छिन्नविशेष्यता ग्राह्या। तन्निष्ठा या स्वपदग्राह्येच्छीयविषयतावच्छेदकतातदवच्छेदकताऽवच्छिन्नत्वे–तदवच्छेदकता वन्ह्यभावे, तथाच तदवच्छेदकताधर्मितावच्छेदकावच्छिन्नत्वे, तदवच्छेदकत्वं च धर्मितावच्छेदके बोध्यम्। ननु निरुक्तसम्बन्धावच्छिन्नप्रतियोगिकेच्छाविरहाधिकरणतावैशिष्ट्यस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतायां निवेशे वन्ह्यभावनिष्ठताहशधर्मितावच्छेदकताया एवाऽप्रसिद्धिः, इच्छासत्वे एव निर्वह्निर्वह्निमानितिज्ञानोदयात्तदीयधर्मितावच्छेदकताया इच्छाविशिष्टत्वात्। इच्छाविरहदशायां च ताहशज्ञानस्यैवाऽनुपपत्तेरिति कथं निर्वह्निर्वह्निमानित्यादौ लक्षणसमन्वय इत्याशंक्य कल्पान्तरमाह **ताहशेति।** निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाविरहस्येच्छाकालेपि प्रतिबन्धकज्ञाने सत्वादाह **विशेषणताविशेषधर्मितावच्छेदकतासम्बन्धघटितेति।**

ननु निरुक्तधर्मितावच्छेदकतासम्बन्धेन वह्निमत्ताज्ञानं प्रति निरुक्तधर्मितावच्छेदकताप्रत्यासत्या वह्न्यभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वे धर्मितावच्छेदकमनिवेश्य वह्न्यभाववत्ताज्ञाने निश्चयत्वं दुर्वचम्, तथाहि वह्न्यभाववत्ताज्ञाने निश्चयत्वं न तावद् वह्न्यभावाऽभावाऽप्रकारकत्वे सति वह्न्यभावप्रकारकत्वम्, ह्रदो वह्निमानितिज्ञानं प्रति महानसं वह्न्यभावाभाववत्–ह्रदो वह्न्यभाववानिति ज्ञानस्य प्रतिबन्धकत्वानुपपत्तेः। नापि वह्न्यभावनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता वह्न्यभावाभावनिष्ठप्रकारता तच्छून्यत्वे सति वह्न्यभावप्रकारकत्वम्। दर्शितज्ञानीयभावाभावादिप्रकारताया महानसं वह्न्यभाववदितिज्ञानीयवह्न्यभावप्रकारतानिरूपितविशेष्यतावच्छेदकं यन्महानसत्वं तदवच्छिन्नविशेष्यतानिरूपितत्वानपायात्तस्यैवाऽसङ्गृहतादवस्थ्यात्। नापि ताहशवन्ह्यभावाभावप्रकारताशालित्वतादात्म्योभयसम्बन्धेन वन्ह्यभावज्ञानविशिष्टान्यत्वम्, महानसं वन्ह्यभावाभाववत्वा ह्रदो वन्ह्यभाववानितिज्ञानाऽसंग्रहात्। नापि स्वावच्छिन्नविशेष्यतानिरूपितवन्ह्यभावाभावप्रकारताशून्यत्वस्वावच्छिन्नविशेष्यतानिरूपितवन्ह्यभावप्रकारताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्ट-

त्वम्, निरुक्तनिर्णयत्वस्य दर्शितसमूहालम्बनसाधारण्येऽपि तद्विशिष्टस्य धर्मितावच्छेदकतासम्बन्धेन महानसत्वेऽपि सत्वान्महानसं वह्निमन्नेति विशिष्टबुद्ध्यनुपपत्तेरत आह अधिकमन्यत्राऽनुसन्धेयमिति । अयं भावः । प्रतिबन्धकतावच्छेदककोटौ निश्चयत्वमनिवेश्य वन्ह्यभावसंशयोत्तरं वह्निविशिष्टबुद्ध्युत्पत्तिनिर्वाहाय प्रतिबन्धकतावच्छेदकनिरुक्तधर्मितावच्छेदकतारूपप्रत्यासत्तिघटकवन्ह्यभावत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतायामेव वन्ह्यभावप्रकारत्वानिरूपितत्वं देयम् । तथाच तादृशविशेष्यतानिरूपितधर्मितावच्छेदकतासम्बन्धेन वन्ह्यभाववत्ताज्ञानत्वेनैव प्रतिबन्धकत्वम् । संशये समुच्चयवैलक्षण्याय प्रकारताद्वयनिरूपितैकैव विशेष्यता स्वीक्रियते इति संशयोत्तरं विशिष्टबुद्ध्युपपत्तेः । नच समुच्चयाऽविषयस्य कोटयोर्विरोधस्य संशयविषयतया वैलक्षण्यसिद्धौ प्रकारताद्वयनिरूपितैकविशेष्यतायाः अक्लृप्तायाः स्वीकारो न युक्तइति वाच्यम् । विरोधोपस्थितिं विनापि विशेषदर्शन–कोटिस्मरण–धर्मिज्ञानादिकारणसत्वे संशयस्यानुभवसिद्धतया निखिलसंशयानां विरोधविषयकत्वाऽसम्भवेन समुच्चयव्यावर्त्तनाय संशयविलक्षणविषयतायाः स्वीकारस्याऽऽवश्यकत्वात्, अत एव क्वचिद्विरोधस्यापि तत्प्रयोजकाधीनत्वादित्यत्र दीधितिकृता क्वचिदित्युक्तम् । संशयकोटयोः संसर्गतया विरोधभानस्वीकारे तादृशविरोधविषयतायाः समुच्चयवैलक्षण्यानुपपत्त्यैव संशये स्वीकारात्किमपराद्धमतिरिक्तविशेष्यतया(१) ।

---

(१) अथ निखिलसंशयेषु प्रकारताद्वयनिरूपितैकविशेष्यत्वमपि न सम्भवति, नीलपर्वतत्वं धर्मितावच्छेदकीकृत्य वन्ह्यभावं शुद्धपर्वतत्वं धर्मितावच्छेदकीकृत्य वन्ह्यभावाभावं वन्हिं वाऽवगाहमानस्य संशयस्य तथात्वाऽयोगात्, तत्र वन्ह्यादिप्रकारतानिरूपितविशेष्यताया नैल्यानवच्छिन्नत्वेन तदवच्छिन्नवन्ह्यभावप्रकारतानिरूपितविशेष्यताभिन्नत्वात् । तत्र वन्ह्यादिप्रकारतानिरूपितविशेष्यताया नैल्यावच्छिन्नत्वोपगमे नीलपर्वतत्वं धर्मितावच्छेदकीकृत्य दर्शितकोटिद्वयमवगाहमानस्य संशयस्य ततो वैलक्षण्यानुपपत्तेः । नच नीलपर्वतो वन्हिमान् पीतपर्वतो वन्ह्यभाववानित्याकारकसमूहालम्बनवत्, नीलपर्वतो वन्ह्यभाववान् पर्वतो वन्ह्यादिमानिति ज्ञानमपि निर्णय एवेति वाच्यम् । तथासति कार्यकाले पर्वतत्वावच्छेदेन वन्ह्यादिमत्तानिर्णयस्य प्रतिबन्धकस्य सत्वान्नीलपर्वतत्वावच्छेदेन वन्ह्यभावादिविशिष्टबुद्ध्यनुत्पत्तेरिति चेत् ।

नैवम् । दर्शितसंशयेऽप्युभयप्रकारतानिरूपितैकैव विशेष्यता, किन्तु तस्याः पर्वतत्वावच्छिन्नत्वेन वन्ह्यादिप्रकारतानिरूपितत्वं, नैल्यविशिष्टपर्वतत्वावच्छिन्नत्वेन च वन्ह्यभावप्रकारतानिरूपितत्वमिति विशेषः । नीलपर्वतो वन्ह्यभाववान्नवेति संशये च विशेष्यताया एकरूपेणैवोभयप्रकारतानिरूपितत्वमिति ततस्तस्य वैलक्षण्यनिर्वाहः ।

यदि च–संशयसमुच्चययोर्वैलक्षण्यायोभयप्रकारतानिरूपितमेकविशेष्यत्वमतिरिक्तमास्तां संशये, परन्तु तत्र प्रत्येकप्रकारतानिरूपितविशेष्यताद्वयसत्वेऽपि बाधकाभावः, तत्प्रयोजकसामग्र्या अपि तत्र सत्वात् । न च तदवच्छिन्नं प्रति संशयसामग्र्याः प्रतिबन्धकत्वकल्पनात्तत्प्रयोजकसामग्र्येव नास्तीति वाच्यम् । तत्र संशयसामग्र्याः प्रतिबन्धकत्वे मानाभावात् । नच संशयसमुच्चयवैलक्षण्यान्यथानुपपत्त्यैव तत्स्वीकार इति शंक्यम् । संशयव्यावृत्तविषयतायाः समुच्चयेऽभावेऽपि संशयनिष्ठविलक्षणविषयतायास्तत्राभावेनैव तस्य संशयवैलक्षण्यनिर्वाहात्, संशयव्यावृत्तविषयतारूपेणैव तत्र वैलक्षण्यमनुभूयत इति तु शपथैकनिर्णेयमिति विभाव्यते–तदाऽस्तु संशयेऽतिरिक्तविषयत्वाकल्पनं–अस्तु चोभयप्रकारतानिरूपितविशेष्यताद्वयं–किन्तु समुच्चयव्यावर्त्तनाय संशयीयविशेष्यतयोरवच्छेद्यावच्छेदकभावः स्वीक्रियते । तथाच वन्ह्यभावाभावप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नवन्ह्यभावादिप्रकारतानिरूपितविशेष्यतानिरूपितधर्मितावच्छेदकतासम्बन्धेन वन्ह्यभाववत्ताज्ञानत्वेन प्रतिबन्धकतेति न कोपि शङ्कावसर इति ।

तादृशपक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्ट-तादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकं तत्त्वं, तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम्। ज्ञानविरोधित्वञ्च तद्विषयविषय-

---

निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण लक्षणं वर्णयतां केषाञ्चिन्मतमाह तादृशपक्ष—इति। पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः, तादृशसाध्येति। साध्यतावच्छेदकविशिष्टसाध्येत्यर्थः। तादृशहेत्विति। हेतुतावच्छेदकविशिष्टहेत्वित्यर्थः, ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना। ज्ञानं ज्ञानसामान्यं, तेन घटादिविषयकस्य यस्य कस्यचित् समूहालम्बनज्ञानस्य तादृशज्ञानविरोधिबाधादिविषयकत्वेऽपि नातिप्रसङ्गः। स्वावच्छिन्नविषयकत्वव्यापकतादृशज्ञानविरोधिविषयिता-

---

पक्षतावच्छेदकविशिष्टेत्यादि। पक्षतासाध्यताहेतुतावच्छेदकनिवेशनमाश्रयासिद्धिसाध्याप्रसिद्धिसाधनाप्रसिद्धिसंग्रहाय, तेन—सामान्यप(१)दनिवेशेन। यस्यकस्यचिदिति। बाधादिविषयकस्येत्यर्थः। समूहालम्बनज्ञानस्येति। वन्ह्यभाववान् ह्रदो घटश्चेत्याकारकयत्किञ्चिज्ज्ञानस्येत्यर्थः। केचित्तु यद्विषयकं विरोधिविषयकमित्यस्य यद्विषयकत्वं विरोधिविषयकत्वरूपमित्यर्थः। तथाच घटादावतिव्याप्तिविरहात्सामान्यपदं न निवेशनीयमिति प्राहुः। फलितार्थमाह स्वावच्छिन्नेति। तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारता तद्व्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारताविशिष्टग्रहत्वव्यापकप्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकताद्विषयिता यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिकतद्रूपवत्त्वं लक्षणम्(२)। ग्रहे प्रकारतावै०स्वविशिष्टप्रकारतावत्त्वसम्बन्धेन। स्व"प्रकारता"-

---

अथैवमपि वन्ह्यभावाभाववति ह्रदे वन्ह्यभावप्रकारकमित्यप्रामाण्यज्ञानस्यैव ह्रदो वन्ह्यभाववानिति ज्ञानप्रतिबन्धकतायामुत्तेजकत्वं, नतु वन्ह्यभावाभाववति घटे वन्ह्यभावप्रकारकमित्यप्रामाण्यज्ञानस्येति धर्मितावच्छेदकनिवेशो दुर्वार इति चेन्न। स्वीयवन्ह्यभावाभाववद्वृत्तित्वप्रकारतानिरूपिता या वन्ह्यभावप्रकारतानिरूपितविशेष्यतानिष्ठविशेष्यता तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽप्रामाण्यग्रहाभावाधिकरणताविशिष्टधर्मितावच्छेदकताया एव प्रतिबन्धकतावच्छेदकसम्बन्धत्वोपगमेन तादृशाऽप्रामाण्यग्रहाभावस्य विशेषणताविशेषधर्मितावच्छेदकताघटितसामानाधिकरण्यसम्बन्धेन प्रतिबन्धकविशेषणत्वोपगमेन वा दोषानवकाशेन धर्मितावच्छेदकनिवेशानावश्यकत्वादिति दिक्।

(१) अत्र जातिमान् वन्ह्यभाववानितिज्ञानवारणायाऽव्यापकीभूतविषयिताशून्यत्वनिवेशस्याऽऽवश्यकतया तत एवोदासीनाऽतिव्याप्तिवारणसम्भवात्सामान्यपदं व्यर्थमिति विभावनीयम्।

(२) तादृशप्रकारताविशिष्टग्रहनिष्ठप्रतिबध्यतानिवेशे पर्वतो वह्निमानित्यत्र पर्वतो वह्निमान् ह्रदश्चेति समूहालम्बनग्रहनिष्ठोदासीनप्रतिबध्यतामादाय वन्ह्यभाववद्ध्रदेऽतिव्याप्तिः, तादृशग्रहत्वव्यापकप्रतिबध्यतानिवेशेऽसम्भवः ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्याकारग्रहत्वव्यापकप्रकारताविशिष्टग्रहत्वं ह्रदो वह्निमान् ह्रदो धूमवान् धूमो वह्निव्याप्य इत्यादिग्रहेषु वर्त्तते तत्र सर्वत्र कस्याश्चिदपि प्रतिबध्यताया यत्किञ्चिद्दोषज्ञाननिरूपताया अभावात्, अतः प्रतिबध्यतायां तादृशप्रकारताविशिष्टप्रकारत्वावच्छिन्नत्वं वक्तव्यं, प्रकारतायां पक्षे साध्यहेत्ववगाहिग्रहत्वव्यापकत्वं च तादृशग्रहनिष्ठे यः किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरू-

कधर्म्मवत्त्वमिति तु फलितार्थः। अत्र च विषयितानिष्ठं स्वरूपसम्बन्धात्मकताहशज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकतात्मकताहशज्ञानविरोधित्वमेव निवेशनीयं, न तु विषयनिष्ठं निर्व्वाच्यताहशज्ञानविरोधित्वं, तस्यैव लक्षणत्वसम्भवेन शेषवैयर्थ्यप्रसङ्गात्। अत्र च विषयनिष्ठस्य निर्व्वाच्यताहशज्ञानविरोधित्वस्यैव तदपेक्षया लघुतया तदेवाह ताहशज्ञानविरोधित्वं वेति। ताहशज्ञानविरोधित्वं यदि ताहशज्ञानप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्म्मवत्त्वं तदा पूर्व्वनिरुक्तयथाश्रुतमूलार्थ एव पर्य्यवसानात् निर्व्वह्निः पर्व्वतो वह्निमानित्यादिस्थलीयदोषाव्याप्तितादवस्थ्यमिति तन्निर्व्वक्ति ज्ञानविरोधित्वञ्चेति। तद्विषयविषयकेति। तथाच निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ ताहशज्ञानविरोधिज्ञानाप्रसिद्धावपि तद्विषयविषयकस्य निर्व्वह्निः पर्व्वत इति ज्ञानस्य प्रतिबन्धकं यद्वह्निमान् पर्व्वत इति ज्ञानं तद्विषयतामादायैव वह्निमत्पर्व्वतादिरूपतत्स्थलीयाश्रयासिद्ध्यादौ लक्षणसमन्वयः।

---

वैशिष्ट्यं च प्रकारतायां स्वावच्छेदकावच्छिन्नत्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वैतत्त्रितयसम्बन्धेन।

नन्वत्र पर्वतो वह्निमानित्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, पाषाणमयत्ववत्पर्वतविषयिताया अपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबन्धकतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वात्, प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्य तद्वारणेऽसाधारण्येऽव्याप्तिः, ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारणविषयित्वानवच्छेद्यत्वोभयाभावं तत्र निवेश्योक्तातिव्याप्तिवारणे गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिरिति चेन्न। ताहशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्याऽनाहार्यत्वादिविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं तद्रूपवत्त्वं वक्तव्यम्, पाषाणमयत्ववत्पर्वतविषयिताघटकपदार्थनिष्ठसमुदायत्वं न ताहशं, ज्ञानवैशिष्ट्यादिघटितसमुदायवृत्तिसमुदायत्वस्यैव ताहशत्वात्, तच्च न पाषाणमयत्ववत्पर्वतविषयकताहशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमिति नातिव्याप्तिः।

इदानीमसाधारण्यसंग्रहाय ताहशनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वाऽसाधारण्यविषयकत्वोभयाभाववत्त्वं निवेश्यम्, एवं च पक्षविशेष्यतानिरूपितसाध्यप्रकारतात्मकं नि-

---

पितकिञ्चिद्धर्मावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धः सामान्याभावः तदप्रतियोगित्वं, तथाच पक्षे साध्यतद्व्याप्यहेतुवैशिष्ट्यावगाहिग्रहनिष्ठोक्ताभावाप्रतियोगिप्रकारताविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतावती यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नविषयिता यद्रूपावच्छिन्नविषयिताशाल्यव्यापकविषयिताशून्याऽनाहार्यनिश्चयत्वव्यापिका तद्रूपवत्त्वं लक्षणम्।

अथ घटवद्भूतलादिरूपोदासीनपदार्थविषयकसमूहालम्बनात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्य–तद्व्याप्यहेतुप्रकारकज्ञानविषयविषयकघटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटाभाववद्भूतलादावतिव्याप्तिः । न च पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यतन्निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकग्रहत्वव्यापकविषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वनिवेशान्न दोषः, घटवद्भूतलादिविषयितायास्तादृशग्रहत्वाव्यापकत्वादिति वाच्यम् । यतः प-

दक्षप्रकारताविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपिताऽसाधारण्यविषयकनिश्चयनिष्ठप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतं यत्पक्षधर्मिकहेतुमत्ताज्ञानवैशिष्ट्याऽसाधारण्यादिविषयिताघटकपदार्थसमुदायत्वं तत्पक्षधर्मिकहेतुमत्ताज्ञानकालीनोभयाभाववदसाधारण्यविषयकनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं भवतीति नाऽसाधारण्येऽव्याप्तिः(१)

अत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वमपि निवेशनीयम् । तच्चैतेन–कल्परीत्या यत्किञ्चित्प्रतिबन्धकताघटितं वाच्यम् । तथाच तादृशप्रकारत्वावच्छिन्नयत्प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके तादृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं तत्र "तिबध्यतानिरूपितप्र"तिबन्धकतावच्छेदकविषयितासामान्ये स्वावच्छिन्ननिरूप्यतावत्त्वं वक्तव्यम्, व्याप्तिप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितासामान्यान्तर्गतशुद्धव्यभिचारत्वावच्छिन्नविषयितायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यत्वाभावान्नातिव्याप्तिः ।

नचैवं सर्वं गगनवदित्यत्र गगनाभाववद्घटादिरूपबाधेऽव्याप्तिः, तादृशप्रतिबन्धकतावच्छेदकविषयितासामान्यान्तर्गतगगनाभाववत्पटादिविषयितायां तादृशघटनिरूपितत्वाभावादिति वाच्यम् । तादृशविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वनिवेशेन वारणात् ।

एवं ह्रदो वह्निमानित्यत्र वन्ह्यभाववद्ह्रदेऽव्याप्तिः, वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्य—ह्रदो वन्ह्यभाववानितिज्ञानीयवन्ह्यभावविषयिताया अपि

(१) न चैवमपि कपिसंयोग्येतत्त्वादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः कपिसंयोगाभाववत्ताज्ञानस्य विशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकाऽनाहार्यत्वादिविशिष्टनिश्चयीयकपिसंयोगाभाववद्वृक्षविषयितावच्छेदस्य कपिसंयोगाभाववान्वृक्ष इत्यनाहार्यनिश्चयेऽभावादिति वाच्यम् । निश्चयेऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्य निवेशनीयतयाऽव्याप्यवृत्तित्वभ्रमाविशिष्टकपिसंयोगाभाववद्वृक्षविषयकज्ञाने साम्यतः प्रतिबन्धकतायामुत्तेजकीभूताव्याप्यवृत्तित्वज्ञानाभावविशिष्टतादृशनिश्चयीयकपिसंयोगाभाववद्वृक्षविषयितावद्भेदस्य सत्त्वेन तादृशप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकाऽव्याप्यवृत्तित्वज्ञानाभावघटितसमुदायवृत्तिसमुदायत्वस्याऽव्याप्यवृत्तित्वभ्रमानास्कन्दितकपिसंयोगाभाववद्वृक्षविषयकतादृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकतयाऽतिव्याप्तेरभावात् ।

र्व्वतायंशे वह्निमत्त्वाद्यनवगाहिनो निर्व्वह्निः पर्व्वत इति ज्ञानस्य या वह्निप्रकारकत्वाद्यनिरूपिता निर्व्वह्नित्वादिप्रकारितानिरूपितपर्व्वतादिविषयिता सैवानाहार्य्यत्वविशिष्टतया वह्निमान् पर्व्वत इत्यादिज्ञानप्रतिबध्यतावच्छेदिका, तस्याश्च निर्व्वह्निः पर्व्वतो वह्निमानित्याहार्य्यज्ञानसाधारण्ये माना-

---

बाधप्रतिबन्धकतावच्छेदकतया तद्विषयितायां दोषनिरूप्यत्वाभावादतो यद्रूपावच्छिन्नविषयितासामान्यमवच्छेदकं तद्रूपावच्छिन्नविषयितासामान्ये स्वावच्छिन्ननिरूप्यता विवक्षणीया, तथाच ह्रदो वह्निमानित्यत्र जातिमद्वन्ह्यभाववद्ह्रदेऽतिव्याप्तिः, जातिमद्वन्ह्यभाववद्ह्रदविषयित्वाव्यापकविषयिताशून्यज्ञानीयवन्ह्यभाववद्ह्रदसामान्यस्य तादृशप्रतिबन्धकतावच्छेदकत्वं नास्ति तद्विषयितायाः जातिमान् वन्ह्यभाववानिति ज्ञानसाधारण्यात्, किन्तु जातिद्वन्ह्यभाववद्ह्रदविषयितासामान्यमेव तदवच्छेदकं, तत्र च तन्निरूप्यत्वमक्षतमेवेति तादृशविषयितायां यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि विशेषणीयम् । एवं हेतुमत्पक्षघटिताऽसाधारण्यसंग्रहाय तादृशविषयितायामसाधारण्यविषयिताभिन्नत्वाऽसाधारण्यविषयितात्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वमपि विशेषणीयम् (१) ।

तस्याश्चेति । वह्निप्रकारित्वानिरूपितनिर्वह्नित्वप्रकारतानिरूपितपर्वतविषयितायाश्चेत्यर्थः निर्वह्निः पर्वतो वह्निमानित्यादाविति । आदिना निर्वह्निर्वह्निमानित्यस्यापि संग्रहः।

---

(१) अत्रायमनुगमः—पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतासाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारता—शालिग्रहनिष्ठकिञ्चिद्रूपाऽवच्छिन्नविशेष्यतानिरूपिताकिञ्चिद्रूपावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धसामान्याभावाऽप्रतियोगिताप्रकारताविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टधर्मवत्त्वं लक्षणम्, प्रतिबन्धकतावैशिष्ट्यञ्च सम्बन्धद्वयेन,—तत्र प्रथमः स्वनिरूपितावच्छेदकतात्वाऽवच्छिन्नपर्याप्त्यनुयोगिताऽवच्छेदकधर्मनिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिव्याप्यवृत्तित्वभ्रमानास्कन्दितानाहार्याप्रामाण्यज्ञानानास्कन्दितपक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वा—ऽसाधारण्यविषयकत्वोभयाभाववन्निश्चयानिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीति—प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदक(१)तानिरूपितावच्छेदक(२)तानिरूपितावच्छेदक(३)तानिरूपितावच्छेदकता(४)निरूपितावच्छेदकता(५) निरूपितावच्छेदक(६)तानिरूपितावच्छेदकता(७)निरूपितावच्छेद(८)कतानिरूपितावच्छेद(९)कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वरूपः, अपरस्तु स्वनिरूपितावच्छेदकताकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताऽशून्याऽनाहार्यज्ञानीयकिञ्चिद्रूपावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदक(१)तानिरूपितावच्छेदक(२)तानिरूपितावच्छेदकता(३) निरूपितावच्छेदकता(४)निरूपितावच्छिन्नत्वसन्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना सती किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वनिष्ठावच्छेदकताभिन्ना सती विषयितात्वनिष्ठावच्छेदकताभिन्ना सती असाधारण्यविषयिताभिन्नत्वघटितोभयाभावनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकत्वदृशावच्छेदकतानिरूपिका या विषयितानिष्ठानवच्छेदकता तद्विशिष्टत्वरूपः, तद्विशिष्टत्वं च स्वनिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठाऽवच्छेदकतानिरूपितविषयिताव्यापकत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदानिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाऽभाववत्त्वोभयसम्बन्धेन, अत्र भेदप्रतियोगितावच्छे-

कग्रहविरोधिग्रहविषयत्वम् । एवंविधैव रीतिरुत्तरत्र सर्व्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित् ।

---

भावात् आहार्य्यज्ञानसामग्र्यास्तादृशविषयिताप्रयोजकत्वासिद्धेः ।

विपरीतज्ञानाभावघटितायास्तादृशविषयिताप्रयोजकानाहार्य्यज्ञानसामग्र्याश्चाहार्य्यज्ञानाजनकत्वात्, तादृशग्रहत्वव्यापिका च वह्निमत्त्वादिप्रकारितानिरूपिता तादृशपर्व्वतादिविषयिता, सा च न प्रतिबध्यतावच्छेदिकेति निर्व्वह्नित्वादिप्रकारितानिरूपितपर्व्वतादिविषयितात्वेन निर्व्वह्निः पर्व्वत इत्यादिज्ञानीयविषयितापि तथाविधग्रहत्वव्यापिकेति चेत्। तर्हि विषयितात्वादिना घटवद्भूतलादिविषयितानामपि तद्व्यापकतया उदासीनपदार्थवारणमशक्यमिति चेत् । मैवम्, यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकत्वावच्छिन्नं तादृशग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यक—तद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्ध-

---

तत्र वह्न्यभावविशिष्टाऽभाववत एव दोषत्वात् । अभाववान् वह्न्यभाववानिति ज्ञानस्य निर्वह्निर्वह्निमानितिग्रहविषयविषयकेऽभाववान् वह्निमानितिग्रहे विरोधित्वात् । दीधितौ एवंविधेति । तत्रापि साध्यव्याप्यो हेतुरित्याकारकग्रहविरोधित्वादिकमेव सव्यभिचारत्वादिकं निर्वाच्यमित्यर्थः ।

तादृशपर्वतविषयितेति । निर्वह्नित्वप्रकारतानिरूपितपर्वतविषयितेत्यर्थः । सा च न प्रतिबध्यतावच्छेदिकेति । तथाचाऽऽहार्यस्थलीयाश्रयासिध्यादावव्याप्तिरिति(१) भावः ।

---

दकतावच्छेदकसम्बन्धश्च स्वावच्छिन्ननिरूप्यतारूपः, अत्रापि गगनाभाववदभाववत्कालीनघटपक्षकगगनसाध्यकस्थलेऽव्याप्तिपरिहारप्रकारः स्वयमूहनीयः ॥

(१) नन्वत्राऽऽहार्यस्थले अव्याप्त्यभिधानं किमभिप्रेत्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितनिर्वह्नित्वप्रकारतायास्तादृशप्रकारतात्वेन व्यापकत्वमभिप्रेत्य वा तत्तद्व्यक्तित्वेन, प्रथमे तु निर्दोषत्वमनुपदं स्वयमेव वक्ष्यते, द्वितीये असम्भव एव ह्रदो वह्निमानित्यत्रापि पक्षे साध्यादिवैशिष्ट्यावगाहिग्रहत्वं ह्रदो वह्निमान् ह्रदो वह्निमद्ह्रदवान् वह्निमद्ह्रदो वह्निमानित्यादिषु ज्ञानेषु वर्तते तत्र सर्वत्र समानाकारकज्ञानविषयिताया अभेदेऽपि ह्रदो वह्निमानितिज्ञानीयप्रकारताव्यक्तेरभावात् तादृशप्रकारताव्यक्तेस्तद्व्यक्तित्वेन व्यापकत्वाऽसम्भवात् । न च प्रकारतायां व्यापकत्वमभिप्रेत्य नेयं शङ्का अपितु प्रतिबध्यतायां स्वावच्छेदकप्रकारतावत्त्वसम्बन्धेन तथोक्तज्ञानेषु सर्वत्र वह्न्यभाववद्ह्रदविषयकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यतायास्तादृशसम्बन्धेन सत्त्वेनाहार्यस्थलाव्याप्त्यभिधानं युक्तमिति वाच्यम् ।

तथापि नियताहार्यज्ञाने तादृशसम्बन्धेन प्रतिबध्यताविरहेणासम्भवस्यैव सत्त्वात् आहार्यस्थलीयदोषसाधारण्याय कृतलक्षणे आहार्यभेदानिवेशाशङ्काया असम्भवात् । मैवम् । प्रकारतायास्तद्व्यक्तित्वेनैव व्यापकत्वमभिप्रेतं तादृशग्रहे विशेषणान्तरमप्यभिप्रेतं, तच्च साध्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्त्यवच्छेदकत्वानवच्छेद्यप्रकारतानिरूपितपक्षतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यताशालित्वे सति साध्यतावच्छेदकपर्याप्तावच्छेदकताकविषयतानिरूपितव्याप्तिविषयतानिरूपितहेतुतावच्छेदकपर्याप्तावच्छेदकताकविशेष्यत्वावच्छेद्यावच्छेद्यत्वानवच्छिन्नतादृशप्रकारतानिरूपिततादृशपक्षविशेष्यताशालित्वम्, तथाच ह्रदे वह्निसाधने ह्रदो वह्निमानिति ज्ञानमेव तादृशमिति न कोपि दोषः ।

केचित्तु यादृशपक्षक-यादृशसाध्यक-यादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वं तादृशपक्षक-तादृशसाध्यक-तादृशहेतुकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्म्मवत्त्वस्य विवक्षणीयतया सर्वेषामसङ्ग्रहः स्यादिति दिक् । अत्र चास्वरससूचनाय केचिदिति । स च उक्तयुक्त्या निर्व्वह्निर्व्वह्निमानित्यादिस्थलीयदोषासंग्रहेण । न च धर्म्मितावच्छेदकत्वप्रत्यासत्त्या वह्निप्रकारकज्ञानं प्रति वन्ह्यभावप्रकारकज्ञानस्य प्रतिबन्धकतामते निर्व्वह्निर्व्वह्निमानित्येतादृशज्ञानसमानविषयकानाहार्य्यवह्निमानित्याकारकज्ञानप्रतिबन्धकतामादाय लक्षणसमन्वयस्तत्रापि सम्भवतीति वाच्यम् । तादृशमताश्रयणे पर्व्वतो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादेर्दोषताप्रसङ्गात् ।

यादृशेति सर्व्वत्र यद्रूपावच्छिन्नार्थकम् । तावदन्यान्यत्वमिति । यत्र च यादृशपक्षसाध्य-हेतुकस्थले यादृशदोषज्ञानस्य प्रतिबध्यज्ञानं प्रसिद्ध्यति, यथा निर्व्वन्हिः पर्व्वतो वन्हिमान् धूमादित्यादौ वन्हिविशिष्टपर्व्वतादिरूपाश्रयासिद्धि—धूमाभावविशिष्टनिर्व्वन्हिपर्वतादिरूपस्वरूपासिद्ध्यादीनां ज्ञानस्य, तत्र तादृशदोषाणां ग्राह्याभावतद्व्याप्यरूपतद्घटकभेदेन विशेषणविशेष्यभावभेदेन च भिन्नानामनुगतेन विशिष्टपक्षे विशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपासिद्धित्वादिनैव तादृशान्यान्यत्वघटकभेदप्रतियोगिविधया निवेशो, न तु वन्हिविशिष्टपर्व्वतत्व—निर्धूमत्वविशिष्टनिर्व्वन्हित्वादिना प्रयोजनविरहात्, यत्स्थलीययादृशदोषविषयकज्ञानस्य प्रतिबध्यज्ञानमप्रसिद्धं, यथा निर्व्वन्हिर्व्वन्हिमानित्यादिस्थलीयस्य च बाधादेर्ज्ञानस्य, तत्स्थलीयतादृशदोषाणामगत्या वन्ह्यभावविशिष्टनिर्व्वह्नित्व—वन्ह्यभावव्याप्यविशिष्टनिर्व्वह्नित्व—निर्व्वह्निनिष्ठवन्ह्यभावत्व—निर्व्वह्निदोषताप्रसङ्गादिति(१) ।

ज्ञानस्येति । वन्हिमान्पर्वत इत्याश्रयाऽसिद्धिज्ञानस्य—धूमाभाववान्निर्वन्हिः पर्वतः इति स्वरूपाऽसिद्धिज्ञानस्य चेत्यर्थः । वन्ह्यभाववान्पर्वत इति—धूमवान्निर्वन्हिः पर्वत इति च प्रतिबध्यज्ञानं प्रसिद्ध्यतीति शेषः । तत्र—प्रतिबध्यज्ञानप्रसिद्धिस्थले । अगत्या—विरोधित्व-

(१) ननु त्वन्मते ज्ञानत्वेनैव प्रतिबध्यप्रतिबन्धकभावस्वीकारात् घट इतिज्ञानेपि प्रतिबन्धकतासत्त्वात् सर्वत्राऽसम्भव एव कुतो नाभिहितः मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वस्य वक्तव्यतया ह्रदवह्न्यादेरपि निरुक्तलक्षणाश्रयत्वेन विशिष्टान्तरतया तद्घटितत्वात् , एवं त्वन्मते प्रतिबध्यप्रतिबन्धकभावस्य तत्पुरुषीयत्वादिघटिततया नानापुरुषीयनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां न सम्भवति, यदि यस्य ज्ञानस्य प्रतिबन्धकतावच्छेदकसम्बन्धः प्रसिद्ध्यति तस्यैव प्रतिबन्धकत्वं घट इति ज्ञानस्य तादृशसम्बन्धाऽप्रसिद्धेर्न तत्र प्रतिबन्धकतेत्युच्यते, तदा तद्ध्रदो वन्हिमानित्यत्र बाधेऽव्याप्तिः तस्य वन्ह्यभाववद्ध्रदघटितत्वादिति ।

मैवम् । यत्किञ्चित्प्रतिबन्धकताघटितलक्षणस्य कर्तव्यत्वात् , तथाच यत्किञ्चित्कालपुरुषीयनिश्चयत्वव्यापकत्वं यत्प्रतिबन्धकतायामस्ति तत्प्रतिबन्धकताघटितविशिष्टान्तराघटितत्वस्य वक्तव्यत्वादिति ॥

वन्ति तावदन्यान्यत्वम्, एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम्। स

---

ष्टवह्न्यभावव्याप्यत्वादिना चाननुगतरूपेणैव निवेशः। अत्र च विशिष्टभिन्नाभिन्नत्वस्य शुद्धविशेष्यसाधारणतया सर्वमाकाशवदित्यादावाकाशाभावविशिष्टसर्वादिरूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तत्तद्विशिष्टनिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमेवाभिमतम्।

अयञ्च प्रकारो यादृशपक्ष-साध्य-हेतुकस्थले उक्तसमूहालम्बनानुमितेरप्रसिद्धिस्तत्रैवादरणीयः। यत्र तु तत्प्रसिद्धिस्तत्र लाघवाद्यथाश्रुतमूललक्षणमेव साधीयः। शङ्काभेदस्याकिञ्चित्करतायाः स्वयमेव वक्ष्यमाणत्वादित्यवधेयम्। यत्राश्रयासिद्ध्यादिरेकविध एव दोषः प्रतिबध्यज्ञानञ्च प्रसिद्धं महानसत्ववान् पर्वतो वह्निमान्धूमादित्यादौ तत्र विशिष्टपक्षग्रहविरोधित्वादिरूपाश्रयासिद्धित्वादेरेव दोषसामान्यलक्षणत्वमुचितं न तु महानसत्वाद्यभावविशिष्टपर्वतत्वाद्यवच्छिन्नतादृशाभावव्याप्यविशिष्टपर्वतत्वाद्यवच्छिन्नाभिन्नाभिन्नत्वस्य निरुक्तसमूहालम्बनानुमितिविरोधित्वस्य च गौरवादित्याशयेनाह एकमात्रदोषस्थल इति। एकविध एव यत्र दोषस्तद्विषयकज्ञानप्रतिबध्यज्ञानञ्च प्रसिद्धं, तादृशस्थल इत्यर्थः। तेन ग्राह्याभाव-तद्व्याप्यभेदेन विशेषण-विशेष्यभावभेदेन च सर्वत्र दोषाणां नानात्वसम्भवादेकमात्रदोषस्थलस्याप्रसिद्धत्वेऽपि पर्वतान्यः पर्वतो वह्निमान् धूमादित्यादावेकविधमात्रदोषस्थले ग्राह्याभावतद्व्याप्यरूपघटकादिभेदेन विभिन्नाश्रयासिद्ध्यादीनामनुगमकरूपाभावेनान्यतमत्वस्य लक्षणताया आवश्यकत्वेऽपि न क्षतिः। तत्त्वं—तादृशत्वं निरुक्ताश्रयासिद्धित्वादिकमिति यावत्।

इदमुपलक्षणम्। यत्र परामर्शविरोधिनो व्यभिचार-विरोधासिद्धयस्त्रयो दोषा न तु बाध-प्रतिरोधौ पर्वतो वह्निमान् ह्रदत्वादित्यादौ परामर्शविरोधित्वमेव सामान्यलक्षणम्, यत्र च बाध-प्रतिरोधासिद्धयो दोषाः न तु व्यभिचार-विरोधौ ह्रदो वह्निमान् धूमात् काञ्चनमयह्रदो वह्निमान् धूमात् ह्रदः काञ्चनमयवह्निमान् धूमात् ह्रदो वह्निमान् काञ्चनमयधूमादित्यादौ च तत्र विशिष्टपक्षे विशिष्टसाध्य-विशिष्टसाधनयोर्वैशिष्ट्यावगाहि यज्ज्ञानं तद्विरोधित्वमेव तथा, एवं यत्र व्यभिचारासिद्धी एव दोषौ का-

---

घटिताऽनुगतरूपेण निवेशाऽसम्भवेन। निरूपकतावच्छेदकतापर्याप्त्यधिकरणेति। तेन—विशिष्टस्याऽनतिरिक्तत्वेन केवलपक्षहेत्वादौ नातिव्याप्तिरिति ध्येयम्।

अयं च प्रकारः—तावदन्यान्यत्वरूपः।

पर्वतो वन्हिमान् ह्रदत्वादित्यादाविति। वन्ह्यभाववद्वृत्ति ह्रदत्वं व्यभिचारः।

चातिरिक्त एवान्योन्याभाव इति न वैयर्थ्यम् । पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण, व्यभिचारादेः साध्यादिभेदानियन्त्रितत्वात् शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति प्राहुः ।

---

अनमयः पर्व्वतो धूमवान् वह्नेरित्यादौ तत्र विशिष्टपक्षविषयक–व्याप्तिविशिष्टसाधनग्रहविरोधित्वादिकं तथेत्यपि बोध्यम् । ननु तत्तद्धर्म्मावच्छिन्नभिन्नभिन्नत्वरूपलक्षणघटकतत्तद्धर्म्माणां भागासिद्धतया हेत्वाभाससामान्येतरभेदाननुमापकत्वेऽपि व्यभिचारावारकतया तदितरांशवैयर्थ्यमित्यत आह स चेति । स चान्योन्याभावोऽतिरिक्त एवेति योजना । स च तत्तद्धर्म्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकः अतिरिक्तः तत्तद्धर्म्मातिरिक्तः तथा च धर्म्मिभेदान्न वैयर्थ्यम् । तत्तद्धर्म्मावच्छिन्नभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वप्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकतत्तद्धर्म्मस्वरूपत्वेऽपि तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्म्मेषु कल्पनापेक्षया तद्विशिष्टस्यैकस्य भेदस्य लाघवेन(१) कल्पयितुं युक्तत्वादित्यभिप्रायः ।

एतच्च यथाश्रुताभिप्रायेण, तत्तद्धर्म्मावच्छिन्ननिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्म्मवत्त्वस्य लक्षणत्वे चाधिकविकालकतया विशेषणसार्थक्यमित्यवधेयम् । ननु साध्यादिभेदेन लक्षणभेदे ह्रदो

---

वन्ह्यसमानाधिकरणह्रदत्वं विरोधः । ह्रदत्वाभाववत्पर्वतः स्वरूपाऽसिद्धिः । एवमग्रेऽपि ।

युक्तत्वादिति । एवंसति घटाभावाभावत्वस्याऽप्यनेकघटेषु सम्बन्धकल्पनामपेक्ष्य तादृशाऽभावत्वविशिष्टस्याऽतिरिक्तधर्मिण एवैकस्य कल्पयितुं युक्तत्वेन स्वाभावाभावस्य स्वस्वरूपता सिद्धान्तभङ्ग इत्यस्वरससूचनायाह अभिप्राय इति ।

एतच्चेति । सार्थक्यं चेत्यर्थः । यथाश्रुताभिप्रायेणेति । तावदन्यान्यत्वरूपेत्यादिः । अधिकविकालकतयेति । अधिकदेशाऽवृत्तितयेत्यर्थः । तद्धर्मत्वस्य निरुक्तनिरूपकतावच्छेदकत्वाऽव्यापकतयेति यावत्(२) । स्वव्यापकसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वमेव वैयर्थ्यं निर्वाच्यम्, नतु स्वसामानाधिकरण्यघटितम्, अन्यथा द्रव्यं गुणकर्मा-

---

(१) ननु एकभेदस्वीकारे कथं लाघवं भेदप्रतियोगितावच्छेदकधर्मेषु वस्तुतेषु भेदत्वकल्पने एव लाघवात्, अतिरिक्तभेदकल्पने तत्राऽनन्तपदार्थानां सम्बन्धः कल्पनीय इति चेदत्राऽयमाशयः, भेदप्रतियोगितावच्छेदकापेक्षयाऽतिरिक्तत्वमेवाऽभिमतं, न तु कुत्राप्यन्तर्भावोऽपि तादृशभेदकूटवत्त्वप्रकारकप्रमाविशेष्यत्वाभावे एव तादृशभेदत्वं कल्पनीयम्, भेदकूटस्यैकत्र द्वयमितिरीत्या भानङ्गीकारेणेदम्, भावप्रतियोगिकाभावस्य भावरूपत्वाङ्गीकारे तु तादृशभेदकूटप्रकारकप्रमाविशेष्यत्वाभावस्यापि प्रतियोगितावच्छेदकत्वसम्भवादगतिरेवेति ध्येयम् ।

(२) तादृशावच्छेदकत्वस्य सकलतत्तद्धर्मसाधारणत्वादिति भावः । तादृशनिरूपकतावच्छेदकत्वव्यापकधर्मान्तराऽघटिततयेति परमार्थः ।

ज्ञायमानं सदनुमितिप्रतिबन्धकं यत्तत्त्वं वा ।

वह्निमान् धूमादित्यादिस्थलीयस्य लक्षणस्य पञ्चविधहेत्वाभाससाधारण्यासम्भवात्तादृशलक्षणाक्रान्तानां पञ्चविधत्वोक्त्यसङ्गतिरित्यत आह पञ्चविधभेदोक्तिरिति । पञ्चविधत्वोक्तिरित्यर्थः । तत्सम्भवस्थलेति । यत्र पञ्चानामेव हेत्वाभासानां सम्भवः गौरश्वो घटत्वादित्यादौ तत्स्थलीयलक्षणाक्रान्तस्य पञ्चविधत्वाभिप्रायेणेत्यर्थः । ननु लक्षणाननुगमादितरभेदानुमाने भागासिद्धिरित्यत आह व्यभिचारादेरिति । साध्यादिभेदनियन्त्रितत्वात्— साध्यादिभेदनियन्त्रितलक्ष्यतावच्छेदकत्वात्, तथाच लक्षणस्येव लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः । नन्वेवमप्यनुगतोक्त्यसम्भवान्नायं प्रकारः साधीयानित्यत आह शब्दाभेदमात्रस्येति । इदं पुनरिहावधेयम् । तावदन्यान्यत्वमितरभेदानुमापकमेव न तु दोषपदप्रवृत्तिनिमित्तं, तथासति निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वन्ह्यभावविशिष्टनिर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकतया निर्वह्नित्वविशिष्टे वह्निसाधने इत्यादेरनन्वितार्थकत्वप्रसङ्गाद्प्रसिद्ध्या तस्य हेत्वन्वयिनिर्वह्नित्वविशिष्टविशेष्यकवन्ह्यनुमितिप्रयोजकत्वार्थकत्वासम्भवात्, किन्तु अभावप्रयोजकसामान्यवृत्तिविषयितानिरूपकत्वमेव तथा, उक्तस्थले च प्रकारता प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता चोभयमेव साधनपदार्थः ।

प्रकारतारूपसाधनपदार्थेऽपरपदार्थैकदेशव्याप्तिप्रकारतानिरूपकप्रकारतायाश्च षष्ठ्यन्तवह्निपदप्रतिपाद्यस्य वह्निनिष्ठत्वस्य स्वरूपसम्बन्धेन, साध-

---

न्यत्वे सति समवेतादित्यादावपि व्यर्थविशेषणघटितत्वेन हेतोर्दुष्टत्वापत्तिः, हेतुघटकगुणत्वस्य साध्यव्याप्यतावच्छेदकत्वात्, समवेतत्वसामानाधिकरण्याच्च, व्यापकत्वनिवेशे तु गुणत्वस्य समवेतत्वाऽव्यापकत्वान्न दोषः । कुत्रचिदधिकरणविकासकतयेति पाठः । तत्र तत्तद्धर्मावच्छिन्ननिरूपितत्वस्येत्यादिः । अधिकरणानां—विषयितानाम् । विकासकतया—परिचायकतया । तथाच तत्तद्विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वमेव लक्षणम्, विषयितायां तत्तद्धर्मावच्छिन्ननिरूपितत्वं परिचायकमात्रम् । तेन तत्तद्धर्मवत्त्वमात्रस्यैव लक्षणत्वसम्भवे विशेष्यदलवैयर्थ्याऽनवकाश इति भावः । एतेन स्व व्यापकत्वानिवेशे तावदन्यान्यस्वरूपयथाश्रुतार्थेऽपि सार्थक्यसम्भवे "लक्षणत्वे" इत्यादिग्रन्थाऽसङ्गतिरिति परास्तम् ।

व्यभिचारादिनिश्चयस्यैव ज्ञायमानव्यभिचारादेरपि प्रतिबन्धकत्वमिति वादिनां मतेन लक्षणमाह—मूले ज्ञायमानमिति । अनुमितिपदं प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहि—अथ च साध्यनिरूपितव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाह्यनुमितिपरम् । तेन व्यभिचारादौ नाव्याप्तिः । तथाच ज्ञानीययद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वम् ।

स्यादेतत् शब्दोऽनित्यः शब्दत्वात् इत्यत्रासाधारणेऽव्याप्तिः सर्व्वसाध्यवद्व्यावृत्तेस्तत्रासत्वात्, एवं शब्दोऽनित्यः कृतकत्वादित्यस्य सत्प्रतिपक्षे

---

नपदार्थोक्तप्रकारताद्वये च सप्तम्यन्तार्थस्य निर्व्वह्नित्वविशिष्टविशेष्यताया निरूपितत्वसम्बन्धेनान्वयः, साधनपदोत्तरसप्तम्या निरूपकत्वं द्वित्वञ्चार्थः, निरूपकत्वे च निरुक्तसाधनपदार्थयोः पृथगन्वयः, तदन्वितनिरूपकत्वे च द्वित्वान्वयः, द्वित्वान्विततादृशनिरूपकत्वयोश्च दोषपदार्थघटकाभावेऽन्वयः, तथाच निर्व्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकत्वानित्येवान्वयबोधः । प्रतिबन्धकीभूतभ्रमविषयितानिरूपकाभावादिमत्त्वमादाय पर्व्वते वह्निसाधने धूमो दुष्ट इत्यादिप्रयोगवारणाय विषयितायां भ्रमान्यवृत्तित्वं निवेशितम् । दोषघटके केवलसाध्याभावादौ दोषव्यवहाराभावात् अत्रायं दोष इत्यादौ स्वविषयकनिश्चयाव्यवहितोत्तरानुमितिनिष्ठतादृशोभयाभावाधिकरणतात्वव्यापकविरोधिविषयिताप्रयोज्यताकधर्म्म एव दोषपदार्थ इति दिक् ।

असाधारण्यस्य पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगितात्मकस्य, सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्याप्यवत्त्वरूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्ताज्ञानविरोधित्वं निर्विवादमेव, एवञ्च तज्ज्ञानदशायां हेतोरनुमित्यजनकत्वात्तद्बुद्धेः प्रतिबन्धकत्वमावश्यक

---

अथ ज्ञायमानदोषस्य प्रतिबन्धकत्वे तत्पुरुषीयत्वान्तर्भावेण प्रतिबध्यप्रतिबन्धकभावकल्पनस्याऽऽवश्यकतया गौरवं, ज्ञानस्य तथात्वे समवायेन प्रतिबध्यप्रतिबन्धकभावकल्पनादेव व्यभिचारवारणेन न तत्पुरुषीयत्वनिवेश इति लाघवमिति चेन्न ।

वन्ह्यभाववद्ह्रदो वन्हिमत्ताबुद्धेर्विरोधीति सर्वजनीनानुभवरक्षार्थमेव विषयस्य प्रतिबन्धकत्वं कल्पनीयम् ।

अथैतन्मते कीदृशः प्रतिबध्यप्रतिबन्धकभावः, यदि विशेष्यतासम्बन्धेन तद्वत्ताबुद्धिं प्रति तादृशज्ञानविशिष्टस्य "दोषस्य" तादात्म्येन प्रतिबन्धकत्वं तदा ह्रदत्वेन घटाद्यवगाहिज्ञानविषयसाधारण्ये प्रतिबन्धकत्वानुपपत्तेः । यदि कालिकसम्बन्धेन प्रतिबध्यप्रतिबन्धकभावः तदा तत्पुरुषस्य ह्रदो वन्ह्यभाववानितिनिश्चयसत्वे पुरुषान्तरस्य ह्रदो वन्हिमानितिज्ञानानुदयप्रसङ्गात्, तद्दोषवारणाय तत्पुरुषीयत्वनिवेशेऽपि ह्रदत्वादिनाऽतीतह्रदावगाहिनिश्चयसाधारणप्रतिबध्यप्रतिबन्धकभावानुपपत्तिरिति चेत् ।

सत्यम् । महाकालानुयोगिककालिकसम्बन्धेन प्रतिबध्यत्वस्य प्रतिबन्धकत्वस्य च वक्तव्यत्वादित्यन्यत्र विस्तरः ।

बुद्धेरिति । असाधारण्यनिश्चयस्य इत्यर्थः । साध्यवत्ताज्ञानविरोधित्वमिति ।

**दशाविशेषे हेत्वोरेवाऽसाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।**

---

नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ताविरहादित्याशङ्क्य तयोरलक्ष्यत्वेन निराकुरुते **दशाविशेष** इति ।

---

मित्येतादृशयथाश्रुतार्थपरस्य दशाविशेष इत्यादिमूलस्यानुपपत्तिः, अन्यथा साधारण्यादिज्ञानस्य प्रतिबन्धकताया अपि व्यवस्थापयितुमुचितत्वादतस्तादृशमूलमन्यथा व्याख्यातुमवतारणिकामाह स्यादेतदिति । इत्यत्रासाधारणे-एतत्स्थलीयासाधारण्यरूपदोषप्रकारकहेतुविशेष्यकभ्रमविषये सर्व्वसाध्यवद्व्यावृत्तत्वात्मके । अव्याप्तिरिति । तद्विषयकत्वस्य निरुक्तानुमित्यप्रतिबन्धकहेत्वविषयकज्ञानसाधारणतया तादृशप्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः । ननु केवलं सर्व्वसाध्यवद्व्यावृत्तत्वं न दोषः अपि तु साधनवृत्तित्वविशेषितं तादृशविशिष्टविषयकत्वन्तु न प्रतिबन्धकतातिरिक्तवृत्तीत्यत आह-सर्व्वेति । तत्र हेतौ, असत्वात् अवृत्तेः, साध्यवति पक्षे हेतोर्वृत्तेरिति शेषः, तथा च तादृशविशिष्टस्याप्रसिद्ध्या तस्य दोषत्वासम्भवेन प्रसिद्धस्याविशिष्टसाध्यवद्व्यावृत्तत्वस्यैव तत्र दोषताया आवश्यकत्वमिति भावः ।

अद्रव्यद्रव्यत्वादाविति । असमवेतद्रव्यत्वादावित्यर्थः । असमवेतत्वस्य ध्वंससाधारणतया नित्यत्वव्याप्यत्वासम्भवाद्विशेष्यांशनिवेशः । अत्रापि अनन्तरमव्याप्तिरित्यनुषज्यते, तद्विषयकत्वस्य पक्षाविषयकज्ञानसाधारणतया प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः । ननु केवलं नित्यत्वव्याप्याद्रव्यद्रव्यत्वादिकं न तत्र दोषः, अपि तु पक्षनिष्ठतद्वत्तैव तादृशविशिष्टविषयकत्वञ्च प्रतिबन्धकतानतिरिक्तवृत्त्येवेत्यत आह पक्षस्येति । तथाच

---

अनुमितिविरोधित्वमित्यर्थः । एवं च—निर्विवादत्वे चेत्यर्थः । **अन्यथा**-यथाश्रुतवस्तुस्थितिमात्रप्रदर्शनपरत्वे । **भ्रमविषये**—अनित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वमिति भ्रमविषये । **सर्वसाध्यवद्व्यावृत्तत्वात्मके**-अनित्यत्वव्यापकीभूताभावप्रतियोगित्वे । **तद्विषयकत्वस्य**-असाधारण्यविषयकत्वस्य । **हेत्वविषयकेति** । इदमुपलक्षणम् । हेतुमान् पक्ष इति ज्ञानाऽसमानकालीनेत्यपि बोध्यम् ।

दीधितौ **शब्दोऽनित्यः कृतकत्वादित्यस्येति** । इत्यत्रेत्यर्थः । **सत्प्रतिपक्षे**—नित्यत्वव्याप्याऽद्रव्यद्रव्यत्ववान् शब्द इति विरोधिपरामर्शविषये । एतच्चाऽद्रव्यद्रव्यत्वाद विस्यस्य विशेषणम् । अव्याप्तिरित्यनुषज्यते । **अद्रव्यद्रव्यत्वमिति** । न विद्यते द्रव्यं "समवेतत्वसम्बन्धेन यत्र तादृशं यद्द्रव्यत्वं तस्मादित्यर्थः । असमवेतत्वे सति द्रव्यत्वादित्यर्थः । **विशेष्यांशनिवेश इति** । एवं घटादौ व्यभिचारवारणाय विशेषणदलम् ।

हेत्वोः सद्धेत्वोः, असाधारणः पक्षमात्रवृत्तिः, सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा, तयोर्दशाविशेषे हेतौ सर्व्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायां आभासत्वात् अनुमित्यजनकत्वात् तद्बुद्धेः हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति न तु तद्विषयस्य दोषत्वं असत्त्वात् , अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात्, को हि साध्याभाव-तद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः । निर्युक्तिकस्तु प्रवादो न श्रद्धेयः ।

---

पक्षघटितविशिष्टाप्रसिद्ध्या पक्षाघटितस्यैव दोषत्वमावश्यकमिति भावः । तयोः—तादृशस्थलीयदोषत्वेनाभिमतयोरुक्तधर्म्मयोः । शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वादिविशेष्यकनित्यत्वव्यावृत्तत्वादिज्ञानविषयविशिष्टस्य प्रसिद्ध्या तत्राव्याप्तेः शङ्कानास्पदत्वादलक्ष्यत्वाभ्युपगमेन तत्परीहारस्यात्यन्तासम्भवदुक्तिकत्वात् हेतुपदं सद्धेतुपरतया व्याचष्टे हेत्वोरिति । सद्धेत्वोः साध्यवद्व्यावृत्तत्वादिरूपासाधारण्यस्य साध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षितत्वस्य चासम्भवादसाधारणसत्प्रतिपक्षपदे अन्यथा व्याचष्टे असाधारण इति । तथा प्रकृते सत्प्रतिपक्षपदार्थः । सद्धेत्वोर्दुष्टत्वरूपाभासत्वायोगादाभासपदमन्यथा व्याचष्टे आभासत्वादिति ।

तद्बुद्धेरित्यत्र तत्पदस्य हेतुपरत्वं न सम्भवति सत्प्रतिपक्षस्थले प्रतिबन्धकज्ञानस्य हेतुविषयकत्वानियमाद्धेतुविषयकत्वकथनस्याप्रयोजकत्वाद्, बुद्धिपदस्यापि बुद्धिसामान्यपरत्वं न सम्भवति हेत्वादिमात्रविषयकज्ञानस्याप्रतिबन्धकत्वादतस्तत्पदस्य हेतुपक्षोभयपरतया बुद्धिपदस्य साध्यवद्व्यावृत्तत्व—साध्याभावव्याप्यवत्त्वावगाहिबुद्धिपरतया तद्बुद्धिपदं हेतुविषयकसाध्यवद्व्यावृत्तत्व—पक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धिपरतया व्याचष्टे तद्बुद्धेरिति । तयोरलक्ष्यतालाभाय हेत्वोनन्तरं श्रुत एवकारोऽत्र योजनीयः । तदर्थमन्तर्भाव्य व्याचष्टे प्रतिबन्धकत्वं परमायातीति । परं केवलम् । एवकारव्यवच्छेद्यं स्फुटयति न त्विति । तद्विषयस्य तादृशबुद्धिविषयस्य, दोषत्वं दोषलक्षणलक्ष्यत्वम् , असत्त्वात् लक्ष्यताप्रयोजकस्यासत्त्वात्, प्रतिबन्धकीभूतज्ञानप्रमात्वस्यैव तद्विषयलक्ष्यताप्रयोजकत्वादिति भावः । असत्त्वात् विशिष्टस्याप्रसिद्धत्वादिति तु नार्थः, एकदेश एवाव्याप्तेराशङ्किततया विशिष्टाप्रसिद्धेस्तदलक्ष्यतानिर्व्वाहकत्वविरहेणानुपयोगात् , अन्यथा प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वे, बाधभ्रमेण पक्षे साध्याभावभ्रमेण, तस्य तद्विषयसाध्याभावादेः । नन्वेव-

यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकं प्रमाविषयत्वञ्च लक्षणार्थः ।. तच्च द्विविधं विषयरूपं साधारण्यादि, बाधे च प्रमितसाध्याभाववान् पक्षः, तद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात् ।

मुक्तस्थले दशाविशेषे हेतोर्दुष्टताप्रवादो नोपपद्यत इत्यत आह निर्युक्तिकस्त्विति ।

उपदर्शितस्थलेऽपि दशाविशेषे हेतोर्दुष्टत्वमङ्गीकुर्वन्तस्तत्साधारण्याय लक्षणमन्यथा व्याचक्षते ये, तन्मतमुपन्यस्य दूषयति यत्त्विति । "ज्ञानस्येति" षष्ठ्यन्तार्थस्य यत्पदार्थेऽन्वयः, तथा च ज्ञानसम्बन्धित्वविशिष्टं यद्रूपावच्छिन्नं यत्किञ्चित्सम्बन्धेन अनुमितिप्रतिबन्धकतावच्छेदकमित्यर्थः । अत्राप्यवच्छेदकत्वं अनतिरिक्तवृत्तित्वम् , उक्तयुक्तेः । तत्पदमुभयत्र तद्रूपविशिष्टपरम् । लक्षणार्थः—व्युत्क्रमेण लक्षणयोरर्थः । नन्वेतावतैव कथं दर्शितसत्प्रतिपक्षादौ लक्षणसमन्वयः, तत्र प्रतिबन्धकतावच्छेदकीभूतविशिष्टविषयकत्वस्याप्रसिद्धेः, कथं वा व्यभिचारादि-

उक्तस्थले । सद्धेताविति यावत् । दुष्टताप्रवादः—असाधारणसत्प्रतिपक्षितत्वप्रवादः । तथाचाऽसाधारण्यसत्प्रतिपक्षयोर्नित्यदोषत्वमिति भावः ।

उपदर्शितस्थलेऽपि—शब्दोऽनित्यः शब्दत्वादित्यत्र शब्दोऽनित्यः कार्यत्वात् शब्दो नित्यः असमवेतत्वे सति द्रव्यत्वादित्यत्र च । दशाविशेषे—असाधारण्यभ्रमकाले-विरोधिपरामर्शकाले च । षष्ठ्यन्तार्थस्येति । सम्बन्धित्वं षष्ठ्यर्थः । सम्बन्धश्च विषयितादिरूपः । यत्किञ्चित्सम्बन्धेनेति विषयिता-स्वरूपान्यतरसम्बन्धेनेत्यर्थः । व्यभिचारादेः तासम्बन्धेन, सत्प्रतिपक्षादौ स्वरूपसम्बन्धेन विरोधिपरामर्शकालीनत्वस्य प्रतिबन्धकतावच्छेदकत्वं बोध्यम् । उक्तयुक्तेरिति । सद्धेतोरपि दुष्टत्वापत्तेरित्यर्थः । व्युत्क्रमेणेति । तथा च तद्वत्त्वं द्वितीयलक्षणाभिप्रायेण तत्प्रकारकप्रमाविशेष्यत्वं प्रथमलक्षणाभिप्रायेणेत्यर्थः । लक्षणयोः—प्रथमद्वितीयलक्षणयोः(१) । मिश्राणामयमाशयः । मूले अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमितिलक्षणं दुष्टस्यैव नतु दोषस्य, सत्प्रतिपक्षेऽव्याप्तेः, हेत्वाभासा निरूप्यन्ते इत्यनेन दुष्टहेतुनिरूपणस्यैव प्रतिज्ञातत्वेन दोषनिरूपणेऽर्थान्तरापत्तेश्च । एवं च पूर्वोक्तयुक्त्याऽव्याप्तिभिया प्रथमलक्षणे अनुमितिकारणीभूताभावप्रतियोगिनो यथार्थज्ञानमिति षष्ठीतत्पुरुषः । प्रतियोगिपदं प्रतियोगितावच्छेदकपरम् , तथाचाऽनुमितिप्रतिबन्धकतावच्छेदको यो धर्मस्तत्प्रकारकयथार्थज्ञानविशेष्यत्वमर्थः । तथाचाऽनुमितिप्रतिबन्धकतावच्छेदकबाधव्यभिचारप्रकारकयथार्थज्ञानविशेष्यत्वमादाय लक्षणसमन्वय इति । ननु अनुमितिप्रतिबन्धकतावच्छेदकं व्यभिचारादिविषयकत्वमेव, न तु व्यभिचारादिकं प्रतिबन्धकज्ञानाऽवृत्तित्वादित्याशङ्कते

(१) यद्यपि प्रथमं प्रथमलक्षणार्थ एव कर्तुमुचितः, तथापि द्वितीयलक्षणस्याऽभ्यर्हिततया तस्यैव प्रथममभिधानं कृतमिति ध्येयम् ।

अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकं तद्वत्त्वञ्च ज्ञानस्येव तद्विषयस्य हेतोरपीति । तन्न, तद्वत्त्वं हि हेतोर्नाभेदेन, बाधे तदभावात् । अत एव नाश्रय·

---

कमादाय सव्यभिचारादावेव लक्षणगमनं व्यभिचारादिविषयकत्वस्यैव प्रतिबन्धकतावच्छेदकतया व्यभिचारादेस्तथात्वादित्यत आह तच्चेति। तादृशप्रतिबन्धकतावच्छेदकञ्चेत्यर्थः । भ्रमात्मकबाधप्रतिबन्धकतामादायापादितायाः सद्धेतोर्दुष्टताया असम्भवं स्पष्टीकर्त्तुमाह बाधे चेति। बाधज्ञाननिष्ठप्रतिबन्धकतायाश्चेत्यर्थः, अवच्छेदक इति शेषः । पक्षस्य वास्तवं साध्याभाववत्त्वं निविशते न तु वैज्ञानिकमिति सूचयितुं प्रमितेति । तद्विषयस्यावच्छेदकत्वे युक्तिमाह तद्विषयकत्वेनेति । तथाच विषयविषयकत्वस्येव विषयस्यापि विषयितया अवच्छेदकत्वमक्षतमिति भावः। विरोधिसामग्रीकालीनत्वादीति । विरोधिकोऽप्यनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकत्वमित्यभिमानः, तथाच तदादायैव सत्प्रतिपक्षिते असाधारणे च सद्धेतौ दुष्टत्वमिति भावः। ननु ज्ञाननिष्ठं विरोधिसामग्रीकालीनत्वमादाय कथं हेतोर्दुष्टत्वं तस्य ज्ञान एव सत्त्वादित्याशङ्कां परिहरति तद्वत्त्वञ्चेति। तद्विषयस्य हेतोरपीति । तत्कालनिरूपिताधेयतात्मकस्य तत्कालीनत्वस्याधेयभेदेन भेदानभ्युपगमात्, अभ्युपगमे वा आधेयता·सम्बन्धेन तत्कालस्यावच्छेदकतया तमादायैव लक्षणसमन्वयादिति भावः। नाभेदेनेति । विवक्षितुं शक्यमिति शेषः ।

साध्याभाववद्वृत्तित्वादिविशिष्टसाधनरूपदोषस्याभेदसम्बन्धेन हेतौ सत्त्वात्तेन सम्बन्धेन तद्वत्त्वविवक्षायां न व्यभिचारादावप्रसक्तिरतः बाधे तदभावादिति। वह्न्यभाववद्ध्रदादिरूपबाधे धूमादिरूपहेत्वभेदासत्त्वादित्यर्थः। तथाच तत्राव्याप्तिरिति भावः। अतएव—बाधेऽव्याप्तेरेव, नाश्रयतया तद्वत्त्वं विवक्षार्हमिति शेषः। धूमादेर्वह्न्यभाववद्ध्रदाद्यनाश्रयतया एकज्ञानविषय·

---

नन्विति । विषयस्यापीति । दोषस्यापीत्यर्थः । परामर्शादेः—स्वपरामर्शादेः । तस्य—व्यभिचारादिदोषस्य, विरोध्यनुमितिसामग्रीकालीनत्वस्य च । ज्ञाने एव सत्त्वादिति । विषयिता—स्वरूपान्यतरसम्बन्धेनेत्यादिः । न च ज्ञाननिष्ठत्वोपादानं किमर्थमिति वाच्यम् । कामिनीजिज्ञासादिनिष्ठप्रतिबन्धकतावच्छेदककामिनीतज्ज्ञानमादाय सद्धेतावतिव्याप्तेः। दीधितौ ज्ञानस्यैवेति । स्वीयपरामर्शादेरिवेत्यर्थः । हेतोरपि तत्कालीनत्वादिति भावः । ज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकं यत्तद्वत्त्वमित्यर्थः ।

तेन सम्बन्धेन—अभेदसम्बन्धेन । इदमुपलक्षणम्—सत्प्रतिपक्षाऽऽश्रयासिद्ध्यादावव्याप्तिः, विरोध्यनुमितिसामग्रीकालीनत्व–पक्षतावच्छेदकविरहविशिष्टपक्षादिना हेतोरभेदाभावात् । बाधेऽव्याप्तेरेवेति । बाधितेऽव्याप्तेरिति तदर्थः । व्यभिचारिणि तु अव्याप्तिर्नाऽऽशङ्कनीया, साध्याभाववद्वृत्तिहेत्वादेरिव हेतुवृत्तिसाध्याभाववद्वृत्तित्वादेरपि प्रतिबन्धकताव·

तया, वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च, साध्याभाववत्पक्षस्येव साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात्। सत्त्वादिसाध्यके ज्ञाने अतिप्रसङ्गाच्च कथाकथञ्चित् तद्वत्त्वस्य चातिप्रसञ्जकत्वात्, विरोधिसामग्रीसमवहितोऽपि च

---

त्वादिरूपसम्बन्धस्य आधारत्वानिर्वाहकत्वादिति भावः। अव्याप्तिमुक्त्वा अतिव्याप्तिमप्याह वह्निव्यभिचारीति। ननु हेतुनिष्ठसाध्याभाववद्वृत्तित्वादिरूपविषय एव प्रतिबन्धकतावच्छेदको न तु तद्विशिष्टद्रव्यत्वादिः तदाश्रयश्च न धूमादिरित्याशङ्कां निराकरोति साध्याभाववदिति। साध्याभाववद्वृत्तिहेतोर्ज्ञानस्येति तादृशहेतुविषयकज्ञानस्येत्यर्थः। तथा च वह्न्यभाववद्वृत्तिद्रव्यत्वादिकमपि विषयतया अवच्छेदकमिति भावः। ननु धूमादेस्तादृशधर्मवत्त्वेऽपि वह्नौ साध्ये धूमो दुष्ट इत्यादिव्यवहारस्य नापत्तिसम्भवः उक्तयुक्त्या तद्धेतुकानुमितिविरोधिरूपवत्त्वस्यैव तत्र दुष्टताव्यवहारनियामकत्वात्, अन्यथा तदाप्यप्रतीकारादित्यतोऽन्यत्रातिप्रसङ्गमाह साधारण्यादिविषयकत्वस्येति। ज्ञाननिष्ठस्य—ज्ञानवृत्तित्वविशिष्टस्य। सत्तादीति। सत्तावान् ज्ञानादित्यादौ ज्ञानहेतुकसत्ताद्यनुमितिप्रतिबन्धकतावच्छेदकं ज्ञानांशे सत्ताद्यभाववद्वृत्तित्वावगाहित्वमादाय सत्त्वे साध्ये ज्ञानं दुष्टमित्यादिव्यवहारापत्तेरित्यर्थः। येन केनापि सम्बन्धेन तद्वत्त्वं विवक्षणीयमित्यपि दूषयति यथाकथञ्चिदिति। अतिप्रसञ्जकत्वादिति। उक्तधर्ममादाय

---

च्छेदकत्वेन तस्यैवाऽऽश्रयत्वसम्भवात्।

नन्वेवं बाधस्थलेऽपि पक्षवृत्तिसाध्याभावस्यापि प्रतिबन्धकतावच्छेदकत्वेन हेतोस्तदाश्रयत्वाभावादव्याप्तिः। न चायं घटभिन्नो गुणत्वाद् ह्रदो वह्निमान् महानसादित्यादौ बाधविशेषे साध्याभाववत्पक्ष—पक्षवृत्तिसाध्याभावयोरुभयोरेव बाधयोर्हेतावव्रृत्त्याऽव्याप्तिरिति वाच्यम्। तत्र बाधस्य हेतावव्रृत्तित्वेऽपि पक्षवृत्तिहेत्वभावरूपाऽसिद्धिमादाय कुत्रचिच्च हेतुवृत्तिसाध्याभाववद्वृत्तित्वरूपव्यभिचारमादाय लक्षणसमन्वयसम्भवादिति चेन्न।

असङ्कीर्णबाधस्थलेऽव्याप्तेः। एवं धूमत्ववत्पर्वतो वह्निमान् धूमादित्यत्राश्रयासिद्धेऽव्याप्तेश्च। अतिव्याप्तिमप्याहेति। केचित्तु बाधितः आश्रयासिद्ध इत्यादिव्यवहारादेकज्ञानविषयत्वादिसम्बन्धोऽप्याधारतानियामकोऽभ्युपेयोऽन्यथा तदाप्यप्रतीकारादतोऽतिव्याप्तिमाहेति प्राहुः। दीधितौ अतिप्रसङ्गाच्चेति। वह्निमान् द्रव्यत्वादित्यादौ वह्न्यभाववद्वृत्तिद्रव्यत्वादिकमेव व्यभिचारः तदाधारत्वस्य धूमे सत्त्वाद् वह्निमान् धूमादित्यत्र धूमेऽतिप्रसङ्गादित्यर्थः।

यद्यपि मिश्रमते वह्निमान् धूमादित्यादौ धूमादिसद्धेतूनामपि कदाचित्सत्प्रतिपक्षिततया दुष्टत्वेन नातिव्याप्तिसम्भवस्तथापि सत्प्रतिपक्षोत्तीर्णतादशायामतिव्याप्तिर्बोध्या। पराऽज्ञाताऽसत्प्रतिपाक्षिते चाऽतिव्याप्तिर्बोध्या। एवमग्रेऽपि सर्वत्र।

तदाश्रयश्चेति। वन्ह्यभाववद्वृत्तित्वाश्रयश्चेत्यर्थः।

लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमहितो वन्हिरिव दाहस्य।

अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिब- न्धकतावच्छेदकमुक्तं, भवति च प्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादि-

---

सत्त्वादिसाध्यकज्ञाने धूमाद्यंशे यद्वन्ह्यभाववद्वृत्तित्वावगाहित्वम्, एकज्ञानवि- षयत्वादिसम्बन्धेन तद्वत्त्वमादाय वन्ह्यादिसाध्यकधूमादावपि दुष्टत्वव्यव- हारापत्तिरित्यर्थः। सत्प्रतिपक्षस्थले विरोधिसामग्रीसमकालीनत्वेन प्रति- बन्धकतामादाय यल्लक्षणसत्त्वमुपपादितं तद्दूषयति विरोधिसामग्रीति। न स्वसाध्यकानुमितेः प्रतिबन्धक इति। न स्वजन्यानुमितिप्रतिबन्धक इत्यर्थः। कारणत्वप्रतिबन्धकत्वयोरेकत्रानभ्युपगमादिति हृदयम्। विभिन्नरूपेण तदुभयस्यैकत्रोपगमे प्रतिबन्दिसूचनायाह मणीति। न प्रतिबन्धक इत्यनु- षज्यते। तथाच विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादीना- मनुमितिप्रतिबन्धकत्वे मणिसमवहितत्वेन वन्ह्यादीनामपि दाहप्रतिबन्ध- कत्वापत्तिः। मणिसमवहितत्वापेक्षया लाघवेन मणित्वेनैव प्रतिबन्धकता कल्प्यते इति चेत्। तर्हि विरोधिसामग्रीकालीनत्वापेक्षया लाघवात् तादृ- शसामग्रीत्वेन विरोधिपरामर्शत्वेनैव वा प्रतिबन्धकत्वं प्रकृतेऽपि कल्पयितु- मुचितमिति कथं विरोधिसामग्रीकालीनत्वमादाय सङ्गमनीयं तस्य प्रति- बन्धकतातिरिक्तवृत्तित्वादिति भावः।

कार्य्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपं प्रतिबन्धकतावच्छेदकत्वमेवात्र विवक्षितं न तु कारणीभूताभावप्रतियोगितावच्छेदकत्वरूपं, तच्च विरोधि- सामग्रीकालीनत्वेऽप्यक्षतमेवेत्याह अथेत्यादिना। यद्धर्म्मेति। यादृशधर्म्मवि- शिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकोऽनुमित्यनुत्पादस्तादृशरूपपरमे- वेत्यर्थः। निश्चयत्वनिवेशात् बाधादिविषयकसंशय-संस्काराव्यवहितोत्त- रक्षणे कदाचिदनुमित्युत्पादेऽपि न क्षतिः। अत्र—एतल्लक्षणे, प्रतिबन्धक- तावच्छेदकमुक्तं-प्रतिबन्धकतावच्छेदकपदेन विवक्षितम्। भवति चेति। विरोधि-

---

दीधितौ लिङ्गपरामर्शः—स्वीयलिङ्गपरामर्शः। तथा च विरोधिसामग्रीकालीन- स्वीयपरामर्शत्वेनाऽप्रतिबन्धकत्वाद्विरोधिसामग्रीकालीनत्वं न प्रतिबन्धकतावच्छेदकमिति सत्प्रतिपक्षितेऽव्याप्तिरिति भावः।

कार्यानुत्पत्तिव्याप्यतेति। व्याप्यता च स्वाव्यवहितोत्तरत्वसम्बन्धेन। प्रतिबन्ध- कतावच्छेदकत्वमित्यत्रैवकारव्यवच्छेद्यं स्पष्टयति नत्विति। तच्चेति। कार्यानुत्पत्तिव्या- प्यतावच्छेदकत्वरूपं प्रतिबन्धकतावच्छेदकत्वं चेत्यर्थः। अपिना विरोधिसामग्रीत्वस्य समु- च्चयः। तथाच प्रतिबन्धकतावच्छेदकत्वं पारिभाषिकमिति भावः। दीधितौ यद्धर्मविशि- ष्टज्ञाने सतीति। यद्धर्मविशिष्टनिश्चयाव्यवहितोत्तरक्षणे इत्यर्थः। व्यापकत्वप्रदर्शना- याऽवश्यमिति। फलितार्थमाह यादृशधर्मविशिष्टेति। न क्षतिः—नाऽसम्भवः।

विशिष्टपरामर्शे तथा इति चेत्। न वा कालादिसाधारणकारणघटिता सामग्री क्वापि प्रतिबन्धिका विशेषतस्तत्र तत्सत्त्वे कार्य्योत्पादस्य दुर्व्वारत्वात् किन्तु विरोधिपरामर्शस्तथा। यदि च तत्सत्त्वेऽपि तत्साध्ये बाधावतारे नानुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यन्तत्र

---

कोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वकथनं प्रतिबन्धकसमवहितात्यवहितोत्तरक्षणे कार्य्यानुत्पादस्यावश्यकतया विरोधिसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकताया आवश्यकत्वदर्शनाय। तथा—अवश्यमनुमित्यनुत्पादः। विरोधिसामग्र्याः प्रतिबन्धकत्वं यदुक्तं तदेवादौ दूषयति नवेति। नहीत्यर्थः। कालादीति। घटितान्तं हेतुगर्भविशेषणम्, तथा च कारणसमुदायः सामग्री, सा च क्वचिदपि न प्रतिबन्धिका कालादिसाधारणकारणानामपि तदन्तर्निविष्टत्वात् तेषाञ्च प्रतिबन्धकतावच्छेदककोटौ निवेशस्य निष्फलत्वात् प्रतिबध्यकार्य्येऽपि तेषामनुगुणत्वादित्यर्थः।

सत्प्रतिपक्षस्थले विरोधिकोट्यनुमितिसामग्र्यास्तत्कोट्यनुमितिप्रतिबन्धकत्वमत्यन्तासम्भवदुक्तिकमेव तत्र फलानुत्पादेन सामग्र्या एवासत्त्वादित्याह विशेषतस्त्वित्यादिना। अत्र—सत्प्रतिपक्षस्थले, सामग्री न प्रतिबन्धिकेत्यनुषज्यते। कार्योत्पादस्य दुर्व्वारत्वात्—सामग्र्याः कार्य्यनियतत्वादिति भावः। ननु तर्हि तत्र परामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथं नोत्पद्यत इत्यत आह किन्त्विति। विरोधिपरामर्शः—साध्याभावव्याप्यवत्तानिश्चयः, तथा—अनुमितिप्रतिबन्धकः। ननु यत्र वन्ह्यभावव्याप्यवत्तापरामर्शः वह्न्यभावाभाववान् पक्ष इति बाधनिश्चयश्च वर्त्तते तत्र वन्हिव्याप्यवत्ताज्ञानेन वन्ह्यनुमितिर्जन्यत इत्यनुभवसिद्धं, विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वे च तन्नोपपद्यते इत्यत आह यदि चेति। तत्सत्त्वेऽपि—विरोधिपरामर्शसत्त्वेऽपि, तत्साध्ये बाधावतारे—तादृशपरामर्शानुमेयविरोधिकोटेः पक्षेऽभावनिश्चयदशायाम्, नानुमितिप्रतिबन्धः—न प्रकृतसाध्यानुमित्यनुत्पादः। अप्रमाण्यग्रहाभावस्येत्यनन्तरं वैशिष्ट्यमित्यनुषज्यते। तदभावस्य—विरोधिकोटिविरहनिश्चयाभा-

---

उदासीनवारणाय व्यापकत्वप्रवेशः। दीधितौ अनुमितिप्रतिबन्धकपदं च प्रतिबन्धकाधी-
नानुमित्यनुत्पादपरम्।

निरुक्तप्रतिबन्धकतावच्छेदकतायाः—कार्यानुत्पादव्याप्यतावच्छेदकतायाः। विरो-
धिसामग्रीकालीनत्वविशिष्टे परामर्शे सत्यवश्यमनुमितिप्रतिबन्धादिति यावत्। अनुमान-
माह तथाचेति। अनुषज्यते इति। अत्र प्रतिबन्धकस्य परामर्शस्य सत्वेन सा-
मग्र्या एवाऽभावादिति भावः। सामग्रीसत्वे प्रतिकूलतर्कमाह दीधितौ तत्सत्त्वे इति।
कार्योत्पादस्य—विरोध्यनुमित्युत्पादस्येत्यर्थः। विरोधिकोटेः—साध्याभावस्य।

निवेश्यताम्, यथा च भ्रम-प्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधादिग्रहेपीत्यतिप्रसङ्गः। न चातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि ।

---

यस्य, तत्र—विरोधिपरामर्शप्रतिबन्धकतावच्छेदकगर्भे । निवेश्यतामिति । अत्र विपरीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटिविरहनिश्चयसत्त्वे तत्परामर्शे भ्रमत्वग्रहानन्तरमेवानुमितिर्न त्वन्यथेति भ्रमत्वग्रहाभाववैशिष्ट्यनिवेशेनैवोपपत्तौ तादृशबाधग्रहाभाववैशिष्ट्यनिवेशो व्यर्थ इत्यनिर्भरसूचनाय यदि चेत्युक्तम्। अप्रामाण्यग्रहाभाववैशिष्ट्यस्य दृष्टान्तविधया प्रतिबन्धकतावच्छेदकत्वञ्च दर्शितम्।

नन्वस्तु विरोधिपरामर्शमात्रं प्रतिबन्धकं तथापि तद्घटितविरोधिसामग्रीकालीनज्ञानस्य फलानुत्पादनियतत्वात्तादृशसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकत्वं दुरपह्नवमेव, एवं विरोधितथाविधपरामर्शकालीनत्वमादायापि दशाविशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुपपद्यत एवेत्यतो विरोधिपरामर्शकालीनत्वसमशीलबाधादिभ्रमकालीनत्वमादाय सद्धेतावतिव्याप्तिमाह यथा चेति। तथाविधेति। विरोधिभ्रमसाधारणेत्यर्थः। अपीत्यनन्तरं नानुमितिरित्यनुषज्यते, तथाच तादृशबाधादिकालीनत्वमपि निरुक्तप्रतिबन्धकतावच्छेदकत्ववद्भवत्येवेत्यतोऽतिप्रसङ्ग इति बाधादेरनित्यदोषतायाः केनाप्यनुपगमेन इष्टापत्त्यनवकाशादिति भावः। विरोधिपरामर्शकालीनत्वमादाय सर्वत्र सत्प्रतिपक्षिते दुष्टत्वं नोपपादयितुं शक्यत इत्याह न चेति। नहीत्यर्थः। अतीतादाविति। तथाचातीं-

---

निवेश्यतामितीति। अगृहीताऽप्रामाण्यकबाधनिश्चयाभावविशिष्टविरोधिपरामर्शत्वेन प्रतिबन्धकत्वमुच्यतामित्यर्थः। तथाच सत्प्रतिपक्षस्थले विरोध्यनुमितिसामग्रीकालीनत्वस्यैवाऽभावेन कथं तदादाय लक्षणसङ्गतिरिति भावः।

तद्घटितेति। विरोधिपरामर्शघटितेत्यर्थः। विरोधिसामग्रीकालीनज्ञानस्य—प्रकृतपरामर्शस्य, निरुक्तप्रतिबन्धकतावच्छेदकत्वं—कार्यानुत्पादव्याप्यतावच्छेदकत्वम्। दुरपन्हवमेवेति। आवश्यकमेवेति यावत्। तथाच मास्तु विरोध्यनुमितिसामग्रीकालीनत्वं प्रतिबन्धकतावच्छेदकं, तथापि अगृहीताऽप्रामाण्यकबाधनिश्चयाभावविशिष्टविरोधिपरामर्शकालीनत्वमादायैव लक्षणं सङ्गमनीयं तस्यापि यथोक्तप्रतिबन्धकतावच्छेदकत्वादिति भावः। तदेवाह—एवमिति। बाधादीत्यादिना व्यभिचारादिपरिग्रहः। तथाच बाधव्यभिचारादिभ्रमकालीनत्वविशिष्टे हेत्वादिज्ञानेऽप्यवश्यमनुमितिप्रतिबन्ध इति तत्कालीनत्वस्यापि यथोक्तप्रतिबन्धकतावच्छेदकत्वात्तमादाय सद्धेतावप्यतिव्याप्तिरिति भावः।

इदमुपलक्षणम्। विरोधिपरामर्शसत्वे स्वीयपरामर्शाभावदशायामपि तत्कालीनत्वमादाय हेत्वाभासतापत्तिरित्यपि द्रष्टव्यम्।

शक्यते इति। विरोधिपरामर्शान्यभ्रमकालीनान्यत्वं प्रतिबन्धकतावच्छेदके विशिष्य

यदपि यद्विषयकत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्वमेव वाच्यं, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा, तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयकत्वादिति । तदपि तुच्छम् , साध्याभावत्पक्षविषयकत्वेन साध्याभाववत्पक्षज्ञानप्रमात्वविषयकत्वेन वा ज्ञानस्य

---

तादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मतसिद्धं सत्प्रतिपक्षितत्वं नोपपद्यत इति भावः ।

सत्प्रतिपक्षिते सद्धेतौ विरोधिव्याप्यवत्पक्षस्याप्रसिद्धावपि प्रतिबन्धकीभूतभ्रमविषयप्रसिद्धविरोधिव्याप्त्यादिरेव दोष इति मतं दूषयति यदपीति । यद्विषयकत्वेनेति तृतीयार्थः स्वरूपसम्बन्धरूपावच्छेदकत्वं न त्वनतिरिक्तवृत्तित्वं, तथासति विरोधिव्याप्त्यादेर्दोषत्वानुपपत्तेः । प्रतिबन्धकतायां ज्ञाननिष्ठत्वविशेषणं कामिनीजिज्ञासादिनिष्ठप्रतिबन्धकतावच्छेदकधर्मेऽतिप्रसङ्गवारणाय । ननु विरोधिकोटिव्याप्यत्वस्य पर्व्वतो वह्निमान् धूमात् पर्व्वतो न वह्निमान् जलत्वादित्यादौ, प्रतिबन्धकीभूतज्ञानविषयसमवायादिसम्बन्धावच्छिन्नपक्षधर्म्मतायाश्च प्रकृते हेतावभावात् कथं तस्य दुष्टत्वमत आह तद्वत्त्वमपीति । विरोधिव्याप्त्यादिमत्त्वमपीत्यर्थः । तज्ज्ञानरूपेति । स्वविषयकज्ञानविषयतात्मकेत्यर्थः । सम्बन्धविशेषस्याविवक्षितत्वादिति भावः ।

तादृशसम्बन्धवत्तां प्रकृतहेतावुपपादयति तस्येति । विरोधिव्याप्त्यादिज्ञानस्येत्यर्थः । समूहालम्बनरूपतयेति । न चैवं क्रमिकपरामर्शद्वयस्थले सत्प्रतिपक्षतानुपपत्तिरिति वाच्यम् । तत्रापि तादृशव्याप्त्यादिप्रकृतहेतुविषयकपरमेश्वरज्ञानादिकमादाय तद्वत्तोपपत्तेः । साध्याभाववत्पक्षविषयकत्वेन—साध्याभावप्रकारकपक्षावगाहित्वेन । साध्याभावत्पक्षज्ञानेति । साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वाविषयकत्वेनेत्यर्थः । मतभेदेन विकल्पः, तस्य-तादृशज्ञानस्य, साध्यवत्यपि पक्षे—पक्षे साध्यवत्यपि सति पक्षस्य साध्यवत्त्वे सत्यपीति यावत्, पर्व्वतो वह्निमान् धूमादित्यादौ भ्रमात्मकबाधादिज्ञाननिष्ठप्रतिबन्धकतावच्छेदकविषयितानिरूपकवन्ह्यभावादेः स्वविषयकज्ञानविषयत्वादिसम्बन्धेन वैशिष्ट्यस्य हेतौ सत्त्वादिति भावः । इदमुपलक्षणम्—वह्निमान् धूमादित्यादौ विरोधिपरामर्शशून्यकालेऽपि

---

पूर्वोक्तदोषवारणाद्दोषान्तरमाह नचेत्यस्मद्गुरुचरणाः । अतीतादाविति । आदिनाऽनागतपरिग्रहः । नोपपद्यते इति । तथाचाऽतीताऽनागतसत्प्रतिक्षितलिङ्गेऽव्याप्तिरिति भावः । विरोधिव्याप्त्यादीत्यादिना पक्षधर्मतापरिग्रहः । तथा विषयतया प्रतिबन्धकतावच्छेदक इत्यर्थः । विरोधिकोटिव्याप्यत्वस्य—साध्याभावव्याप्तेः । अस्य च प्रकृते हेतावभावादित्यनेनाऽन्वयः ।

प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः । विशिष्टविषयत्वेन प्रतिबन्धकत्वं विशिष्टञ्च तत्राप्रसिद्धमिति चेत्, तत्किं सर्व्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान्पक्षः प्रसिद्धः । यथाकथञ्चित्सम्बन्धेन तद्धत्त्वञ्चातिप्रसक्तं, धूमादेरपि ज्ञानरूपेण तदाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिम-

---

तद्विषयाविरोधिव्याप्त्यादिकमादायापि हेतोर्दुष्टत्वप्रसङ्गो बोध्यः, तत्रापि पक्षांशे तद्विशिष्टविशेषणकसमूहालम्बनज्ञानसम्बन्धेन हेतौ तद्वैशिष्ट्यसम्भवात् ।

अनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विवक्षणीयमित्यभिप्रायेण बाधभ्रमप्रतिबन्धकतामादायातिप्रसङ्गस्य उद्धारमाशङ्कते विशिष्टेति । साध्याभावविशिष्टपक्षविषयकत्वमेव प्रतिबन्धकतानतिरिक्तवृत्ति न तु साध्याभावादिमात्रविषयकत्वमित्यर्थः । विशिष्टञ्च—साध्याभावविशिष्टपक्षश्च, तत्र—बाधभ्रमस्थले, सत्प्रतिपक्षस्थले सर्व्वत्र तादृशविशिष्टं प्रसिद्धमित्यभिमानः । भ्रमं निराकरोति तत्किमिति । पक्षावृत्तिसाध्यकसत्प्रतिपक्षे साध्याभावव्याप्यविशिष्टपक्षस्य प्रसिद्धत्वात् सर्व्वत्रेति । सत्प्रतिपक्षे—सत्प्रतिपक्षतया भवन्मतसिद्धे इत्यर्थः । प्रसिद्ध इति । तथाचानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं विवक्षितुमशक्यमिति दर्शितातिव्याप्तिर्दुर्व्वारैवेति भावः । तद्धत्त्वघटकसम्बन्धं वितर्क्यापि दूषयति यथाकथञ्चिदिति । अतिप्रसक्तं—सद्धेतुसाधारणं, तथाच पर्वतादौ वह्न्यादिमत्त्वे साध्ये धूमादौ दुष्टताव्यवहारापत्तिरिति भावः । तादृशसम्बन्धस्य धूमादिरूपसद्धेतुसाधारणत्वं स्फुटयति धूमादेरिति । ज्ञानरूपेण—स्वविषयकज्ञानविषयत्वेन तदाश्रयत्वादिना, आदिना एककालीनत्वादिपरिग्रहः, व्यभिचारादिमत्त्वात्—वह्न्यभाववद्वृत्तित्वसत्त्वात् ।

---

इत्यभिप्रायेणेति । यादृशविशिष्टनिरूपितविषयित्वं प्रतिबन्धकताऽनतिरिक्तवृत्ति तद्धत्त्वमर्थः, तादृशं च साध्याभाववत्पक्षविषयित्वमेव, न तु वह्न्यभावादिविषयित्वं, वह्न्यभाव इत्याद्यधिकरणाऽमिश्रिताऽप्रतिबन्धकीभूतज्ञानेऽपि तत्सत्त्वात्, पर्वतो वह्निमान् धूमादित्यादौ च साध्याभावविशिष्टपक्षोऽप्रसिद्ध इति नातिव्याप्तिरित्यभिप्रायेणेत्यर्थः । पक्षावृत्तिसाध्यकेति । ह्रदो वह्निमान्धूमादित्यादिस्थलीयेत्यर्थः । अशक्यमिति । तथाच साध्याभावव्याप्यादिविषयकत्वं न प्रतिबन्धकताऽनतिरिक्तवृत्ति, साध्याभावव्याप्यविशिष्टपक्षश्चाऽप्रसिद्ध इति दशाविशेषे सत्प्रतिपक्षितसद्धेतौ अव्याप्तिरिति भावः । उक्ताऽव्याप्तिवारणाय स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे त्वाह—दर्शितेति । बाधभ्रममादायाऽतिप्रसङ्गमुक्त्वा व्यभिचारादिभ्रमदशायामतिप्रसङ्गमाह—व्यभिचारादिमत्त्वादिति । अनतिरिक्तवृत्तित्वपक्षे तु नायं दोषः सम्भवति वह्न्यभाववद्वृत्तित्वादेरतथात्वादिति ध्येयम् ।

स्वात्। यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वञ्च न सर्व्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन।

---

ननु यादृशसम्बन्धावच्छिन्नयत्प्रकारतानिरूपितधर्म्मिविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वमेव दुष्टत्वमिति वाच्यम्। एवञ्च स्वरूपसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वादिप्रकारतानिरूपितहेतुविशेष्यताशालित्वेनैव व्यभिचारादिज्ञानस्य प्रतिबन्धकतया तेन सम्बन्धेन तद्वत्त्वस्य च प्रकृतहेतावभावात् नातिव्याप्तिरित्याशङ्कां निराकुरुते यादृशेति। सर्वत्र सत्प्रतिपक्षित इति। ह्रदो वह्निमान् धूमादित्यादिस्थले धूमादिरूपहेतौ व्याप्यताघटकसमवायादिसम्बन्धेन वन्ह्यभावव्याप्यधूमत्वादिमत्तायाः सत्त्वात् सर्वत्रेत्युक्तम्। क्वचित् सद्धेताविति। सद्धेतुतादशायां क्वचिदित्यर्थः। पर्वतो वह्निमान् धूमादित्यादौ विरोधिपरामर्शासमवधानदशायामपि प्रतिबन्धकतावच्छेदकप्रकारताश्रयवन्ह्यभाव—तद्व्याप्यादेः तादृशप्रकारतावच्छेदकस्वरूपादिसम्बन्धेन धूमादिवृत्तित्वादिति भावः।

यत्तु—ज्ञानसम्बन्धेन तद्वत्त्वमेव दुष्टत्वं, ज्ञानञ्च विशिष्टव्यवहाराद्यनुरोधात् कदाचिदेव क्वचिदेव कस्यचित् सम्बन्धः, एवञ्च विरोधिव्याप्त्यादेर्ज्ञानं विरोधिपरामर्शदशायामेव प्रकृतहेतौ तत्सम्बन्धः, तदैव तत्र दुष्टताव्यवहारात्, साध्याभावादेर्ज्ञानन्तु तत्र न कदाचिदपि तथा परमेश्वरादिसाधारणं साध्याभावविशिष्टपक्षादेर्ज्ञानन्तु तत्र सर्वदैव—इति। तत्तु हास्यास्पदमेव, सकलाभियुक्तपुरुषसाधारणस्य नियतव्यवहारस्यासिद्धत्वात् वासनाविशेषवतां तादृशव्यवहारस्य विपरीतस्यापि सम्भवात् ज्ञानस्य नियतसम्बन्धत्वासाधकत्वादिति।

---

तेन सम्बन्धेन—स्वरूपसम्बन्धेन। प्रकृतहेतौ—धूमे। क्वचित्सद्धेताविति। पर्वतो द्रव्यं धूमादित्यादौ द्रव्यत्वाभावस्य हेत्ववृत्तित्वात्क्वचिदित्युक्तम्। तद्व्याप्यादेरिति। धूमनिष्ठतद्व्याप्तिकत्वादेरित्यर्थः। अत्र मिश्रानुयायिनः। यद्विषयकत्वेन ज्ञानस्याऽनुमितिविरोधित्वं ज्ञानसम्बन्धेन तद्वत्त्वमेव विवक्षणीयम्। सत्प्रतिपक्षिते च विरोधिव्याप्त्यादेर्ज्ञानरूपसम्बन्धमादायैव लक्षणसङ्गतिः। न चैवं धूमादेरपि वन्ह्यभाववद्वृत्तिर्धूम इति भ्रमात्मकज्ञानरूपसम्बन्धेन वन्ह्यभाववद्वृत्तित्वाश्रयद्रव्यत्वादिना वा सम्बन्धेन वन्ह्यभाववद्वृत्तित्ववत्त्वादतिव्याप्तिरिति वाच्यम्। ज्ञानादेस्तादृशपरम्परायाश्च वन्ह्यभाववद्वृत्तित्वसम्बन्धत्वे मानाभावात्, तेन सम्बन्धेन तद्वत्ताप्रतीतिर्व्यवहारस्य चाऽभावात्। नचैवं सत्प्रतिपक्षस्थलेऽपि ज्ञानादेः सम्बन्धत्वे मानाभावः, अयं सत्प्रतिपक्षित इति व्यवहारस्यैव मानत्वादित्याहुः। तन्मतमुपन्यस्यति यत्त्विति। तथा—सम्बन्धः। तत्र—बाधभ्रमस्थले—सद्धेतौ। अतो जीवज्ञानमेवोपादेयमिति भावः।

यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वं तथापि ज्ञायमानस्याऽऽभासस्याऽत्र लक्षणम् ।

---

यद्यपीति । स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् । नचैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात् , तत्रानुकूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्ति-

---

यद्विषयकत्वेनेति यथाश्रुतकल्पे कामिनीजिज्ञासादिविषये अतिव्याप्तिरित्यसाधारणप्रतिबन्धकताघटितमेव लक्षणं करणीयं तत्राशङ्कते यद्यपीति । समाधानमपि ज्ञायमानं सदित्यादितृतीयलक्षणाभिप्रायेण "तथापी"त्यादिनेति बोध्यम् । बाध-सत्प्रतिपक्षज्ञानयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वमभिप्राय बाध—सत्प्रतिपक्षयोरनुमितिमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयाभावप्रतियोगिज्ञानाविषयत्वस्वरूपं लिङ्गासाधारणदोषत्वं न सम्भवतीत्याक्षिप्तं मणिकृता, तादृशप्रतिबन्धकतायाश्च युक्तिर्नोक्तेति न्यूनतापरीहाराय तत्र युक्तिमाह स्थाणुत्वाभावस्येति । स्थाणुत्वप्रत्यक्षशाब्दयोरिति । समानधर्मितावच्छेदककस्य-स्थाणुत्वप्रकारकस्य, लौकिकसन्निकर्षाद्यजन्यप्रत्यक्षस्य-शाब्दस्य चेत्यर्थः । एवंशाब्दबुद्धौ बाध-तदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे । नरशिरःकपालमिति । नरशिरःकपालस्य शुचित्वानुमापकेन तत्तद्धर्मिकप्राण्यङ्गत्वपरामर्शेन स्वतः फलद्वारा चागमजन्याशौचबोधविरोधः स्यादित्यर्थः । स चानुभवविरुद्धः, तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः ।

समाधत्ते तत्रेति । तादृशाशौचज्ञानप्राक्काल इत्यर्थः । अनुकूलतर्काभावेन व्याप्तिनिश्चयस्य बलवत्तरागमविरोधेनानुमितेरनुत्पत्तेरिति योजना। एवञ्च वास्तवव्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव न विरोधि, अपि

---

असाधारणप्रतिबन्धकताघटितमेवेति । अनुमितिमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयीभूताऽभावप्रतियोगिज्ञानाविषयत्वरूपमिति यावत् । शुचित्वानुमापकेनेति । शुचित्वं च कर्मानधिकारप्रयोजकस्पर्शाभाववत्त्वम् , तदभावोऽशुचित्वम् । आगमजन्येति । आगमश्च—

मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम् ।

नारं स्पृष्ट्वा तु सस्नेहं सचैलो जलमाविशेदिति ।

स्वतः फलद्वारा—शाब्दबाधकरूपाऽनुमितिद्वारा ।

बलवत्तरेति । उपजीव्यजातीयत्वेन वेदस्य बलवत्त्वं बोध्यम् । भवति चाऽनुमाने

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्न-ज्ञानेऽप्रामाण्यं ज्ञाप्यते अनुमितौ तूत्पत्तिरेव प्रतिबध्यते ।

---

निश्चयस्यानुमितेश्चानुत्पत्तेरिति भावः । यद्वेत्याद्यभ्युच्चयमात्रं प्रत्यक्षं प्रत्या-

---

तु व्याप्यत्वरूपेण, अत्र च प्राण्यङ्गत्वस्य ज्ञानेऽपि व्याप्तिग्राहकतर्कविर-हेण व्यभिचारशङ्कया शौचव्याप्यत्वेन तज्ज्ञानं न सम्भवति कारणा-न्तरविरहेण यत्र व्यभिचारशङ्काविरहस्तत्र कथञ्चिद्व्याप्तिग्रहेऽपि गृहीत-प्रामाण्यकागमतात्पर्यविषयविपरीतविषयकत्वेन तत्राप्रामाण्यं गृह्यते, तथाच तादृशप्रामाण्यङ्गत्वज्ञानं न शौचानुमितिजनने शाब्दाशौचज्ञानप्र-तिबन्धे वा प्रभवतीति समुदितार्थः । आगमे प्रामाण्यग्रहश्च शिष्टपरिग्र-हादिनैव भवति यावच्च तादृशपरामर्शो नाप्रामाण्यं गृह्यते तावन्न भव-त्येवागमप्रवृत्तिरिति भावः ।

यद्वेत्यादिग्रन्थेन बाधादिज्ञानस्यानुमित्यतिरिक्तज्ञानाप्रतिबन्धकत्वं व्य-वस्थाप्य बाधादेर्लिङ्गासाधारणदोषत्वमेवोपपादितं, तन्न सङ्गच्छते बाधि-तार्थस्य शाब्दबोधाभ्युपगमेऽनुमितेरप्यनपराधात्तत्राप्रामाण्यग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधितोपपत्तेरित्यत्र कल्पे ग्रन्थकृतोऽनिर्भर-माह यद्वेत्यादीति । नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिक-सन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रति-बन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वाव-च्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्रूपवस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे लक्ष्यतो-पपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति । समानेन्द्रियजन्यबाध-निश्चयसत्त्वे लौकिकप्रत्यक्षस्याप्यनुत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणम् । शाब्दं प्रतीति । तथाच तावतैव लिङ्गासाधारणदोषत्वव्याघात इति भावः ।

---

दृष्टान्तीभूतशङ्खस्य शुचिताबोधकवेद उपजीव्यः, तज्जातीयोऽशुचिताबोधकवेद इति ध्येयम् । व्याप्तिनिश्चयाभावेन तदभावव्याप्यवत्ताज्ञानाभावो दर्शितः । अनुमित्यनुत्पत्त्या तदभावज्ञानस्याभावो दर्शितः । यदि चोत्पद्यते तदापि वेदविरोधेनाऽप्रामाण्यनिश्चयान्न प्रति-बन्धकत्वम्, अप्रामाण्यनिश्चयाभावदशायां च प्रतिबन्धकत्वमिष्टमेवेति हृदयम् ।

यद्वेत्यादिग्रन्थेनेति । मूले इत्यादिः । तत्रापि—अनुमितावपि । बाधनिश्चयद-शायां यथा बाधितार्थविषयकशाब्दबोधो भवति, तथा बाधितार्थविषयिण्यनुमितिरपि भवि-ष्यत्येवेत्यतोऽनुमितौ तूत्पत्तिरेव प्रतिबध्यते इति मूलमसङ्गतमिति भावः । दीधितौ अभ्यु-च्चयमात्रं—कथनमात्रं, मात्रपदेन युक्तिव्यवच्छेदः । प्रत्यक्षं प्रतीति । लौकिकप्रत्यक्षं प्रतीत्यर्थः । अलौकिकप्रत्यक्षं लौकिकसंशयं च प्रत्यानुमानिकबाधादिज्ञानस्यापि प्रतिबन्धक-त्वादयथाश्रुतासङ्गतेः । तावतैवेति । शाब्दं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वादेवेत्यर्थः ।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे हेत्वाभास-सामान्यनिरुक्तिः समाप्ता ।

---

नुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् । योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय-श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिः समाप्ता ।

---

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति । अन्यथासिद्धत्वादिति । बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दबोधानुत्पादनिर्वाहादिति भावः । तदभावः—बाधादिनिश्चयाभावः, तत्र—शाब्दबुद्धौ । यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वं तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणसम्भवात्तत्रैव तन्निराकरोति । एवमपीति । उपनीतभानविशेषं दोषविशेषाजन्योपनीतभानविशेषं, तत्त्वेन—बाधनिश्चयाद्यभावत्वेन । दुर्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्व्वानुभवसिद्धत्वादिति भावः ।

इति महामहोपाध्याय-श्रीगदाधरभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिविवृतिः समाप्ता ॥

तत्रापीति । शाब्देऽपीत्यर्थः । तदप्रतिबन्धकत्वं—बाधनिश्चयस्याऽप्रतिबन्धकत्वम् । योग्येति । प्रत्यक्षात्मकेत्यर्थः । तदभावस्य—बाधनिश्चयाभावस्य । यद्यपि उपनीतभानादिकं प्रति बाधनिश्चयाभावत्वादिना न हेतुत्वं, अपि तु इच्छाविशेषविरहविशिष्टतदभावत्वादिनैव बाधनिश्चयसत्त्वेऽप्याहार्योपनीतभानोदयात्, तथापि स्मृत्युपमितौ प्रति बाधनिश्चयाभावत्वादिनैव हेतुतयाऽसाधारण्यविरहादिति भावः ।

इति महामहोपाध्याय याज्ञिकमूर्द्धन्य पं० श्रीप्रभुदत्तशास्त्रिसुत न्यायाचार्य पं० श्रीशिवदत्तमिश्रविरचिता गङ्गाव्याख्या समाप्ता ।

शुभं भूयात् ।

॥ श्रीः ॥

# अवशिष्ट भागः ।

ननु यद्रूपावच्छिन्नविषयितात्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वस्य यद्विषयकनिश्चयविशेषणत्वेनैवोपपत्तौ विशिष्टद्वयाघटितत्वस्वविशिष्टान्तराघटितत्वनिवेशो व्यर्थः । तथाहि वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदविषयितायाः तादृशप्रतिबन्धकतावच्छेदकवन्ह्यभाववज्जलवत्कालीनजलवद्ह्रदविषयित्वाव्यापकत्वेन मेयत्वविशिष्टव्यभिचारविषयितायाश्च तादृशप्रतिबन्धकतावच्छेदकशुद्धव्यभिचारविषयित्वाव्यापकत्वेन च तत्रातिप्रसङ्गविरहादिति । नचैवं सत्यसम्भवः, प्रकृतानुमितिप्रतिबन्धकतावच्छेदकस्वरूपासिद्ध्यादिविषयित्वाव्यापकत्वस्य बाधादिविषयितायां सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना या प्रकृतानुमितिप्रतिबन्धकता तदवच्छेदकविषयित्वाव्यापकेति रीत्या निवेशेन तद्वारणात् स्वरूपासिद्धिप्रतिबन्धकताया बाधविषयित्वानवच्छिन्नत्वात् । नचैवमपि ह्रदो वन्हिमान् धूमादित्यत्र अभाववान् वन्ह्यभाववान् अभाववांश्च ह्रद इति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अपि अभाववद्ध्रदत्वावच्छिन्नविषयितात्वेन वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नतया तदवच्छेदकशुद्धाभाववद्ध्रदत्वावच्छिन्नविषयितायां सत्त्वादव्याप्तिरिति वाच्यम् । स्वावच्छिन्नविषयिताव्यापकत्वस्य प्रतिबन्धकतायां स्वावच्छिन्नविषयकत्वावच्छिन्नत्वपदेन विवक्षणात् ।

अथ धूमव्यभिचारिवन्हिमान् धूमवान् वन्हेरित्यादिव्यभिचारघटितबाधेऽव्याप्तिः बाधविषयिताव्यापकव्यभिचारप्रतिबन्धकतावच्छेदकविषयिताव्यापकत्वस्य बाधविषयितायां सत्त्वात्, स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयित्वाव्यापकत्वनिवेशे च बाधविशिष्टव्यभिचारेऽतिव्याप्तिः । व्यभिचारविशिष्टबाधविषयितायाश्च तादृशप्रतिबन्धकतासामान्यावच्छेदकत्वेपि ह्रदे वह्न्यभावः वह्न्यभाववान् ह्रद इति ज्ञानयोरेकरूपेणाप्रतिबन्धकतामते ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयतायास्तादृशतया वह्न्यभाववद्ध्रदादावव्याप्तिवारणाय स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयित्वे स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वनिवेशस्यावश्यकतया व्यभिचारविशिष्टबाधविषयितायाः घटुमशक्यत्वात् । न च तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयित्वाप्रसिद्ध्यैव नातिव्याप्तिः, बाधविशिष्टव्यभिचारविषयिताया बाधप्रतिबन्धकतायां स्वरूपसम्बन्धरूपावच्छेदकत्वविरहादिति वाच्यम् । धूमव्यभिचारिवन्हिमान् धूमवान् वन्हेरित्यत्र तादृशविषयित्वाप्रसिद्ध्याऽव्याप्तिवारणाय प्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशस्यानावश्यकत्वात् इति चेन्न ।

यद्रूपावच्छिन्नविषयितात्वं स्वावच्छिन्नविषयिकत्वानवच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति रीत्या निवेशे बाधप्रतिबन्धकतामादाय व्यभिचारघटितबाधे लक्षणसमन्वयात् । बाधविशिष्टव्यभिचारे तु न काश्चिदपि प्रतिबन्धकतामादाय लक्षणगमनसम्भवः ।

न च यत्किञ्चित्त्वनिवेशादननुगम इति वाच्यम् । प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपवत्त्वं हेत्वाभासत्वम् । वृत्तित्वं च स्वावच्छिन्नविषयिकत्वावच्छिन्नत्व स्वावच्छिन्नविषयिकत्वनिष्ठावच्छेदकतानिरूपिता सती प्रतिबन्धकतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपिता या निश्चयनिष्ठावच्छेदकता तन्निरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठप्रतियोगिताकाभाववत्त्वोभयसम्बन्धेन । तादृशाभाववत्त्वं च स्वरूप–स्वीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकविषयित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकोभयावृत्तिधर्मावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेनेति ।

न च तादृशप्रतिबन्धकतावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यज्ञानीयत्वनिवेश आवश्यकः । अन्यथा ह्रदे वन्ह्यभावः वन्ह्यभाववान् ह्रद इतिज्ञानयोरेकरूपेण प्रतिबन्धकत्वे ह्रदवृत्तिवन्ह्यभावत्वावच्छिन्नविषयित्वमादायाऽव्याप्त्यापत्तेः । एवं च जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ह्रदेऽपि–नाव्याप्तिः, कालीनत्वघटितविशिष्टविषयिताया उक्तरीत्या धर्तुमशक्यत्वात् । एवञ्च सति वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदेतिव्याप्तिर्दुर्वारा, कालीनत्वघटितविशिष्टविषयितायाः स्वावच्छिन्नविषयत्वाव्यापकविषयिताशून्यज्ञानीयत्वाभावादिति वाच्यम् । तद्वारणाय विशिष्टद्वयाघटितत्वनिवेशस्यावश्यकत्वेऽपि विशिष्टान्तराघटितत्वानिवेशेन लाघवात् । नचैवमपि यत्किञ्चित्प्रतिबन्धकतावच्छेदकत्वमित्यत्रावच्छेदकत्वमनतिरिक्तवृत्तित्वमेव वाच्यम् । अन्यथोक्तसत्प्रतिपक्षेऽव्याप्तेः । शुद्धजलवान् ह्रद इतिज्ञानीयविषयिताया अपि प्रतिबन्धकतावच्छेदकतया तदव्यापकत्वस्य सत्प्रतिपक्षविषयित्वे सत्त्वात् । एवं च स्वावच्छिन्नविषयत्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताव्यापिका स्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकता तद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वं स्वावच्छिन्नविषयकनिश्चये इति फलितम् । तथाच ह्रदो वह्निमान् धूमादित्यत्र जातिमद्वह्न्यभावद्ध्रदेऽतिव्याप्तिः । जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यं यज्जातित्वेन ह्रदत्वावगाहि जातिमान् वह्न्यभाववानिति ज्ञानं तदीयवह्न्यभाववद्ध्रदविषयिताव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकत्वेऽसत्त्वात् यद्रूपपदेन वह्न्यभाववद्ध्रदत्वस्योपादानासम्भवादिति वाच्यम् । स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यनिश्चये यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वमपि निवेश्यम् । एवं च स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यं यद् ज्ञानं तदीययद्रूपावच्छिन्नविषयिताव्यापकस्वावच्छिन्नविषयिकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकता तद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्य स्वावच्छिन्नविषयकनिश्चये निवेशेन दोषाभावात् । नचैवमपि ह्रदो वह्निमान् धूमादित्यत्र जलव्यापकवह्न्य-

भावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, स्वावच्छिन्नविषयकत्वावच्छिन्नज्ञान-वैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतं यज्जलव्यापकवह्न्यभावाधिकरणनिरूपितवद्‌जलवद्ध्रदत्वावच्छिन्नविषयित्वं तदव्यापकत्वस्य सत्प्रतिपक्षविषयितायां सत्वादिति वाच्यम्। विशिष्टान्तराघटितत्वनिवेशेऽपि उक्तरीत्या सत्प्रतिपक्षेऽव्याप्तिवारणाय भवन्मते विशिष्टान्तरताव-च्छेदकरूपे विशिष्टद्वयघटितत्वनिवेशस्यावश्यकतया मन्मतेऽपि स्वावच्छिन्नविषयकत्वावच्छि-न्नयत्किंचित्प्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयत्वमित्यत्र यद्रूपे विशिष्टद्वयाघटितत्व-निवेशेनैव तद्दोषवारणात्। नचैवं सति मेयत्वविशिष्टसत्प्रतिपक्षे मेयत्वविशिष्टजलव्यापकव-ह्न्यभावाधिकरणनिरूपितवज्जलवद्ध्रदे चातिव्याप्तिरिति वाच्यम्। तस्याः स्वतंत्रविशिष्ट-द्वयाघटितत्वेनैव वारणात्। नचैवमुक्तसत्प्रतिपक्षेऽव्याप्तिः तस्य विशिष्टद्वयघटितत्वादिति वाच्यम्। विशिष्टद्वयविषयतायां इतरविषयत्वानिरूपितनिरूप्यनिरूपकभावापन्नसत्प्रतिपक्षविष-यित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य निवेशेनैव सकलदोषवारणसंभ-वात्। एवमुक्तविशिष्टद्वयविषयित्वे इतरविषयित्वानिरूपितनिरूप्यनिरूपकभावापन्नबाधवि-षयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वमपि निवेश्यम्। तेन गगनाभाववद्-भाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधस्य गगनाभाववदभावव-दभाववत्तादृशघटरूपतादृशविशिष्टद्वयघटितस्य नासङ्गः।

अत्र केचित् विशिष्टान्तराघटितत्वनिवेशापेक्षया न किमपि लाघवम् इत्याहुः।

अथात्र विशिष्टद्वयाऽघटितत्वमनिवेश्य प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्व—अ-साधारण्यविषयकत्वाऽनवच्छिन्नत्व—विरुद्धानुमितिजनकतावच्छेदकविषयित्वानवच्छिन्नत्वप्र-तिबध्यताविशिष्टविशेष्यत्वानवच्छिन्नत्वैतच्चतुष्टयाभाव एव कथं न निवेशितः। प्रति-बध्यतावै० स्वावच्छेदकत्व—स्वनिरूपितप्रतिबन्धकतानवच्छेदकीभूतविषयिताशून्यज्ञाननिष्ठ-प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन। तथाच न कोपि दोष इति तु विभावनीयम्।

नन्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेकविषयताशून्यत्वं निश्चये विशेषणं देयम्, तथाच सति अव्यापकविषयशून्यत्वं विशिष्टान्तराघटितत्वं विशिष्टद्व-याघटितत्वं च नोपादेयम् जातिमान् वन्ह्यभाववान् इति ज्ञाने प्रतिबन्धकतावच्छेदकजातित्व-विषयताशून्यत्वाभावेन तद्व्युदासात् मेयत्वविशिष्टव्यभिचारनिश्चये तादृशमेयत्वविषयतायाः सत्वात् वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकज्ञाने तादृशवृत्तित्वविषयतायाश्च सत्वात्तयोर्व्यु-दासाच्च। नचैवमसम्भवः, ह्रदो वन्हिमानित्यत्र वन्ह्यभाववद्ध्रदरूपदोषविषयकनिश्चये ह्रद-त्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायास्तादृशप्रतिबन्धकतानवच्छेदिकायाः सत्वेन तच्छू-न्यत्वाभावात् इति वाच्यम्। प्रतिबन्धकतानवच्छेदकत्वेन प्रतिबन्धकतावच्छेदकविषयतावि-शिष्टान्यत्वस्य विवक्षितत्वात्, वैशिष्ट्यं च तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन, तथाच ह्रदादिनिरवच्छिन्नविषयताया अपि प्रतिबन्धकतावच्छेदकह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्न-त्वान्नासम्भवः। नचैवमपि ह्रदो वन्ह्यभाववानितिज्ञानस्याऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धा-वच्छिन्नवन्हित्वनिष्ठप्रकारतानिरूपकत्वेन लाघवात् प्रतिबन्धकतामते वन्हिनिष्ठविषयतायाः कस्याश्चिदपि प्रतिबन्धकतावच्छेदकत्वाभावेन तद्विषयताशून्यत्वाभावेन बाधविशेषेऽव्याप्तिरि-

ति वाच्यम् । तादात्म्यावच्छेद्यत्वाऽवच्छेद्यनिरूपितत्वाऽन्यतमसम्बन्धेन वैशिष्ट्यस्य विवक्षणीयत्वात्, तादृशबाधज्ञानीयवह्न्यादिविषयताया अपि प्रतिबन्धकतावच्छेदकाभावत्वावच्छिन्नप्रकारतावच्छेद्यतादृशविशेष्यतानिरूपितत्वेन तादृशविषयताविशिष्टान्यत्वाभावेन नाव्याप्तिः, असंभाव्यविशिष्टविषयकज्ञानीयवृत्तित्वविषयतायाः प्रतिबन्धकतावच्छेदकजलनिष्ठप्रकारत्वावच्छेद्यविशेष्यतानिरूपितत्वेन तादृशविषयताविशिष्टान्यत्वाभावेऽपि वृत्तितात्वनिष्ठविषयतायास्तादृशत्वेन तच्छून्यत्वाभावान्नातिव्याप्तिः, प्रमेयतात्वविषयतामादाय प्रमेयत्वविशिष्टव्यभिचारवारणमिति चेन्न ।

ह्रदो वह्न्यभाववानिति ज्ञानस्य संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्निप्रकारकतया तादृशप्रतियोगितायास्तादृशावच्छिन्नत्वविशिष्टप्रतियोगितात्वेन सम्बन्धत्वे केवलप्रतियोगितात्वेन सम्बन्धत्वे वा संयोगावच्छिन्नत्वप्रतियोगितात्वविषयितयोः प्रतिबन्धकतावच्छेदकविषयतातादात्म्यावच्छिन्नत्वावच्छेद्यत्वनिरूपितत्वानां मध्ये कस्याप्यभावेन तत्र तच्छून्यत्वाभावेनाव्याप्तितादवस्थ्यात् । यदि प्रागुक्तसम्बन्धत्रयावच्छेद्यनिरूपितनिरूपितत्वान्यतमसम्बन्धेन वैशिष्ट्यं विवक्षणीयम्, तथाच प्रतियोगितात्वादिविषयिताया अपि प्रतिबन्धकतावच्छेदकाभावत्वावच्छिन्नप्रकारत्वावच्छेद्यतादृशविशेष्यतानिरूपितप्रतियोगितानिष्ठसांसर्गिकविषयतानिरूपितत्वान्नाव्याप्तिरिति विभाव्यते, तदा वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकज्ञानीयवृत्तितात्वविषयताया अपि प्रतिबन्धकतावच्छेदकजलत्वाद्यवच्छिन्नप्रकारत्वावच्छेद्यतादृशविशेष्यतानिरूपितवृत्तित्वनिष्ठविषयतानिरूपिततया तादृशविषयताविशिष्टान्यत्वाभावेनातिव्याप्तितादवस्थ्यात्, अतो विशिष्टद्वयाघटितत्वं निवेशनीयम् ।

वस्तुतस्तु अवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छिन्नाभावनिष्ठप्रकारतानिरूपितह्रदनिष्ठविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वे वह्नित्ववदभाववद्ध्रदस्यैव बाधतया वह्न्यभाववद्ध्रदविषयकनिश्चयासङ्ग्रहेऽपि न क्षतिः, अतो वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपविशिष्टेऽतिव्याप्तिवारणं प्रयोजनं विशिष्टद्वयाघटितत्वस्य न सम्भवति, परं तु ह्रदो वह्निमान् जलादित्यादौ एकत्र द्वयमितिरीत्या भासमानह्रदवृत्तित्व ( विशिष्ट ) वह्निव्यापकीभूताभावप्रतियोगित्ववत्पक्षे असाधारण्यसत्प्रतिपक्षानात्मकेऽतिव्याप्तिः तज्ज्ञानीयविषयतायाः कस्या अपि तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन प्रतिबन्धकताविशिष्टाया अप्रसिद्धेः । एवं विशिष्टान्तराघटितत्वविशेषणमप्यावश्यकम्, अन्यथा ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदावच्छिन्नेऽतिव्याप्तिः, तत्रापि ह्रदत्वावच्छिन्नप्रकारताया वह्न्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतारूपप्रतिबन्धकतावच्छेदकविषयत्वावच्छेद्यत्वात् धर्मिविषयतायाश्च तादृशप्रकारतानिरूपितत्वात् तादृशविषयताविशिष्टान्यविषयतायास्तादृशज्ञानेऽसत्त्वात्, एवं ह्रदो वह्न्यभाववानितिज्ञानस्य वह्निनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रकारताशालिज्ञानत्वेन प्रतिबन्धकत्वेऽपि तद्विशेषणद्वयमावश्यकम्, अन्यथा तत्कल्पे प्रागुक्तविषयताशून्यत्वमेव निश्चये विशेषणं न तूक्तविशेषणद्वयम्, तादृशविषयतावैशिष्ट्यञ्च तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन, तथाच ह्रदो वन्ह्यभाववानितिज्ञानीयवह्निप्रकारतायास्तदवच्छेदकप्रतियोगिताविषयतायास्तन्निष्ठप्रतियोगित्वादिविषयतायाश्च प्रतिबन्धकतावच्छेदकत्वात् ह्रदादिनिरवच्छिन्नविशेष्यतायास्तदवच्छिन्नत्वाच्च तज्ज्ञानीयविषयता

कपि तादृशविषयताविशिष्टान्येति नाव्याप्तिः, असंभाव्यविशिष्टविषयकज्ञानीयवृत्तित्वादिविषयिता तादृशविषयताविशिष्टान्येति तद्वारणादतिव्याप्तिरपि । न च गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः तादृशबाधज्ञानस्य गगनाभाववदभाववत्त्वविशिष्टविषयकज्ञानविशिष्टाभाववद्गगनाभाववदभाववत्कालीनघटत्वविशिष्टविषयकज्ञानत्वेनैव प्रतिबन्धकतया बाधज्ञानीयपक्षविशेषणतापन्नाभावविशेषणतापन्नगगनगगनत्वविषयतादीनां प्रतिबन्धकतानवच्छेदकतया तच्छून्यत्वस्य तादृशबाधज्ञानेऽभावादिति वाच्यम्(१) । प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकत्वस्याऽपि तादृशविषयताविशेषणत्वात् तादृशबाधज्ञानीयगगनादिविषयतानां प्रतिबन्धकतानवच्छेदकत्वेऽपि तादृशानुमितेर्गगनाभाववदभाववत्कालीनघटो गगनाभाववानिति बुद्धिं प्रति गगनत्वावच्छिन्नप्रकारतानिरूपिततादृशघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतायां गगनगगनत्वादिविषयतानामवच्छेदकतया तदनवच्छेदकविषयताशून्यत्वस्य तत्र सत्त्वेनाव्याप्तिविरहात् । नचैवमपि वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र वन्ह्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदेऽतिव्याप्तिः तादृशविशिष्टविषयकज्ञानीयतादृशविशिष्टह्रदांशे प्रकारतावच्छेदककुक्षिप्रविष्टवृत्तित्वादिविषयतानां तादृशानुमितित्वव्यापक—विशिष्टपक्षे साध्यवैशिष्ट्यावगाहित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानवच्छेदकत्वेऽपि तादृशानुमितेः वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभाववानिति ज्ञानविशिष्टवह्निमान् तादृशह्रद इति ज्ञानत्वेन तादृशह्रदो वह्न्यभाववज्जलवद्वृत्तिजलवानिति बुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकतया तादृशानुमितित्वव्यापकतादृशप्रतिबन्धकतानिरूपिततादृशप्रतिबध्यतानवच्छेदकत्वस्य तादृशवृत्तित्वादिविषयतास्वभावत्वेन तथाविधोदासीनविषयताशून्यत्वस्य तादृशविशिष्टज्ञानेऽक्षतत्वादिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेशनीयत्वात् , प्रकृते तादृशानुमितित्वव्यापकोक्तप्रतिबन्धकतायाः ज्ञानवैशिष्ट्यावच्छिन्नतया तदन्यबाधबुद्ध्यादिनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतायां तादृशवृत्तित्वादिविषयतानामनवच्छेदकतया तच्छून्यत्वस्य तादृशविशिष्टविषयकज्ञाने सत्त्वेनातिव्याप्तिविरहात् । नचैवं कपिसंयोगाभावाऽभाववत्कपिसंयोगवत्कालीनकपिसंयोगाभाववदभाववत्कालीनगुणः कपिसंयोगवानित्यत्र बाधेऽव्याप्तिः, तादृशबाधनिश्चयस्य पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति अभाववान् कपिसंयोगाभाववान् अभाववान् तादृशगुण इति ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतावच्छेदककुक्षौ पक्षविशेषणतापन्नाभावविशेषणतापन्नबाधज्ञानीयकपिसंयोगतत्संयोगत्वादिविषयतानामप्रवेशेन तादृशप्रतिबन्धकतानवच्छेदकत्वात् कपिसंयोगवान् तादृशगुण इत्यनुमितेरपि तादृशबुद्धिं प्रति कपिसंयोगवान् कपिसंयोगाभाववान् कपिसंयोगवान् तादृशगुण इति ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशानुमितित्वव्यापकज्ञानवैशिष्ट्यानव-

---

(१) रूपाभाववदभाववत्कालीनघटे संयोगेन रूपसाधने बाधेऽव्याप्तिस्तेन प्रागुक्तबाधज्ञानीयपक्षतावच्छेदककुक्षिप्रविष्टगगनप्रकारतायाः प्रतिबन्धकतावच्छेदकतया पक्षविशेषणतापन्नाभावविशेषणतापन्नगगनविषयतायास्तदवच्छिन्नत्वेऽपि नोक्तदोषानवकाशशङ्कावकाशः ।

च्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकत्वाच्च तच्छून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वादिति वाच्यम् । प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायाम् ज्ञानवैशिष्ट्यानवच्छिन्नत्वमनिवेश्य विशेष्यदलघटकप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकत्वस्य निवेशनीयत्वात् । निश्चये प्रतिबध्यतावैशिष्ट्यञ्च स्वाश्रयत्व-स्वनिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताविशिष्टविशेष्यताकाव्याप्यवृत्तित्वज्ञानाभाववत्त्वोभयसम्बन्धेन, विशेष्यतायां प्रकारतावैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्व-स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वान्यतरसम्बन्धेन । तथा चोक्तस्थले वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदे नातिव्याप्तिः, तादृशह्रदो वह्न्यभाववज्जलवद्वृत्तिजलवानिति ज्ञानं प्रति तादृशानुमितेर्या प्रतिबन्धकता तस्यास्तादृशप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकत्वविरहात् वह्निमति वन्ह्यभाववज्जलवद्वृत्तिजलाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीने वह्निमान् तादृशह्रद इति निश्चये निरुक्तोभयसम्बन्धेन प्रतिबध्यतावति तादृशप्रतिबन्धकताया अभावात् तद्व्यापकीभूतान्यैव प्रतिबन्धकता तन्निरूपितप्रतिबध्यतानवच्छेदकत्वस्य तादृशवृत्तित्वादिविषयतायां सत्त्वात् तच्छून्यत्वस्य तादृशविशिष्टज्ञानेऽसत्त्वेनोक्तातिव्याप्तेर्नावकाशः । एवं कपिसंयोगाभाववत्कपिसंयोगाभाववत्कपिसंयोगाभाववत्कपिसंयोगवत्कालीनकपिसंयोगाभावाभाववद्भाववत्कालीनगुणात्मकबाधे नाव्याप्तिः, कपिसंयोगवति कपिसंयोगाभावाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीने तादृशसाध्यवत्पक्षविषयकनिश्चये निरुक्तोभयसम्बन्धेन विशेष्यदलघटकप्रतिबध्यता नास्त्येव तन्निरूपिततादृशगुणत्वावच्छिन्नमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावती या कपिसंयोगत्वावच्छिन्नप्रकारता तदवच्छेदककपिसंयोगत्वावच्छिन्नाभावाभावत्वावच्छिन्नविशेष्यताकाऽव्याप्यवृत्तित्वज्ञानवत्त्वस्य तत्र सत्त्वात्, अतस्तादृशप्रतिबध्यतावान्निश्चयस्तादृशाव्याप्यवृत्तित्वज्ञानाभावकालीन एवेति, तत्र च तादृशबुद्धिनिरूपितप्रतिबन्धकतायाः सत्त्वात् तादृशबाधज्ञानीयकपिसंयोगीयविषयतायास्तादृशप्रतिबध्यतावच्छेदकतया तदनवच्छेदकविषयिताशून्यत्वस्य तत्राक्षतत्वात् । नचैवमपि ह्रदो वह्निमान् वन्ह्यभाववज्जलवत्कालीनत्वाभाववज्जलकालीनजलाभावादित्यत्र वन्ह्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः, तादृशविशिष्टविषयकज्ञानीयविषयितानां सर्वासामपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात् तज्ज्ञानीयकालीनत्वविषयताया अपि हेत्वप्रसिद्धिज्ञानीयप्रतिबन्धकतावच्छेदकत्वादिति वाच्यम् । उक्तान्यतरसम्बन्धेन स्वावच्छेदकविषयताविशिष्टान्या या स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता विषयता तच्छून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका[१] प्रकृतानुमितिप्रतिबन्धकतेति लक्षणकरणात् उक्तातिव्याप्तेरभावात्, तत्र हि साध्यवत्पक्षविषयकबुद्धिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय लक्षणसत्त्वमुपपादनीयम् तादृशप्रतिबन्धकतानवच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टवह्न्यभावव्याप्यवृत्तित्वज्ञानाऽकालीनह्रदो वह्निमानिति निश्चयत्वव्यापिका या ह्रदो वन्ह्यभाववानितिबुद्ध्यादिनिरूपितप्रतिबन्धकता तन्निरूपितप्रतिबध्यतानवच्छेदकत्वस्य च कालीनत्वविषयितायां सत्त्वात्, तादृशविषयताशून्यत्वस्योक्तविशिष्टज्ञानेऽभावात् । तदनुगमश्च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानि-

रूपितप्रतिबन्धकताविशिष्टावच्छेद(१)कतानिरूपितावच्छेद(२)कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्त्वं लक्षणम् । अवच्छेदकतायां प्रतिबन्धकतावैशिष्ट्यञ्च स्ववृत्तित्वं किञ्चिन्निरूपितावच्छेदकतावद्विषयताविशिष्टान्यकिञ्चिन्निरूपितप्रतिबध्यताविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वाभाववत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकान्यविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेद(३)कतानिरूपितावच्छेद(४)कतानिरूपितावच्छेदकता(५)निरूपितत्व—स्वविशिष्टविषयत्वनिष्ठावच्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेन, विषयत्वनिष्ठावच्छेदकतायां स्ववैशिष्ट्यञ्च स्वनिष्ठावच्छेदकतानिरूपकावच्छेद(६)कतानिरूपकावच्छेदक(७)तानिरूपकतादात्म्यावच्छिन्नत्वान्यतरसम्बन्धावच्छिन्नावच्छेदकता(८)निरूपकावच्छेदक(९)तानिरूपकावच्छेदकता(१०)निरूपककत्व—स्वनिष्ठावच्छेदकता(११)निरूपकावच्छेदकतानिरूपकोक्तोभयसम्बन्धावच्छिन्नावच्छेदक(१२)तानिरूनिरूपकावच्छेदकता(१३)निरूपकावच्छेदक(१४)तानिरूपकावच्छेदक(१५)तानिरूपिकावच्छेदक(१६)तानिरूपकावच्छेदकता(१७)निरूपकावच्छेदक(१८)तानिरूपकावच्छे(१९)दकतानिरूपकावच्छेदकता(२०)निरूपकावच्छेदकता (२१)निरूपकावच्छेद(२२)कतानिरूपकावच्छेदक(२३)तानिरूपकवच्छेदक (२४)तानिरूपकत्वोभयसम्बन्धेनेति चेन्न ।

सर्वं गगनवदित्यत्र गगनाभाववद्घटादावव्याप्तेः, तादृशबाधविषयकज्ञाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकीभूताया निरुक्तप्रतिबध्यतानवच्छेदकीभूतायाश्च समवायसमवायत्वादिविषयतायास्सत्त्वात् । अवच्छिन्नत्व—तादात्म्यावच्छेद्यनिरूपितत्वा-ऽवच्छेद्यनिरूपितनिरूपितत्वान्यतमसम्बन्धेन प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वविवक्षणेन तत्सङ्ग्रहे मेयत्वविशिष्टव्यभिचारवारणाय विशिष्टान्तराघटितत्वं वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदवारणाय विशिष्टद्वयाघटितत्वं चावश्यकमिति ध्येयम् ॥ श्री ॥

ननु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाऽव्यापकप्रतिबन्धकताशून्यनिश्चयीययद्रूपावच्छिन्नविषयिताव्यापिका तादृशप्रतिबन्धकता तद्रूपवत्त्वं लक्षणमास्ताम् कृतं विशिष्टान्तराघटितत्वविशिष्टद्वयाघटितत्वविशेषणाभ्यां, ह्रदो जात्यभाववानित्यत्र जातिमान् जातिमानिति निश्चये तादृशप्रतिबन्धकताऽव्यापकप्रतिबन्धकताशून्ये प्रकृतानुमितिप्रतिबन्धकताविरहेण बाधाऽव्याप्तिवारणायाऽव्यापकाविषयताशून्यत्वं तु निवेशनीयम् । नचैवमसम्भवः, प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितावच्छेदकधर्मदर्शनादिप्रतिबन्धकत्वान्तराव्यापकतत्तद्दोषविषयकत्वावच्छिन्नप्रतिबन्धकताशून्यत्वस्य तत्तद्दोषविषयकनिश्चयेऽभावादिति वाच्यम् । यादृशप्रतिबन्धकतामादाय लक्षणं सङ्गमनीयं तादृशप्रतिबन्धकत्वाव्या-

(१) निश्चये । (२) विषयतायाम् । (३) प्रतियोगितायाम् । (४) भेदे । (५) वृत्तित्वे । (६) निरूपितत्वे । (७) अवच्छेदकत्वे । (८) विषयितायाम् । (९) अधिकरणे । (१०) भेदे । (११) निरूपितत्वे । (१२) प्रतिबध्यतायाम् । (१३) निश्चये । (१४) वृत्तित्वे । (१५) भेदे । (१६) प्रतियोगितायां । (१७) अवच्छेदकत्वे । (१८) अभावे । (१९) प्रतिबन्धकत्वे । (२०) निरूपितत्वे । (२१) प्रतिबध्यतायाम् । (२२) अवच्छेदकत्वे । (२३) अधिकरणे । (२४) भेदे ।

पक्षप्रतिबन्धकताशून्यत्वस्य विवक्षणात्, एवं च मेयत्वविशिष्टव्यभिचारनिश्चये व्यभिचारविषयकत्वावच्छिन्नप्रतिबन्धकताऽव्यापकव्यभिचारविशेष्यकमेयत्वाभावप्रकारकबुद्धिनिरूपितप्रतिबन्धकतायाः सत्त्वान्न तत्रातिव्याप्तिः। एवं ह्रदो वह्निमानित्यनुमितिनिरूपितायाः जलवान् वन्ह्यभाववानिति ज्ञानविशिष्टजलवान् ह्रद इति ज्ञाने वर्तमानाया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अव्यापकीभूता या वन्ह्यभाववज्जलवद्वृत्तिजलाभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबन्धकता तच्छून्यत्वस्य तादृशविशिष्टविषयकनिश्चयेऽसत्त्वेन तादृशविशिष्टे नातिव्याप्तिः। नन्वेवं सर्वं गगनवदित्यत्र गगनाभाववद्घटपटादिरूपबाधेऽव्याप्तिः, सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिविषयकनिश्चयानामेकरूपेणैव प्रतिबन्धकतया तादृशप्रतिबन्धकताया गगनाभाववान् घट इत्यादिनिश्चयेषु सत्त्वेन तदधिकरणे गगनाभाववान् पट इति निश्चयेऽवर्तमानायाः घटो गगनवानितिज्ञाननिरूपितायाः प्रतिबन्धकताया घटो गगनाभाववानिति दोषविषयकनिश्चये सत्त्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतप्रतिबन्धकताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतायां विवक्षणीयत्वात्, तथाच गगनाभाववद्घटत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यतादृशप्रतिबन्धकताधिकरणे घटो गगनाभाववानिति निश्चयेऽविद्यमाना प्रतिबन्धकता न घटो गगनवानितिज्ञाननिरूपिता अपि तु पटो गगनवानिति ज्ञाननिरूपितेति तच्छून्यत्वस्य तादृशबाधादिनिश्चये सत्त्वात्। अत्रायमनुगमः—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टावच्छेदकताविशिष्टरूपवत्त्वं लक्षणम्। अवच्छेदकतायां प्रतिबन्धकतावैशिष्ट्यञ्च स्वनिष्ठयत्किञ्चिद्धर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकप्रतिबन्धकताशून्यकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदक(१)तानिरूपितावच्छे(२)दकतानिरूपितावच्छे(३)दकतानिरूपितत्व—स्वनिष्ठावच्छेदक(४)तानिरूपितावच्छेदक(५)तानिरूपकावच्छेदक(६)तानिरूपकावच्छेदक(७)तानिरूपकावच्छेदक(८)तानिरूपकावच्छेदक(९)तानिरूपकावच्छेदक(१०)तानिरूपकत्वोभयसम्बन्धेन, रूपे अवच्छेदकतावैशिष्ट्यञ्च स्वनिरूपितावच्छेद(११)कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितावच्छेद(१२)कतानिरूपितावच्छेदक(१३)तानिरूपितावच्छे(१४)दकतानिरूपितावच्छेदकता(१५)निरूपितावच्छेद(१६)कतानिरूपितावच्छेद(१७)कतानिरूपितावच्छेदक(१८)तानिरूपितावच्छेद(१९)कतानिरूपितावच्छेद(२०)कतानिरूपितावच्छेद(२१)कतानिरूपितावच्छेदक(२२)तानिरूपितावच्छेदक(२३)तानिरूपितावच्छेदक(२४)तानिरूपितावच्छेद(२५)कतानिरूपितावच्छेद(२६)कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्ब-

---

(१) प्रतियोगित्वे। (२) भेदे। (३) वृत्तित्वे। (४) अधिकरणे। (५) वृत्तित्वे।
(६) भेदे। (७) प्रतियोगित्वे। (८) अवच्छेदकत्वे। (९) प्रतिबन्धकत्वे।
(१०) शून्यत्वे। (११) विषयित्वे। (१२) शून्यत्वे। (१३) प्रतिबन्धकत्वे।
(१४) अवच्छेदकत्वे। (१५) प्रतियोगित्वे। (१६) भेदे। (१७) वृत्तित्वे।
(१८) निश्चये। (१९) शून्यत्वे। (२०) विषयितायाम्। (२१) अवच्छेदकत्वे।
(२२) प्रतियोगित्वे। (२३) भेदे। (२४) वृत्तित्वे। (२५) अधिकरणे। (२६) विषयित्वे।

न्येनेति चेन्न ।

गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्त्यापत्तेः, तत्र बाधनिश्चये तादृशानुमितिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताद्वयी, एका अभाववान् गगनाभाववानितिनिश्चयविशिष्टगगनाभाववान् तादृशघट इति निश्चयत्वावच्छिन्ना, अपरा गगनाभाववान् तादृशघट इति निश्चयविशिष्टाभाववान् गगनाभाववानिति निश्चयत्वावच्छिन्ना, तत्र प्रथमप्रतिबन्धकतामादाय लक्षणं सङ्गमनीयम् , तादृशप्रतिबन्धकतावति अभाववान् गगनाभाववदभाववत्कालीनघट इति निश्चये तादृशघटत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्येऽवर्तमानाया गगनाभाववत्तादृशघटावृत्तिरित्याकारकबुद्धिनिरूपितप्रतिबन्धकतायास्तादृशबाधज्ञाने सत्त्वात् ।

अथाऽव्यापकप्रतिबन्धकतायां प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयित्वावच्छिन्नत्वं विशेषणं देयम्, विषयितायां प्रतिबन्धकतावैशिष्ट्यं च स्वावच्छेदकत्व–स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वोभयसम्बन्धेन, प्रतिबध्यतावत्त्वं च स्वानवच्छेदकविषयताशून्यज्ञानीयत्वसम्बन्धेन. तथाच नोक्तबाधेऽव्याप्तिः, तत्र बाधज्ञाने विद्यमानाया गगनाभाववत्तादृशघटावृत्तिरितिज्ञाननिरूपितप्रतिबन्धकतायास्तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टतादृशघटविशेष्यकगगनप्रकारकनिश्चयत्वव्यापकसाध्याभाववत्पक्षविषयकबुद्धिनिरूपितप्रतिबन्धकतानिरूपिततादृशप्रतिबध्यतानवच्छेदकविषयताशून्यगगनाभाववत्तादृशघटज्ञानीयतादृशघटत्वावच्छिन्नविषयित्वावच्छिन्नतया तदन्यप्रतिबन्धकताया एव तादृशत्वात् तच्छून्यत्वस्य तत्राक्षतत्वात् । न च गगनाभाववत्तादृशघटत्वावच्छिन्नविषयिताया निरुक्तप्रतिबन्धकतावच्छेदकत्वाभावेन तदवच्छिन्नत्वं नोक्तप्रतिबन्धकताव्यावर्तकमिति वाच्यम् । तादृशविषयिताया अप्यभाववद्घटविषयितात्वेन तादृशप्रतिबन्धकतावच्छेदकत्वात् वह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इति ज्ञानीयजलवद्ह्रदविषयिताया ह्रदो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदिकायास्तादृशप्रतिबन्धकताऽव्यापकीभूततादृशजलाभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबन्धकतावच्छेदकत्वेऽपि तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापक–पक्षे साध्याभाववागाहिबुद्धिनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयिताशून्यज्ञानीयत्वाभावेन तादृशप्रतिबन्धकतासङ्ग्रहः । एवं प्रकृतानुमितित्वव्यापकव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताऽव्यापकीभूतमेयत्वाभाववान् व्यभिचार इति ज्ञाननिरूपितप्रतिबन्धकतायास्तादृशप्रतिबन्धकतानिरूपितव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितसाध्याभाववद्वृत्तित्वप्रकारकहेतुविशेष्यकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकीभूतविषयताशून्यशुद्धव्यभिचारविषयकज्ञानीयविषयित्वानवच्छिन्नतया तत्सङ्ग्रह इति चेन्न ।

तथाप्यभावो गगनत्ववानाधेयत्वादित्यत्र असाधारण्येऽव्याप्तिः, तत्र गगनत्वव्यापकाभावप्रतियोग्याधेयत्वमिति असाधारण्यविषयकनिश्चयोत्तरमाधेयत्ववानभाव इति ज्ञाने तादृशाऽसाधारण्यविषयित्वाऽव्यापकविषयिताशून्ये प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरू-

वितप्रतिबन्धकतावत्यवर्तमानतया गगनत्वव्यापकाभावप्रतियोगित्वाभाववदाधेयत्वमितिज्ञा निरूपितायाः प्रतिबन्धकतायास्ताहशासाधारण्यज्ञाने सत्वात्। न च अव्यापकप्रतिबन्धकतायामसाधारण्यविषयकत्वानवच्छिन्नत्वमपि विशेषणं विवक्षितं, वस्तुतस्तत्रापि पक्षधर्मिकहेतुमत्ताज्ञानविशिष्टासाधारण्यविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय लक्षणसमन्वयसम्भवः तादृशप्रतिबन्धकतावानाधेयत्ववानभाव इति ज्ञानं किन्तु असाधारण्यज्ञानं तत्र च न पूर्वोक्तप्रतिबन्धकत्वाभावो वर्तत इति नाव्याप्तिरिति वाच्यम्। तथापि वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र सत्प्रतिपक्षेऽव्याप्तेः, तत्र विशिष्टसत्प्रतिपक्षज्ञानोत्तरजाते तादृशसत्प्रतिपक्षविषयित्वाऽव्यापकविषयिताशून्ये वह्न्यभाववान् वह्न्यभावव्याप्यवानिति ज्ञाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्यविद्यमानाया वह्न्यभावव्याप्याभाववांस्तादृशह्रद इति ज्ञाननिरूपितायाः प्रतिबन्धकताया विशिष्टसत्प्रतिपक्षनिश्चये सत्वात्। न च तत्रापि तादृशप्रतिबन्धकतामादाय लक्षणासम्भवेऽपि प्रतिबन्धकत्वान्तरमादाय लक्षणं सङ्गमनीयं तत्र हि कालिकसम्बन्धेन वह्न्यभावाभाववद्वृत्तिधर्मवान् समवायादिना वह्न्यभावाभाववद्वृत्तिधर्मवानित्यादिज्ञानानामेकरूपेण प्रतिबन्धकत्वं कल्पनीयं सम्बन्धभेदेन प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात्, प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावाभाववद्वृत्तितात्वावच्छिन्नप्रकारताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वमिति, प्रकारतायां प्रकारतावैशिष्ट्यञ्च स्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धावच्छिन्नत्व—स्वनिरूपिताभावत्वावच्छिन्नाविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वोभयसम्बन्धेन, एतादृशप्रतिबन्धकता च प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपिता सत्प्रतिपक्षविषयकनिश्चय एव न तदुत्तरप्रागुक्तज्ञान इति तदव्यापकप्रतिबन्धकताशून्यत्वं तत्राक्षतमेव। न च नानासम्बन्धावगाहिव्याप्यदर्शनानामेकरूपेण प्रतिबन्धकत्वे संयोगेन धूमाभाववद्वृत्तिमानित्यादिनिश्चयत्वावच्छिन्नप्रतिबन्धकताया ऐक्यात् तादृशप्रतिबन्धकतावति संयोगेन तादृशधर्मावगाहिनिश्चये समवायेन तादृशधर्माभावावगाहिज्ञानप्रतिबन्धकताया असत्वेन तादृशप्रतिबन्धकताशून्यत्वस्य समवायेन तदवगाहिसत्प्रतिपक्षनिश्चयेऽसत्वेन एवं चालनीयन्यायेन सर्वेषु सत्प्रतिपक्षनिश्चयेष्वव्यापकप्रतिबन्धकताशून्यत्वाभावाच्च कथं लक्षणसमन्वय इति वक्तव्यम्, यत्र यादृशसम्बन्धघटितस्सत्प्रतिपक्षस्तादृशसत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यतत्प्रतिबन्धकतावांस्तादृशसम्बन्धघटितसत्प्रतिपक्षनिश्चय एवेति तत्राविद्यमानप्रतिबन्धकता सम्बन्धान्तरेण तादृशधर्माभावावगाहिज्ञाननिरूपितप्रतिबन्धकतैव तच्छून्यत्वं तत्र तत्राक्षतमेवेति लक्षणसमन्वयादिति वाच्यम्। तथापि ह्रदो वह्निमानित्यत्र वह्न्यभाववद्वह्न्यभाववद्ध्रदेऽतिव्याप्तेः, तत्र वह्न्यभाववान् वह्न्यभाववान् ह्रद इति निश्चये विद्यमानाया अभाववान् ह्रदो वह्निमानिति ज्ञाननिरूपिताया वह्न्यभाववद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नायाः प्रतिबन्धकताया वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यतादृशप्रतिबन्धकतावद्ध्रदो वन्ह्यभाववानिति निश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितबाधविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूता या तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशि-

ति वह्निमानितिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितवन्ह्यभाववद्ध्रदविषयकबुद्धित्वावच्छि-
प्रतिबध्यतानवच्छेदकविषयताशून्यवन्ह्यभाववान् वन्ह्यभाववान् ह्रद इति निश्चयीयविष-
यता तदनवच्छिन्नत्वाभावेन तत्सत्त्वस्याकिञ्चित्करत्वात्, वन्ह्यभाववद्वन्ह्यभाववद्ध्रदत्वाव-
च्छिन्नविषयिता च बाधप्रतिबन्धकतायां वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वेनाऽवच्छेदि-
कैव अतो विशिष्टान्तराघटितत्वमावश्यकम्। न च तथापि विशिष्टद्वयाघटितत्वाऽनिवेशेन
अववमपरिहार्यमिति वाच्यम्। एतादृशगुरुविशेषणापेक्षया तस्यैव लघुत्वादिति ध्येयम्।

ननु अवच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व—स्वरूपो-
भयसम्बन्धेन यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपाव-
च्छिन्नत्वं लक्षणम्, इदानीं विशिष्टद्वयाघटितत्वं न विवक्षणीयम्, वह्न्यभाववद्ध्रदादिविषय-
कनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वाभावेन तत्र तादृशप्रतिबन्धकत्वस्यावच्छेदक-
तासम्बन्धेनाऽभावात् स्वरूपसम्बन्धेन सत्वाच्च लक्षणसमन्वयः, वह्न्यभाववज्जलवद्वृत्तिज-
लवद्ध्रदविषयकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्र ज्ञाने तादृशप्रतिबन्ध-
कतावच्छेदकत्वसत्त्वात् नातिव्याप्तिः। प्रथमसम्बन्धमात्रेण व्यापकत्वविवक्षणे ह्रदो वह्निमानि-
त्यत्र घटादिष्वतिव्याप्तिः घटादिनिश्चयेऽपि तादृशप्रतिबन्धकतावच्छेदकताविरहात्, स्वरूप-
सम्बन्धमात्रेण व्यापकत्वाविवक्षणे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः अत उभय-
सम्बन्धेन व्यापकत्वं विवक्षितम्।

अथ बाधादिज्ञानस्यात्मनि दैशिकाव्याप्यवृत्तितया तदभावस्यानुमितिकारणत्वे बाधनि-
श्चयकालेऽपि किञ्चिदवच्छेदेनात्मनि तदभावस्य सत्त्वेनानुमितिवारणाय बाधादिज्ञानवदात्म-
त्वादेरनुमितिप्रतिबन्धकत्वं व्याप्त्यनुगममथुरानाथीये उक्तम्, तन्मते(१)बाधादिदोषनिश्चये
सर्वत्र प्रतिबन्धकतावच्छेदकत्वस्य सत्त्वेनाऽसम्भवः, एवं साक्षादवच्छेदकताया व्यासज्यवृ-
त्तित्वानङ्गीक(२)र्तृमते ज्ञानविशिष्टज्ञानीयविषयितात्वेनैव प्रतिबन्धकतया तादृशज्ञानविशि-
ष्टज्ञाने प्रतिबन्धकतावच्छेदकत्वविरहेणातिव्याप्तिश्च। न च स्वनिरूपितावच्छेदकतानिरूपि-
तावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व—स्वरूपोभयसम्ब-
न्धेन व्यापकत्वं विवक्षणीयम्, तथाच नासम्भवातिव्याप्ती बाधादिज्ञानविशिष्टात्मत्वादेः प्रति-
बन्धकत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वस्य बाधादिनिश्चयेऽभावात्, मता(३)न्तरे-
पि वारणीयविशिष्टविषयकनिश्चये प्रतिबन्धकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपिता-
वच्छेदकत्वस्य सत्त्वादिति वाच्यम्। निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वमतेऽतिव्या-
प्त्यापत्तेः तादृशनिश्चये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतावच्छेदकताया अभा-
वादिति चेन्न।

स्वनिरूपितावच्छेदकताविशिष्टावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियो-
गिताकभेदवत्त्व—स्वरूपोभयसम्बन्धेन व्यापकत्वस्य विवक्षितत्वात्। अवच्छेदकतायामव-
च्छेदकतावैशिष्ट्यं च स्वभिन्नत्व—स्वविशिष्टनिरूपितत्वोभयसम्बन्धेन, स्ववैशिष्ट्यं च स्वनि-

(१) बाधादिनिश्चयविशिष्टात्मत्वं प्रतिबन्धकत्वम्।
(२) बाधादिज्ञानीयविषयितात्वेन प्रतिबन्धकत्वम्।
(३) बाधादिनिश्चयत्वेन प्रतिबन्धकत्वम्।

रूपकत्व-स्वनिरूपितत्व-स्वनिरूपकनिरूपितत्वैतदन्यतमसम्बन्धेन । प्रथमसम्बन्धद्वयघटक
प्रथमसम्बन्धानुपादाने प्रथममतेऽसम्भवः बाधादिनिश्चयनिष्ठावच्छेदकतायां द्वितीयवैशि
ष्ट्यघटकान्यतमघटकस्वनिरूपकत्वसम्बन्धेन स्वनिष्ठप्रतिबन्धकतानिरूपितत्वस्य सत्वात
द्वितीयसम्बन्धानिवेशे प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वान्तरावच्छेदक
ताभिन्नत्वस्य तत्र सत्वात्तन्मते स एव दोषः, एवं द्वितीयवैशिष्ट्यघटकप्रथमसम्बन्धानिवे
शे तृतीयमतेऽतिव्याप्तिः निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया तन्निरूपितनिश्चयत्वादि
निष्ठावच्छेदकताभिन्नत्वस्य निश्चयनिष्ठावच्छेदकतायां सत्वेऽपि तन्निरूपितनिरूपितत्व
तन्निरूपकनिरूपितत्वयोस्तन्निरूपकेऽभावात्, तन्निवेशे तन्निरूपकप्रतिबन्धकतानिरूपितत्वस
सत्वात्तत्संग्रहान्नातिव्याप्तिः । द्वितीयसम्बन्धानिवेशे द्वितीयमतेऽतिव्याप्तिः प्राथमिक
निश्चयनिष्ठावच्छेदकतायां विषयतानिष्ठावच्छेदकत्वभिन्नत्वसत्वेऽपि तन्निरूपकतन्निरूपितत्व
स्य तन्निरूपकनिरूपितनिरूपितत्वस्य चाभावात्, तन्निवेशे तन्निरूपितद्वितीयनिश्चयनिष्ठावच्छे
दकतानिरूपितत्वसत्वान्नातिव्याप्तिः । न च द्वितीयनिश्चयनिष्ठावच्छेदकतामादायैव तत्राति
व्याप्तिवारणं शक्यमिति वाच्यम् । तन्मत एव बाधनिश्चयादौ तादृशप्रतिबन्धकतानिरूपितवि
षयितानिष्ठावच्छेदकताभिन्नतन्निरूपकप्रतिबन्धकतानिरूपितत्वस्वनिरूपितनिरूपितत्वसम्बन्धा
वच्छिन्नावच्छेदकतासत्वादसम्भववारणाय द्वितीयावच्छेदकतायां निरूपितत्वसम्बन्धावच्छिन्न
त्वस्य वक्तव्यतया द्वितीयनिश्चयनिष्ठावच्छेदकताया अतादृशत्वात्, तृतीयसम्बन्धानिवे
प्रथममतेऽतिव्याप्तिः, प्रथमनिश्चयनिष्ठावच्छेदकतायां द्वितीयनिश्चयनिष्ठावच्छेदकतानिरूपक
निरूपितत्वस्य तन्निरूपितनिरूपितत्वस्य चाऽभावात्, तन्निवेशे तन्निरूपकप्रतिबन्धकतानिरू
पितत्वनिरूपितत्वात्संग्रह इति नातिव्याप्तिः, एवं च न कुत्रापि मते दोष इति गुरुभूत
विशिष्टद्वयाघटितत्वं न निवेशनीयम् । न च गगनाभाववदभाववत्कालीनघटो गगनवानित्य
बाधेऽव्याप्तिः, तादृशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्र प्रकृतप्रतिबन्धक
तानिरूपितद्वितीयनिश्चयादिनिष्ठावच्छेदकताविशिष्टावच्छेदकतायाः सत्वादिति वाच्यम्
प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयताशून्यज्ञानवृत्तित्वेन द्वि
तीयावच्छेदकताया विशेषणीयत्वात्, प्रतिबन्धकतावैशिष्ट्यञ्च विषयितायां स्वावच्छे
कत्व—स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानव
च्छेदकविषयताशून्यज्ञानीयत्वोभयसम्बन्धेन, प्रतिबध्यतानवच्छेदकत्वं च प्रतिबध्यतावच्छे
दकविषयताविशिष्टान्यत्वं, तथाचोक्तबाधज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदक
भूता या तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकसाध्यप्रकारतानि
पितपक्षविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितसाध्याभाववत्पक्षविषयकत्वा
च्छिन्नप्रतिबध्यतावच्छेदकविषयताविशिष्टान्यविषयताशून्यतादृशबाधज्ञानीयविषयता तच्छून्
त्वस्याभावेन तत्राव्याप्तिविरहात् । न चैवमपि अभावो गगनवानाधेयत्वादित्यत्रासाधार
ऽव्याप्तिः, तज्ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तत्र तादृशप्रतिबन्धकतानि
पितावच्छेदकतायाः सत्वात् तादृशप्रतिबन्धकताविशिष्टविषयताशून्यत्वस्य च सत्वा
वाच्यम् । असाधारण्यविषयिताशालिज्ञानावृत्तित्वेनापि विशेषणीयत्वात् । न चैवमपि नि
च्छिन्नसाध्याभाववत्पक्षस्य बाधत्वमते गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र

ऽव्याप्तिः, तज्ज्ञानीयनिरवच्छिन्नत्वविषयतायाः प्रतिबन्धकतानवच्छेदकतया तच्छून्यज्ञानीय-
विषयताशून्यत्वस्य तादृशबाधज्ञाने सत्वात्, विषयतायां प्रतिबन्धकतावैशिष्ट्यनियाम-
कसम्बन्धघटकप्रतिबध्यतानवच्छेदकविषयतायां निरवच्छिन्नत्वघटकविषयताभेदस्य विशेषण-
त्वमङ्गीकृत्य तद्दोषवारणेऽपि गगनमवच्छिन्नत्ववत् अभाववच्छब्दवद्वृत्तिशब्दाभावादित्यत्र
निरवच्छिन्नशब्दवद्वृत्तिशब्दवद्गगनेऽतिव्याप्तिः, तत्र साध्यवत्पक्षविषयकबुद्धित्वावच्छिन्ननिरू-
पितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां निरुक्तोभयसम्बन्धेन तादृशनिश्चयत्वव्यापकत्वस्य
सत्वात्। तादृशनिश्चये तादृशप्रतिबन्धकतानिरूपितावच्छेदकताविशिष्टावच्छेदकत्वस्य सत्वे-
ऽपि न हि तज्ज्ञानं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयिता-
शून्यं तज्ज्ञानीयविषयतायां सर्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितहेत्वभाववत्पक्ष-
विषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्य-
ताविशिष्टनिश्चयत्वव्यापकहेतुमत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्य-
तावच्छेदकविषयताविशिष्टान्यनिरवच्छिन्नत्वघटकविषयताभिन्नविषयताशून्यज्ञानीयत्वस्य च
सत्वात् तच्छून्यत्वस्य तादृशविशिष्टज्ञाने अभावात् इति वाच्यम्। स्वविशिष्टविषयिताशू-
न्यज्ञानवृत्तिस्वनिरूपितावच्छेदकताविशिष्टावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताव-
च्छेदकताकभेदवत्त्वस्वरूपोभयसम्बन्धेन व्यापकत्वस्य विवक्षणीयत्वात्, विषयितायां स्ववै-
शिष्ट्यञ्च स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतान-
वच्छेदकविषयताशून्यज्ञानीयत्वसम्बन्धेन, तथाच नोक्तविशिष्टेऽतिव्याप्तिः, तज्ज्ञाने स्वपद-
ग्राह्यसाध्यवत्पक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धक-
तानिरूपिततादृशप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकसाध्यवत्पक्षविषयकनिश्चयत्वावच्छिन्नप्र-
तिबन्धकतानिरूपितसाध्याभाववत्पक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकवृत्तित्वादि-
विषयताशून्यबाधज्ञानीयविषयिताशून्यत्वस्य सत्वात्तादृशावच्छेदकतासम्बन्धेन निरुक्तप्रति-
बन्धकतायास्तत्र सत्वात् इति चेन्न। विशिष्टद्वयाघटितत्वनिवेशापेक्षयोक्तनिवेशस्यातिगु-
रुत्वात्, एवं निरवच्छिन्नसाध्याभाववत्पक्षस्य बाधतामते उक्तबाधसंग्रहाय तादृशप्रतिबन्ध-
कतावैशिष्ट्यघटकप्रतिबध्यतानवच्छेदकविषयतायां निरवच्छिन्नत्वघटकविषयताभेदस्य निवेश-
नीयतया तत्र घटकत्वनिर्वचनस्य च गुरुत्वादिति ध्येयमिति दिगिति॥

शुभम्।

# न्यायरत्नावली-नारायणी-टीकाद्वयोपेतः

# सिद्धान्तबिन्दुः

नामा ग्रन्थः, यस्य निर्मातारः विदितकीर्तयः प्रातःस्मरणीया अद्वैतसिद्ध्यादिप्रणेतारः श्रीमधुसूदनसरस्वतीन्द्राः सन्तीत्येतावदेवास्य वैशिष्ट्यद्योतनायालम्। अथापि स्वतन्त्रप्रबन्धेष्वद्वैतसिद्ध्यादिषु विस्तरतो यदुक्तं तदेव अचार्यीयदशश्लोकीव्याख्याव्याजेन संक्षिप्यात्रोपनिबद्धमिति तदीयटीकाकारैरेवोक्तं ग्रन्थारम्भप्रतिज्ञावसरे। यथा—

अद्वैतसिद्धेष्टिकायास्तदीयायाश्च सङ्ग्रहात्।
विचित्ररचना काचिद् ब्रह्मानन्देन रच्यते॥ इति।

एते टीकाकृतोऽपि गुरुलघुचन्द्रिकादिटीकाग्रन्थैरत्यन्तं प्रसिद्धाः पण्डितप्रकाण्डा गौडब्रह्मानन्दा इति तैरेवास्यापि न्यायरत्नावली टीका कृता। अस्याष्टीकाया वैशिष्ट्यं तैरेवोद्घोषितमिति सर्वं तथाभूतमेव। अद्वैतसिद्ध्याद्यनेकग्रन्थसारभूतायां न्यायरत्नावल्यां विबुधविनोदार्थं विविधा विषया विनिवेशिता इत्यतो वेदान्तविद्यास्वस्य वैशिष्ट्ये विपश्चिदपश्चिमानां विवादाभाव एव।

अस्य द्वितीया टीका ब्रह्मानन्दगुरुचरणानां नारायणतीर्थानामस्ति। एतेषां पाण्डित्यपरिचयप्रदानं नाम प्रदीपैः प्रचण्डरश्मेः प्रदर्शनमेवेति मन्ये। सर्वशास्त्रेष्वेभिः स्वतन्त्रप्रबन्धाः टीकाश्च निर्मिता उपलभ्यन्ते। एतेषामेव महद्व्याख्यासिद्धान्तबिन्दावन्या वर्तत इति लघुव्याख्यास्थैः "विस्तरस्तु अस्मत्कृतमहद्व्याख्याने द्रष्टव्य" इति स्वशब्दैरेव ज्ञायते इत्यस्या लघुव्याख्येति व्यवहारः, परमद्यावधि कुत्राप्यस्या महद्व्याख्यायाः पुस्तकं नोपलब्धमिति महदेव विषादस्थानम्। एषा टीका अद्यावधि मुद्रिता नासीदिति सुदुर्लभत्वं स्वाभाविकमस्याः, अतः टीकाद्वयाभ्यां पाठान्तरटिप्पणीभ्यां ...रकानुक्रमणिकादिभिश्च सहितोऽत्यन्तमनोहरैरायसाक्षरैः सम्मुद्र्यतेऽयं ग्रन्थो बहोः कालात्। स्वल्पेनैव समयेन ४) चतुर्मुद्राभ्यो विदुषांसुलभो भविष्यतीति शैघ्र्यं कार्यमस्य ...ह्यस्य सङ्ग्रह इति।

---

प्राप्तिस्थानम्—




**चौखम्बा संस्कृत पुस्तकालय,**

**बनारस सिटी।**